Digitized by Arya Samaj Foundation Chennai and eGangotri

PATAÑJALI'S

# VYĀKARAṆA MAHĀBHĀṢYA

WITH

## KAIYAṬA'S PRADĪPA

AND

## NĀGEŚA'S UDDYOTA

Edited with Foot notes, collected from Chhāya Padamañjarī and S'abdakaustubha as well as supplied by the Editors' own originality.

**Vol. III**



BY


VYĀKARAṆĀCHĀRYA PAṆḌIT RAGHUNĀTH KĀS'ĪNĀTH S'ĀSTRĪ,

&

MAHĀMAHOPĀDHYĀYA PAṆḌIT ŚIVADATTA D. KUDĀLA.

HEAD PAṆḌIT AND SUPERINTENDENT ORIENTAL COLLEGE LAHORE, FELLOW OF THE PUNJĀB UNIVERSITY, SANSKRIT SCHOLAR OF JAYAPUR SANSKRIT PĀTHAS'ĀLĀ.



PUBLISHED

BY

PĀṆḌURANG JĀWAJĪ,

PROPRIETOR OF THE "NIRṆAYA-SĀGAR" PRESS,

BOMBAY.




CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीदधिमथी जयति ॥

श्रीमद्भगवत्पतञ्जलिमुनिनिर्मितं

# पाणिनीयव्याकरणमहाभाष्यम् ।



एतद्व्याख्यानभूत उपाध्यायकैयटप्रणीतो भाष्यप्रदीपस्तद्व्याख्यानभूतो
नागेशभट्टविरचितो भाष्यप्रदीपोद्द्योतः

तत्र

तृतीयाध्यायात्मकं

## विधिप्रकरणरूपं तृतीयखण्डम् ।



186

जयपुरराजकीयप्रधानसंस्कृतपाठशालाधीतशास्त्रेण लवपुरीयप्राच्यविद्यालयसंस्कृत-
श्रेणिप्रधानाध्यापकेन महामहोपाध्यायपण्डितशिवदत्तशर्मणा बलियामण्ड-
लान्तर्गतछाताग्रामवास्तव्यसर्वतन्त्रस्वतन्त्रश्रीपण्डितकाशीनाथशास्त्रि-
तनुजन्मना व्याकरणाचार्य श्री पं० रघुनाथशास्त्रिणा च वैद्य-
नाथप्रणीतभाष्यप्रदीपोद्द्योतच्छायासारं पदमञ्जरी-
शब्दकौस्तुभौ समवलम्ब्य, विषमस्थलटिप्पण्या
पाठभेदादिपूरणेन च संभूष्य
संशोधितम् ।

---

तस्येदं प्रथममावर्तनम् ।

---

मुम्बय्यां
पाण्डुरङ्ग जावजी इत्येतैः
सीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ।

---



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri







अथ किमपि प्रस्तुतसंबद्धमुच्यते तत्कर्णे कर्तव्यं कृतिभिः। प्रदीपोद्योतसहितो महाभाष्यग्रन्थो मुद्रयितुमुपक्रान्तः पस्पशाह्निकादितृतीयाध्यायान्तो विश्वेशकृपया खण्डत्रयात्मना संपन्नः। अत्र च त्रिष्वपि ग्रन्थेषु त्रिष्वपि च खण्डेषु पूर्वपक्षादिग्रन्थविभागस्तत्संबद्धप्रदीपोद्योतग्रन्थविभागश्च दाधीचेत्युपाधिधारिभिः काश्यामेव शिवसायुज्यमाप्तैर्महामहोपाध्यायपण्डितशिवदत्तशर्मभिः संपादितः। स एव चास्माभिः संशोधितो यथास्थानं यथौचित्यं यथामति परिवर्तितः स्वनामाङ्कितया टिप्पण्या परिवर्धितश्च। अस्य चेत्थं समुद्रितस्य ग्रन्थस्योपयोगे लोक एव साक्षीति नात्र किमपि वक्तव्यम्। तृतीयाध्यायात्परत्र च यद्यपि श्रीदाधीचसंपादितो ग्रन्थो नास्ति तथापि प्रयतिष्यामहे तादृशस्यैव संपादने यदीदृशस्तृतीयाध्यायान्तो ग्रन्थो विदुषां संमोदावहेत्। अत्र च यथाशक्ति बहुप्रयतमानस्य मम बुद्धिस्खलितं दृष्टिस्खलितं वा संशोध्याध्यापयन्तु विद्वांसः सज्जनाः स्खलितसमाधानशीला इति मुहुः संप्रार्थयते—

आषाढ शुक्ला ५<br>वि० १९९४<br>काशी.

सुधियामनुग्राह्यः
**पण्डित रघुनाथशास्त्री।**

---

॥ श्रीः ॥

बहुतिथकालात्प्राक् प्रारब्धमपीदं भाष्यप्रकाशनरूपं कार्यमद्यावधि तृतीयाध्यायान्तं भागत्रयात्मकं सम्पन्नं, तद् वाचकमहोदयेभ्यः समुपह्रियते। अतः परञ्च चतुर्थाध्यायमारभ्य आ अष्टमाध्यायरूपो भाष्यांशः सप्रदीपः सोद्योतश्च मुद्रयितुमारब्धो नचिरादेव विद्वज्जनकरकमलान्यलङ्करिष्यतीति सोत्सुकान् वाचकवृन्दान् समाश्वासयामः

**निर्णयसागराधिपतयः।**

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# ॥ तृतीयाध्यायस्थविषयानुक्रमणिका ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri







CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीदधिमथी जयति ॥

# श्रीमद्भगवत्पतञ्जलिमुनिविरचितम्

# महाभाष्यम् ।

## तद्व्याख्यानभूतः कैयटविरचितः प्रदीपः

## तद्व्याख्यानभूतो नागेशभट्टविरचित उद्द्योतश्च प्रारब्धः ।

## तत्र तृतीयाध्याये प्रथमपादे प्रथममाह्निकम् ।

[ विधिप्रकरणे प्रत्ययप्रकरणमारभ्यते । ]

( ३८० अधिकारसूत्रम् ॥ ३ । १ । १ आ. १ सूत्रम् )

### ६१७ प्रत्ययः ॥ ३ । १ । १ ॥

( अधिकारत्वस्थापनाधिकरणम् )

( आक्षेपभाष्यम् )

**अधिकारेणेयं प्रत्ययसंज्ञा क्रियते । सा प्रकृत्युपपदोपाधीनामपि प्राप्नोति । तस्याः प्रतिषेधो वक्तव्यः । प्रकृति गुप्तिज्कितः । उपपद स्तम्बकर्णयोः । उपाधि हरतेर्दृतिनाथयोः पशौ । एतेषां प्रतिषेधो वक्तव्यः ॥**

( प्रदीपः ) श्रीगणेशाय नमः ॥ प्रत्ययः ॥ १ ॥ **अधिकारेणेति** । यदि तु प्रकारान्तरेण संज्ञिस्वरूपनिर्देशादिना संज्ञा क्रियते ततो न स्यादतिप्रसङ्गः । यदा तु गौरवादिप्रसङ्गपरिहारायाधिकारेण क्रियते ततोतिप्रसङ्ग इत्यर्थः ॥ तत्र यदि सर्वे संज्ञिनः स्वरूपेण निर्दिश्येरन् ततो गौरवं स्यात् ॥ अथ **'सप् प्रत्यय'** इति सनः सकारादारभ्य कपः पकारेण प्रत्याहाराश्रयणेन संज्ञा विधीयेत तदानेकस्य पकारस्य संभवात् संदेहः स्यात् ॥ ननु प्रतियोगमुपस्थानेपि वाक्यभेदप्रसङ्गात् प्रकृत्यादीनां प्रत्ययसंज्ञा न भविष्यति । तथा हि— **हरतेर्धातोर्दृतिनाथयोः कर्मणोरुपपदयोः पशौ कर्तरीन्प्रत्ययो भवतीत्येकं** वाक्यम्, **ते च हरतिदृतिनाथपशवः प्रत्ययसंज्ञा** इति द्वितीयं वाक्यम् । न चैकवाक्यतायां संभवन्त्यां वाक्यभेदो युक्तः ॥ नैतदस्ति । सनादीनामपि वाक्यभेदेनैव संज्ञा विधेया । नह्यसतः संज्ञिनस्संज्ञाविधानमुपपद्यते । तत्रैकेन वाक्येन सनादीनां विधिः । अपरेण तेषामेव संज्ञाविधिः । ततश्च यथा सनादीनां वाक्यभेदेन संज्ञाविधिः, एवं प्रकृत्यादीनामपि प्रतिसंज्ञि प्रत्ययसंज्ञोपस्थानसामर्थ्यात् संज्ञासंज्ञिसंबन्धप्रतिपत्तियोग्यविभक्त्यन्तराध्याहारेण प्राप्नोति । सनाद्युत्पत्तिवाक्य एव प्रथममेवेषां पारार्थ्यमवगतम् । द्वितीये तु संज्ञासंज्ञिसंबन्धप्रतिपादनवाक्ये संज्ञासंबन्धप्रतिपत्तौ स्वार्थता स्यात् । यथा च सप्तमीनिर्दिष्टस्य वाक्यभेदेनोपपदसंज्ञाऽधिकाराद्भवति तथा प्रत्ययसंज्ञापि प्राप्नोति ॥ उपाधिशब्देन चेह तुल्यन्यायत्वाद्विशेषणमप्युच्यते । क्वचित्तु, तयोर्भेदेन व्यवहारो दृश्यते । यथा 'नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति ॥

**'अर्थविशेष उपाधिस्तदन्तवाच्यः[1] समानशब्दो यः ।**
**अनुपाधिरतोन्यः स्याच्छ्लाघादि विशेषणं यद्वत् ॥'**
इति ॥

( उद्द्योतः ) श्रीगणेशाय नमः ॥ प्रत्ययः ॥१॥ अधिकारेणेत्यस्य प्रयोजनमाह—यदि त्विति ॥ अनेकस्येति । प्रत्यासत्त्याश्रये तिपः पकारेण, व्याप्त्याश्रये तष्टतनप्तनथनाश्चेति तनपः पकारेणेत्यर्थः ॥ एवं च गौरवातिव्याप्त्यादिदोषपरिहारायाधिकार एव कर्तव्यः ॥ तथा च प्रकृत्यादिष्वतिप्रसङ्ग इति भावः ॥ तमाक्षिपति—नन्विति । विधीयमानस्य सनादेः प्रथमान्ततया प्रत्यय इत्यनेनैव सामानाधिकरण्यादेकवाक्यतया संज्ञासंबन्धः ॥ अन्येषां तु विविभक्तित्वाद्[2]वाक्यभेदेनैव संज्ञासंबन्ध इति भावः ॥ संभवत्येकवाक्यत्व एव वाक्यभेदो दोषो, नत्वसंभव इति समाधत्ते—नैतदिति । ननु विविभक्तित्वात् कथं प्रत्यय इत्यनेन तेषां संबन्ध इत्यत आह—विभक्त्यन्तरेति । ननु सनादिविधानार्थत्वात्प्रकृत्यादेरप्रधानतया संज्ञा न भविष्यतीत्यत आह—सनादीति । अन्यत्राप्रधानत्वेपि अन्यत्र संस्कार्यत्वलक्षणस्वार्थत्वेऽविरोध इति भावः ॥ ननु प्रकृतीनां प्रत्ययविधावुद्देश्यतया तासामेव संज्ञायामप्युद्देश्यत्वं न्याय्यं न तु प्रत्ययानामिति चेन्न समानविभक्तिकत्वेन प्रत्ययानां क्लृप्तोद्देश्यतया विभक्त्यन्तराध्याहारेण प्रकृत्यादीनामपि तत्संभवादित्यभिमानः[3] ॥

१ अर्थविशेषत्वमेव विवृणोति तदन्तेत्यादिना । ( र. ना. )

२ विरुद्धा विभक्तिर्यस्य तत्त्वादिति बहुव्रीहिः । ( र. ना. )

३ अभिमानोक्तिबीजं तु समानविभक्तिकत्वेन सनादिभिरेव प्रत्ययसंज्ञाया उद्देश्याकाङ्क्षाशान्तौ विभक्त्यन्तराध्याहारेण प्रकृत्यादीनामुद्देश्यत्वे मानाभाव इति । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्लाघादिविशेषणस्य प्रत्ययसंज्ञा कुतो नोद्भावितेत्यत आह—उपाधिशब्देनेति ॥ तुल्यन्यायत्वादिति । प्रत्ययनिमित्तत्वेन प्रकृत्या तुल्यन्यायत्वमित्यर्थः । एवं चोपाधिषु तदुद्भावनेनैव विशेषणेप्युद्भावितैवेति भावः ॥ तदन्तवाच्यः प्रत्ययान्तवाच्य इत्यर्थः ॥ समानशब्द इति प्रयोगे भिन्नशब्दबोध्यतादशायां समानाधिकरणशब्दबोध्यो योऽसौ प्रत्ययान्तशब्दवाच्यः स उपाधिरुच्यत इत्यर्थः ॥ यथा पञ्चालानां विषयः पाञ्चाल इत्यत्र देशो, दृतिहरिरित्यादौ च श्वादिः पशुः ॥ नानार्थत्वात्संदेहवारणाय दृतिहरिः श्वेत्यादौ विशेषनियमार्थाय स्पष्टप्रतिपत्तये वा क्वचित्समानाधिकरणशब्दप्रयोगोऽपि ॥ आभ्यामपत्यकर्त्रादीनाम्[1]उपाधित्वव्यावृत्तिः श्लाघादिव्यावृत्तिश्च[2] ॥ श्लाघादीति आदिना 'धातोः कर्मणः समानकर्तृकादित्यादि ॥ अत[3] एव तद[4]समानाधिकरणमेव गार्गिकया श्लाघते' इति पदान्तराभिधेयं च। तद[5]प्रयोगे च वुञोऽसाधुत्वमेव अर्थविशेष उपाधिरित्यादि कात्यायनवंचनमितिन्यायवार्तिकतात्पर्यटीकायां वाचस्पतिमिश्राः ॥

( तृतीयस्य प्रत्याक्षेपप्रश्नभाष्यम् )

**किं च स्यात् यद्येतेषामपि[6] प्रत्ययसंज्ञा स्यात्? ॥**

( प्रदीपः ) **किञ्च स्यादिति** । नहि संज्ञाप्रवृत्तिमात्रादेव दोषो भवति । किन्तु तन्निमित्तकार्यप्रवर्तनात् । न च प्रकृत्यादीनां किञ्चित्तन्निमित्तं कार्यं संभवति । परत्वं तावदवधिविशेषोपादानेन सनादिभिरेव प्रतिपन्नम्[7] । न च गुपादीनां सनादीनां च परस्परापेक्षं परत्वं युज्यते, विरोधात् । उपपदस्यापि समासे सति पूर्वनिपातेन भवितव्यमिति परत्वाभावः । उपाधेरपि[8] पौर्वापर्यस्य लौकिके प्रयोगे नियमाभावात् स्थितस्यैव च परत्वस्य शास्त्रेणानुवादाच्छास्त्रस्य विधायकत्वाभावादनुवादकत्वाद् अर्थस्य चोपाधित्वात्तस्य च परत्वासंभवात्परत्वाभावः ॥ आद्युदात्तत्वमपि न भविष्यति । यथास्वं लक्षणेन तेषां स्वरस्य विहितत्वात् । अङ्गसंज्ञा च विधान[9]प्रतिबद्धा । न च प्रकृत्यादयः कुतश्चिद्विहिता इति तेषु परतः सा नान्यस्य भविष्यतीति प्रश्नः ॥

( उद्द्योतः ) प्रकृत्यादीनामिति । न च प्रातिपदिकत्वाभाव[10]: फलम्, ङ्याप्प्रातिपदिकादित्यादौ उद्देश्यतावच्छेदकत्वेन तेनैव[11]ज्ञापनात् ॥ ननु प्रतिसंज्ञिपरश्चेत्युपस्थानात् प्रकृत्यादयोऽवधिविशेषानुपादानेपि संनिधानात् सनादेरेव परे भवन्त्वित्यत आह—नचेति । युगपदिति शेषः ॥ समासे इति नित्यसमास इत्यर्थः ॥ लौकिके प्रयोगे पौर्वापर्यस्य नियमाभावादुपाधेरपि परत्वाभाव इत्यन्वयः ॥ तत्र हेतुमाह—स्थितस्यैवेति । तदनूद्य साधुत्वस्यैव विधेयत्वमिति भावः ॥ विधायकत्वाभावादिति ? परत्वादिविधायकत्वाभावादित्यर्थः ॥ तद्विधायकत्वेप्याह—अर्थस्य चेति ॥ यथास्वमिति । तेषां[12]मनवकाशत्वेन बाधकत्वमिति भावः ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**परत्वमाद्युदात्तत्वमङ्गसंज्ञेत्येते विधयः प्रसज्येरन् ॥**

( प्रदीपः ) **परत्वमिति** । प्रकृतिप्रत्यययोः पर्यायेण परस्परापेक्षं परत्वं स्यात् । शब्दान्तरापेक्षं वा प्रकृतेः, प्रकृत्यपेक्षं तु प्रत्ययस्य । उपपदस्यापि परत्वाद्[13]उपसर्जनं पूर्वमित्येतद्राजपुरुषादिषु सावकाशं बाधित्वा परत्वं स्यात् । भोक्तुं व्रजतीत्येव च नित्यं स्याद् न तु व्रजति भोक्तुमिति । उपाधिवाचिनोपि प्रयोगा[14]नियमे प्राप्ते परश्चेति नियमः स्यात् । यः प्रत्ययः स पर इति परिभाषणात् ॥ **आद्युदात्तत्वमपि स्वरा[15]न्तरं** बाधित्वा स्यात् ॥ **अङ्गसंज्ञेति** । ननु विधानप्रतिबद्धाङ्गसंज्ञा, न चेह प्रकृत्यादयो विधीयन्ते । नैष दोषः । सिद्धशब्दान्वाख्यानाय तेषामपि शास्त्रेण विधानात् । परत्वेन च पूर्वस्यावधेराक्षेपात् ॥ ननु पूर्वापेक्षेपि[16] परत्वे तस्माद्विधिर्नास्तीत्यङ्गसंज्ञा न भविष्यतीति चिन्त्यमेतत् ॥

( उद्द्योतः ) पर्यायेणेति । यौगपद्ये हि विरोध इति भावः ॥ सन्नादीनां परत्वबोधनेनैव सूत्रोपपत्तौ सनित्यादेर्विभक्तिविपरिणामादिनाऽर्थान्तरवर्णनमनुपपन्नमित्यत आह—शब्दान्तरापेक्षमिति ॥ प्रकृत्यपेक्षं त्विति । तासां पञ्चम्यन्तत्वादितिभावः ॥ ननु राजादीनामपि प्रातिपदिकादितिनिर्दिष्टत्वात् प्रत्ययसंज्ञायां परश्चेत्यस्य प्राप्तौ कथमुपसर्जनं पूर्वमित्येतत्सावकाशमत आह—भोक्तुं व्रजतीति । अत्र समासाभावेन उपपदस्य परत्वं स्यादिति भावः ॥ अर्थे परत्वासंभवस्योक्तत्वादाह—उपाधिवाचिन इति ॥ स्वरान्तरमिति । योनवकाशस्तद्विषये मा भूत् सावकाशविषये तु स्यादिति तात्पर्यम् ॥ न च प्रातिपदिकाद्धातोरित्यनेन सर्वप्रकृतिनिर्देशात्तदंशे सावकाशविषयो दुर्लभ इति वाच्यम्, स्वरान्तरगतं नित्यत्वं बाधित्वा पर्यायः स्यादित्यत्र तात्पर्यात् ॥ सिद्धेति । 'ढकि लोपः' इत्यनुवादेन ढको विध्यनुमानवदिहाप्यनुवादेनैव प्रकृतिविधानानुमानमिति भावः ॥ ननु कुतश्चित्पूर्वस्माद्विधिर्नास्तीति कथमङ्गत्वमत आह—आक्षेपादिति । तथा च पूर्वोद्देशेन परत्वेन तेषां विधानमिति भावः ॥ पूर्वापेक्षेति परत्वे इति । अनुमितो विधिः सामान्यत एव, पूर्वोद्देशेन तु परत्वमात्रविधानम् वस्तुतो ढगादेर्मानान्तरेणासिद्ध्या भवतु

१ अपत्यकर्त्रादीनां प्रत्ययवाच्यत्वं न तु तदन्तवाच्यत्वमिति भावः। (र.ना.)

२ गार्गिकया श्लाघते इत्यादौ श्लाघादीनां समानाधिकरणशब्दबोध्यत्वं नास्तीति भावः। ( र. ना. )

३ विशेषणत्वादेवेत्यर्थः। ( र. ना. )

४ तदिति व्यस्तं पदम् । श्लाघादिकमित्यर्थः । असमानाधिकरणमित्यस्य असमानाधिकरणपदप्रतिपाद्यमित्यर्थः। ( र. ना. )

५ पदान्तराप्रयोगे इत्यर्थः। ( र. ना. )

६ 'यद्येषामपि' ॥

७ स्वीकृतमित्यर्थः। ( र. ना. )

८ उपाध्यभिधायकपशुशब्दादेरपीत्यर्थः। ( र. ना. )

९ विधिसंबद्धेत्यर्थः। ( र. ना. )

१० प्रत्ययपर्युदासेनेति शेषः। ( र. ना. )

११ प्रातिपदिकत्वज्ञापनादित्यर्थः। (र. ना.)

१२ प्रतिपदोक्तप्रकृत्यादिस्वरविधीनामित्यर्थः। ( र. ना. )

१३ अस्य 'बाधित्वे'त्यत्र संबन्धः। ( र. ना. )

१४ लोकतः—इत्यादिः। ( र. ना. )

१५ सावकाशमित्यादिः। ( र. ना. )

१६ 'पूर्वाक्षेपेपि परत्वेन'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तद्विध्यनुमानम्, प्रकृत्यादीनां तु मानान्तरेण सिद्धतया तद्विध्यनुमानमेव दुर्लभमिति भावः ॥ चिन्त्यमेतदिति ।-हलादयः प्रत्ययसंज्ञा भवन्ति, ते च प्रत्ययेभ्यः शब्दान्तरेभ्यो वा परे भवन्तीत्यत्र परशब्दस्य धर्मिप्रधानतया परत्वविशिष्टानां तेषामेव विधानं शाब्दम् ॥ प्राप्ताप्राप्तविवेकन्यायेन तु देशमात्रविधानम् ॥ अत एव सर्वोपि विशिष्टविधिरेव । प्राप्ताप्राप्तविवेकन्यायेन तु कस्यचिद् गुणविधित्वमिति मीमांसकाः ॥ नहि यस्मात्प्रत्ययविधिरित्यत्र प्राप्ताप्राप्तविवेकन्यायलब्धविधेयत्वमेव गृह्यते इत्यत्र मानमस्तीत्यङ्गसंज्ञा प्रयोजनमेव ॥ ननु विधिग्रहणसामर्थ्यान्न्यायलब्धविधेयत्वस्य ग्रहः, स्त्री इयती इत्यादौ इदम् निरूपिताङ्गत्वस्य दुर्वारत्वेन न्यार्वेत्याभावादिति चेन्न, भवन्तीत्यादौ दीर्घवारणाय विधिग्रहणस्यावश्यकत्वादित्याशयात् ॥

(समाधानभाष्यम्)

अत उत्तरं पठति—

(१६८१ अधिकारत्वे दूषणनिराकरणवार्तिकप्रथमखण्डम्)

॥ * ॥ प्रत्ययाधिकारे प्रकृत्युपपदोपाधीनामप्रतिषेधः ॥ * ॥

(भाष्यम्) अधिकारेणापि प्रत्ययसंज्ञायां सत्यां प्रकृत्युपपदोपाधीनामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥

प्रत्ययसंज्ञा कस्मान्न भवति? ।

(वार्तिकद्वितीयखण्डम् ॥ १ ॥)

॥ * ॥ निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापि ॥ * ॥

(भाष्यम्) निमित्तानि हि निमित्तिकार्यार्थानि भवन्ति ।

किं पुनर्निमित्तम् । को वा निमित्ती? ॥

प्रकृत्युपपदोपाधयो निमित्तम्, प्रत्ययो निमित्ती ॥ अन्यत्रापि चैष न्यायो दृष्टः नावश्यमिहैव ।

क्वान्यत्र? ॥

लोके । तद्यथा—बहुष्वासीनेषु कश्चित्कंचित्पृच्छति—कतरो देवदत्तः, [कतमो यज्ञदत्त] इति । स आह—'योऽश्वे, यः पीठे' इति । योऽश्वे यः पीठ इत्युक्ते निमित्तस्य निमित्तिकार्यार्थत्वादध्यवस्यति अयं देवदत्तोऽयं यज्ञदत्त इति । नेदानीमश्वस्य पीठस्य वा 'देवदत्त' इति संज्ञा भवति ॥

किं पुनर्निमित्तम्, को वा निमित्ती? ॥

निर्ज्ञातोऽर्थो निमित्तम् । अनिर्ज्ञातोऽर्थो निमित्ती । इह च प्रत्ययोऽनिर्ज्ञातः, प्रकृत्युपपदोपाधयो निर्ज्ञाताः ॥

कुं ।

धातूपदेशे प्रातिपदिकोपदेशे च ॥ ते निर्ज्ञाता निमित्तत्वेनाश्रीयन्ते ॥

(प्रदीपः) निमित्तस्येति । प्रकृत्यादीनां भूतविभक्त्या निर्देशात् सनाद्युत्पत्तौ निमित्तभावेनोपादानात् पारार्थ्यात् स्वसंस्कारं प्रति प्रयोजकत्वाभावादित्यर्थः । तत्र वाक्यभेदेनापि विधीयमाना प्रत्ययसंज्ञा सनादिभिरेव संबद्ध्यते, तेषामेव निमित्तित्वात्तां प्रति प्रयोजकत्वात् । संज्ञासंबन्धप्रतिपत्तियोग्यविभक्तिनिर्देशाद् । द्वयोश्च परस्पराकाङ्क्षायां संबन्धः, न त्वन्यतराकाङ्क्षायां सीतारावणयोरिवेति सत्यामपि संज्ञाया आकाङ्क्षायां प्रकृत्यादीनां विशेषणत्वादनाकाङ्क्षत्वात् संज्ञासंबन्धाभाव इत्युक्तं भवति ॥ किं पुनरिति । नित्यत्वाच्छब्दानां निमित्तनिमित्तिभावो नोपपद्यत इति प्रश्नः ॥ प्रकृतीति । प्रतिपादकानां शब्दानामुपायभावेन शास्त्रेण व्यवस्थापनात्तद्गुणविभक्तिनिर्देशादस्ति निमित्तनिमित्तिभावः ॥ कतर इति । किं यत्तदो निर्धारणे द्वयोरेकस्य डतरच् वा बहूनां जातिपरिप्रश्ने डतमजिति सूत्रद्वय उपाधिप्रत्याख्यानाद् बहूनामप्येकस्य निर्धारणे कतरशब्दः प्रयुक्तः ॥

(उद्योतः) भूतविभक्त्या सिद्धत्वबोधकविभक्त्या ॥ ननु भिन्ने वाक्ये स्वसंस्कारं प्रति प्रयोजकता स्यादेवेत्यत आह—वाक्यभेदेनापीति । द्वितीयवाक्यस्यापि 'गुप्-तिज्-किद्भ्यो यः सन्स प्रत्ययः' इत्येवंरूपस्यैव स्वीकारेण तत्रापि भूतविभक्त्या निर्देशात्पारार्थ्यमेव प्रकृत्यादीनामिति भावः ॥ तेषामेव तां प्रति प्रयोजकत्वे हेतुमाह—संज्ञासम्बन्धेति । न च द्वितीयवाक्ये योग्यविभक्त्या विपरिणामः ॥ योग्यविभक्तिनिर्दिष्टेषु सनादिषु चारितार्थ्यादिति भावः ॥ युक्त्यन्तरमप्याह—द्वयोश्चेति । प्रत्ययसंज्ञायाः संज्ञित्वेन प्रत्ययापेक्षावत् प्रकृत्याद्यपेक्षायामपि प्रकृत्यादीनां प्रत्ययविधौ निमित्तभावेनोपक्षीणानां संज्ञां प्रत्यपेक्षाभावात्प्रत्ययसंज्ञा नेत्यर्थो निमित्तिकार्यार्थत्वादित्यनेन प्रतिपादित इत्यर्थः । उभयाकाङ्क्षया सम्बन्धस्य न्याय्यतरत्वादित्यभिमानः ॥ वस्तुतस्तु गुपादिभ्यः सन्प्रत्ययः परो भवतीत्येवं विशिष्टस्य संज्ञिन एकवाक्यतया विधिसम्भवात् भिन्न-

१ यथा दध्ना जुहोतीत्यादौ दधिविशिष्टहोमविधानेऽपि पर्यवसाने दधिरूपगुणविधानमेवेति । (र. ना.)

२ अन्यथेत्यादिः । (र. ना.)

३ स्त्रीशब्दे इत्यादिः । (र. ना.)

४ विधिग्रहणेत्यादिः । (र. ना.)

५ नहि भाकारावधिकपरत्वविशिष्टस्य श्नमो विधानमतो भाकारस्य न तत्राङ्गत्वमिति भावः । (र. ना.)

६ प्राचीनतरपुस्तके नोपलभ्यते ॥

७ निमित्तस्य, ज्ञापककारणस्याश्वस्य पीठस्य वा, देवदत्तरूपस्य निमित्तिनः कार्यार्थत्वाद् ज्ञानार्थत्वादित्यर्थः । (र. ना.)

८ तस्मिन्प्राचीनतरपुस्तके नास्ति ॥

९ 'कुत्र' ॥

१० 'न इह निमित्तत्वेना' ॥

११ भूतार्थोन्वययोग्यार्थबोधकविभक्त्येत्यर्थः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वाक्यत्वे मानाभावान्न प्रकृत्यादीनां संज्ञा ॥ न ह्युद्भिदा यजेतेत्यादौ नामधेयसम्बन्धलाभाय वाक्यभेदं मन्वते न्यायविदः। तत्रोद्भित्संज्ञाविशिष्टस्यैव यागस्य विधानात्। शब्दार्थयोरभेदाच्च नान्वयायोग्यता, नापि लक्षणा, अन्यथाऽसतः संज्ञानुपपत्तिवत् आद्युदात्तस्यापि विधानासम्भवात् 'प्रत्ययस्वरश्च तासेर्वृत्तिसंनियोगशिष्टः' इति लुटः प्रथमस्येति सूत्रशेषस्थभाष्यविरोधः॥ 'यदैव तासिः प्रवर्तते तदैवोदात्तत्वयुक्तः' इति कैयटः॥ किञ्च संज्ञिनमुद्दिश्य संज्ञाविधाने पूर्वं बुद्धिविषयस्य संज्ञेत्यर्थस्य 'पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा, सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते। सतो हि कार्यिणः कार्येण भवितव्यम्' इत्यादि भाष्यसम्मतत्वेपि प्रकृते 'अस्य सूत्रस्य शाटकं वय' इत्यादिवत् संज्ञाविशिष्टविधाने बाधकाभावात्। अयमेव निमित्तिकार्यार्थत्वात् इति भाष्यस्यार्थः। अयं भावः—निमित्तिनोऽनिर्ज्ञातत्वात्तेनैकवाक्यतया विशिष्टविधिसम्भवः। निमित्तिष्वन्वये तु वाक्यभेद आपततीति वाक्यभेदभिया न तैस्तस्याः सम्बन्ध इति॥ प्रतिपादकानामिति—अर्थप्रतिपादकत्वेन लोके सिद्धानामित्यर्थः॥ उपायभावेनेति। काल्पनिकप्रकृतिप्रत्ययविभागस्योपायत्वेनाश्रित्यान्वाख्यानादित्यर्थः॥ तद्गुणेति। तत्र निमित्तित्वानुगुणां प्रथमा अन्याः प्रायेण निमित्तत्वानुगुणा इत्याह॥ बहुषु निर्धारणे डतरोनुपपन्न इत्यत आह—किं यदिति॥

( १६८२ समाधानान्तरवार्तिकम् ॥ २ ॥ )

## ॥*॥ प्रधाने कार्यसंप्रत्ययाद्वा सिद्धम् ॥*॥

(भाष्यम्) अथ वा प्रधाने कार्यसंप्रत्ययो भवति॥

किं च प्रधानम्?।

प्रत्ययः। तद्यथा–बहुषु यात्सु कश्चित्कंचित् पृच्छति को यातीति। स आह–राजेति। राजेत्युक्ते प्रधाने कार्यसंप्रत्ययाद्यः पृच्छति, यश्च कथयति, उभयोः संप्रत्ययो भवति॥

किं कृतं पुनः प्राधान्यम्?॥

अर्थकृतम्। यथा पुनर्लोकेऽर्थकृतं प्राधान्यम्॥

शब्दस्येदानीं किं कृतं प्राधान्यम्?। शब्दस्यापूर्वोपदेशः प्राधान्यम्। यस्यापूर्वोपदेशः स प्रधानम्॥ प्रकृत्युपपदोपाधयश्च निर्दिष्टाः॥ क्व?। धातूपदेशे प्रातिपदिकोपदेशे च॥

(प्रदीपः) प्रधान इति। प्रत्ययसंज्ञा स्वविषयप्रकृतये प्रधानमपेक्षते न तु पारतन्त्र्यादप्रधानमित्यर्थः॥ किंकृतमिति। भवतु राज्ञः प्राधान्यं तदधीनस्थितित्वादन्येषाम्। इह तु कथमिति प्रश्नः॥ अर्थकृतमिति। प्रयोजनकृतमित्यर्थः। यस्यापूर्व इति। तदर्थत्वादन्येषां तस्यैव प्राधान्यमित्यर्थः॥

(उद्योतः) प्रधाने कार्यसंप्रत्ययादित्यस्य निमित्तिकार्यार्थत्वादित्यनेन पौनरुक्त्यमाशङ्क्याह—प्रत्ययसंज्ञेति। पूर्वं प्रत्ययसंज्ञाया आकाङ्क्षामङ्गीकृत्य प्रकृत्यादीनां निरपेक्षत्वात्संज्ञाऽभाव इत्युक्तम्। इदानीं तु प्रत्ययसंज्ञाया अपि गुणभूतेषु आकाङ्क्षा नास्तीति प्रतिपाद्यत इति विशेष इति भावः॥ वाक्यभेदभिया तैस्तस्या असम्बन्ध इति प्रागुक्तम्। अनेन तु तत्रान्वयप्रसक्त्यभाव एवोच्यते इति विशेष इति तत्त्वम्॥ भाष्ये को यातीति डतरस्य वैकल्पिकत्वात् तदप्रयोगः॥ उभयोः संप्रत्ययो भवतीति तत्र कथयितुः संप्रत्ययः तन्मूलकप्रयोगः तथात्रापि आचार्यस्तेनैव तात्पर्येण प्रयुक्तवान् शिष्याणां च तथैव बोध इति भावः॥ प्रयोजनकृतमिति। प्रयोजकत्वकृतप्रेरणाकृतमित्यर्थः॥ भाष्ये यथापुनरित्यव्ययमस्तु पुनरित्यर्थे॥ किं कृतमिति। प्रेरकत्वाभावादिति भावः॥ अपूर्वोपदेशमात्रेण कथं प्राधान्यमत आह—तदर्थत्वादिति। तन्निष्पादकत्वादित्यर्थः॥

( विकारागमानां प्रत्ययसंज्ञापादनभाष्यम् )

यद्येव निमित्तस्य निमित्तिकार्यार्थत्वात् यद्वा प्रधाने कार्यसंप्रत्ययात्प्रकृत्युपपदोपाधीनां न भवति। विकारागमानां तु प्राप्नोति 'हनस्त च' 'त्रपुजतुनोः षुक्' एतेषां ह्यपूर्वोपदेशात्प्राधान्यम्, निमित्तिनश्चैवैते॥

(प्रदीपः) यद्येवेति। ननु ये तावत् प्रकृतेर्विकारागमास्ते प्रकृत्यनुप्रवेशात् प्रकृतिवत् संज्ञया न संभन्त्स्यन्ते। ये तु प्रत्ययस्य ते तद्ग्रहणेन गृह्यन्त एवेति नास्त्यनिष्टप्रसङ्गः। नैतदस्ति। प्रकृतिविकारागमानां तत्संबन्धित्वेपि प्रयोजकत्वात् प्रधानत्वाच्च स्यादेव प्रत्ययसंज्ञा। प्रत्ययसंबन्धिनामपि तदवयवत्वे सिद्धे पृथक् प्रत्ययसंज्ञा स्यादेव योग्यतासंभवात्॥

(उद्योतः) प्रयोजकत्वादिति। प्रयुज्यते इति प्रयोजकः प्रयोज्यस्तत्त्वात् निमित्तित्वादित्यर्थः॥ प्रधानत्वाच्चेति। अपूर्वोपदेशादित्यर्थः॥ योग्यतासंभवादिति। समानविभक्तिकत्वरूपयोग्यतासम्भवादित्यर्थः॥

---

१ अत्र वृत्तीत्यस्य प्रवृत्तीत्यर्थ इति 'यदैव तासिः प्रवर्तते' इति कैयटात्प्रतीयते। (र. ना.)

२ अस्मात्कैयटाद् विशिष्टस्यैव विधानमिति लभ्यतेऽतः प्रकृतेऽपि विशिष्टस्यैव संज्ञिनो विधानमिति भावः। (र. ना.)

३ यथा तत्र संज्ञाविशिष्टस्य वानं तथाऽत्र संज्ञाविशिष्टस्य विधानमिति भावः। (र. ना.)

४ संज्ञाया इत्यर्थः। (र. ना.)

५ प्रत्ययरूपस्य शब्दस्येत्यर्थः। (र. ना.)

६ 'श्चोपदिष्टाः'॥

७ बाहुलकात्कर्मणि ण्वुल्। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( १६८३ विकारागमानां प्रत्ययत्वापत्तिनिराकरण-वार्तिकम् ॥ ३ ॥ )

**॥*॥ विकारागमेषु च परविज्ञानात् ॥*॥**

**( भाष्यम् ) विकारागमेषु[1] च परविज्ञानात् प्रत्ययसंज्ञा न भविष्यति । प्रत्ययः परो भवतीत्युच्यते । न च विकारागमाः परे [ संभवन्ति[2] ] ॥**

**( प्रदीपः ) विकारागमेष्विति ।** यः परः स प्रत्ययः, न च विकारागमाः परे । तेन ते प्रत्ययसंज्ञा न भविष्यन्तीत्येवं न व्याख्येयम् । नहि परत्वनिमित्ता प्रत्ययसंज्ञा ॥ अपि तु प्रत्ययसंज्ञानिमित्तं परत्वम् । तथा च परत्वाभावेऽपि श्नम् बहुजकचां प्रत्ययसंज्ञा भवति ॥ तस्मादेवं व्याख्यायते—प्रयोजनाभावाद्विकारागमानां प्रत्ययसंज्ञा न भवति । तथा हि । परविज्ञानं प्रत्ययसंज्ञाफलम् । तत् तेषां न संभवति । षष्ठ्या स्थानसंबन्धस्यावयवसंबन्धस्य च प्रतिपादनादागमानां चानुदात्तत्वेन भवितव्यमित्याद्युदात्तत्वाभावः ॥ विकारा अपि येऽनच्कास्ते न स्वरभाजः ये तु साच्कास्ते प्रवृत्तिकाल एवान्तरङ्गत्वात् स्थानिस्वरयुक्ताः । अङ्गसंज्ञापि तन्निमित्ताऽन्यस्य न प्राप्नोति । सा हि प्रत्ययविधान[3]परत्वनिबद्धा । प्रयोजनाऽभावे तु श्नम आगमत्वेऽपि शकारस्येत्संज्ञार्थं प्रत्ययसंज्ञा प्रवर्तत एव ॥ **परविज्ञानादिति । विभाषा गुण इति हेतौ** पञ्चमी । फल[4]मपि प्रयोजकत्वाद्धेतुरित्युच्यते । यथाध्ययनेन वसतीति । ततश्चायमर्थः । प्रत्ययसंज्ञायां परत्वं फलम् । तच्चात्र न संभवतीति प्रत्ययसंज्ञा प्रयोजनाभावान्न भविष्यति ॥

**( उद्द्योतः ) नहि परत्वनिमित्तेति ।** तद्व्याप्येत्यर्थः[5] । तथा हि सति व्यापकाभावेन व्याप्याभावः सिध्येदिति भावः ॥ अपि तु प्रत्ययसंज्ञानिमित्तं परत्वमिति । इदं चिन्त्यम् । राजपुरुष इत्यादौ प्रत्ययत्वाभावेपि पुरुषपदस्य परत्वदर्शनात्[6] ॥ अकचामिति । अकचः प्रत्ययत्वफलं प्रत्ययस्थादितीत्वम् ॥ परविज्ञानमिति । परश्चेतिपरिभाषा प्रत्ययसंज्ञा चास्याः लिङ्गम् प्रत्ययसंज्ञकः परोभवतीत्यर्थं इति भावः ॥ अन्तरङ्गत्वात्स्थानीति । आन्तरतम्येनेत्यर्थः[7] ॥ आद्युदात्तत्वं तु तव्यादौ चरितार्थमिति भावः ॥ साह्वीति । प्रत्ययविधानेन परत्वेन च प्रतिबद्धेत्यर्थः[8] ॥ शकारस्येत्संज्ञार्थमिति । अत एव तृणह इत्यादिनिर्देशाः सङ्गच्छन्ते ॥ श्नमः शकारस्तु श्नान्नलोप इति अत्र विशेषणार्थः इति भावः ॥ नन्वेवं परविज्ञानादिति पञ्चमी अनुपपन्ना हेतुत्वाभावादत आह—फलमपीति । भाष्ये न च विकारागमाः परे इत्येव पाठः ॥ तदुत्तरं संभवन्तीत्यपाठ इत्याशयः[9] ॥ अत्राहुः—प्रत्यय इत्यादीनां त्रयाणामप्यधिकारत्वेन[10] प्रतिसूत्रमुपस्थितौ एकवाक्यतया युगपदेव त्रयाणां विधानस्य न्याय्यत्वेन नान्योन्यं प्रत्यन्योन्यस्योद्देश्यता न्याय्येति कथं प्रत्ययसंज्ञायाः परत्वं फलं, कथं वाद्युदात्तत्वमिति ॥ अत एव लुटः प्रथमस्येत्यादिसूत्रस्थभाष्याविरोधः ॥ तस्मादयमर्थः—स्थानषष्ठ्यादिभिर्देशाकाङ्क्षाया विकारादीनामभावेन[11] पर इत्यस्यासंबन्धे सन्नियोगशिष्टन्यायेन प्रत्यय इत्यादीनामप्यसम्बन्ध इति । परविज्ञानादित्यस्य तत्सन्नियोगशिष्टत्वादित्यर्थः ॥ कश्चित्तु तृणह इमित्यादिनिर्देशाच्छयासयोरिति ज्ञापकाच्च[12] संनियोगशिष्टन्यायानित्यत्वेन प्रवर्तत एव संज्ञेति दिक् ॥

( आक्षेपभाष्यम् )

**किं पुनः कारणं समाने अपूर्वोपदेशे प्रत्ययः परो, न विकारागमाः परे[13] ॥**

**( प्रदीपः ) किं पुनरिति ।** परत्वमेव भवतु प्रत्ययसंज्ञाप्रयोजनमिति भावः ॥

**( उद्द्योतः )** एतदेव ध्वनयन्विकारागमेषु परश्चेत्यस्याप्रवृत्तिं प्रश्नमुखेनोपपादयति—भाष्ये—किं पुनरिति ॥

( १६८४ विकारागमानां प्रत्ययत्वनिराकरणवार्तिकम् ॥ ४ ॥ )

**॥*॥ षष्ठीनिर्दिष्टस्य च तद्युक्तत्वात् ॥*॥**

**( भाष्यम् ) षष्ठीनिर्दिष्टं विकारागमयुक्तं भवति । पञ्चमीनिर्दिष्टाच्च प्रत्ययो विधीयते ॥**

**( प्रदीपः ) षष्ठीनिर्दिष्टस्येति ।** षष्ठ्या च पूर्वोदितस्य संबन्धस्य प्रतिपादनाद्विरोधात् परत्वाभाव इत्यर्थः ॥ **पञ्चमीनिर्दिष्टाच्चेति ।** पञ्चमीनिर्देशे पर्यायेण पूर्वपरत्वयोः प्राप्तयोः परश्चेत्यनेन परत्वं नियम्यत इति नास्ति कश्चिद्विरोध इत्यर्थः ॥

**( उद्द्योतः ) पूर्वोदितस्येति ।** स्थानसम्बन्धस्यावयवसम्बन्धस्य चेत्यर्थः ॥

---

१ विकारागमेषु च प्रत्ययसंज्ञा न भविष्यति परविज्ञानादिति योजना । (र.ना.)

२ प्राचीनतरपुस्तकद्वये नैवोपलभ्यते ॥ गुरुवरशिवरामशर्मणां पुस्तके 'सन्ति' इत्युपलभ्यते ॥

३ प्रत्ययविधानपरत्वाभ्यां प्रयुक्तेत्यर्थः । ( र. ना. )

४ प्रत्ययसंज्ञायाः फलं परविज्ञानमित्यर्थः । ( र. ना. )

५ निमित्तपदस्य ज्ञापकनिमित्तपरत्वेन व्याप्यार्थलाभः । ( र. ना. )

६ यदि 'प्रत्यय एव परः प्रयोक्तव्यः' इति नियमो दर्शितो भवेत् तदा भवदुक्तं चिन्त्यत्वं संगतं भवेत् । किं तु 'असति विशेषविधौ प्रत्ययः पर एव प्रयोक्तव्यः' इत्येवं नियमे नैव समासघटकपदयोरिहोक्ता व्यवस्थेति राजपुरुषादिपदानामत्र विचारस्यैवाप्राप्तेर्मृषैवेयं खण्डनप्रभूतिरिति । 'नवीनेभ्योऽप्युत्तमत्वं स्वस्य ख्यापयितुं नवः । तदाशयमबुद्ध्यैव खण्डने यतते मृषा ॥' इत्युक्तिः फलिता भवतीति दाधिमथाः ॥

७ अर्थप्रयुक्तान्तरतम्येनेत्यर्थः । ( र. ना. )

८ संबद्धेत्यर्थः । संबन्धश्च प्रयोज्यप्रयोजकभाव इति भावः । ( र. ना. )

९ प्रत्ययसंज्ञायां परत्वं फलम् । तच्चात्र न संभवतीति कैयटदर्शनेन प्रकृतभाष्ये 'संभवन्ती'ति पाठः प्रतीयते, नागेशस्तु कुतोऽयुक्तत्वं वदतीति स एव प्रष्टव्यः । ( र. ना. )

१० प्रत्ययः, परश्च, आद्युदात्तश्च, इत्येतेषां त्रयाणामित्यर्थः । ( र. ना. )

११ विकारादीनां देशाकाङ्क्षाया अभावेन स्थानषष्ठ्यादिभिः पर इत्यस्यासंबन्धे इत्यर्थः । ( र. ना. )

१२ अयं भावः । अकचः परत्वाभावेन तत्संनियोगशिष्ट प्रत्ययसंज्ञाऽप्रवृत्तौ प्रत्ययस्थादितीत्वाप्राप्तौ न यासयोरिति निषेधो व्यर्थ एव स्यादिति । (र. ना.)

१३ 'पराः' इति प्राचीनतरपुस्तके ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( १६८५ बाधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ प्रत्ययविधानानुपपत्तिस्तु ॥ * ॥

( भाष्यम् ) प्रत्ययविधिस्तु नोपपद्यते ॥ क? । यत्र विकारागमाः शिष्यन्ते 'हनस्त च' 'त्रपुजतुनोः षुक्' इति ॥

( प्रदीपः ) प्रत्ययेति । षष्ठीनिर्देशेष्विति भावः ॥ क्वेति । गापोष्टगित्यादावानन्तर्यसंबन्धे षष्ठीविज्ञानादुपपद्यत एव प्रत्ययविधिरिति प्रश्नः ॥ हनस्त चेति । श्रुतयोरेव स्थान्यादेशयोरागमागमिनोश्च संबन्धप्रतिपादने वाक्यस्योपयोगाद्वाक्यान्तराभावाच्च प्रत्ययविधिर्न प्रकल्पत इत्यर्थः ॥

( उद्द्योतः ) आनन्तर्यसम्बन्ध इति । धातोरिति पञ्चमीनिर्देशेन परविधानमुपपद्यत इति भावः ॥ ननु धातोरित्यनुवृत्त्या क्यपोनुवृत्त्या च वाक्यभेदेन प्रत्ययस्यापि विधानं स्यादत आह—श्रुतयोरेवेति ॥

( अनुपपत्तिकारणप्रश्नभाष्यम् )

किं पुनः कारणं न सिध्यति ।

( अनुपपत्तिकारणकथनभाष्यम् )

विकारागमयुक्तत्वात् । अपञ्चमीनिर्दिष्टत्वाच्च ॥

( १६८६ पञ्चमीकरणवार्तिकम् ॥ ६ ॥ )

॥*॥ तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम् ॥*॥

( भाष्यम् ) तस्मात्तत्र पञ्चमीनिर्देशः कर्तव्यः ॥

( सूत्रव्यत्यासकरणप्रश्नभाष्यम् )

[ स तर्हि पञ्चमीनिर्देशः कर्तव्यः ॥ ]

( यथान्यासस्थापनभाष्यम् )

न कर्तव्यः । इह तावद् "हनस्त च" इति धातोरिति वर्तते । "त्रपुजतुनोः षुक्" इति प्रातिपदिकादिति वर्तते ॥

( प्रदीपः ) इह तावदिति । प्रकृतिप्रत्ययानुवृत्तिसामर्थ्यात् प्रत्ययोपि विधास्यते विकारागमा अपीत्यर्थः ॥

( उद्द्योतः ) नन्वनुवृत्तप्रकृतेरपि विभक्तिविपरिणामेन षष्ठ्यन्तविशेषणतया कथं प्रत्ययविधिरत आह—प्रकृति प्रत्ययेति ॥

( आपत्तिभाष्यम् )

यद्येवं 'हनस्त च' 'धातोः क्यप् भवती'ति धातुमात्रात् क्यप् प्राप्नोति ॥

( प्रदीपः ) यद्येवमिति । हन्तेरादेशविधावुपयोगाद्विभक्तित्वाच्च धातोरविशेषितत्वादिति भावः ॥

( उद्द्योतः ) ननु हन्तिना धातुविशेषणात्कथं धातुमात्रात्प्रसक्तेत आह—हन्तेरिति ॥

( आपत्तिवारकभाष्यम् )

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'न धातुमात्रात् क्यप् भवति' इति, यदयम् 'एतिस्तुशास्वृदृजुषः क्यप्' इति परिगणनं करोति ॥

अथ वा हन्तिरेवात्र धातुग्रहणेनाभिसंभन्त्स्यते 'हन्तेस्तो भवति' धातोः क्यप् भवतीति, कस्माद्? हन्तेरिति ॥

( प्रदीपः ) अथ वेति । पूर्वं लिङ्गेन[1] धातुश्रुतिर्हन्तावुपसंहृता । इदानीं वाक्यभेदेन सन्निधानाद्धन्तिस्तकारसंबन्धं च प्रतिपद्यते, धातुं च विशिनष्टीत्युच्यते ॥

( १६८७ समाधानान्तरवार्तिकम् ॥ ७ ॥ )

॥ * ॥ अर्थाश्रयत्वाद्वा ॥ * ॥

( भाष्यम् ) अथ वा अर्थाश्रयः प्रत्ययविधिः, यः स्वमर्थं प्रत्याययति स प्रत्ययः ॥

किं वक्तव्यमेतत्? ।

न हि ॥

कथमनुच्यमानं गंस्यते? ।

प्रत्यय इति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत्? । लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम् अन्वर्थसंज्ञा यथा विज्ञायेत प्रत्याययतीति प्रत्ययः ॥

( प्रदीपः ) अर्थाश्रयत्वाद्वेति । अन्वर्थसंज्ञाश्रयेणार्थवतः संज्ञाविधानाद्विकारागमानां चानर्थकत्वात् प्रत्ययसंज्ञा न भवतीत्यर्थः ॥ किं वक्तव्यमिति । पूर्वोपात्तार्थपरित्यागेन स्वरूपेणैव संज्ञात्वं संज्ञाशब्दा अनुभवन्तीति प्रत्यायकः प्रत्यय इत्येवं वक्तव्यमिति मत्वा प्रश्नः ॥ महतीति । महत्त्वात् प्रत्ययशब्दस्यावृत्तिरनुमीयते । तेन यः प्रत्यायकः स प्रत्ययः । महत्त्वसूचितं प्रकारान्तरमपि यद्भवति तत्सर्वादिसूत्रे व्याख्यातं तत एवावधारणीयम् ॥

( उद्द्योतः ) भाष्ये यः स्वमर्थमिति । प्रत्यायकत्वं च शब्दस्य स्वार्थविषयमेव गृह्यते योग्यत्वादित्यर्थः ॥ पूर्वोपात्तेति यौगिकार्थस्य शब्दस्य संज्ञात्वेन विनियोगकाले शब्दस्यैव प्रवृत्तिनिमित्तत्वाङ्गीकारेण पूर्वोपात्तयौगिकार्थत्यागादित्यर्थः ॥ संज्ञानां कृत्रिमत्वात्तस्य पूर्वोपात्तत्वं बोध्यम् । प्रकारान्तरम् अन्यत्र[3] शब्दस्य प्रवृत्तिनिमित्तत्वेऽपि महासंज्ञा विषये तादृशार्थवच्छब्दस्यैव तत्त्वमित्यादि ॥

( अन्वर्थसंज्ञाङ्गीकारदूषणभाष्यम् )

यदि प्रत्याययतीति प्रत्ययः, अविकादीनां[4] प्रत्ययसंज्ञा न प्राप्नोति । न हि ते किंचित्प्रत्याययन्ति ॥

( प्रदीपः ) नहि त इति । अन्वयव्यतिरेकाभ्यां कादीनां वाच्योर्थो नावधार्यते । तदभावेपि केवलाया एव प्रकृतेस्तदर्थावगमात् । नापि तरवादिवत्कश्चिद् द्योत्योर्थ इति भावः ॥

१ स्वान्वयसामर्थ्यरूपेण लिङ्गेनेत्यर्थः । ( र. ना. )
२ स्थानाख्यप्रमाणादित्यर्थः । ( र. ना. )
३ अक्षरलाघवस्थले इत्यर्थः । ( र. ना. )
४ अविकादिघटककादीनामित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यदप्युच्यते—'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती'ति प्रकृत्यर्थ एव तेषामर्थः[१] इति ॥ तदपि कल्पनामात्रम् । सत्यर्थवत्त्वे प्रत्ययसंज्ञया भाव्यमिति अभिहिते तदभावे स्वार्थावगमोदर्थवत्त्वं कादीनां नोपपद्यत इत्युक्तस्य दुरुत्तरत्वात् ॥

( उद्योतः ) दुरुत्तरत्वादित्यादि । अन्वयव्यतिरेकाभ्यां वाच्यद्योत्यार्थाभावनिश्चयेन तेषामर्थवत्त्वाभावे शङ्किते प्रकृत्यर्थ एवास्यार्थ इत्यसदुत्तरमित्यर्थः ॥ स्वार्थे इत्यस्य चार्थराहित्ये तात्पर्यमिति भावः ॥

( कर्मसाधनताङ्गीकारभाष्यम् )

**एवं तर्हि-प्रत्याय्यत इति प्रत्ययः ॥**

( प्रदीपः ) प्रत्याय्यत इति । अभिधेयधर्मस्याभिधान उपचारादेवमुक्तम् ॥ अयमत्रार्थः—यस्यार्थः प्रकृत्या प्रत्याय्यते स प्रत्याय्यमानार्थत्वात् प्रत्याय्यमानः स्वार्थिकः प्रत्ययसंज्ञो भवति ॥

( उद्योतः ) कादीनां केनापि प्रत्याय्यमानत्वाभावात् कर्मव्युत्पत्तावपि कथं तेषां प्रत्ययत्वम् । अर्थस्यैव तु तत्प्राप्नोतीत्यत आह—अभिधेयेति ॥ अभिधानं शब्दः ॥

( कर्मसाधनतायां दूषणभाष्यम् )

**एवमपि सन्नादीनां न प्राप्नोति ॥**

( प्रदीपः ) एवमपीति । नहीच्छादावर्थे विधीयमानाः सनादयः प्रकृत्या प्रत्याय्यमानार्था इति भावः । यो गुपादिसन् स प्रकृत्याप्रत्याय्यमानार्थ इतीच्छासनेवात्राभिप्रेतः ॥

( उभयसाधनाङ्गीकारभाष्यम् )

**एवं तर्ह्युभयसाधनोयम् कर्तृसाधनः कर्मसाधनश्च ॥**

( प्रदीपः ) एवं तर्हीति । एक एव शब्दोनेकशक्तियोगादङ्गीकृतप्रवृत्तिनिमित्तद्वयोऽधिक्रियते । तत्र यथासंभवं निमित्ताश्रयणेन सनादीनां कादीनां च प्रत्ययसंज्ञा प्रवर्तते ॥ ण्यन्तस्य निपातनादचि णेर्लुक्[२] ।

( उद्योतः ) एकस्य शब्दस्य कथमुभयसाधनत्वमित्यत आह—एक एवेति । निपातनादिति वस्तुतोऽन्तर्भावितण्यर्थोऽप्रत्यय इति वक्तुमुचितम् ॥

( अर्थप्रत्यायनहेतुप्रश्नभाष्यम् )

**एवमपि कुत एतत् समाने अपूर्वोपदेशे त्रापुषं जातुषमित्यत्राकारस्तमर्थं प्रत्याययति, न पुनः षकार इति ॥**

( प्रदीपः ) एवमपीति । आगमस्यार्थवत्तां निराकर्तुमुपन्यासः ॥

( अर्थप्रत्यायनहेतुप्रतिपादनभाष्यम् )

**अन्यत्राप्यकारेण तस्यार्थस्य प्रत्यायनान्मन्यामहे—अकारस्तमर्थं प्रत्याययति, न पुनः षकार इति ॥ क्वान्यत्र ? । 'बिल्वादिभ्योऽण्' । बैल्वः ॥ प्रत्ययः ॥ १ ॥**

( प्रदीपः ) अन्यत्रापीति । प्रत्ययस्यागममन्तरेणापि प्रयोगादर्थवत्तावगतिः । आगमस्य तु प्रत्ययमन्तरेण प्रयोगाभावादन्वयव्यतिरेकाभ्यामर्थवत्त्वं नावधार्यत इत्यर्थः ॥ १ ॥

( उद्योतः ) प्रत्ययस्येति । अन्वयव्यतिरेकाभ्यां प्रत्ययस्यैवार्थवत्त्वं नागमानामिति भावः ॥ वैधनभविरङ्गादेशानामपि न स्वीयार्थप्रत्यायकता । किन्तु स्थान्यर्थप्रत्यायकतैव ॥ अत एव कोशादौ तेषां पृथगर्थानिर्देशः ॥ अत एव च नभ्यशब्दादपि नाभिशब्दप्रकारकस्तदर्थबोधो 'नाभिहितः' इति, न तु कदाचिदपि 'नभहितः' इति ॥ येऽपि शास्त्रानभिज्ञास्तेऽपि वृद्धव्यवहारात् तथैव प्रतियन्ति ॥ एतदर्थमेव भाष्ये स्वमर्थमित्यत्र स्वमिति पदोपादानम् । स्थानिनो नष्टत्वादन्येन प्रत्याय्यमानार्थकोपि नेति[८] दिक् ॥ १ ॥

---

( ३८१ अधिकारसूत्रम् ॥ ३।१।१।२ आ० सूत्रम् )

## ६१९ परश्च ॥ ३ । १ । २ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

( प्रदीपः ) परश्च ॥ २ ॥ किमर्थमिति । पञ्चमीनिर्देशे परशब्दाध्याहारेण पञ्चमीविधानात् परत्वं सिद्धम् । षष्ठीनिर्देशेपि गापोष्टगित्यादावानन्तर्यसंबन्धे षष्ठीविज्ञानादिति भावः ॥

( उद्योतः ) परश्च ॥ २ ॥ पञ्चमीति । परशब्दाध्याहार एव व्याख्यास्यते न तु पूर्वशब्दाध्याहारः गापोष्टगित्यादावपि षष्ठ्या आनन्तर्यार्थत्वेन धातोरिति पञ्चम्या पूर्ववदेव परशब्दाध्याहार इति भावः ॥ परशब्दाध्याहारेणेति । तदर्थघटितवाक्यार्थंऽस्य एकदेशस्य वृत्तिस्वीकारेणेत्यर्थः ॥ एवं पूर्वशब्दाध्याहारेणेत्यपि व्याख्येयम् ॥

( समाधानभाष्यम् )

**परो यथा स्यात्, पूर्वो मा भूदिति ॥**

( प्रदीपः ) पर इति । पूर्वशब्दाध्याहारेणापि पञ्चमीविधानात् पूर्वत्वमपि स्यादिति नियमार्थं परवचनम् । तथानन्तर्यस्य पूर्वत्वेऽपि भावात् षष्ठीनिर्देशेपि नियमार्थमित्यर्थः ॥

---

१ 'ऽप्यर्थो' ॥
२ प्रकृत्या इत्यादिः । ( र. ना. )
३ प्रकृत्यर्थ एवास्यार्थ इत्येवं रूपस्येत्यर्थः । दुरुत्तरत्वादित्यस्य असदुत्तरत्वादित्यर्थः । ( र. ना. )
४ अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे इत्यनेनेति भावः । ( र. ना. )
५ प्रवृत्तिनिमित्ताश्रयणेनेत्यर्थः । ( र. ना. )
६ लुकि प्रत्ययलक्षणाभावेन वृद्ध्यादिकं नेत्यर्थः । ( र. ना. )
७ 'हनो वा यद् वधश्च' इति वार्तिकम् । 'नाभि नभं च' इति गणसूत्रम् ( ५।१।२ ) 'विराग विरङ्ग च' इति गणसूत्रम् ( ५।१।६४ )
८ आदेश इति शेषः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

(उद्द्योतः) पूर्वशब्देति। व्याख्यानं दुर्ज्ञेयमिति भावः॥ आनन्तर्यस्येति। हलोनन्तरा इत्यादौ तस्या व्यवहितपर्यायत्वादित्यर्थः॥

(समाधानबाधकभाष्यम्)

**नैतदस्ति प्रयोजनम्। यमिच्छति पूर्वम्, आह तं 'विभाषा सुपो बहुच् पुरस्तात्' इति॥**

(प्रदीपः) **यमिच्छतीति।** बहुजेव पुरस्ताद्भवति नान्यः प्रत्यय इति बहुचि पूर्वदेशस्य नियतत्वादन्यः प्रत्ययः पर एव भविष्यतीत्यर्थः॥

(उद्द्योतः) प्रत्ययनियमेऽन्येषां परदेशनियमस्यालाभादभिमतं देशनियमं दर्शयति—बहुजेवेति॥

(समाधानान्तरभाष्यम्)

**मध्ये तर्हि मा भूदिति।**

(प्रदीपः) **मध्ये तर्हीति।** षष्ठीनिर्देशेषु मध्यशब्दाध्याहारेणापि षष्ठीविधानं स्यादिति भावः॥

(उद्द्योतः) पञ्चमीनिर्देशे मध्यशब्दाध्याहारासम्भवादाह—षष्ठीति॥ व्रीहिशाल्योर्ढगित्यादौ॥

(समाधानान्तरबाधकभाष्यम्)

**मध्येपि यमिच्छति; आह तम्—'अव्ययसर्वनाम्नामकच् प्राक् टे'रिति॥ य इदानीमतोन्यः प्रत्ययः शेषः सोन्तरेण वचनं पर एव भविष्यतीति नार्थः परवचनेन।**

(प्रदीपः) **मध्येपीति।** अव्ययसर्वनाम्नामिति मध्यशब्दाध्याहारेण षष्ठीविधानादकच् प्राक् टेः सिद्ध एवेति प्राक्टेरिति नियमार्थम् 'अकजेव प्रकृतिमध्ये भवति, नान्यः' इति मध्यमात्रपरिग्रहेण च नियमो विज्ञायते, न तु 'अकजेव प्राक् टेः' इत्येवं मध्यविशेषाश्रयेण। अन्यथा मध्यान्तरे प्रत्ययान्तरं स्यात्। मध्यविशेषे तु यन्मध्यसामान्यमस्ति तदाश्रयेण नियमे विज्ञायमाने नास्ति दोषः॥

(उद्द्योतः) अव्ययसर्वनाम्नामित्यादौ प्राक्टेरित्युपादानं विना टेः प्राक् विधेरसिद्धेः कथं नियमोत आह—अव्ययेति। मध्यश्च तत्र टिप्राग्रूप एव ग्राह्यो व्याख्यानादित्यभिमानः॥ केचित्तु प्राक्टेरित्यावर्त्य नियमो व्याख्येय इत्याहुः—प्राक्टेरित्युपादानात्कथं मध्यमात्रापेक्षोनियमोत आह—मध्यमात्रेति॥ मध्यान्तरे इति व्रीहिशब्दे रेफेकारयोरीकारहकारयोर्मध्ये च स्यादिति भावः॥ सामान्यनियमाश्रयणे तदुपस्थितिवीजमाह—यन्मध्यसामान्यमिति॥

(समाधानभाष्यम्)

**एवमपि येषामेव प्रत्ययानां देशो नियम्यते, त एव नियतदेशाः स्युः। य इदानीमनियतदेशः स कदाचित्परः कदाचित्पूर्वः कदाचिन्मध्ये स्यात्। तद्यथा—मातुर्वत्सः कदाचिदग्रतः, कदाचित्पृष्ठतः, कदाचित्पार्श्वतो भवति। पर एव यथा स्यादित्येवमर्थं परवचनम्॥**

(प्रदीपः) **एवमपीति।** बहुजकचोर्विधेयतया प्राधान्यात्तावेव देशविशेषे नियम्येयाताम्। पुरस्तादेव बहुच् प्राक् टेरेवाकजित्येवमिति भावः॥ **देशो नियम्यत इति।** प्रत्ययनियमेप्यनियतदेशप्रसङ्गे विशिष्टदेशप्रतिपादनमेव देशनियम इत्यभिप्रेत्यैतदुक्तम्॥ **मातुर्वत्स इति।** अनेन प्रकृतेः कार्यशब्ददर्शने मातृस्थानीयत्वमुच्यते॥

(उद्द्योतः) नन्वत्र देशनियमे बहुजादीनां नियतदेशत्वं न स्यात्। किं देशनियमासम्भवः प्राधान्येन प्रत्ययनियमस्यैव युक्तत्वादित्यभिप्रेत्य भाष्ये एवमपीति॥ तदाशयमाह—बहुजकचोरिति॥ नन्वेवं देशो नियम्यत इति भाष्यमनुपपन्नमत आह—प्रत्ययनियमेपीति॥ ननु देशनियमेऽप्रधानसंकोचः, प्रत्ययनियमे प्रधानसंकोचस्तत्र प्रधानसंकोचापेक्षयाऽप्रधानसंकोचस्य न्याय्यत्वेन देशनियम एवोचित इति चेन्न। आगन्तूनामन्ते निवेश इति न्यायेन तदग्र एवैवकारनिवेशौचित्। कर्मणि द्वितीयेत्यादौ सूत्रकारस्य प्रधानसंकोचकप्रत्ययनियम एव तात्पर्याच्च। किञ्च लोकेपि प्रधानस्य राजादेरेव स्थाननियमादि दृश्यते राज्ञात्रैव स्थेयमित्यादिप्रकारेणेति दिक्॥ भाष्ये—स कदाचित्पूर्वः कदाचित्पर इति प्रतिलक्ष्यं लक्षणभेदाद्विनिगमनाविरहाद्वा॥

(१६८८ सूत्रप्रत्याख्यानवार्तिकम्॥ १॥)

**॥ ❋ ॥ परवचनमनर्थकं पञ्चमीनिर्दिष्टाद्धि परस्य [ [11]कार्यम् ] ॥ ❋ ॥**

(भाष्यम्) **परग्रहणमनर्थकम्। किं कारणम्?। पञ्चमीनिर्दिष्टाद्धि परस्य कार्यमुच्यते। तद्यथा—'द्व्यन्तरुपसर्गेभ्योऽप ईद्'िति।**

(प्रदीपः) **परवचनमिति।** तस्मादित्युत्तरस्येत्यनेनैव नियमस्य सिद्धत्वादिति भावः।

(उद्द्योतः) तस्मादिति। ते प्राग्धातोरित्यादौ उत्तरांशविकलाया इव परश्चेति कृतेपि व्यवहितप्रयोगवारणाय प्रकृते एवो-

---

१ ननु व्याख्यानत एव पूर्वत्वव्यावृत्तिर्भविष्यतीति नार्थो नियमेनेत्यत आह—व्याख्यानमिति॥

२ बहुच् पुरस्तादेवेति रूपे इति भावः। (र. ना.)

३ मध्यसामान्यानुपस्थितिरूप इति भावः। (र. ना.)

४ अभिमानोक्तिवीजं तु तादृशभाष्यकारादिव्याख्यानस्यानुपलब्ध्याऽमूलकत्वमिति। (र. ना.)

५ एतन्मतेऽपि मध्यमात्रपरिग्रहेणैव नियमो विज्ञायते, अकजेव प्रकृतिमध्ये भवति नान्य इत्याकारकः। (र. ना.)

६ ढक् प्रत्ययः स्यादित्यर्थः। (र. ना.)

७ 'मर्थमिदं वचनम्'॥

८ कार्यः शब्द इति मते प्रकृतेः प्रत्ययहेतुत्वेन मातृतुल्यत्वमिति भावः। (र. ना.)

९ बहुजेव पुरस्ताद्, अकजेव प्राक्टेः इत्येवंरूपे इति भावः। (र. ना.)

१० प्रधानस्य सर्वान्ते स्थितत्वात्तदग्रे एवैवकारस्यागन्तोर्निवेशौचित्यादिति भावः। (र. ना.)

११ 'परस्य कार्यम्' इति सर्वत्र नोपलभ्यते। बहुत्र तु 'परस्य' इत्येतावदेवोपलभ्यते॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्तरांशविकलाया इव च, सूत्राभावे षष्ठ्यंशविकलायाः प्रवृत्तिरिति गूढोभिप्रायः ॥

(प्रत्याख्यानानुपपत्तिभाष्यम्)

**विषम उपन्यासः। सतस्तत्र परस्य कार्यमुच्यते। इहेदानीं कस्य सतः परस्य कार्यं भवितुमर्हति ॥**

(प्रदीपः) **सतस्तत्रेति।** यत्र विद्यमानमेव कार्यान्तरविधानार्थं कार्यित्वेन निर्दिश्यते तत्र **तस्मादिति** परिभाषा नियमार्थावतिष्ठते। अत्र तु सनादयोऽपूर्वा एवोत्पद्यन्त इति न तस्याः परिभाषायाः प्रवृत्तिरिति भावः ॥ **कस्य सत इति।** असन्नेव सनादिर्भाव्यत इति भावः ॥

(उद्द्योतः) उक्तमभिप्रायमजानानः शङ्कते—भाष्ये सतस्तत्रेति। कार्यशब्ददर्शनाश्रयेण वैषम्यमित्याह—यत्रेति। उत्तरस्येति षष्ठीनिर्देशादिति भावः ॥

(प्रत्याख्यानोपपादकभाष्यम्)

**इहापि सत एव। कथम्?। स्वाभाविकं परत्वम्।**

(प्रदीपः) **इहापीति।** नित्याः शब्दाः प्रयोगस्थास्तत्र स्वभावत एव गुपादिभ्यः परस्य सनादेः साधुत्वमात्रं प्रतिपाद्यत इत्यर्थः।

(उद्द्योतः) स्वाभाविके परत्वे किं तस्मादित्युत्तरस्येत्यनेनेत्यत आह—नित्या इति ॥

(अनुयोगभाष्यम्)

**अथ वाचनिके परत्वे सति परग्रहणेनार्थः स्यात्।**

(उत्तरभाष्यम्)

**वाचनिके च नार्थः। एतद्धि परस्य कार्यम्—यदसौ परतः स्यात् ॥**

**अथ वा-यदस्य परस्य सतः संज्ञा स्यात् ॥**

(प्रदीपः) **एतद्धीति।** तस्मादित्युत्तरस्येत्येतस्य प्रदेशेषु अर्थाभिव्यक्तिर्भवति। ततश्च यत्र सदेव कार्यित्वेनोपादीयते तत्रोत्तरस्य कार्यं भवतीति कार्यापेक्षा संबन्धे षष्ठी। यत्र त्वसत एवोत्पत्तिः क्रियते तत्रोत्तरस्य भावो भवतीति भावापेक्षया कर्तुः षष्ठी विज्ञायत इत्यर्थः ॥ **परस्य कार्यमिति।** उत्पत्तिरिव कार्यमित्यर्थः ॥ नन्वेवं सति सन्नित्यादिप्रथमानिर्देशः षष्ठीप्रकल्पने सति निरर्थकोऽकृतार्थत्वात् स्यात्। नैष दोषः। निर्देशमात्रार्था प्रथमा स्यात्। उत्तरकालं तु षष्ठी प्रकल्पते। यत्त्वन्यत्रोच्यते **न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका इति,** तदस्मिन् सूत्रे स्थित इति द्रष्टव्यम ॥

**अथ वेति।** अयमर्थः—उत्पत्तिः सनादेरनियतदेशा भवतु। पश्चात्तु सत एव परस्य यत् कृत्कृत्यप्रत्ययादिसंज्ञाशास्त्रकार्यं विधीयते तन्नान्यदेशस्य। यद्देशस्य च शास्त्रीयं कार्यं तद्देशस्यैव साधुत्वात् प्रयोगो भविष्यतीत्यर्थः ॥

(उद्द्योतः) नन्वेकस्याः षष्ठ्या अर्थद्वयपरत्वं कथमित्यत आह—प्रदेशेष्विति। तत्रतत्रोपस्थितं भिन्नंभिन्नमेवेत्यर्थः ॥ उत्तरस्य भावो भवतीति। भाष्ये परतः स्यादित्यनेन सूचितम् ॥ प्रत्ययः परो भवतीत्यनेनास्य समानार्थत्वादिति भावः ॥ **निर्देशेति।** लघुनिर्देशेत्यर्थः। ननु प्रत्ययस्यानियतदेशत्वे पूर्वमपि प्रत्ययप्रयोगे साधुत्वं स्यादत आह—अयमर्थ इति। एवं च परस्य सतः प्रत्ययसंज्ञाविधानसामर्थ्यात्परशब्दाध्याहारे आवश्यके अन्याध्याहारे मानाभावान्नान्यदेशस्थस्य साधुत्वमिति भावः ॥ **अनियतदेशा-भवत्विति**अभ्युपगमवादेनोक्तम्। भवत्वित्यस्य प्रसज्यतामिति वार्थः। परश्चेति सूत्राकरणलाघवानुरोधात्प्रत्ययसंज्ञा संभवत्यप्येकवाक्यत्वे वाक्यभेदेन विधेयेति तात्पर्यम् ॥

(सूत्रावश्यकताभाष्यम्)

**यत्र तर्हि पञ्चमी नास्ति तदर्थमयं योगो वक्तव्यः ॥**

**क्व [च] पञ्चमी नास्ति?।**

**यत्र विकारागमाः शिष्यन्ते ॥**

**क्व च विकारागमाः शिष्यन्ते?। 'हनस्त च' 'त्रपुजतुनोः षुक्' इति ॥**

(१६८९ सूत्रप्रत्याख्यानसाधकवार्तिकम् ॥ २ ॥)

**॥ * ॥ विकारागमेषु चोक्तम् ॥ * ॥**

(भाष्यम्) **विकारागमेषु चोक्तम् ॥**

**किमुक्तम्?।**

**प्रत्ययविधानानुपपत्तिस्तु तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम् ॥ इति।**

(प्रदीपः) **विकारागमेष्विति।** तदेवेहाप्यनुगन्तव्यमित्यर्थः। **गापोष्टगित्यादौ** धातोरित्यधिकाराद् धातोः परष्टग् भवति। गापोस्त्वनन्तर इति व्याख्येयम्।

(उद्द्योतः) तदेवेति। धातोः प्रातिपदिकादित्याद्यनुवृत्तेस्ततः पर एव भविष्यति ततः परस्यैव वा संज्ञेत्यादीत्यर्थः ॥

(१६९० सूत्रावश्यकतावार्तिकम् ॥ ३ ॥)

**॥ * ॥ अत्यन्तापरदृष्टानां वा परभूतलोपार्थम् ॥ * ॥**

(भाष्यम्) **अत्यन्तापरदृष्टानां तर्हि परभूतलोपार्थं परग्रहणं कर्तव्यम्। य एतेऽत्यन्तापरदृष्टाः क्विबादयो लुप्यन्ते तेषां परभूतानां लोपो यथा स्यात्। अपरभूतानां मा भूदिति ॥**

१ कार्यः शब्द इति मताश्रयेणेत्यर्थः। (र. ना.)

२ 'परः' ॥

३ सन्नित्यादौ साधुत्वार्थं यया कयाऽपि विभक्त्या निर्देशस्यावश्यकत्वे प्रथमाविभक्त्यैव प्रातिपदिकार्थमात्रे विहितया प्रथमोपस्थितया च निर्देशो लाघवाद्, औचित्याच्चेति भावः। (र. ना.)

४ परश्चेति सूत्रे इत्यर्थः। (र. ना.)

५ तस्मादित्युत्तरस्येति षष्ठ्या इत्यर्थः। (र. ना.)

६ अर्थद्वयविषयकतात्पर्यवत्त्वमित्यर्थः। सकृदुच्चरित इति न्यायादिति भावः। (र. ना.)

७ परभूतानां लोपायेत्यर्थः। (र. ना.)

८ 'एतेषाम्' ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

**किं पुनरत्यन्तापरदृष्टानां परभूतलोपवचने प्रयोजनम् ? ।**

**कितिणितीति कार्याणि यथा स्युरिति ॥**

(प्रदीपः) अत्यन्तापरदृष्टानां वेति । वाशब्दस्तर्ह्यर्थे परेण प्रधानेन प्रमाणेन प्रत्यक्षेण न क्वचिद्दृष्टा ये क्विबादयः तेषां नित्यशब्ददर्शने कार्यदर्शने वा सत्ताया अभावात्तस्मादित्युत्तरस्येत्यस्योपस्थानाभावादनियतदेशो लोपः स्यादिति परभूतलोपार्थमेतद्वचनम् अस्मिन् हि सति क्विबादयः परभूता लुप्यन्त इति बुद्धिरुपजायते । तत्राग्निचिदित्यादौ प्रत्ययलक्षणेन परभूतप्रत्ययाश्रयास्तुगादयः सिद्ध्यन्ति न तु पूर्वभूतक्विवादिलोपे इति भावः ॥ ननु कार्यदर्शनें उत्तरस्य भाव इत्येव व्याख्यातत्वात्परभूताः क्विवादयो भविष्यन्ति ॥ नैतदस्ति । न हि तेषु भावबुद्धिरस्ति । लोपविधानेनाभावबुद्धेरुत्पादात् स्वरूपलाभो हि भावः । नैते कदाचित्स्वरूपं लभन्ते, शशविषाणतुल्यत्वात् । अत एवात्यन्तापरदृष्टानामित्युक्तम् । केवलं प्रत्ययलोपवचनेन कार्यमात्रं तेषामत्यन्तासत्त्वेऽपि विधीयते ॥

(उद्द्योतः) पूर्वं प्रयोजनेनानुक्तेर्वाशब्दं भाष्यकृत्तर्ह्यर्थे व्याचष्ट इत्याह—वेति । शास्त्रेण दृष्टानामेव लोपविधानात्कथमत्यन्तापरदृष्टेत्यत आह—परेणेति ॥ ननु परत्रोत्पन्नस्यैव प्रत्ययत्वेनापृक्तत्वप्रयुक्त लोप इति पूर्वभूतानां न लोपो नापि साधुत्वमत आह—तेषामिति ॥ तर्तैश्च 'परस्य सतः प्रत्ययसंज्ञा' इति नियमाप्राप्त्या पूर्वोत्पन्नस्यापि लोपादि सिध्यतीत्यर्थः ॥ अपृक्तसंज्ञा कदाचित्प्रत्ययत्वक्तोऽपीति भावः ॥ न तु पूर्वभूतेति । तथा चाग्निचीत्यपि कदाचित्स्यादिति भावः ॥ नहि तेष्विति । एवं चोत्तरस्येत्यस्य तत्रासम्बन्ध इति भावः ॥ परश्चेत्यस्य करणे तु तत्सामर्थ्यात् परत्वबुद्धिविशिष्टो बौद्धः क्विबित्यर्थः इति तात्पर्यम् । नन्वत्यन्तासतामुत्पत्तिर्लोपो वा किमिति विधीयत इत्यत आह—केवलमिति ॥ प्रसक्तादर्शनस्यैव लोपत्वेन प्रसक्तत्वबुद्धये उत्पत्तिबोधनमिति भावः ॥

(सूत्रावश्यकतानिराकरणभाष्यम्)

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—'अत्यन्तापरदृष्टाः परभूता एव लुप्यन्ते' इति, यदयं तेषु कादीननुबन्धानासजति ॥**

**कथं कृत्वा ज्ञापकम् ? ।**

**अनुबन्धासञ्जन एतत्प्रयोजनम्—कितिणितीति कार्याणि यथा स्युरिति । यदि चात्यन्तापरदृष्टाः परभूता लुप्यन्ते ततोनुबन्धासञ्जनमर्थवद् भवति ॥**

(प्रदीपः) यदयमिति । यदि पूर्वभूता लुप्येरन् तदानुबन्धासङ्गोऽनर्थकः स्यात् । सर्वस्यानुबन्धकार्यस्य परभूतप्रत्ययाश्रयत्वात् ॥ नन्वनियतदेशत्वेऽपि यदा परभूतलोपस्तदानुबन्धासङ्गस्य चरितार्थत्वात्कथं लिङ्गत्वमिति केचिदाहुः । तदयुक्तम् । एवं पक्षेऽनुबन्धासङ्गस्यानर्थक्यमभ्युपगतं स्यात् । स्पृशोनुदक इत्यादौ च सकृत्पञ्चमी श्रुता सा किं पूर्वशब्दाध्याहारेण भवत्यथ परशब्दाध्याहारेणेति संदेहे पूर्वशब्दाध्याहारेण पञ्चम्यां सत्यामानर्थक्यमेवानुबन्धासङ्गस्येति कथं परभूतलोपेऽनुबन्धासङ्गो न लिङ्गं स्यादिति भाष्यविद आहुः ॥

(उद्द्योतः) णित्कार्यं ण्वौ ॥ परभूतेति । कितिणितिपितिकृतीत्यादीनां परसप्तमीत्वादिति भावः ॥ यदेति । यद्विषये इत्यर्थः । एकविषये आवृत्त्या नानादेशविधाने मानाभावात्, युगपत्तु दिग्वाचकद्वयेनान्वयासम्भवः । एवं पक्षे इत्यस्यापि विषयविशेष इत्यर्थः । अन्यथाऽसङ्गतिः स्पष्टैव ॥ अत एव स्पृश इत्यग्रिमग्रन्थसङ्गतिः ॥ प्रकारान्तरेण व्याख्याने तदसङ्गतिः ॥ विषयविशेषमेवाह—स्पृश इति । अत्रैकस्य स्पृश एव लक्ष्यत्वान्न लक्ष्यभेदो नापि लक्षणावृत्तिः ॥ एवं च कित्त्वसामर्थ्येनोत्तरस्य बौद्धो भावो भवतीत्यर्थो वक्तुं शक्यः परग्रहणाभावेपीत्याशयः ॥

(१६९१ सूत्रावश्यकतावार्तिकम् ॥ ४ ॥)

## ॥ * ॥ प्रयोगनियमार्थं वा ॥ * ॥

**(भाष्यम्) प्रयोगनियमार्थं तर्हि परग्रहणं कर्तव्यम् । परभूतानां प्रयोगो यथा स्यात् । अपरभूतानां मा भूदिति ॥**

(प्रदीपः) प्रयोगनियमार्थं वेति । पूर्वं प्रयोजनं स्थितमिति वार्तिककारेण विकल्पार्थो वाशब्दः पठितः । भाष्यकारेण तु लिङ्गेन पूर्वप्रयोजनस्य निराकरणात्तर्ह्यर्थे व्याख्यातः ॥

(उद्द्योतः) भाष्ये अपरभूतानामिति । न परभूता अपरभूता इति न विद्यन्ते परभूता येषामिति चार्थः । तेन केवलप्रत्ययानां केवलप्रकृतीनां चेत्यर्थः । तदेतदुक्तमप्रत्ययिकेत्यादिना ॥

(अनुयोगभाष्यम्)

**अस्ति पुनः किंचिदनिष्टं दृश्यते यदर्थो नियमः स्यात् ॥**

(समाधानभाष्यम्)

**अस्तीत्याह ॥**

(१६९२ अप्रत्ययप्रकृतिदर्शिवार्तिकम् ॥ ५ ॥)

## ॥ * ॥ प्रकृतेरर्थाभिधानेऽप्रत्ययदर्शनात् ॥ * ॥

**(भाष्यम्) प्रकृतिरर्थाभिधाने अप्रत्ययिका, दृ-**

---

१ पूर्वतः परतो वेत्यर्थः । (र. ना.)
२ समुच्चयार्थकत्वासंभवादिति शेषः । (र. ना.)
३ क्विवादीनामिति शेषः । (र. ना.)
४ सत्ताया अभावादित्यर्थः । (र. ना.)
५ न तु सर्वदा सत एव प्रत्ययस्येति भावः । (र. ना.)
६ अपीति शेषः । (र. ना.)
७ सूत्रावृत्तिरित्यर्थः । (र. ना.)
८ अनुपदवक्ष्यमाणवार्तिके भाष्यकृता इति बोध्यम् ॥
९ किञ्चिदनिष्टं दृश्यतेऽस्ति पुनरिति संबन्धः । पुनरिति प्रश्नार्थे । दृशिक्रियाऽस्तिक्रियायाः कर्त्री । किञ्चिदनिष्टकर्मकं दर्शनमस्ति किमित्यर्थः ।
१० प्रत्यया भावदर्शनादित्यर्थः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**दृश्यते—'क्व स देवदत्तः क्व स यज्ञदत्तः बभ्रुः, मण्डुः, लमक' इति । बाभ्रव्यो माण्डव्यो लामकायन इति प्रयोक्तव्ये बभ्रुर्मण्डुर्लमक इति प्रयुज्यते ॥**

( प्रदीपः ) **क्व स देवदत्त इति ।** देवदत्तादयस्तदपत्येषु वर्तमाना दृश्यन्ते तेषामनेन नियमेनासाधुत्वं प्रतिपाद्यते—**न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः प्रयोक्तव्य इति ॥** ननु सोयमित्यभिसंबन्धादभेदोपचारादपत्ये प्रयोगात् कथमसाधुत्वम् ॥ नैतदस्ति । भृत्यादेरपि साहचर्यादिनिमित्ताभेदाध्यारोपदर्शनादपत्यार्थो नियमेन न प्रतीयेत । तदुक्तं हरिणा—

> **सोऽयमित्यभिसंबन्धात्तद्धितेन विना यदि ।**
> **बभ्र्वादयः प्रयुज्येरन्नपत्ये नियमो भवेदिति ॥**

तस्मादभेदोपचाराद्विनाऽपत्यविवक्षायां गर्गा इति बहुवचनान्तवदेकवचनान्ता बभ्र्वादयो मा प्रयुक्षतेति नियमार्थं वचनम् ॥ **क्व स देवदत्त** इत्यत्र केचिदाहुः—क्व स इति यथा सुपो लुग्लोपयोः कृतयोः केवला प्रकृतिः प्रयुज्यमाना दृश्यते । तथा बभ्र्वादयोपीति दृष्टान्तोपन्यासः ॥

( उद्द्योतः ) भाष्ये प्रकृतिरर्थाभिधानेऽप्रत्ययिकेति । प्रकृतिरर्थाभिधानेऽप्रत्ययिकापि प्रयुज्यमाना दृश्यत इत्यर्थः ॥ तथा च तेषां लोके दृश्यमानानामसाधुत्वप्रतिपादनाय परश्चेति सूत्रमिति भावः ॥ भाष्ये यो बभ्रुर्मण्डुर्लमकः स देवदत्तः क्वेत्यर्थः ॥ देवदत्तस्तु नोदाहरणम्, अन्यथा 'बाभ्रव्यादिषु प्रयोक्तव्येषु बभ्रुरित्यादि प्रयुज्यते' इति कथनवत् 'दैवदत्तिरिति प्रयोक्तव्ये देवदत्त इति' इत्यपि भाष्ये वक्तव्यं स्यात् ॥ क्वचित्तथा पाठं दृष्ट्वा व्याचष्टे देवदत्तादय इति । बभ्रुरित्यादौ प्रकृतिप्रत्यययोर्द्वयोरपि प्रयोगात्कस्यासाधुत्वमुच्यते इत्यत आह—तदपत्ये इति । नन्वभेदोपचाररूपलक्षणया प्रयोगे साधुत्वनिश्चयात् कथमस्यासाधुत्वमिति शङ्कते—नन्विति । नायमभेदोपचारेण प्रयोगः भृत्यादेरपि प्रतिपत्त्यापत्तेरित्युत्तराशयः ॥ अभेदोपचारं विनोपगुसम्बन्ध्यपत्यमित्यर्थप्रतिपिपादयिषया प्रयुक्ता केवला प्रकृतिस्तथा प्रयुक्तः केवलः प्रत्ययश्चासाधुरित्याह—तस्मादिति ॥ बहुवचनान्तवदित्यनेन तत्र बभ्रुसंबन्ध्यपत्यमित्यर्थविषयलक्षणां दर्शयति—बभ्रमण्डू गर्गादीति । लमकोनडादिरुपकादिश्च ॥

( १६९३ अप्रकृतिकप्रत्ययदर्शिवार्तिकम् ॥ ६ ॥ )

**॥*॥ द्वयसादीनां च केवलदृष्टत्वात् ॥*॥**

( भाष्यम् ) **द्वयसादीनां च केवलानां प्रयोगो दृश्यते—किमस्य द्वयसम्, किमस्य मात्रम्, काद्यतिथीति ॥**

( प्रदीपः ) **किमस्य द्वयसमिति ।** किमस्य प्रमाणमित्यत्रार्थेऽयं प्रयोगो दृश्यते । तत्र गाव्यादिवदेवमादीनामनेनासाधुत्वं प्रतिपाद्यते । **काद्यतिथीति ।** काद्य द्व्यादिसंख्यायाः पूरणीत्यर्थः । बहुतिथीत्यादौ च तिथीशब्दमुपलभ्य भ्रान्त्या केवलमपि प्रयुञ्जते । यस्तु तिथिशब्दान्ङीषि कृते तिथीशब्दः स साधुरेव ॥

( उद्द्योतः ) अनेनासाधुत्वमिति । उक्तरीत्याऽपत्यार्थबोधविवक्षायां बभ्रुरित्यस्य, प्रमाणामित्यर्थे द्वयसज्मात्रस्येत्यर्थः ॥ अयं भावः—समानेऽर्थेऽन्वाख्यातोनन्वाख्यातस्य निवर्तक इत्युक्तेः तत्रार्थे प्रत्ययपरस्य साधुत्वकथनात् केवलप्रकृत्यादेरसाधुत्वमिति ॥ रघूणामित्यादौ तु तदपत्ये रघुत्वारोपेण रघुत्वेनैव रूपेण तेषां बोधान्नासाधुत्वम् ॥ तत्संबन्ध्यपत्यमित्यर्थे हि अण् समासयोरेव साधुत्वमिति सूत्रार्थात् ॥ प्रागुक्तयुक्तिभिः परत्वे सिद्धे परश्चेत्येतत् प्रत्ययः परो भवत्येव इति नियमार्थम् । तेन केवलप्रकृतेर्न प्रयोगो नापि केवलप्रत्ययस्येति सिद्धम् ॥

( द्वयसादीनां प्रातिपदिकत्वदर्शिभाष्यम् )

**द्वयसादयो वृत्तिजसदृशाः अवृत्तिजाः यथा बहुस्तथा ।**

( प्रदीपः ) **द्वयसजादय इति ।** अवृत्तिजा अपि भ्रान्त्या केवला लोके प्रयुज्यमाना दृश्यन्त इत्यर्थः ॥ **यथा बहुरिति ।** ईषदसमाप्तौ यो बहुच्प्रत्ययस्तत्सदृशो बहुशब्दः संख्यावैपुल्यवाची यथा लोके प्रयुज्यते, तथा द्वयसजादयोपीति केचिद्व्याचक्षते ॥

अन्ये त्वाहुः—केवल एवेषदसमाप्तौ यो बहुशब्दो लोके प्रयुज्यते स दृष्टान्तोऽसाधुत्वे द्वयसजादीनामुपात्तः ॥

( उद्द्योतः ) भाष्ये—असाधुत्वोपपादकं, परश्चेत्यस्योदाहरणत्वोपपादकं च अवृत्तिजा इति । एकार्थीभावरूपवृत्तिविषयाभावेऽपि जाता उच्चारिता वृत्तिर्जद्वयसादिसदृशाः प्रमाणार्थका बहुच्सदृश-

---

१ उपहासाक्रोशाद्यवसरे इति भावः । ( र. ना. )

२ 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति सूत्रेण द्वयसादीनां प्रत्ययानां प्रमाणेऽर्थे विधानादिति भावः ॥

३ 'तस्य पूरणे डट्' इति विहिते डटि 'बहुपूगगणसंघस्य तिथुक्' इति तिथुगागमे टित्वान्ङीपि बहुतिथीति सिध्यतीति भावः ॥

४ 'सर्वतोऽक्तिन्नर्थात्' इत्यनेन । 'ङीपि' इति पाठे ङीब्विधायकमन्वेषणीयम् । 'कृदिकारात्' इति तु तिथिशब्दस्यौणादिकत्वे अव्युत्पन्नत्वे कथं संगच्छेतेति दाधिमथाः ॥

५ द्वयसादयः प्रयोग उपलभ्यमाना निरनुबन्धाः प्रत्यया एवेति मत्वा पूर्वपक्षिणा प्रकृतिरहितानां प्रत्ययानां प्रयोगो दर्शितः । 'प्रकृतिपर एव प्रत्यय' इति नियमे व्यभिचारायेति भावः ॥

६ केवलस्य द्वयसच इत्यर्थः । ( र. ना. )

७ कैयटे 'द्वयसजादय' इति प्रतीकोपन्यासेन क्वाचित्कः तथा पाठोऽपि प्रतीयते किन्तु संख्यादिवाचिबहुशब्दवल्लौकिकस्य द्वयसादेरपि चित्वे मानाभावादयुक्त इति बोध्यम् । ( र. ना. )

८ वृत्तिजाः एकार्थीभावजाता 'गोष्ठजादयः स्थानादिषु—' 'संघाते कटच्' 'विस्तारे पटच्' 'द्वित्वे गोयुगच्' 'षट्त्वे षड्गवच्' 'स्नेहे तैलच्' इत्यादि वार्तिकविहिताः प्रत्ययाः तत्सदृशाः स्वतन्त्रप्रातिपदिकशब्दा अपि विलोक्यन्ते । तेषामेवं यदि प्रयोगः क्रियते तदा नैवासाधुत्वं प्रत्ययत्वाभावात् 'परश्च' इत्येतद्विषयत्वाभावात् ॥ यदि तत्सादृश्येन स्वतन्त्रप्रातिपदिकत्वभ्रान्त्या प्रत्यया एव प्रयुज्यन्ते तदा 'परश्च' इत्येतन्नियमेनासाधुत्वं भवतु । प्रातिपदिकत्वे तथा प्रयोगे दोषाभाव एवेति भाष्यस्यास्य तात्पर्यम् । द्वयसादीनां स्वतन्त्रप्रातिपदिकत्वं तु 'आदघ्ना सः' इत्येतद्व्याख्याने 'आस्यदघ्नाः' इति पदनिर्वचने आस्यपदनिर्वचनोत्तरं 'दघ्नं दध्यतेः स्रवतिकर्मणः' इति निर्वचता यास्केन दध्धातोर्नप्रत्ययसूचनेन कृतमेवेति तदुपलक्षणमेव द्वयसादीनामपीति सूचितमिति दाधिमथाः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


संघादिवाच्चि बहुशब्दवत् द्वयसादयोऽपि साधवः स्युरिति तद्वारणार्थं परश्चेति भाष्यार्थः ॥ बहुजपेक्षया भिन्नार्थत्वादस्तु बहुशब्दस्य साधुत्वम् । एषां त्वर्थान्तरवृत्तित्वाभावादसाधुत्वमेवेति भावस्तदाह—अवृत्तिजा अपि भ्रान्त्येति । तत्सदृशानुपूर्वीकत्वात्तदर्थत्वभ्रान्त्येत्यर्थः ॥ 'प्रत्ययः पर एवे'ति नियमे 'अर्थतः शब्दतश्च यः प्रत्ययजातीयः स पर एव' इत्यर्थेनास्यासाधुत्वं बोध्यम् ॥ अन्यथास्य प्रत्ययत्वाभावेन कथं नियमेनासाधुत्वं बोध्येत ॥ एतेन प्रकृत्युद्देशेनैव प्रत्ययानां विधानात्केवलप्रत्ययस्यासाधुत्वे सिद्धे कथमिदं परश्चेत्यस्य प्रयोजनमित्यपास्तम् ॥

अन्येत्विति । अत्र पक्षे बहोरपि द्वयसादितुल्यत्वेन दृष्टान्तत्वानुपपत्तिरित्यरुचिः ॥

( १६९४ सूत्रावश्यकतादर्शिवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ वावचने चानुत्पत्त्यर्थम् ॥ * ॥

( भाष्यम् ) वावचने चानुत्पत्त्यर्थं परग्रहणं कर्तव्यम् । वावचने चानुत्पत्तिर्यथा स्यात् ॥

( प्रदीपः ) वावचने चेति । तस्मादित्युत्तरस्येत्येव प्रत्ययस्य सिद्धे परत्वे, पुनः परवचनं वावचनेन प्रत्ययस्य पक्षेऽनुत्पत्तिं प्रतिपादयति—वा परः सन् भवति 'परत्वोपलक्षितः सन् पक्षे भवति । पक्षे तु नैवोत्पद्यत' इत्यर्थः । न त्वत्र परत्वं विकल्प्यते—पक्षे पूर्वो भवतीति । परत्वस्य प्रयोगे नियतत्वात् तस्मादिति वचनाद्वा नियतत्वात् ॥

( उद्द्योतः ) 'धातोरिच्छायां वा सन् प्रत्ययसंज्ञो भवती'त्यर्थे प्रधानवाक्यस्यान्याय्यत्वेनाप्रधानसंज्ञाया एव विकल्पः स्यात् । न च स इष्टः ॥ परग्रहणे तु तत्सामर्थ्यात्प्रधानन्यायबाधेन सन एव विकल्प इति वावचने चेत्यादिभाष्यस्य तात्पर्यार्थः ॥ तमुपपादयति—तस्मादित्युत्तरेति । परश्चेत्यस्य सत्त्वेऽपि अप्रधानत्वात्परत्वस्यैव विकल्पः । स्यादिति दूषयति—न त्वत्रेति ॥ नियतत्वादिति । तथा च तद्विकल्पो नेष्ट इति भावः ॥ तस्मादिति वचनाद्वेति । तेन सूत्रेण उत्तरस्येत्यस्याप्युपस्थितावेकार्थकशब्दद्वयेन नित्यं परत्वस्य बोधनेन पश्चात्तद्विरुद्धो विकल्पस्तस्य बोधयितुमशक्य इत्यर्थः ॥

( आक्षेपभाष्यम् )

अथ क्रियमाणेपि वै परग्रहणे कथमिव वावचनेनानुत्पत्तिर्लभ्या ? ॥

( समाधानभाष्यम् )

क्रियमाणे परग्रहणे वावचने 'वा पर' इत्येतदभिसंबध्यते[1] । अक्रियमाणे परग्रहणे वावचनेन किमन्यच्छक्यमभिसंबन्धुमन्यदतः संज्ञायाः । न च संज्ञाया भावाभावाविष्येते ॥

( प्रदीपः ) अक्रियमाण इति । प्रतियोगं प्रत्ययसंज्ञोपस्थानात्तस्या एव विकल्पः स्यात् । कृते त्वस्मिन् पराधिकारे प्रतियोगमुपस्थिते परो वा भवति परत्वोपलक्षितः पक्षे भवति पक्षे नैव भवतीत्यर्थः संपद्यते ।

१ 'क्रियमाणे हि पर' ॥

( उद्द्योतः ) भाष्ये—वा पर इत्येतदभिसंबध्यते इति । यः परः स वा भवतीत्यर्थः ॥ तस्या एवेति । प्रधानत्वेन प्रत्ययविकल्पस्यान्याय्यत्वादिति भावः ॥

( १६९५ सूत्रावश्यकतावार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ वावचने चोक्तम् ॥ * ॥

( भाष्यम् ) [वावचने चोक्तम् ।] किमुक्तम् । वावचनानर्थक्यं च तत्रे[2] नित्यत्वात्सन । इति ॥

( प्रदीपः ) नित्यत्वात्सन इति । वृत्तिपक्षे नित्य एव सन्निष्यते । कर्तुमिच्छतीत्यवृत्तिपक्षे नैव सन उत्पत्तिः प्राप्नोतीति ॥

( सिंहावलोकनभाष्यम् )

प्रयोगनियमार्थमेव तर्हि परग्रहणं कर्तव्यम् ॥

( प्रदीपः ) प्रत्याख्याते वावचने प्रयोगनियमार्थमिदम् ॥

( उद्द्योतः ) प्रत्याख्यात इति । सत्त्वेपि न संज्ञाया विशेषणं तद्विकल्पानिष्टेः ॥ परश्चेति सत्त्वेपि परत्वविकल्पाभाववत् तत्र सामर्थ्यात् वृत्त्या वाक्यबाधभ्रमनिवृत्त्यर्थं सन एव विशेषणं वा ग्रहणम् ॥ ध्वनितश्चेदं समर्थानां प्रथमादिति । सूत्रे भाष्ये इत्यपि बोध्यम् ॥ प्रयोगार्थमिति । प्रयोगनियमार्थमेवेदमित्यर्थः ॥ क्वचित्तु तथैव पाठः ॥

( आक्षेपभाष्यम् )

अथैतस्मिन् प्रयोगनियमार्थे किमयं प्रत्ययनियमः—प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः, अप्रकृतिपरो नेति । आहोस्वित्प्रकृतिनियमः—प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या, अप्रत्ययपरा नेति । कश्चात्र विशेषः ? ॥

( १६९६ प्रत्ययनियमदूषणवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ तत्र प्रत्ययनियमे प्रकृतिनियमाभावः ॥ * ॥

( भाष्यम् ) तत्र प्रत्ययनियमे सति प्रकृतेर्नियमो न प्राप्नोति । अप्रत्ययिकायाः प्रकृतेः प्रयोगः प्राप्नोति । क्व स देवदत्तः क्व स यज्ञदत्तः, बभ्रुः, मण्डुर्लेमक इति ॥

( प्रकृतिनियमाङ्गीकारभाष्यम् )

अस्तु तर्हि प्रकृतिनियमः ॥

( १६९७ प्रकृतिनियमदूषणवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ प्रकृतिनियमे प्रत्ययानियमः ॥ * ॥

( भाष्यम् ) प्रकृतिनियमे सति प्रत्ययनियमो न प्राप्नोति । किमस्य द्वयसन्, किमस्य मात्रम्, काद्यतिथीति । अप्रकृतिकस्य प्रत्ययस्य प्रयोगः प्राप्नोति ॥

२ तत्रेत्यस्य वृत्ताविल्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( १६९८ उभयनियमाङ्गीकारसिद्धान्तवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ सिद्धं तूभयनियमात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? । उभयनियमात् । उभयनियमोयम्—प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः, प्रत्ययपरैव च प्रकृतिरिति ॥**

**किं वक्तव्यमेतत् ? ।**

**न हि ।**

**कथमनुच्यमानं गंस्यते ? ।**

**परग्रहणसामर्थ्याद् अन्तरेणापि परग्रहणं स्यादेवायं परः । पर एव स्यादित्येवमर्थं परग्रहणम् ॥ परश्च ॥ २ ॥**

( प्रदीपः ) सिद्धे तस्मादिति वचनात् परत्वे, नित्यं परः प्रत्ययो यथा स्याद् मा कदाचित्परो न प्रयोजि इत्येवं सामर्थ्यादुभयनियमलाभः ॥ २ ॥

( उद्योतः ) भाष्ये प्रत्ययपरैवेति । सामर्थ्यात्प्रत्ययो नित्यं सदा परः प्रयोक्तव्य इत्यर्थेनैतन्नियमसिद्धिरित्यर्थः ॥ ननु पर एव स्यादिति नियमे बभ्ररित्यादेरपि साधुत्वं स्यादिति चेत्, न परः स्यादेवेत्यर्थात् तद्ध्वनयन्व्याचष्टे—नित्यं पर इति ॥ मा कदाचित्परो न प्रयोजीति । तेनोभयनियमफललाभ इति भावः ॥२॥

( ३८२ अधिकारसूत्रम् ॥ ३ । १ । १ आ. ३ सूत्रम् )

## ६१९ आद्युदात्तश्च ॥ ३ । १ । ३ ॥

( उद्योतः ) आद्युदात्तश्च ॥ ३ ॥ एते त्रयोप्यधिकाराः ॥ यत्तु 'परश्च' 'आद्युदात्तश्चे'त्यनयोः परिभाषात्वमुक्तम् तन्न, लिङ्गाभावात्; न च प्रत्ययसंज्ञैव लिङ्गम् एकवाक्यतया त्रयाणामपि विधानेनान्यतरस्यान्यतरलिङ्गत्वायोगात् ॥ सहविधानं चात्रैव सूत्रे भाष्येऽग्रे स्फुटतरम् ॥

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ।**

( प्रदीपः ) आद्युदात्तश्च ॥ ३ ॥ अस्वरकस्याच उच्चारणाभावात् स्वरान्तरस्य प्रत्ययान्तरेषु नियतत्वापारिशेष्यादाद्युदात्त एव प्रत्ययो भविष्यतीति मत्वा प्रश्नः—किमर्थमिति ।

( समाधानभाष्यम् )

**आद्युदात्तो यथा स्यात् । अन्तोदात्तो मा भूदिति ।**

( उद्योतः ) भाष्ये—अन्तोदात्तो मा भूदिति । अस्वरकाच उच्चारणाभावेऽपि आद्युदात्तत्वनियमो न स्यादित्यर्थः ॥

( प्रयोजननिराकरणभाष्यम् )

**नैतदस्ति प्रयोजनम् । यमिच्छत्यन्तोदात्तम्, करोति तत्र चकारमनुबन्धम् । आह च—'चितोन्तउदात्तः' इति ॥**

( उद्योतः ) नैतदिति । अस्वरकोच्चारणाभावादनियतान्तोदात्तत्वादौ प्राप्ते चित इत्यादि चित एवेत्यादि नियमार्थमित्यर्थः ॥ प्रत्ययविषयैर्नियमैरन्येषु स्वरेषु प्रतिबद्धेषु अस्वरकोच्चारणासम्भवादाद्युदात्त एव भविष्यतीति किमनेन सूत्रेणेति भावः ॥ ननु लोके त्रैस्वर्यनियमाभावेनास्वरकस्याप्यच उच्चारणमस्त्येव उदात्तादीनामभावस्यैकश्रुतित्वात् । एकश्रुतेरतिरिक्तत्वे तु सापि स्यादिति कथमाद्युदात्तत्वसिद्धिः । न च दूरात्सम्बुद्धावेव सापि नियता, विभाषा छन्दसीत्यादेर्वैयर्थ्यापत्तेः । तेनात्रापि पाक्षिक्यास्तस्या दुर्वारत्वमिति चेत् न लोके त्रैस्वर्यपक्षे, वेदे चाद्युदात्तार्थमिदं सूत्रं नियमैः सिद्धत्वाद् व्यर्थमिति भाष्याशयात् । पक्षे लोके एकश्रुतिरिष्टैवेत्याहुः ॥

( प्रयोजनभाष्यम् )

**मध्योदात्तस्तर्हि मा भूदिति ॥**

( प्रयोजननिराकरणभाष्यम् )

**मध्योदात्तमपि यमिच्छति, तत्र रेफमनुबन्धं करोति । आह च—"उपोत्तमं रिति" इति ॥**

( प्रयोजनभाष्यम् )

**अनुदात्तस्तर्हि मा भूदिति ॥**

( प्रयोजननिराकरणभाष्यम् )

**अनुदात्तमपि यमिच्छति, तत्र पकारमनुबन्धं करोति । आह च "अनुदात्तौ सुप्पितौ" इति ॥**

( प्रयोजनभाष्यम् )

**स्वरितस्तर्हि मा भूदिति ॥**

( प्रयोजननिराकरणभाष्यम् )

**स्वरितमपि यमिच्छति, करोति तत्र तकारमनुबन्धम् । आह च तित्स्वरितम्" इति ॥**

( प्रयोजननिराकरणोपसंहारभाष्यम् )

**य इदानीमतोन्यः प्रत्ययः शेषः सोन्तरेणापि वचनमाद्युदात्त एव भविष्यतीति नार्थ आद्युदात्तवचनेन ।**

( प्रयोजनोपसंहारभाष्यम् )

**एवमपि येषामेव प्रत्ययानां स्वरो नियम्यते त एव नियतस्वराः स्युः य इदानीमनियतस्वरः स कदाचिदाद्युदात्तः कदाचिदन्तोदात्तः कदाचिन्मध्योदात्तः कदाचिदनुदात्तः कदाचित्स्वरितः स्यात् । आद्युदात्त एव यथा स्यादित्येवमर्थमिदमुच्यते ॥**

( प्रदीपः ) येषामेवेति । चिदादीनामनियतस्वरप्राप्तावन्तोदात्त एव चिदित्येवं नियमात्तेषामेव नियतस्वरत्वं स्यात् । अन्येषां त्वनियतस्वरप्रसङ्ग इत्यर्थः ॥

( उद्योतः ) अनियतस्वरेति पूर्वनियमे तु चितोन्यस्वराव्यावृत्त्या नियतशास्त्रार्थानापत्त्या इष्टानुरोधादावृत्त्योभयविधनियमे मानाभावाच्चान्तोदात्त एव चिदित्येव नियमः स्यादित्यन्यत्रानियमः स्यादित्यर्थः ॥

१ 'प्राग्दर्शितज्ञापकाभ्यां प्राग्भाष्यवचनस्य बाधितत्वेन परशब्दाध्याहारस्यैव कर्तव्यता बोधनादिति भावः ॥

२ 'अनियतस्य स्वरस्य प्राप्तः' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( स्वरप्रकरणं विनाप्यत्र प्रत्ययसंज्ञासंनियोगेन स्वरविधिप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ किमर्थं प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वमनुदात्तत्वं चोच्यते, न यत्रैवान्यः स्वरः, तत्रैवायमप्युच्येत—"ञ्नित्यादिर्नित्यम्"—'प्रत्ययस्य च'—"अदुपदेशाल्लसार्वधातुकमनुदात्तम्"—"सुप्पितौ च" इति । तत्रायमप्यर्थः—द्विराद्युदात्तग्रहणं द्विश्चानुदात्तग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते ॥**

( उद्द्योतः ) भाष्ये संज्ञासन्नियोगेनेति । अत्र करणे त्रयाणामप्यधिकारत्वादेकवाक्यतया त्रितयविशिष्टत्व्यादेर्विधानात्, अन्यत्र करणे तु प्रत्ययानुवादेन विधानान्न सन्नियोग इति भावः ॥ भाष्ये द्विराद्युदात्तग्रहणमिति । प्रत्ययस्य चेति । करणेऽपि तस्याद्यदात्तग्रहणाल्लघुत्वमिति भावेनेदम् ॥

( समाधानभाष्यम् )

**अत उत्तरं पठति—**

( १६९९ समाधानवार्तिकप्रथमखण्डम् )

## ॥ * ॥ आद्युदात्तस्य प्रत्ययसंज्ञासन्नियोगे प्रयोजनं यस्य संज्ञाकरणं तस्याद्युदात्तार्थम् ॥ * ॥

**( भाष्यम् ) आद्युदात्तस्य प्रत्ययसंज्ञासंनियोगकरण एतत् प्रयोजनम्—यस्य संज्ञा क्रियते तस्याद्युदात्तत्वं यथा स्यात् ॥**

( समाधानवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

## ॥ * ॥ असन्नियोगे हि यस्मात्स विहितस्तदादेराद्युदात्तत्वं तदन्तस्य चानुदात्तत्वम् ॥ * ॥

**( भाष्यम् ) अक्रियमाणे हि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवति' इति तदादेरेवाद्युदात्तत्वं प्रसज्येत, तदन्तस्य चानुदात्तत्वम् ॥**

( उद्द्योतः ) तदादेराद्युदात्तत्वमिति । तदादेरिति तत्पुरुषः । तदन्तस्येति बहुव्रीहिः ॥

( आक्षेपभाष्यम् )

**अथ क्रियमाणेपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे अनुदात्तत्वे च कस्मादेव तदादेराद्युदात्तत्वं न भवति तदन्तस्य चानुदात्तत्वम् ॥**

( समाधानभाष्यम् )

**उत्पन्नः प्रत्ययः प्रत्ययाश्रयाणां कार्याणां निमित्तं भवति नोत्पद्यमानः । तद्यथा—कृतो घटो घटाश्रयाणां कार्याणां निमित्तं भवति, न क्रियमाणः ॥**

( प्रदीपः ) प्रत्ययाश्रयाणामिति । तदन्तग्रहणादीनामित्यर्थः । आद्युदात्तश्चेत्यस्य तु प्रतियोगमुपस्थाने सत्युत्पद्यमान एव तव्यादिराद्युदात्तो भवति । एवं शिवादिरुदात्त इति दोषाभावः ॥ घटाश्रयाणामिति । उदकाहरणादीनामित्यर्थः ॥

( उद्द्योतः ) उत्पन्नः प्रत्यय इति । प्रत्ययग्रहणे यस्मादितिपरिभाषाया अनुवादविषयत्वादिति भावः ॥ तद्ध्वनयन् व्याचष्टे—उत्पद्यमान एवेति । तथा चेह करणे प्रत्ययस्यानुवाद्यत्वाभावान्न परिभाषोपस्थितिरिति भावः ॥

( १७०० समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ न वा प्रकृतेराद्युदात्तवचनं ज्ञापकं तदादेरग्रहणस्य ॥ * ॥

**( भाष्यम् ) न वैष दोषः । किं कारणम् ? । यदयं "ञ्नित्यादिर्नित्यम्" इति प्रकृतेराद्युदात्तत्वं शास्ति । तज्ज्ञापयत्याचार्यः—'न तदादेराद्युदात्तत्वं भवती'ति ॥**

( प्रदीपः ) यदयमिति । **'प्रत्ययस्य'** इत्यनेनाद्युदात्तत्वे सिद्धे ञ्नित्यादिर्नित्यमित्यानारम्भणीयं स्याद् यदि तदादेर्ग्रहणं स्यादित्यर्थः ॥

( उद्द्योतः ) ञ्नित्यादिरिति । ञ्निदन्तस्य, ञ्निति परे पूर्वस्य वाऽऽद्युदात्तविधायकम् ॥ ननु प्रत्ययस्येत्यनेन सिद्धे ञ्नित्यादिरिति सूत्रं स्वस्मिन्नेव तदादितदन्तग्रहणाभावस्य ज्ञापकं किं न स्यादिति चेन्न । प्रथमे ञ्नित्यादिरिति सूत्रे विरोधोपस्थित्यभावेनौत्तरकालिके प्रत्ययस्येत्यस्य बोध एव तदुपस्थित्या तत्रैव तदभावकल्पनेत्याशयात् ॥

( आपत्तिभाष्यम् )

**तदन्तस्य तर्ह्यनुदात्तत्वं प्राप्नोति ॥**

( १७०१ आपत्तिवारणवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ प्रकृतिस्वरविधानसामर्थ्यात् प्रत्ययस्वराभावः ॥ * ॥

**( भाष्यम् ) यदयं धातोरन्तः प्रातिपदिकस्य चान्त इति प्रकृतेरन्तोदात्तत्वं शास्ति, तज्ज्ञापयत्याचार्यः—'न तदन्तस्यानुदात्तत्वं भवती'ति ॥**

**कथं कृत्वा ज्ञापकम् ? ।**

**यत्र ह्यनुदात्तः प्रत्ययः, प्रकृतिस्वरस्तत्र प्रयोजयति ।**

( प्रदीपः ) यत्र हीति । यातीत्यादौ पिति प्रत्यये धातोरुदात्तत्वं भवति । यातो यान्तीत्यादौ तु प्रत्ययाद्युदात्तत्वेन सति शिष्टत्वाद् बाध्यते । कृष्णतर इत्यादौ च प्रातिपदिकान्तोदात्तत्वं श्रूयते । यदि च प्रत्ययान्तस्यानुदात्तत्वं स्याद् निर्विषयं धातुप्रातिपदिकान्तोदात्तत्वं स्यादित्यर्थः । आस्ते शेत इत्यादौ लसार्वधातुकानुदात्तत्वे सति धातुस्वरस्य सविषयत्वादज्ञापकत्वमिति चेत् । तत्रापि तदन्तविधिप्रसङ्गाद् ज्ञापकत्वमेव ॥

१ पर इति शेषः । प्रयोजयतीत्यस्य 'ज्ञापकत्व'मिति शेषः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्द्योतः ) प्रातिपदिकान्तोदात्तत्वमिति । स्वरविधौ संघातः कार्यीत्यर्थस्य षष्ठे वक्ष्यमाणत्वादनुदात्तत्वं सर्वस्येति तात्पर्यम् ॥

( १७०२ अत्रसूत्रप्रयोजनवार्तिकम् ॥ ४ ॥ )

॥ * ॥ आगमानुदात्तार्थं वा ॥ * ॥

( भाष्यम् ) आगमानुदात्तार्थं तर्हि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते । प्रत्ययसंज्ञासंनियोगे नाद्युदात्तत्वे कृते आगमा अनुदात्ता यथा स्युरिति ॥

( प्रदीपः ) आगमानुदात्तार्थं वेति । वाशब्दस्त्वर्थे । लवितव्यमित्यादौ तव्यस्योत्पत्तिकाल एवाद्युदात्तत्वे कृते पश्चादिडागमः क्रियमाणः शेषनिघातेनानुदात्तो भवति । अन्यथा परत्वादिडागमे कृते तस्य तद्भक्तत्वात् प्रत्ययग्रहणेन ग्रहणादाद्युदात्तत्वं क्रियमाणमिट एव प्रसज्येतेत्यर्थः ।

( उद्द्योतः ) पूर्वप्रयोजनस्य ज्ञापकेन खण्डनादाह—तर्ह्यर्थ इति । अन्यथेति ॥ षष्ठे सूत्रकरणे इत्यर्थः । तस्मादागमानुदात्तत्वसिद्धये इह वचनमिति भावः ॥ एतदुत्तरं भाष्यमेकदेश्युक्तिः ॥

(१७०३ आगमानुदात्तत्वप्रयोजननिराकरणवार्तिकम् ॥५॥)

॥ * ॥ न वागमानुदात्तवचनात् ॥ * ॥

( भाष्यम् ) न वा एतदपि प्रयोजनमस्ति ॥ किं कारणम् ? । आगमानुदात्तवचनात् । आगमा अनुदात्ता भवन्तीति वक्ष्यामि ॥

( उद्द्योतः ) भाष्ये वक्ष्यामीति । व्याख्यास्यामि ज्ञापकादित्यर्थः ॥

( अनुयोगभाष्यम् )

के पुनरागमा अनुदात्तत्वं प्रयोजयन्ति ? ।

( प्रदीपः ) के पुनरिति । अन्योऽत्र प्रष्टा द्रष्टव्यः, न तु येन नवेत्युक्तं स एव पृच्छति विरोधात् ॥

( उद्द्योतः ) अन्यत्रेति । शेषनिघातेनागमानुदात्तत्ववादी ॥ के पुनरित्यस्य शेषनिघातेन यत्र न सिध्यति ते के इत्यर्थः ॥

( उत्तरभाष्यम् )

इट्—लविता ।

(प्रदीपः) लवितेति । लुद् । तिप् । डा । तासिः । इट् । अत्र यदीटोऽनुदात्तत्वं न स्यात् तदा तासिभक्तत्वादिडुदात्तः स्यात् । शेषनिघातेन च तास्याकारोऽनुदात्त इत्युदात्तलोपाभावादुदात्तनिवृत्तिस्वर आकारस्य न स्यात् । इटस्त्वनुदात्तत्वे सति तास्याकार एवोदात्त इत्युदात्तनिवृत्तिस्वरः सिध्यति ॥

( उद्द्योतः ) तृन्तृजन्तत्वे ञ्नितीति चित इति चोदात्तत्वे शेषनिघातेन सिद्धेराह—लुडिति ॥ षष्ठाध्याये प्रत्ययस्य चेति सूत्रकरणवादी उत्तरयति भाष्ये इट् लवितेति ॥ तद् ध्वनयन् व्याचष्टे—तासि भक्तत्वादिडुदात्त इति ॥ एवं च लवितेत्यादौ उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वसिद्धिरागमानुदात्तवचनस्य षाष्ठसूत्रवादिमते फलमित्यर्थः ॥

( इडागमानुदात्तत्वस्य प्रयोजनत्वनिराकरणभाष्यम् )

इट् तावन्न प्रयोजयति ॥

( उद्द्योतः ) अपरः फलं नास्तीत्याह—भाष्ये इट् तावन्न प्रयोजयतीति । षष्ठतृतीययोरन्यतरत्र पाठेऽपि अन्तरङ्गत्वात्पूर्वमेवाद्युदात्तत्वप्रवृत्त्या ततः शेषनिघातेनेटोऽनुदात्तत्वे उदात्तनिवृत्तिस्वरसिद्धेरित्यर्थः ॥

( इडागमे प्रयोजनोपपादकभाष्यम् )

इदमिह संप्रधार्यम्—इट् क्रियतामाद्युदात्तत्वमिति ॥ किमत्र कर्तव्यम् ? । परत्वादिट् ॥

नित्यमाद्युदात्तत्वम् । कृते पीटि प्राप्नोति अकृतेपि प्राप्नोति ॥

इडपि नित्यः । कृतेप्याद्युदात्तत्वे प्राप्नोति अकृतेपि ॥

अनित्य इट् । अन्यथास्वरस्य कृते आद्युदात्तत्वे प्राप्नोति । अन्यथास्वरस्याकृते प्राप्नोति । स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति ॥

आद्युदात्तत्वमपि अनित्यम् । अन्यस्य कृते इटि प्राप्नोति । अन्यस्याकृते । शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ उभयोरनित्ययोः परत्वादिडागमः ॥

( प्रदीपः ) स्वरभिन्नस्येति । रूपवत् स्वरोपि श्रुतिभेदहेतुत्वात् शब्दान्तरत्वमेव करोतीति भावः ।

(उद्द्योतः) परोन्तरङ्गत्वमपश्यन् स्वमते परत्वेन पूर्वमिडागमं स्थापयितुमाह—इदमिहेत्यादिना परत्वादिडागम इत्यन्तेन ॥

( इडागमे प्रयोजननिराकरणोपपादनभाष्यम् )

अन्तरङ्गं तर्हि आद्युदात्तत्वम् ॥ काऽन्तरङ्गता? । उत्पत्तिसन्नियोगेनाद्युदात्तत्वमुच्यते । उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्येडागमः ॥

आद्युदात्तत्वमपि नान्तरङ्गम् । यावता प्रत्यय आश्रिते प्रकृतिरप्याश्रिता भवति ॥

अन्तरङ्गमेवाद्युदात्तत्वम् ॥ कथम् ? । इदानीमेव ह्युक्तं—न प्रत्ययस्वरविधौ तदादिविधिर्भवतीति ॥

( प्रदीपः ) प्रकृतिरप्याश्रितेति । प्रत्ययग्रहणपरिभाषयेति भावः ॥ अन्तरङ्गमेवेति । तत इण् न प्रयोजयतीत्यर्थः ।

( उद्द्योतः ) अपरः स्वाशयं प्रकटयति—अन्तरङ्गं तर्हीति । षष्ठे सूत्रकरणेपि ज्ञापकात्तदादिविध्यभावेनान्तरङ्गत्वात्पूर्वं स्वरे पश्चादिटि उदात्तनिवृत्तिस्वरे शेषनिघातसिद्धेरागमानुदात्तत्वं निष्फलमिति भावः ॥ उत्पत्तिसन्नियोगेनेति । उत्पत्तिमात्रनिमित्तत्वेनेत्यर्थः ॥ नेदं भाष्यं तृतीये सूत्रमिति पक्षे, उपक्रमोपसंहारविरोधात् ॥ अत एव लवितव्यमित्यपि न फलम् । अन्तरङ्गत्वात्पूर्वं स्वरवृत्तेः ॥ इड्विधौ प्रकृतिप्रत्ययोभयाश्रयणे बीजमाह—अङ्गस्येति । अङ्गसंज्ञानिमित्तस्येत्यर्थः ॥ एवं च० तस्य उभयाश्रितत्वादस्यामिति तत्त्वमिति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( सीयुडागमे प्रयोजनभाष्यम् )

**सीयुट् तर्हि प्रयोजयति ।**

( १७०४ सीयुडागमे प्रयोजनोपपादनवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ अवचने हि सीयुडादेराद्युदात्तत्वम् ॥ * ॥**

( भाष्यम् ) **अक्रियमाणे हि आगमानुदात्तत्वे क्रियमाणेपि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे सीयुडादेर्लिङ आद्युदात्तत्वं प्रसज्येत । लविषीय पविषीय ॥**

(प्रदीपः) लविषीयेति । आशिषि लिङ् । अत्र विशेषविहितत्वाद्वा परत्वाद्वा पूर्वं सीयुट् क्रियते पश्चाल्लादेशः । तत्र प्रत्ययाद्युदात्तत्वं क्रियमाणं सीयुट एव स्यात् । आगमा अनुदात्ता इति तु वचनात्सीयुटोऽनुदात्तत्वे सति इटोदित्यकारस्योदात्तत्वं सिध्यतीत्यर्थः ॥

( उद्द्योतः ) एवं शेषनिघातेन आगमानुदात्तत्वमिति वादिना षष्ठे सूत्रारम्भवादिनं प्रति आगमानुदात्तत्ववचनस्येटः प्रयोजनत्वाभावे उक्ते प्रयोजनान्तरमाह—सीयुट् तर्हीति ॥ अनवकाशत्वे सत्येव विशेषविहितत्वस्य बलवत्त्वप्रयोजकत्वादाह—परत्वाद्वेति ॥ लादेशनिमित्ताद्युदात्तत्वस्य यात इत्यादिरवकाशः ॥ शयिषीष्टेत्यादौ लसार्वधातुकानुदात्तत्वात्सीयुट् सावकाशः ॥ प्रकृते उभयप्रसङ्गे परत्वात्सीयुडित्यर्थः ॥ लावस्थायां तु न स्वरस्तस्यानच्कत्वात् । न च पूर्वं सीयुटि अनिर्दिश्यमानत्वान्न समुदायस्य, व्यवहितत्वान्न निर्दिश्यमानस्येत्यादेशाप्रवृत्तिरवस्यादिति वाच्यम् । धातोरित्यस्य विहितविशेषणत्वाङ्गीकारेण व्यवहितेपि प्रवृत्तेः ॥ एवं च तृतीये एतत्सूत्रपाठेऽपि आगमानुदात्तत्ववचनमावश्यकमित्याह—भाष्ये—क्रियमाणेपीति । यद्यपि तिबादीनां प्रत्ययत्वं स्थानिवत्त्वेन सिद्धं तथापि अधिकृतस्यासंबन्धे मानाभाव इति प्रत्ययसंज्ञासन्नियोगेनेत्युक्तम् ॥ परश्चेत्यस्याप्यत्र संबन्धे बाधकाभावः, धातोः परत्वस्यापि सत्त्वात् ॥ न च तृतीये सूत्रे लस्य स्थाने इडुदात्तो भवतीति उत्पत्तिकाल एव स्वरविधानादनुवादविषयाया यदागमा इति परिभाषाया अप्रवृत्तेरागमविशिष्टस्योदात्तत्वाप्राप्त्योच्चार्यमाणस्येट एवाद्युदात्तत्वे सीयुटः शेषनिघातेन सिद्धिरिति वाच्यम् । आगमसंनिधाने विधीयमानस्यापि तस्य प्रत्ययसंज्ञा विशिष्टे एव, आद्युदात्तत्वं च तत्सन्नियोगेन विशिष्टे एवेत्यभिमानात् ॥ अन्यथा तावत एव पृथक् प्रत्ययत्वे सीयुडन्तस्याङ्गत्वं स्यात् । तथा च तदन्तस्यापि लविषीध्वमित्यादौ गुणः स्यात् ॥ इटोदित्यकारस्येति । अत्र स्वरितत्वं नाशङ्क्यम् । औपदेशिक प्रत्ययत्वाभावात्, दित्वाच्च ॥

( वार्तिककरणानुयोगभाष्यम् )

**तत्तर्हि वक्तव्यम्—आगमा अनुदात्ता भवन्तीति ॥**

( तद्वार्तिकस्य ज्ञापकसिद्धत्वकरणभाष्यम् )

**न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति—"आगमा अनुदात्ता भवन्ति" इति, यदयं 'यासुट् परस्मैपदेषूदात्तो ङिच्चे'त्याह ॥**

( उद्द्योतः ) भाष्ये—यदयं यासुडिति । न च परस्मैपदनिमित्तकत्वादस्यादेशोत्तरं प्रवृत्त्या पूर्वमेव अन्तरङ्गत्वात्परत्वाद्वा प्रत्ययाद्युदात्तत्वे ततो यासुडस्वरको वा स्यात् शेषनिघातेनानुदात्तो वेति चरितार्थमुदात्तग्रहणं कथं ज्ञापकमिति वाच्यम् । परस्मैपदेष्वित्यस्य विषयसप्तमीत्वमाश्रित्य लावस्थायामेव यासुटि ततो लादेशे तन्निमित्तकाद्युदात्तत्वे यासुटः सिद्धे उदात्तग्रहणं ज्ञापकमित्याशयात् ॥

( ज्ञापकत्वानुपपत्तिभाष्यम् )

**नैतदस्ति ज्ञापकम् । वक्ष्यत्येतत्—*यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं च ।* इति ॥**

( प्रदीपः ) पिदर्थमिति । चिनुयादित्यादौ पिद्भक्तत्वाद्यासुटोऽनुदात्तत्वप्रसङ्गे उदात्तवचनमित्यज्ञापकमित्यर्थः ॥

( ज्ञापकतोपपादकभाष्यम् )

**शक्यमनेनैवं वक्तुं यासुट् परस्मैपदेषु भवति, अपिच लिङ् भवतीति । सोयमेवं लघीयसा न्यासेन सिद्धे सति यद् गरीयांसं यत्नमारभते । तज्ज्ञापयत्याचार्यः—"आगमा अनुदात्ता भवन्ति" इति ॥ शक्यमेवं लब्धुम् ॥**

( उद्द्योतः ) भाष्ये शक्यमेवं लब्धुमिति ॥ एवं रीत्येदं लब्धुं शक्यं नत्वपूर्ववचनमेवेत्यर्थः ॥

( आद्युदात्तत्वानुपपत्तिभाष्यम् )

**यद्येव वचनाद्, अथापि ज्ञापकाद् 'आगमा अनुदात्ता भवन्तीति । आगमैस्तु व्यवहितत्वादाद्युदात्तत्वं न प्राप्नोति ॥**

( प्रदीपः ) आगमैरिति । विच्छिन्नत्वादादित्वस्य लविषीयेत्यादौ प्रत्ययस्याद्युदात्तत्वं न प्राप्नोतीत्यर्थः । आरब्धे तु सूत्रे प्रत्ययसंज्ञासन्नियोगेन कृते आद्युदात्तत्वे भवन्त्यागमा इति न दोषः ॥

( उद्द्योतः ) यद्येववचनादिति ॥ तस्मिन्निति परिभाषास्त्वेन विषयसप्तम्यनुक्तितेति भावः ॥ अथापीति उक्त आशयः ॥ आगमैस्त्वित्ययं दोषः षाष्ठवादिमते इत्याह—आरब्धेत्विति तृतीये आरब्धे त्वित्यर्थः ॥ प्रत्ययसंज्ञेति ॥ लावस्थायां सीयुडादावप्या-

---

१ प्रत्ययसंज्ञा संनियोगेनाद्युदात्तत्वे क्रियमाणेऽपीति संबन्धः । तृतीये एतत्सूत्रपाठेऽपीति भावः । ( र. ना. )

२ तृतीये एतत्सूत्रपाठसमर्थक इति शेषः । ( र. ना. )

३ सीयुटस्तु लादेशोत्तरमपि प्रवृत्त्या सावकाशत्वादिति भावः । ( र. ना. )

४ आगमसंनिधाने प्रत्ययसंज्ञा विशिष्टे एवेति योजना । ( र. ना. )

५ अभिमानोक्तिबीजं तु आगमसंनिधाने विशिष्टस्य प्रत्ययसंज्ञाया विधायकशब्दाभावः । यदागमपरिभाषायास्तु अनुवादविषयकत्वेन प्रकृते प्रवृत्त्यभाव इति । ( र. ना. )

६ लादेशोत्तरं यासुडागमात्पूर्वमेव चेत्यर्थः । ( र. ना. )

७ स्वीक्रियते इति शेषः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्युदात्तत्वं केवलस्यैवेति पूर्वं जाता अपि शेषनिघातेनानुदात्ता भवन्तीत्यर्थः ॥ एवं च तस्यानुदात्तत्वायागमानुदात्तत्ववचनमनावश्यकमिति तात्पर्यम् ॥ अङ्गसंज्ञा[1] तु न, तस्यां यदागमा इतिन्यायेन विशिष्टस्यैव[2] प्रत्ययग्रहणेन ग्रहणात् । एवं च यासुटोऽपि शेषनिघातेनानुदात्तत्वे प्राप्ते उदात्तग्रहणस्य चारितार्थ्येन ज्ञापकासम्भवोऽपि ध्वनितः । एवं[3] च लविषीयेत्युदाहरणविषया क्रियमाणेऽपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे इत्यादिरेकदेश्युक्तिरसङ्गतेति बोध्यम् ॥ ननु तृतीये सूत्रमतेऽपि अनुदात्तं पदमित्यस्य परिभाषात्वात्तेनैकवाक्यतायामाद्युदात्तत्वविधिकाले संनिहितानामेव तेन निघातविधानात्पश्चात्सन्निहितस्येटो[4] निघाताप्राप्तेरागमानुदात्तत्ववचनमावश्यकमिति चेन्न । चिनुत इत्यादौ श्नोरनुदात्तत्वसिद्ध्येऽसंनिहितस्यापि तेन निघातावश्यंभावेन पदग्रहणं परिमाणार्थमिति वक्ष्यमाणया रीत्या न्यायसिद्धत्वेन च तन्मते वचनस्यानावश्यकत्वात् ॥ न चैकपदे विशेषविधिं विना द्वयोरुदात्तयोरभावात् उदात्तस्वरितयोरभावाच्चास्वरकस्याच उच्चारणाभावादनुदात्तत्वमेवेति[5] वाच्यम्, एकश्रुतिविषये उक्तस्वररहितस्याप्युच्चारणसत्त्वात्, एकश्रुतिशास्त्रस्य विध्यर्थत्वे संभवति नियमार्थत्वासंभवाच्च ॥ अत[6] एव अनुदात्तं पदमित्यस्य चारितार्थ्यम् ॥ चिनु—इत्यत्र शेषनिघाता प्रवृत्तिस्तु हेरपित्त्वस्याक्ष्णुहीत्यादौ चारितार्थ्येन प्रकृतेन्तरङ्गानपीति न्यायेन स्वरात्पूर्वं लुकः प्रवृत्त्या स्वरैकवाक्यतापन्नस्यानुदात्तं पदमित्यस्याप्रवृत्तेरिति बोध्यम् ॥

( आद्युदात्तत्वसाधनत्वोपपादनभाष्यम् )

**'आगमा अविद्यमानवद्भवन्ति'इति वक्ष्यामि ।**

( उद्द्योतः ) 'आगमा अनुदात्ता' इति न कर्तव्यं किं तु ते अविद्यमानवदित्येव कार्यमित्याह—षाष्ठवादी भाष्ये आगमा इति ॥

( अविद्यमानवत्करणे दूषणभाष्यम् )

**यद्यागमा अविद्यमानवद्भवन्तीत्युच्यते, लविता अवादेशो न प्राप्नोति ॥**

( दूषणोद्धारभाष्यम् )

**स्वरविधाविति वक्ष्यामि ॥**

( पुनर्दूषणभाष्यम् )

**एवमपि लविता—'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वं न प्राप्नोति ॥**

( प्रदीपः ) **एवमपि लवितेति** । तृन्नन्तत्वादाद्युदात्तमेतत् ॥

( उद्द्योतः ) लवितेत्यस्य लुडन्तत्वे तृजन्तत्वे वाऽन्तोदात्तत्वे न स्वरित प्राप्त्यभावादाह—तृन्नन्तत्वादिति ॥

( दूषणोद्धारभाष्यम् )

**'षाष्ठिके स्वरे' इति वक्ष्यामि ॥**

( पुनर्दूषणभाष्यम् )

**एवमपि चिण्वितः[8] "निष्ठा च द्व्यजनाद्" इत्येष स्वरः प्राप्नोति ॥**

( दूषणोद्धारभाष्यम् )

**प्रत्ययस्वर[9]विधाविति वक्ष्यामि ॥**

( अविद्यमानवद्भावस्य वाचनिकत्वे प्रश्नभाष्यम् )

**तत्तर्हि आगमा अविद्यमानवद्भवन्तीति वक्तव्यम् ।**

( ज्ञापकसिद्धत्वोपपादकभाष्यम् )

**न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति—आगमा अविद्यमानवद्भवन्तीति, यदयं 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्याह ॥**

( प्रदीपः ) **यदयमिति** । यदि प्रत्ययाद्युदात्तत्वे कर्तव्ये आदित्वमागमा विहन्युः तदा चिनुयातामित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमिति तन्न कुर्यात् । कृतं तु प्रत्ययाद्युदात्तत्वे कर्तव्ये आगमानामविद्यमानत्वं ज्ञापयतीत्यर्थः ॥

( उद्द्योतः ) कृतं त्विति । सत्यविद्यमानवत्त्वे तद्रहितप्रत्ययस्यैवाद्युदात्तत्वे शेषनिघातेनागमानामनुदात्तत्वं सिद्धमिति भावः ॥ शेषनिघातप्राप्तानुदात्तव्यावृत्तये उदात्तग्रहणं चरितार्थमिति दिक् ॥

( ज्ञापकत्वखण्डनभाष्यम् )

**नैतदस्ति ज्ञापकम् । वक्ष्यत्येतत् *यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं च* इति ।**

( ज्ञापकत्वमण्डनभाष्यम् )

**शक्यमनेन वक्तुम्—'यासुट् परस्मैपदेषु भवति, अपिच्च ङिद्' भवतीति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः—"आगमा अविद्यमानवद्भवन्ति'इति ।**

( १७०५ प्रत्ययसंज्ञासंनियोगेनस्वरविधिप्रयोजनवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ आद्युदात्तस्य वा लोपार्थम् ॥ * ॥**

( भाष्यम् ) **आद्युदात्तस्य तर्हि लोपार्थं प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते । प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे कृते लोपे उदात्तनिवृत्तिस्वरः सिद्धो भवति । सौगघ्नी । माथुरी । अत्र हि परत्वाल्लोपः स्वरं बाधेत ॥**

( प्रदीपः ) **सौगघ्नीति** । विभज्यान्वाख्याने सौगघ्न

---

१ लविषीयेत्यादौ सीयुडन्तस्याङ्गसंज्ञेत्यर्थः । ( र. ना. )

२ अङ्गसंज्ञायां प्रत्ययस्यानुवाद्यत्वेनेति भावः । ( र. ना. )

३ आरब्धे तु सूत्रे इत्यादि कैयटोक्तरीतिस्वीकारे अनुपदोक्तरीत्या वा शेषनिघातेनानुदात्तत्वस्वीकारे इत्यर्थः । ( र. ना. )

४ लविषीयेत्यादाविडागमस्येत्यर्थः । ( र. ना. )

५ आगमा अनुदात्ता इत्यस्य प्रयोजनाभाव इति शेषः । ( र. ना. )

६ अस्वरकस्याच उच्चारणाभावादनुदात्तत्वमेवेति पूर्वपक्ष्युक्तरीतेरभावादेवेत्यर्थः । ( र. ना. )

७ पाष्ठिके स्वरे कर्तव्ये आगमस्येटोऽविद्यमानवत्त्वेन द्व्यच्कत्वादिति भावः ॥

८ 'निष्ठान्तस्य द्व्यच आकारभिन्न आदिरुदात्तः संज्ञायाम्' इति सूत्रार्थः ॥

९ अस्य पाष्ठत्वेपि प्रातिपदिकस्वरविधित्वेन प्रत्ययस्वरविधित्वाभावः ॥

१० पदस्येति शेषः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अ ई इति स्थिते प्रत्ययस्य चेत्याद्युदात्तत्वात्परत्वाद्यस्येति लोपे कृते उदात्तनिवृत्त्यभावादुदात्तनिवृत्तिस्वरईकारस्य न स्यात्। प्रत्ययसंज्ञासन्नियोगेन त्वाद्युदात्तविधाने न दोषः॥

(उद्द्योतः) एवं चागमानुदात्तत्वं न तार्तीयसूत्रफलम्, षाष्ठेऽपि ज्ञापकेन सिद्धत्वादित्यभिमानेनैकदेशी उत्तरवार्तिकस्थं वा शब्दं तदर्थं व्याचष्टे—आद्युदात्तस्य तर्हीति॥ प्रागुक्तकैयटध्वनितरीत्या ज्ञापकासम्भवे तु आगमानुदात्तत्वरूपं प्रयोजनं स्थितमेव॥ ननु ङीब्युत्पत्तेः प्रागेवाण आद्युदात्तत्वे कृते उदात्तनिवृत्तिस्वरः सिद्धस्तत्राह—विभज्येति॥

(१७०६ प्रयोजननिराकरणवार्तिकम्॥ ८॥)

॥*॥ न वा बहिरङ्गलक्षणत्वात्॥*॥

(भाष्यम्) न वैतदपि प्रयोजनमस्ति। किं कारणम्? बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षणो लोपः। अन्तरङ्गः स्वरः। असिद्धं बहिरङ्गमन्तरङ्गे॥ अवश्यं चैषा परिभाषा आश्रयितव्या।

(१७०७ परिभाषाभावे दूषणवार्तिकम्॥ ९॥)

॥*॥ अवचने हि ञ्नित्कित्स्वतिप्रसङ्गः॥*॥

(व्याख्यानभाष्यम्)

अक्रियमाणायां ह्यस्यां परिभाषायां क्रियमाणेपि प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वे ञ्नित्कित्सु अतिप्रसङ्गः स्यात्। औत्सी कंसिकी आत्रेयीति। अत्र हि परत्वाल्लोपो ञ्नित्कित्स्वरान् बाधेत॥

(प्रदीपः) बहिरङ्गलक्षण इति। स्वार्थादीनां क्रमेण प्रतीतिरिति स्त्रीत्वनिमित्त ईकारो बहिरङ्ग इति तन्निमित्तो लोपो बहिरङ्गः। अथ वाङ्गस्य भस्येत्याद्यपेक्षणाल्लोपो बहिरङ्गः॥ औत्सीति। उत्से जाता। उत्सादिभ्योऽञ् ङीप्। यद्यचपरत्वाल्लोप आद्युदात्तत्वं ञिल्लक्षणं बाधेत तदा प्रत्ययस्याद्युदात्तत्वादुदात्तनिवृत्तिस्वर ईकारस्य स्यादेव॥ कंसिकीति। कंसेन क्रीता। कंसाट्टिठनिति टिठनि ङीपि च ठकारस्याकृत इकादेशे उदात्तत्वं मन्यते॥ आत्रेयीति। अत्रेरपत्यं स्त्री। इतश्चानिञ इति ढक्। आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति पूर्वमेयादेशः ङीप्। अत्रोदात्तनिवृत्तिस्वरो न स्यात्। अन्तरङ्गत्वे तु स्वरस्याश्रीयमाणे दोषाभावः॥

(उद्द्योतः) बहिरङ्ग इति॥ तेन विभज्यान्वाख्यानेऽपि न दोष इति भावः॥ अथवाङ्गस्येत्यादि च्चिन्त्यम्, संज्ञाकृतबहिरङ्गत्वस्य शास्त्रेनाश्रयणादित्युक्तम्॥ पूर्वमेयादेशो ङीबिति योपधत्वान्न ङीपिति भावः॥

(अन्तरङ्गपरिभाषानङ्गीकारेपि दूषणोद्धारभाष्यम्)

नैष दोषः। ञ्नित्कित्स्वराः प्रत्ययस्वरस्यापवादाः। न चापवादविषये उत्सर्गोऽभिनिविशते। 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः'। प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते'। न तावदत्र कदाचित्प्रत्ययस्वरो भवति, अपवादान् ञ्नित्कित्स्वरान् प्रतीक्षते॥

कंसिक्यां भूयान् परिहारः—अन्त्यस्यात्र उदात्तत्वम्, अन्त्यस्य लोपः। आदेरुदात्तत्वम् अन्त्यस्य लोपः॥

(प्रदीपः) कंसिक्यामिति। ठचश्चित्करणात् पूर्वमिकादेशः ततः प्रत्ययाद्युदात्तत्वमिति नास्त्युदात्तलोप इत्यर्थः॥

(उद्द्योतः) भाष्ये न चापवादेति। ञित्स्वरमिव प्रत्ययस्वरमपि बाधित्वा परत्वादस्वरकस्यैव लोपे औत्सी कंसिकीत्यत्रोदात्तनिवृत्तिस्वरो न प्राप्नोतीति भावः॥ प्रतीक्षते इति। लोपोत्तरमपि प्रत्ययलक्षणेन तत्प्रवृत्तेरिति भावः॥ ठच इति। अत्रेदं च्चिन्त्यम्। अकारविशिष्टस्य प्रत्ययत्वे तस्यान्तरतम्यादिकादेशे आद्युदात्ते प्राप्तेऽन्तोदात्तार्थं तत्सार्थक्यम्॥ व्यञ्जनमात्रस्य प्रत्ययत्वे तत्राद्युदात्तत्वाप्राप्त्या तद्विषयस्याद्युदात्तश्चेत्यस्य सामर्थ्यात्तदादेशे प्रवृत्त्यापत्तौ तद्बाधाय तत्सार्थक्यं स्पष्टमेवेति कथमस्य ज्ञापकत्वम्॥ प्रत्यया अकारविशिष्टाः तत्र व्यञ्जनमात्रस्य व्यञ्जनान्त इकाद्यादेश इति पक्षस्तु ठस्येक इति सूत्रस्थभाष्यस्वग्रन्थविरुद्धः॥ नैपादकर्षुक इत्यत्र ह्रस्वासिद्ध्याऽसंगतश्च गौरवग्रस्तश्च। किंचात्रापि व्यञ्जनस्य प्रत्ययत्वे तदेकवाक्यतापन्नस्य तत्र फलाभावादादेशोत्तरं तत्रैव स्वरप्रवृत्तिरुचिता। अकारविशिष्टस्यापि प्रत्ययत्वे तस्याद्युदात्तत्वे तत्स्थाने आन्तरतम्यादाद्युदात्त एवैकादेश इति ज्ञापकोपन्यासे फलं च्चिन्त्यमिति दिक्।

---

१ अभिमानोक्तिबीजं स्वयमेवाह प्रागुक्तेत्यादिना। (र. ना.)

२ अनुदात्तस्य यत्रोदात्तलोप इति सूत्रेण "यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् इत्यर्थकानुदात्ते ङीपि परे उदात्तस्याणो लोपस्य जातत्वादिति भावः।

३ बहिर्भूतप्रत्ययापेक्षस्याङ्गत्वभत्वादेरपेक्षणादित्यर्थः। (र. ना.)

४ आद्युदात्तत्वमित्यर्थः। मन्यते इत्यरुचिबीजं तु कंसिक्यां भूयान् परिहार इत्यादिना मूले एव स्फुटीभविष्यति। (र. ना.)

५ वस्तुवस्तु भाष्याशयानुसारी कैयटाशयो मयोक्त इति कैयटाशयानवबोधमूलिका नागेशोक्तिरेव चिन्त्या। (र. ना.)

६ गोत्रस्य जातित्वाज्जातिलक्षण इति भावः। (र. ना.)

७ अन्यथैकादेशात्पूर्वं ठाकारस्य प्रत्ययाद्युदात्तत्वे कृते व्यञ्जनमात्रस्य व्यञ्जनान्ते इकादेशेऽन्तोदात्तत्वं लब्धमेवेति चित्करणं व्यर्थमेव स्यादिति भावः। (र. ना.)

८ प्रतिलक्ष्यं लक्षणोपप्लव इति सिद्धान्तादिति भावः। (र. ना.)

९ व्यञ्जनमात्रस्य कादेशेऽस्य कस्य लाक्षणिकत्वेन नैपादकर्षुक इत्यत्र केऽण इति ह्रस्वप्रवृत्तिरेव स्यादिति भावः। (र. ना.)

१० श्रुतस्याकारान्ते आदेशत्वस्य बाधोऽश्रुतस्य च व्यञ्जनान्ते आदेशत्वस्य कल्पनम्, इत्येवंरूपगौरवेत्यर्थः, नैपादकर्षुक इत्यादि लक्ष्यानुरोधेन लक्षणप्रतिपदोक्तन्यायाप्रवृत्तिकल्पने च गौरवमित्यर्थः। (र. ना.)

११ आद्युदात्तश्चेत्यस्येति शेषः। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( परिभाषास्वीकारस्यावश्यकत्वेन प्रत्ययसंज्ञासंनियोगेनाद्युदात्तत्वस्वरविधेरनावश्यकत्वभाष्यम् )

इदं तर्हि आत्रेयी[1] परत्वाल्लोपः कित्स्वरं बाधेत। तस्मादेषां परिभाषाश्रयितव्या। एतस्यां च सत्यां शक्यं प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमवक्तुम्।

( प्रदीपः ) कित्स्वरमिति। तत उदात्तनिवृत्तिस्वरो न स्यादित्यर्थः॥

( उद्द्योतः ) तत इति। कित्स्वरस्य यस्येति लोपेन बाधे एयस्य प्रत्ययस्वरप्रवृत्ताप्रवृत्तौ च दोष इति भावः॥ भाष्ये एतस्यां च सत्यामिति। एवं च आद्युदात्तस्य वा लोपार्थमिति खण्डितम्॥

( १७०८ संनियोगस्वरविधौ प्रयोजनान्तरवार्तिकम् ॥१०॥ )

॥*॥ प्रत्ययाद्युदात्तत्वाद् धातोरन्तः ॥*॥

( भाष्यम् ) प्रत्ययाद्युदात्तत्वाद् धातोरन्त इत्येतद्भवति विप्रतिषेधेन। प्रत्ययाद्युदात्तत्वस्यावकाशः-यत्रानुदात्ता प्रकृतिः—समत्वम् सिमत्वम्। धातोरन्त इत्येतस्यावकाशः-यत्रानुदात्तः प्रत्ययः—पचति पठतीति। इहोभयं प्राप्नोति—गोपायति धूपायति। धातोरन्त इत्येतद्भवति विप्रतिषेधेन॥

( प्रदीपः ) इदानीं प्रत्ययसंज्ञासन्नियोगेन स्वरविधौ प्रयोजनमाह—प्रत्ययाद्युदात्तत्वादिति। यदा ञ्नित्यादिर्नित्यमित्यस्यानन्तरं प्रत्ययस्य चेत्युच्यते तदा परत्वाद्धातुस्वरं प्रत्ययस्वरो बाधेत॥ यथा न्यासे तु प्रत्ययस्वरं धातुस्वरो बाधते॥

( उद्द्योतः ) इदानीं प्रत्ययसंज्ञेति। अनेन हि पूर्वप्रयोजनानां खण्डितत्वान्मुख्यं प्रयोजनमिदानीमाहेत्यर्थो लभ्यते स तु न युक्त एषामप्यग्रे भगवता खण्डनात्॥ यथा न्यासे त्विति। अत्र पाठे हि विप्रतिषेधो न्याय्यो भवति। पाष्ठपाठे हि धातोरित्यस्य पूर्वत्वात्पूर्वविप्रतिषेधो वक्तव्यः स्यादिति भावः॥ भाष्ये यत्रानुदात्ताप्रकृतिः समत्वमिति। ननु प्रातिपदिकप्रत्यये सर्वत्र चारितार्थ्याद्यत्रानुदात्तेत्यादि व्यर्थमिति चेन्न, प्रकृतेरुदात्तस्वरितवत्त्वे प्रत्ययोत्पत्त्यनन्तरं प्रकृतिस्वरनिमित्तकशेषनिघातप्राप्त्या तदपवादत्वमस्य वाच्यम्॥ एवं च बाध्यसामान्यचिन्तया धातोरित्यस्याप्यपवादः स्यादिति शङ्कावारणाय तदुक्तेः॥

( १७०९ प्रासङ्गिकं प्रत्ययसंज्ञासंनियोगेनस्वरान्तरविधिप्रयोजनवार्तिकम् ॥ ११ ॥ )

॥ * ॥ पित्स्वरात्तित्स्वरश्चापि ॥ * ॥

( भाष्यम् ) पित्स्वरात्तित्स्वरश्चापि भवति विप्रतिषेधेन। पित्स्वरस्यावकाशः—पचति पठति। तित्स्वरस्यावकाशः—कार्यं हार्यम्। इहोभयं प्राप्नोति—कार्या हार्या। तित्स्वरो भवति विप्रतिषेधेन॥

( प्रदीपः ) पित्स्वरादिति। एतदत्रैवानुदात्तत्वविधाने सिध्यति नान्यत्रेति भावः॥ कार्येति। स्वरितत्वात् प्रागेकादेशं मन्यते। तत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावात्तित्स्वरः प्राप्नोति। परं प्रत्यादिवद्भावात् तु पित्स्वरप्रसङ्गः।

( उद्द्योतः ) नान्यत्रेति। तथा च तित्स्वरात्पित्स्वर एव परः स्यादिति भावः॥ कार्येत्यत्रोभयप्राप्तिं दर्शयति—तत्रैकादेशस्येति॥

( १७१० प्रत्ययसंज्ञासंनियोगशिष्टस्वरविधिप्रयोजनवार्तिकम् ॥ १२ ॥ )

॥ * ॥ चित्स्वरश्चापि पित्स्वरात् ॥ * ॥

( भाष्यम् ) पित्स्वराच्चित्स्वरश्चापि भवति विप्रतिषेधेन। चित्स्वरस्यावकाशः—चलनः कम्पनः। पित्स्वरस्य—स एव। इहोभयं प्राप्नोति आम्बष्ठ्या सौवीर्या। चित्स्वरो भवति विप्रतिषेधेन॥

( १७११ विप्रतिषेधरूपप्रयोजननिराकरणवार्तिकम् ॥१३॥ )

॥ * ॥ न वाद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगात् ॥ * ॥

( भाष्यम् ) न वार्थो विप्रतिषेधेन॥ किं कारणम्?। आद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगात्। प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे कृते सति शिष्टत्वाद्धातुस्वरो भविष्यति॥

( प्रदीपः ) नवेति। प्रत्ययसंज्ञासन्नियुक्तस्वरस्यान्तरङ्गत्वाचास्ति विप्रतिषेध इति भावः॥

( उद्द्योतः ) प्रत्ययसंज्ञासन्नियुक्तेति॥ ननु पाष्ठन्यासेऽपि आये कृतं धातुसंज्ञातः परत्वात्पूर्वं विषयभेदात्तत्समकालमेव वा प्रत्ययस्वरप्रवृत्तौ पश्चात्प्रवर्तमानस्य धातुस्वरस्य सतिशिष्टत्वमस्त्येवेति चेत्सत्यम्। संज्ञास्वरयोर्विषयभेदेन विरोधाभावात्परत्वाप्रवृत्तेः॥ यौगपद्यमपि न। ज्ञानयौगपद्यासंभवात्॥

( विप्रतिषेधस्यायुक्तत्ववर्णनभाष्यम् )

अयं चाप्ययुक्तो विप्रतिषेधः पित्स्वरस्य तित्स्वरस्य च। किं कारणम्?।

( १७१२ विप्रतिषेधायुक्तत्वहेतुवार्तिकम् ॥ १४ ॥ )

॥ * ॥ टापि स्वरितेनैकादेशः ॥ * ॥

( भाष्यम् ) टाप्यपि स्वरितेनैकादेशो भविष्यति॥ इदमिह संप्रधार्यम्—स्वरितत्वं क्रियताम्, एकादेश इति। किमत्र कर्तव्यम्?। परत्वात्स्वरितत्वम्॥ नित्य एकादेशः। कृते स्वरितत्वे प्राप्नोति अकृतेपि॥

१ 'आत्रेयीति'॥
२ तृतीयाध्याये इत्यर्थः।
३ पष्ठाध्याय इत्यर्थः॥
४ 'पित्स्वराच्चित्स्वरश्चापि।' प्राचीनतरपुस्तकपाठः॥

५ पचति पठतीत्येवेत्यर्थः। ( र. ना. )
६ यञश्चाविति चाप्। उभयत्रापि-अणिञोरिति ष्यङ। ( र. ना. )
७ धातुसंज्ञा प्रत्ययस्वरयोरिति शेषः। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वरितत्वमपि नित्यम्। कृतेप्येकादेशे प्राप्नोति अकृतेपि॥

अनित्यं स्वरितत्वम्। अन्यस्य कृते एकादेशे प्राप्नोति अन्यस्याकृते 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति॥'

एकादेशोप्यनित्यः। अन्यथास्वरस्य कृते स्वरितत्वे प्राप्नोति अन्यथास्वरस्याकृते 'स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति॥ [उभयोरनित्ययोः परत्वात् स्वरितत्वम्]॥

अन्तरङ्गस्तर्हि एकादेशः। कान्तरङ्गता?। वर्णावाश्रित्यैकादेशः, पदस्य स्वरितत्वम्॥

स्वरितत्वमप्यन्तरङ्गम्॥ कथम्?। वक्ष्यत्येतत् —॥पदग्रहणं परिमाणार्थम्॥इति। उभयोरन्तरङ्गयोः परत्वात् स्वरितत्वम्। स्वरितत्वे कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति॥

(प्रदीपः) परत्वात्स्वरितत्वमिति। अन्तरङ्गत्वं स्वरितत्वस्यानपेक्ष्यैतदुक्तम्। स्त्रीत्वापेक्षटाब्निमित्तो ह्येकादेशो बहिरङ्गः॥ आन्तर्यत इति। स्वरिते त्वनुदात्तोपि विद्यत इति स्वरितानुदात्तयोः स्वरितोन्तरतमः॥

(उद्द्योतः) स्त्रीत्वापेक्षेति। वस्तुतः शब्दशास्त्रत्वात् अर्थाधिक्यापेक्षाकृतं बहिरङ्गत्वमप्रयोजकमिति भाष्याशयः॥ कार्येत्यस्य विभज्यान्वाख्याने इदम्॥ भाष्ये पदस्य स्वरितत्वमिति अनुदात्तं पदमित्यनेनैकवाक्यत्वादिति भावः॥ एवं च वर्णसमूहरूपपदसापेक्षत्वात्स्वरितत्वं बहिरङ्गमित्यभिमानः[2]॥ परिमाणार्थमिति। पदत्वं यावद्भवति यावतश्च भवति तावत्तावति च सन्निहितमेकवर्जं सर्वमनुदात्तं भवतीत्यर्थः इति भावः॥ तेन पदसमुदायस्य न स्वरप्रवृत्तिकालेऽसंनिहितस्य च सिध्यतीति बोध्यम्॥ अत[3] एव धातोरित्यादिनाऽस्यैकवाक्यतेति दिक्॥

(पित्स्वरचित्स्वरविप्रतिषेधायुक्तत्वभाष्यम्)

अयं चाप्ययुक्तो विप्रतिषेधः पित्स्वरस्य चित्स्वरस्य च॥ किं कारणम्?।

(१७१३ हेतुवार्तिकम्॥ १४॥)

## ॥ * ॥ चापि चित्करणात्॥ * ॥

(भाष्यम्) चापि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति॥ आद्युदात्तश्च॥ ३॥

(प्रदीपः) चापीति। यदि सामान्यग्रहणाविघातार्थत्वमेव चकारस्याभविष्यत् टाप्प्रत्ययप्रकरण एव यङ्ष्टाप् व्यधास्यतेति भावः॥ ३॥

(उद्द्योतः) सामान्यग्रहणेति। ह्यनुबन्धकत्वसम्पादनद्वारेति भावः॥ एवं च शेषनिघातद्वारागमाद्युदात्तत्वसिद्धये एवात्रास्य सूत्रस्य पाठः॥ आगमानुदात्तार्थं[4] चेत्येवोपक्रमोक्ता सिद्धान्त्युक्तिः, वचनान्तरकरणे गौरवम्। ज्ञापकं तु नास्तीति पूर्वमेव निरूपितम्॥ ३॥

(६८३ सन्प्रत्ययविधिसूत्रम्॥ ३। १। १ आ. ४)

## ६२२ गुप्तिज्किद्भ्यः सन्॥ ३।१।५॥

(उद्द्योतः) गुप्तिज्किद्भ्यः सन्॥ ५॥ परक्षेत्रे चिकित्स्य इति व्याधिप्रतिकारादावेव व्यवहाराद् जुगुप्सादेर्निन्दादावेव व्यवहाराद् 'गुप गोपने' 'कित निकेतने' इति प्रयोगाच्च। विचिकित्सा तु संशय इत्यादिकोशबलाच्चार्थविशेषोपहितेभ्यः एव सन्निति बोध्यम्॥

(आक्षेपभाष्यम्)

गुपूतिज्कितमाना अनुदात्तेतः। गुपादिष्वनुबन्धकरणं किमर्थम्?॥

(प्रदीपः) गुप्तिज्कि॥ ५॥ गुपेति। अनुक्रमप्रदर्शनाय कितिः पठितो न त्वयमनुदात्तेत्॥ गुपादिष्विति। नित्यसन्विषयत्वात्केवलेभ्यो लडाद्यनुत्पादात् प्रश्नः॥

(उद्द्योतः) वेदे चिकित्सतीति परस्मैपदप्रयोगदर्शनादाह—अनुक्रमेति। अत्राग्रहणे सूत्रे एव तदभाव आशङ्क्येतेति तन्निवारणायेत्यर्थः॥ भाष्ये—अनुदात्तेत्करणं किमर्थमिति वक्तव्येऽनुबन्धकरणमित्युक्तिर्दानशानोर्वृत्त्युक्तस्वरितेत्त्वबोधनाय॥ यत्तु वृत्त्यादौ बधेरप्यनुदात्तेत्वमुक्तम्, तत्र मानं चिन्त्यम्। भाष्यविरोधश्च॥ एवं कितेः परस्मैपदत्वेपि भाष्यानुग्रहश्चिन्त्यः॥ वैदिकपरस्मैपदिप्रयोगास्तु छान्दसत्वादपि सुसाधाः॥ लोके त्वात्मनेपदमेवोचितम्॥ एवं च बधेरपि स्वरितेत्त्वं परस्मैपदित्वमेव वोचितमिति वदन्ति॥ केवलेभ्य इति। सन्नन्ते प्रतीयमानार्थवृत्तिभ्य इत्यर्थः॥ तदर्थवृत्तीनामेवानुदात्तेत्वादिति भावः॥ अत एवार्थान्तरे नानुबन्धकत्वमिति[7] वृत्त्यादावुक्तम्॥

(१७१४ प्रयोजनवार्तिकम्॥ १॥)

## ॥ * ॥ गुपादिष्वनुबन्धकरणमात्मनेपदार्थम्॥ * ॥

(भाष्यम्) गुपादिष्वनुबन्धाः क्रियन्ते। आत्मनेपदं यथा स्यात्॥

(प्रदीपः) आत्मनेपदार्थमिति। सन्नन्तेभ्य इति भावः॥

---

१ न सर्वत्रोपलभ्यतेऽयं कोष्ठकान्तर्गतः पाठः॥

२ अभिमानोक्तिबीजं तु अनुदात्तं पदमित्यत्र पदत्वस्य निमित्तत्वेनानाश्रयणरूपम्। (र. ना.)

३ अनुदात्तं पदमित्यस्य पूर्वोक्तार्थस्वीकारादेवेत्यर्थः। अन्यथा धातोः पदत्वाभावाद् धातोरित्यनेन सह तस्यैकवाक्यता न स्यादिति भावः। (र. ना.)

४ आगमा अनुदात्ता इति वचनान्तरेत्यर्थः। (र. ना.)

५ अविकृतस्वरूपप्रत्यायनाय 'इनहन् पूषार्यम्णाम्' इत्यत्र नलोप इव 'झलां जश्' इत्यत्र जश्त्वमिव चर्त्वं न कृतं स्वतन्त्रत्वादाचार्यस्येति बोध्यम्॥

६ सन् रहितेत्यादिः। (र. ना.)

७ नानुबन्धवत्त्वमिति पाठो भाति। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( अनुबन्धवैयर्थ्यभाष्यम् )

अथ क्रियमाणेष्वप्यनुबन्धेषु आत्मनेपदं न प्राप्नोति । किं कारणम् ? । सना व्यवहितत्वात् ॥

( आत्मनेपदार्थमनुबन्धसार्थक्यभाष्यम् )

"पूर्ववत्सनः" इत्येवं भविष्यति ॥

( प्रदीपः ) पूर्ववदिति । लिङ्गातिदेशादिति भावः ॥

( आत्मनेपदानुपपत्तिभाष्यम् )

"पूर्ववत्सनः" इत्युच्यते । न चैतेभ्यः प्राक् सन आत्मनेपदम्, नापि परस्मैपदं पश्यामः ॥

( प्रदीपः ) न चैतेभ्य इति । कार्यातिदेशोसौ । लिङ्गातिदेशे तु अनुचिकीर्षतीत्यादावप्यात्मनेपदप्रसङ्ग इति भावः ॥

( उद्द्योतः ) भाष्ये न चैतेभ्य इति सन्नन्ते प्रतीयमानार्थवृत्तिभ्यः इत्यर्थः ॥ नापि परस्मैपदमिति वधदान्शानभिप्रायेणेदम् ॥

( आत्मनेपदोपपादनभाष्यम् )

एवं तर्ह्यनुबन्धकरणसामर्थ्याद्भविष्यति ॥

अथ वा अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं गोर्विशेषकं भवति ॥

( प्रदीपः ) एवं तर्हीति । सना व्यवधानेऽपीति भावः ॥ अथ वेति । यत्रावयवे लिङ्गासङ्गस्य प्रयोजनं नास्ति तत्र समुदायार्थं एवासाविति भावः । शिष्टं भाष्यं पूर्ववत्सन इत्यत्र विस्तरेण व्याख्यातं तत एवावधार्यम् ॥ ५ ॥

( उद्द्योतः ) यत्रावयवे इति । भाष्ये अवयवे कृतमित्यस्य निष्फलं चेदिति शेषो बोध्यः ॥ ५ ॥

( अवयवलिङ्गस्य समुदायविशेषकत्वे दूषणभाष्यम् )

यदि अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति । तदा जुगुप्सयति मीमांसयतीत्यत्रापि प्राप्नोति ॥

( दूषणपरिहारभाष्यम् )

अवयवे कृतं लिङ्गं तस्य समुदायस्य विशेषकं भवति यं समुदायं योऽवयवो न व्यभिचरति । सन्नन्तमेव च न व्यभिचरति । णिजन्तं पुनर्व्यभिचरति । तद्यथा । गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति, न गोमण्डलस्य ॥ गुप्तिज्किद्भ्यः सन् ॥ ५ ॥

१ अनुदात्तेत्त्वरूपेत्यादिः । ( र. ना. )

( ३८४ सन्विधिसूत्रम् ॥ ३ । १ । १ आ. ५ सूत्रम् )

## ६२३ मान्बधदान् शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ३ । १ । ६ ॥

( अभ्यासरूपसाधनाधिकरणम् )

( १७१५ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अभ्यासदीर्घेऽवर्णस्य दीर्घप्रसङ्गः ॥ * ॥

( भाष्यम् ) अभ्यासदीर्घत्वे ऽवर्णस्य दीर्घत्वं प्राप्नोति—मीमांसते

( प्रदीपः ) मान्बध ॥ ६ ॥ सामान्यविधेर्विशेषविधिर्बाधक इत्याह—अभ्यासदीर्घ इति ॥

( उद्द्योतः ) मान् बध् ॥ ६ ॥ ननु परत्वादित्वे दीर्घे प्राप्ते कथमवर्णस्य दीर्घेत आह—सामान्येति ॥

( अभ्यासरूपसाधनभाष्यम् )

ननु च इत्वे कृते दीर्घत्वं भविष्यति ॥

( अभ्यासरूपसाधनानुपपत्तिभाष्यम् )

कथं पुनरुत्पत्तिसन्नियोगेन दीर्घत्वमुच्यमानमित्वं प्रतीक्षते ॥

( उद्द्योतः ) भाष्ये उत्पत्तिसन्नियोगेनेति । ननु धातुमात्रोद्देशेन सन्, सन्निमित्तकाभ्यासोद्देश्यकश्च दीर्घ इति कथं तयोः संनियोग—इति चेन्न बोधसंनियोगेन तदुत्पत्तिसंनियोगोपीत्यभिमानात् ॥

( प्रतिबन्दीभाष्यम् )

अथ कथमभ्यासं प्रतीक्षते ॥

अथ कथमिति । यथाभ्यासस्येति वचनाद्दीर्घत्वमभ्यासमपेक्षते तथा वचनान्तरविहितमित्वमपीति भावः ॥

( प्रतिबन्द्युत्तरभाष्यम् )

वचनादभ्यासं प्रतीक्षते । अभ्यासस्य दीर्घत्वविधानात् । इत्वं पुनर्न प्रतीक्षते ॥

( उद्द्योतः ) वचनादभ्यासमिति । एवं च संनियोग एवासिद्ध इति भावः ॥ अत एव पूर्वं विशेषविधित्वेनैव बाधकत्वमुक्तं कैयटेनेति केचित् ॥ परे तु तद्बोधसंनियोगेनानैमित्तिकत्वरूपमन्तरङ्गत्वं बोध्यत इति वदन्ति ॥ न प्रतीक्षते इति । किन्तु विशेषविधित्वादन्तरङ्गत्वाद्वा बाधत एवेति भावः ॥

( १७१६ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ न वाभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वात् ॥ * ॥

( भाष्यम् ) न वैष दोषः । किं कारणम् ? । अभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वात् ।

२ यथा पेटप्रित्वं 'स्तनंधयी' इति समुदायान् ङीवर्थम् इति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


,अभ्यासविकारेषु अपवादा उत्सर्गान्न बाधन्ते'इत्येवं दीर्घत्वमुच्यमानमित्त्वं न बाधिष्यते ॥

( प्रदीपः ) अभ्यासविकारेष्विति । एतच्च दीर्घोऽकित-इत्यत्राकिद्ग्रहणेन ज्ञापयिष्यते ॥

( उद्द्योतः ) नवाभ्यासविकारेष्वपवादेति । अपवादपदं बाधकोपलक्षणम् ॥ एतेन यत्रान्यतरप्रवृत्त्युत्तरमन्यतरस्य प्रवृत्त्ययोग्यत्वाभावः । तत्रैवेदमिति परास्तम् ॥ एतच्चेति । यं यम्यत इत्यादौ नुकि अजन्तत्वाभावाद् दीर्घाप्राप्तौ चरिकर्तीत्यादौ रिको रीग् विधिसामर्थ्येन तदप्राप्तौ व्यर्थमकित इति प्रकृतार्थज्ञापकमित्यर्थः ॥ तेन यथायोगं पूर्वमुत्सर्गप्रवृत्तावपवादप्रवृत्तिः ॥ अपवादप्रवृत्तावपि वा पुनः उत्सर्गप्रवृत्तिरिति बोध्यम् ॥

( न्यासान्तरभाष्यम् )

अथ वा "मान्बधदान्शान्भ्य ई चाभ्यासस्य" इति वक्ष्यामि ॥

( न्यासान्तरदूषकभाष्यम् )

एवमपि हलादिः शेषापवाद ईकारः प्राप्नोति ॥

( न्यासान्तरेण समाधानभाष्यम् )

"ई चाच" इति वक्ष्यामि ॥

( प्रदीपः ) ई चाच इति । अजन्तस्येत्यर्थः । न ह्यकृते हलादिश्शेषेऽजन्तत्वं भवति ।

( उद्द्योतः ) यद्यपि ईचा च इत्यत्रा च इत्यस्य वैयधिकरण्येनान्वयेऽपि न क्षतिः, तथापि सामान्याधिकरण्यस्य न्याय्यत्वादाह—अजन्तस्येति ॥

( न्यासान्तरेण समाधानभाष्यम् )

अथ वा "मान्बधदान्शान्भ्यो दीर्घश्चेतोभ्यासस्य" इति वक्ष्यामि ॥

( न्यासान्तरदूषकभाष्यम् )

सिद्ध्यति । सूत्रं तर्हि भिद्यते ।

( उद्द्योतः ) 'ईचाचोभ्यासस्य' 'दीर्घश्चेतोभ्यासस्येति' । पक्षद्वयेपि सूत्रभेदो दूषणम् ॥

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ।

( आक्षेपसारणभाष्यम् )

ननु चोक्तम्—*अभ्यासदीर्घत्वे अवर्णस्य दीर्घत्वप्रसङ्गः* इति ॥

( परिहारस्मारणभाष्यम् )

परिहृतमेतत्—न वाभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वाद्* इति ॥

( परिहारान्तरभाष्यम् )

अथ वा नैवं विज्ञायते—'दीर्घश्च अभ्यासस्ये'ति ॥

कथं तर्हि ? ।

दीर्घश्च आभ्यासस्येति ।

किमिदमाभ्यासस्येति ? ।

अभ्यासस्य विकार आभ्यासः तस्येति ॥ मानबधदान् ॥ ६ ॥

( प्रदीपः ) अभ्यासस्य विकार इति । सचेत्थमेव । तथा हि—लोपस्य तावदादेशो विधातुमशक्यः, तस्याभावरूपत्वात् । यदि च ह्रस्वस्य दीर्घत्वं स्यात् तद्धितनिर्देशोऽनर्थकः स्यात् । दीर्घश्रुत्याच्परिभाषोपस्थानादजन्तस्य दीर्घविधानात् दीर्घस्य ह्रस्वस्य वा दीर्घविधाने विशेषाभावात् । तस्मादित्वमेव तद्धितेन प्रत्याय्यते । अथवार्हत्व सनि यो विहितो विकारः सन्यत इति तस्यैव ग्रहणं विज्ञायते । ह्रस्वश्च मानादीनामिव बधेरपि पर्जन्यवल्लक्षणप्रवृत्त्या भवति ॥ ६ ॥

( उद्द्योतः ) ननु तद्धितेन ह्रस्वग्रहणे बधिर्व्यावर्त्यः तत्र फलाभावेन ह्रस्वाभावादत आह—ह्रस्वश्चेति । अत्र 'न वाभ्यासविकारेष्वित्येव समाधानं युक्तम् ॥ ६ ॥

---

(३८५ सन्प्रत्ययविधिसूत्रम् ॥ ३ । १ । १ आ. ६ सूत्रम्)

## ६२४ धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ३ । १ । ७ ॥

( धातुग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

धातोरिति किमर्थम् ? ॥

( प्रदीपः ) धातोः कर्मणः ॥ १ ॥ धातोरर्थद्वारके कर्मत्वसमानकर्तृकत्वे । ते चेच्छायाः प्रत्ययार्थत्वेऽपि सन्निधानात्तदपेक्षे एव गृह्येते । एवं च प्रकृत्यर्थोपसर्जनः प्रत्ययार्थो भवति । अन्यथा प्रकृतिप्रत्ययार्थयोरसंबन्धः स्यात् । वार्तिकावतारणाय प्रश्नं करोति—धातोरिति किमर्थमिति ॥ अयं भावः—धातुरेव क्रियावाची । उपसर्गस्तु विशेषकः । ततश्चार्थद्वारके कर्मत्वसमानकर्तृकत्वे धातोरेव संभवत इति ॥

( उद्द्योतः ) धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ७ ॥ शब्दस्य धातोः कर्मत्वसमानकर्तृकत्वासंभवात्पक्षे सामानाधिकरण्यानुपपत्तिः ताभ्यां वार्तिकोक्तधातुग्रहणप्रत्याख्यानानुपपत्तिश्चेत्यत आह—अर्थद्वारेति । नन्विच्छायामिति सप्तम्यन्त-

---

१ अनेवंविधेऽपि बाधके एतन्न्यायप्रवृत्तेरिष्टत्वादिति भावः । ( र. ना. )

२ रिकस्तदप्राप्ताविति संबन्धः । दीर्घाप्राप्ताविति तदर्थः । ( र. ना. )

३ आहत्य विहितः, असाधारणधर्मपुरस्कारेण विहित इत्यर्थः । ( र. ना. )

४ अजीगणदचीकरदित्यादिसिद्ध्यर्थम् 'अभ्यासविकारेष्विति' परिभाषाश्रयणीयैव । तयैव प्रकृतेऽपि निर्वाहे आभ्यासस्येति निर्देशकल्पनाया समाधानं न युक्तम्—तत्र तथा निर्देशस्य संदिग्धत्वात् । कैयटोक्तरीत्याऽऽभ्यासपदेनेत्वमात्रस्य परिग्रहे प्रतिपत्तिगौरवाच्चेति भावः । ( र. ना. )

५ धात्वन्तरार्थनिरूपितकर्मत्वसमानकर्तृकत्वयोः परिग्रहे इत्यर्थः । (र.ना.)

६ ताभ्यामिति प्रत्याख्यानान्वयि हेतुबोधकम् । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वात् कर्मण इत्यादिनाऽन्वयायोग्यमितीच्छारूपेऽर्थे[1] धात्वन्तरार्थकर्मणस्तेन समानकर्तृकाद्धपि सन् स्यादत आह—ते चेति । संनिधानाद्विभक्तिविपरिणामेन तयोरपि सा विशेषणमिति भावः ॥ न केवलं संनिधानादेव तयोरिच्छापेक्षत्वम्, किं तु प्रकृतिप्रत्ययार्थ[2]तयोः सामर्थ्यानुपपत्त्याऽपीत्याह—एवं हीति ॥ वार्तिकावतारणायेति । धातुपदस्य प्रयोजने दर्शिते तैः[3]सिद्धिस्तदन्तरेणापि भवतीति वार्तिकेन दर्शयितुं शक्यत इति भावः ॥ सोपसर्गव्यावृत्तिर्न फलमित्यर्थं[4] आह—धातुरेवेति । प्रकृष्टस्ये[5]च्छाविषयत्वप्रतीतिविपर्य[6]सामानाधिकरण्यात्, कटसामानाधिकरण्यात् भीष्मादेः कर्मत्वमिवेति भावः ॥

(आक्षेपवारणभाष्यम्)

प्रकर्तुमैच्छत् प्राचिकीर्षत्। सोपसर्गादुत्पत्तिर्मा भूदिति ॥

(प्रदीपः) सोपसर्गादिति । संघातेन विशिष्टा क्रिया प्रतिपाद्यत इति तत एव सनुत्पत्तिप्रसङ्गः। ततश्च संघातादेरेव द्विर्वचनादिप्रसङ्ग इति भावः ॥

(उद्द्योतः) भाष्ये प्राचिकीर्षदिति । यद्यपि लट्यपि द्विर्वचने दोषः, तथाप्यद्कृतमधिके दोषं वक्तुं लङुदाहृतः ॥ संघातेनेति, धातुपदाभावे विशिष्टस्यैव इच्छाविषयत्वेन कर्मत्वात्तद्वाचकादेव सन् प्रसङ्ग इति भावः ॥

(१७१७ धातुग्रहणानर्थक्यवार्तिकम् ॥ १ ॥)

॥ * ॥ कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यम् ॥ * ॥

(भाष्यम्) कर्मग्रहणात्सन्विधौ धातुग्रहणमनर्थकम्। 'कर्मणा समानकर्तृकादिच्छायां वा सन् भवतीत्येव धातोरुत्पत्तिर्भविष्यति ॥

(प्रदीपः) कर्मग्रहणादिति । एतदुपलक्षणम्। तेन समानकर्तृकग्रहणादित्यपि बोद्धव्यम् ॥

(उद्द्योतः) सुबन्तार्थस्यापि कर्मत्वात्ततः सन् स्यादत आह—एतदिति । तद्ध्वनयन्नाह—भाष्ये कर्मणः समानकर्तृकादिति ॥

(१७१८ आनर्थक्यबाधकवार्तिकम् ॥ २ ॥)

॥ * ॥ सोपसर्गं वै कर्म ॥ * ॥

(भाष्यम्) सोपसर्गकमिह वै कर्म। तत उत्पत्तिः प्राप्नोति ॥

(प्रदीपः) सोपसर्गमिति। संघातस्य क्रियाविशेषाभिधायित्वादिति भावः ॥

(१७१९ आनर्थक्यसाधकवार्तिकम् ॥ ३ ॥)

॥ * ॥ सोपसर्गं कर्मेति चेत् कर्मविशेषकत्वात् उपसर्गस्यानुपसर्गं कर्म ॥ * ॥

(भाष्यम्) सोपसर्गं कर्मेति चेत् कर्मविशेषक उपसर्गः अनुपसर्गमेव हि कर्म ॥

अवश्यं चैतदेवं विज्ञेयम्।

(१७२० अनुपसर्गस्य कर्मत्वसाधकवार्तिकम् ॥ ४ ॥)

॥ * ॥ सोपसर्गस्य हि कर्मत्वे धात्वधिकारेपि सनोऽविधानमकर्मत्वात् ॥ * ॥

(भाष्यम्) यो हि मन्यते सोपसर्गं कर्मेति [7]क्रियमाणेऽपि तस्य धातुग्रहणे सनोऽविधिः स्यात्। किं कारणम्?। अकर्मत्वात् ॥

(प्रदीपः) कर्मविशेषक इति। अत एव वचनात् षष्ठीसमासप्रतिषेधोऽनित्यः। अयमर्थः—धातुरेव क्रियावाचीति तदर्थस्यैव कर्मत्वम्। न तूपसर्गार्थस्यापि। यथोक्तम्—कट एव कर्म तत्सामानाधिकरण्यात्तु भीष्मादिभ्यो द्वितीया भविष्यतीति। अथापि विशेषणस्य पृथक्कर्मत्वम्। यथोक्तम्—कटोऽपि कर्म भीष्मादयोपीति । तथापि कर्मसमुदायस्याकर्मत्वात्समुदायादुत्पत्तिर्न भविष्यति ॥

सोपसर्गस्य हीति। यदि संघातस्यार्थद्वारकं कर्मत्वं स्यात् तदा अवयवस्याकर्मत्वात्ततः सन्प्रत्ययो न स्यात्। कर्मण इत्येषा हि पञ्चमी। षष्ठ्यां तु सत्यां कर्मणोऽवयवाद्धातोः सन्नित्याश्रीयमाणेऽनुपसर्गान्न स्यात्। तस्मात्—

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनात्।
धातूपसर्गयोर्धातुः क्रियावाचीति निर्णयः ॥

(उद्द्योतः) प्रतिषेध इति ॥ तृजकाभ्यामित्यादिः ॥ याजकादित्वात्समास इत्यन्ये ॥ धातुरेवेति संघातेन विशिष्टक्रियावगतावपि विशेष्यस्यैव कर्मत्वं प्राधान्यादिति भावः ॥ तत्र दृष्टान्तमाह—यथोक्तमिति। प्रधानस्यैव कर्मत्वमित्यत्रार्थे दृष्टान्तोऽयम् ॥ यद्यपि तत्र तद्विशेषणेऽपि सा शक्तिरिति तात्पर्यम्, तथापि समानाधिकरणविशेषण एव तथा उपसर्गार्थस्तु व्यधिकरण इति दिक् ॥ अथापि विशेषस्येति पाठः धात्वर्थगतविशेषरूपस्योपसर्गार्थस्येत्यर्थः ॥ कच्चित्तु विशेषणस्येति पाठः, तत्राप्ययमेवार्थः ॥ समुदायस्याकर्म-

---

१ इच्छारूपेऽर्थे सन् स्यादिति संबन्धः। (र. ना.)

२ प्रकृतिप्रत्ययार्थयोरिति पाठः साधुः । प्रकृत्यर्थप्रत्ययार्थयोर्यद्न्यपेक्षालक्षणं सामर्थ्यं परस्परान्वयोपपादकं तदनुपपत्त्याऽपीत्यर्थः। (र. ना.)

३ तत्सिद्धिर्धातुसिद्धिः। उत्तरत्र तत्पदं धातुपदपरम्। (र. ना.)

४ इत्याहेति पाठः साधुः। (र. ना.)

५ उपसर्गार्थस्येति शेषः। (र. ना.)

६ प्रकृत्यर्थरूपेत्यादि। (र. ना.)

७ अग्रे 'यच्चाप्येतदुक्तम्'—इत्युत्तरं वार्तिकानामुपन्यासेऽस्योपन्यासो न दृश्यतेऽतोऽयं भाष्यकारस्यैव ग्रन्थः 'सोपसर्गं कर्मेति चेत्' इति वार्तिकस्य पूर्वपक्षभूत इति वदन्ति ॥ अन्ये तु सूत्रघटकप्रत्याख्यानवार्तिकान्येव तत्र निर्दिष्टानीति नास्य वार्तिकत्वं तद्विरुद्धमिति मन्यन्ते ॥ वार्तिकपाठपुस्तकं तु नैवोपलभ्यते येन निर्णयः स्यात् ॥ वस्तुतस्तु वार्तिकमेवेदम्। वार्तिकस्यैव वार्तिकपूर्वपक्षरूपत्वौचित्यादिति तु वयम्। (र. ना.)

८ तथा च पिपठिषतीत्यादि न सिद्ध्येदिति भावः। (र. ना.)

९ प्राचिकीर्षदित्यादौ अडादीनां व्यवस्थार्थं धातूपसर्गयोः पृथक्त्वेन स्वरूपस्यार्थस्य च प्रकल्पनाद् धातुरेव क्रियावाची—उपसर्गस्तु तदर्थविशेषक इति निर्णय इति योजना। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्वादिति । ननु प्रतिष्ठासत इत्यादौ प्रसमभिव्याहारे गतेरेव प्रतीयमानत्वात् सैव कर्मेति धातुग्रहणाभावे तत्प्रतिपादकात्सोपसर्गादेव स्यादिति चेन्न । तत्रापि आदिकर्मद्योतकतायाः प्रशब्दे भूवादिसूत्रे भाष्ये उक्तेः ॥

भाष्ये धात्वधिकारेपीति । नन्वस्या स्वरितत्वादधिकारपदप्रयोगोऽयुक्त इति चेन्न; नेदमधिकारपदं स्वरितपरम्, किंतु करणं कारः अधिकः कारः अधिकारः धातोरित्यस्याधिकस्य करणेऽपीत्यर्थः ॥ अवयवस्याकर्मत्वादिति । कर्मत्वपर्याप्त्यनधिकरणत्वादित्यर्थः ॥ अवयवषष्ठ्यां समुदायस्य कर्मत्वेपि न दोष इत्यत आह—षष्ठ्यां त्विति ॥ अनुपसर्गान्नेति । न च व्यपदेशिवद्भावः, अग्रे भाष्ये वक्ष्यमाणत्वादित्याहुः ॥ तस्मादिति । तेनाचार्येण तयोः पृथक्त्वेन कल्पनात् क्रियावाचिनां च धातुत्वादुपसर्गरहित एव क्रियावाचीति निर्णयः इत्यर्थः ॥ पार्थक्यकल्पनाफलं चाडादिव्यवस्था ॥ समानकर्तृकादित्यनेन क्रियावाचकादेव सनो विधानमिति न तद्भिन्नात्सन्निति भावः ॥

( आनर्थक्यबाधकभाष्यम् )

**इदं तर्हि प्रयोजनम् । सुबन्तादुत्पत्तिर्मा भूत् ॥**

( प्रदीपः ) सुबन्तादिति । विकल्पितत्वात्सनः पक्षे सावकाशाः क्यजादय इति भावः । प्रातिपदिकादिति तु नोक्तम् । कर्मण इति वचनात्कर्मत्वे च सति सुबन्तताया अवश्यंभावात् ॥

( उद्योतः ) कर्मत्वे च सतीति । कर्मत्वादिद्योतकत्वाद्विभक्तेरिति भावः ॥

( १७२१ आनर्थक्यसाधकवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ सुबन्ताच्चाप्रसङ्गः क्यजादीनामपवादत्वात् ॥ * ॥**

( भाष्यम् ) **सुबन्ताच्च सनो ऽप्रसङ्गः । किं कारणम् ? । क्यजादीनामपवादत्वात् । सुबन्तात्क्यजादयो विधीयन्ते । ते अपवादत्वात् बाधका भविष्यन्ति ॥**

( प्रदीपः ) क्यजादीनामिति । कर्ममात्रात्सन्विधिः । कर्मविशेषात्सुबन्तात् क्यजादय इति भावः । यत्र चोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्त उत्सर्गो न भवति । अपि तु वाक्यमेव ॥

(उद्योतः) कर्मविशेषादिति । क्यजादीनामप्येकार्थीभावे एव प्रवृत्तेः सनभावे तदभावान्न क्यजादीनां सावकाशतेति भावः ॥ एतेन क्यजाद्यभावे सन् स्यादित्यपास्तम् ॥ तद्ध्वनयन्नाह—यत्र चेति ॥

( १७२२ आनर्थक्यसाधकवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ अनभिधानाद्वा ॥ * ॥**

( भाष्यम् ) **अथ वा अनभिधानात्सुबन्तादुत्पत्तिर्न भविष्यति । नहि सुबन्तादुत्पद्यमानेन सना इच्छाभिधानमस्ति ॥**

( आनर्थक्यबाधकभाष्यम् )

**इयं तावदगतिका गतिः—यदुच्यते-'अनभिधानादिति ॥**

( प्रदीपः ) इयं तावदिति । लक्षणाश्रया लक्ष्यस्य व्यवस्था न्याय्या लक्ष्याश्रयेण तु लक्षणव्यवस्थापनं गत्यन्तराभावादिति भावः ॥

( उद्योतः ) लक्षणाश्रयेति । बोद्धॄणां लक्षणैकचक्षुष्कत्वादिति भावः ॥

( आनर्थक्यबाधकभाष्यम् )

**यदप्युच्यते *सुबन्ताच्चाप्रसङ्गः क्यजादीनामपवादत्वाद्* इति, भवेत्कस्माच्चिदप्रसङ्गः स्यादिति आत्मेच्छायाम् । परेच्छायां तु प्राप्नोति राज्ञः पुत्रमिच्छतीति ॥**

( उद्योतः ) भाष्ये आत्मेच्छायामिति । कर्मीभूतादिति शेषः ॥

( आनर्थक्यसाधकभाष्यम् )

**एवं तर्हि इदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति । किम् ? । "समानकर्तृकादिच्छायां वा" इत्युच्यते । न च सुबन्तस्य समानः कर्तास्ति ॥'**

( प्रदीपः ) व्यपदेश्यं सदिति । सच्छोभनं यद्व्यपदेशार्हं तन्न व्यपदिशति ॥ न च सुबन्तस्येति । पुत्रादेः सत्त्वभूतार्थाभिधायित्वात्साध्यस्यैव साधनसंबन्धयोग्यत्वादिति भावः ॥ कटं करोतीत्यादावपि सुबन्तेन सिद्धरूपोऽर्थोऽभिधीयते, शब्दान्तरसन्निधानात्तु साध्यता प्रतीयते । यथोक्तं हरिणा—

"निर्वर्त्यो वा विकार्यो वा प्राप्यो वा साधनाश्रयः । क्रियाणामेव साध्यत्वात्सिद्धरूपोऽभिधीयते" इति ॥

( उद्योतः ) साध्यस्यैवेति । साध्यत्वेन प्रतीयमानस्यैवेत्यर्थः ॥ साध्यता प्रतीयत इति । सा च न कारकान्वयितावच्छेदिकेति भावः ॥ साधनाश्रय इति । कर्मत्वलक्षणशक्त्याश्रय इत्यर्थः ॥ क्रियाणामेव साध्यत्वात् । साध्यत्वेन प्रतीयमानत्वात् ॥ सिद्धरूपः । सिद्धत्वेनैव स प्रतीयत इत्यर्थः ॥

( आनर्थक्यबाधकभाष्यम् )

**एवमपि भवेत् कस्माच्चिदप्रसङ्गः स्यात्, यस्य कर्ता नास्ति । इह तु प्राप्नोति—आसितुमिच्छति शयितुमिच्छतीति ॥**

( प्रदीपः ) आसितुमिच्छतीति । तुमुनन्तस्य साध्यरूपाभिधायित्वादस्ति कर्त्रा योग इति भावः ॥ क्यचि मान्ताव्ययप्रतिषेध इति क्यजत्र प्रतिषिद्धः ॥

---

१ एकार्थीभावमात्रादित्यर्थः । ( र. ना. )

२ आत्मेच्छायां कर्मीभूतात्—कस्माच्चित्सुबन्तात्क्यचोऽप्रसङ्गः स्यादिति भवेदिति संबन्धः । स्यादित्यन्तवाक्यार्थस्य भवनक्रियाकर्तृत्वम् । ( र. ना. )

३ इहेत्यस्य सुबन्तात्सनोऽप्रसङ्गे इत्यर्थः । आचार्यो वार्तिककारः । न व्यपदिशति, अप्रसक्तसाधकतया नोपन्यस्यतीत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्योतः ) तुमनन्तस्येति ॥ अव्ययकृत । इति वचनान्तस्य साध्यरूपभावाँभिधायितेत्यर्थः ॥

( आनर्थक्यसाधकभाष्यम् )

**इच्छायामर्थे सन् विधीयते इच्छार्थेषु च तुमुन्।[1] तत्र तुमुनोक्तत्वात्तस्यार्थस्य सन् न भविष्यति ॥**

( प्रदीपः ) **तुमुनोक्तत्वादिति** । तुमुन्निमित्तेनेच्छतीत्यनेनेत्यर्थः। न चेच्छतीत्यस्य प्रयोगं बाधित्वा सन् भवतीति युज्यते वक्तुम् । उपपदनिमित्तत्वात्तुमुनस्तदभावे अभावप्रसङ्गात् ॥

( उद्योतः ) तुमुन इच्छावाचकत्वाभावादाह—तुमुन्निमित्तेनेति । समानकर्तृकेषु तुमुन् इत्यत्रेच्छार्थेष्वित्यनुवृत्तेस्तस्य तन्निमित्तत्वम् ॥ तदभावे इति । सनस्तु नोपपदत्वं, महासंज्ञाविरोधात् ॥

( आनर्थक्यबाधकभाष्यम् )

**एवमपीह प्राप्नोति—आसनमिच्छति शयनमिच्छतीति ॥**

( प्रदीपः ) **आसनमिच्छतीति** । ल्युट् भावमात्रे विधीयते, न त्विच्छार्थेषूपपदेष्विति, भावः । धातुवाच्यक्रियापेक्षं च समानकर्तृकत्वमस्ति ॥

( उद्योतः ) नन्वनस्य सिद्धरूपभावाभिधायित्वेन कथं कर्तृसम्बन्ध इत्यत आह—धातुवाच्येति ॥

( आनर्थक्यसाधकभाष्यम् )

**इह यो विशेष उपादीयते उपाधिर्वा धोत्ये तस्मिंस्तेन भवितव्यम्। यश्चेहार्थो गम्यते—आसितुमिच्छति शयितुमिच्छतीति-स्वयं तां क्रियां कर्तुमिच्छतीति। नासाविह गम्यते—आसनमिच्छति शयनमिच्छतीति=अन्यस्याप्यासनमिच्छतीत्येषोऽर्थो गम्यते ॥**

**अवश्यं चैतदेवं विज्ञेयम्। यो हि मन्यते—अधोत्ये तस्मिंस्तेन भवितव्यमिति । क्रियमाणेऽपि हि तस्य धातुग्रहण इह प्रसज्येत-संगतमिच्छति यज्ञदत्तो देवदत्तेनेति ॥**

( प्रदीपः ) **इह यो विशेष इति** । समानशब्दस्तदन्तवाच्योऽर्थ उपाधिः अन्यस्तु विशेष इति भावः ॥ क्वचित्त्वभेदेन व्यवहारः । **आसितुमिच्छतीति** । वृत्तिसमानार्थेन वाक्येन भवितव्यम् । आसिसिषतइत्यस्य चासितुमिच्छतीति समानार्थं भवतीति भवत्यासेः सन्प्रत्ययः । **आसनमिच्छतीत्यत्र** तु किमात्मन आसनमिच्छति अथ परस्येति संदेहात्समानकर्तृकत्वाप्रतिपत्तिरित्यासनशब्दात्सन्प्रत्ययो न भविष्यति । नह्यतः सनुत्पद्यमानः समानकर्तृकत्वलक्षणं विशेषमन्तर्भावयितुं शक्नोतीति भावः ॥ **संगतमिच्छतीति** । केवलस्य धातोः प्रयोगाभावात् क्तप्रत्ययोपादानं, धातोरेव तु सन्प्रसङ्ग इत्युच्यते । अत्र च किमात्मकर्तृकं संगतमिच्छति अथ परकर्तृकमिति संदेहाद्यदा समानकर्तृकत्वं नावधार्यते तदा न भाव्यम् । यदा तु समानकर्तृकत्वं प्रतिपिपादयिषितं तदा भवितव्यमेव सना संजिगंसते वत्सो मात्रेति ॥

( उद्योतः ) भाष्ये—धोत्ये तस्मिन्निति । वृत्त्या शब्दजन्यबोधविषये इत्यर्थः ॥ वृत्तीति; तुमुँनन्ते विग्रहवाक्ये समानकर्तृकत्वे तुमुनो विधानात् समानकर्तृकत्वप्रतीतेस्तद्युक्तं समानकर्तृकत्वविषयसनो विग्रहवाक्यम्, भावविषयल्युडन्ते तु तदनिश्चयान्न तत्सनो विग्रहवाक्यमिति नासनशब्दात्सनुत्पत्तिरिति भावः ॥ न ह्यत इति । विग्रहे तदप्रतीतेः । नह्यासनशब्दगर्भं समानकर्तृकत्वप्रतीतियोग्यं विग्रहवाक्यमस्तीति तदभावात्ततः सनोऽनुत्पत्तिरेवानुमीयत इति भावः ॥ पक्ष्यामीच्छति देवदत्तः इत्यादौ तिङन्तात्स्यादिति तु नापाद्यम् ॥ कर्ममात्रबोधकत्वाभावात् अतिरिक्तस्य कर्त्रादेरपि भावादित्याहुः ॥ अनान्तात् क्तान्तेऽविशेषं द्योतयन्नाह—केवलस्येति । यदात्विति । संगन्तुमिच्छतीति विग्रहवाक्यस्य सन्प्रकृतिधातुगर्भस्य संभवादिति भावः ॥

( कर्म-समानकर्तृकपदप्रयोजनाधिकरणम् )

( १७२३ कर्म-समानकर्तृकग्रहणानर्थक्यवार्तिकम् ॥ ७ ॥)

**॥ * ॥ कर्मसमानकर्तृकग्रहणानर्थक्यमिच्छाभिधाने प्रत्ययविधानात् ॥ * ॥**

(भाष्यम्) **कर्मसमानकर्तृकग्रहणमनर्थकम्। किं कारणम्?। इच्छाभिधाने प्रत्ययविधानात्। इच्छायामभिधेयायां सन्विधीयते ॥**

( १७२४ आनर्थक्यसाधकवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ अकर्मणो ह्यसमानकर्तृकाद्वानभिधानात् ॥ * ॥**

**इच्छायामभिधेयायां सन्विधीयते । न चाकर्मणोऽसमानकर्तृकाद्वा उत्पद्यमानेन सना इच्छाया अभिधानं स्यात् । अनभिधानात् तत उत्पत्तिर्न भविष्यति ॥**

( प्रदीपः ) **कर्मेति** । इच्छायाः कर्मणाऽवश्यं भाव्यमिति प्रत्यासत्त्या प्रकृत्यर्थ एव कर्मत्वेनाश्रयिष्यते न तु तद्व्यतिरिक्तमिति गमनेनेच्छतीति सन्न भविष्यति । प्रत्यासत्त्यैव च

1 'इच्छार्थेषु लिङ् लोटौ' ।३।३।१५७ 'समानकर्तृकेषु तुमुन्' ३।३।१५८ इति सूत्रपाठक्रमादिति भावः ॥

2 ल्युट् प्रकृतिभूतेत्यादिः । ( र. ना. )

3 वृत्तिसमानार्थकः शब्दो विग्रहवाक्यं यस्येति फलितार्थः । अन्यस्त्विति—तदन्तावाच्योऽपि समभिव्याहाररूपाकाङ्क्षावशात्तदन्ते प्रतीयमानः । प्रकृते तु समानकर्तृकत्वं विशेष एव न तूपाधिः । अतएव वक्ष्यत्यनुपदमेव 'समानकर्तृकत्वलक्षणं विशेषमिति—भाष्ये विशेष उपादीयते उपाधिर्वेत्युक्तिस्तु तयोरभेदव्यवहारमाश्रित्य । ( र. ना. )

4 इदं प्रतीत्यन्वयि । ( र. ना. )

5 इदं विग्रहवाक्यविशेषणम्—तदभावादिति—समानकर्तृकत्वप्रतीतियोग्यत्वं तत्पदार्थः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


समानकर्तृकत्वमाश्रयिष्यत इति देवदत्तस्य भोजनमिच्छतीत्यत्रापि न भविष्यतीत्येतन्न्यायमूलमनभिधानम् ॥ इह नित्यानां शब्दानां संकीर्णप्रयोगदर्शने सति साध्वसाधुविभागाय शास्त्रारम्भः न च गमनेनेच्छति, देवदत्तस्य भोजनमिच्छतीत्यत्रार्थे जिगमिषति बुभुक्षत इत्यादिप्रयोगोऽस्तीति किं तन्निवृत्त्यर्थेन विशेषणोपादानेनेत्यर्थः ॥

(उद्योतः) नन्वनभिधानादिति भाष्यमनुपपन्नं समानकर्तृकत्वादेर्द्योत्यत्वाङ्गीकारेण तदभावे तस्य द्योत्यत्वे प्रमाणाभावात् तस्यागतिकगतित्वाच्चेत्यत आह—इच्छाया इति । सविषयत्वादित्यर्थः ॥ करणाद्याकाङ्क्षा तु न नियतेति भावः ॥ व्याप्तिन्यायाश्रयणेऽपि समाधत्ते—इह नित्यानामिति । तत्र समानकर्तृकत्वादिप्रकारकबोधो लोकव्युत्पत्तेरेव न हि सर्वत्र व्याकरणमेव शक्तिग्राहकमस्तीति भावः ॥

(१७२५ धातुग्रहणानर्थक्यबाधकवार्तिकम् ॥ ९ ॥)

## ॥ * ॥ अङ्गपरिमाणार्थं तु ॥ * ॥

(भाष्यम्) अङ्गपरिमाणार्थं तर्ह्यन्यतरत्कर्तव्यं धातुग्रहणं कर्मग्रहणं वा । अङ्गपरिमाणं ज्ञास्यामीति ॥

किं पुनरत्र ज्यायः ? ।

धातुग्रहणमेव ज्यायः । अङ्गपरिमाणं चैव विज्ञातं भवति । अपि च धातोर्विहितः प्रत्ययः शेष आर्धधातुकसंज्ञो भवतीति सन आर्धधातुकसंज्ञापि सिद्धा भवति ॥

(प्रदीपः) अङ्गपरिमाणार्थं त्विति । इच्छायां वेत्येतावत्युच्यमाने यद्यपि प्रत्ययपरत्वेन पूर्वो प्रकृतिराक्षिप्यते तथापि प्राचिकीर्षदित्यादौ सोपसर्गस्याङ्गत्वं स्यात् । यदा तु साक्षात् प्रकृतिर्विशिष्टा निर्दिश्यते तदाङ्गपरिमाणं ज्ञायते ॥ अन्यतरदिति । त्रितये प्रत्याख्याते अन्यतममिति वक्तव्ये समानकर्तृग्रहणं न कर्तव्यमेव गौरवप्रसङ्गादिति मत्वान्यतरदित्युक्तम् ॥ धातुग्रहणमेवेति । कार्यान्तरस्यापि संपादनादित्यर्थः । धातुशब्दोच्चारणेन धातोर्विहितस्यार्धधातुकसंज्ञोक्ता । तथा च पूर्वसूत्रद्वयविहितस्य सनस्तदभावाज्जुगुप्सत इत्यादाविडभावः । एतत् सूत्रविहितस्य तु सन आर्धधातुकत्वाच्छिशयिषत इत्यादाविड्गुणौ भवतः । नन्विकोझलिति किन्त्वमार्धधातुकनिमित्तगुणनिषेधार्थं सन आर्धधातुकसंज्ञाज्ञापकं भविष्यति ॥ नैतदस्ति । सामान्येन ज्ञापके व्याख्यायमाने सर्वत्र सनः प्रसङ्गः । विशेषविषये त्विगन्तप्रकृतेरेव स्यादिति धातुग्रहणं कर्तव्यम् ॥

(उद्योतः) ननु प्रत्यासत्त्या कर्मबोधकात्प्रत्ययेऽङ्गपरिमाणं ज्ञातमेवेत्यत आह—इच्छायां वेति । न कर्तव्यमेवेति । उत्तरसूत्रकर्तव्यम् आत्मन इति अत्रैव कार्यं, तत्रेच्छायामात्मन इत्यस्य कर्तृत्वेनान्वयस्य क्लृप्तत्वादन्तरङ्गत्वाच्च धातावपि तेनैव सम्बन्धेनान्वयः ॥ एवं च प्रत्यासत्त्योभयकर्त्रोरेकत्व एव प्रवृत्तिरिति भावः ॥ धातुशब्दोच्चारणेनेत्यस्य फलमाह—तथा चेति ॥

(सिद्धान्तिकर्तृकमुपालम्भभाष्यम्)

यच्चाप्येतदुक्तम्—कर्मग्रहणात् सन्विधौ धातुग्रहणानर्थक्यं सोपसर्गं कर्मेति चेत् कर्मविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वाद्— इति ॥ स्वपक्षोऽनेन वर्णितः । युक्तमिह द्रष्टव्यम्— किं न्याय्यं कर्मेति ॥

(प्रदीपः) स्वपक्ष इति । यद्यपि सर्वे एव स्वपक्षं वर्णयन्ति । तथापि परपक्षदूषणाभिनिवेशादयुक्तोऽपि स्वपक्षो वर्णित इत्युक्तं भवति ॥ युक्तमिति । यदेव न्याय्यं तदेव ग्राह्यम् । न तु दुरभिनिवेशः कार्य इत्यर्थः ॥

(सिद्धान्तिभाष्यम्)

एतच्चात्र युक्तम्—यत्सोपसर्गकं कर्म स्यात् ॥

(प्रदीपः) यत्सोपसर्गकमिति । धातूपसर्गसंघातेन हि क्रियाविशेषस्य प्रक्रमादर्थद्वारकं तस्यैव कर्मत्वमित्यर्थः । विशिष्टैव च क्रियासाधनेन निर्वर्त्यते, न तूत्पन्ना सती विशेषणेनान्यत उत्पन्नेनाभिसंबध्यते । तत्र यद्यपि धातुर्वाचक उपसर्गस्तु द्योतकः तथाप्यसति धातुग्रहणे वाचकद्योतकविभागस्य शब्देनेहानङ्गीकृतत्वात् संघातादेवोत्पत्तिः स्यादिति भावः । उपपदमतिङ्गित्यत्र च साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि इत्युत्पत्तिविशिष्टाया एव क्रियाया आश्रित्योक्तमित्यविरोधः । अथ वा सत्यपि धातोः पूर्वं साधनयोगे इषिकर्मत्वमिह विशिष्टाया एव क्रियायाः प्रतिपाद्यमिति पूर्वमुपसर्गेण संबन्धे धातुग्रहणेऽसति सोपसर्गात्सन उत्पत्तिप्रसङ्ग एव ॥

(उद्योतः) क्रियाविशेषस्य विशिष्टक्रियायाः ॥ प्रक्रमात् बोधनात् ॥ विशिष्टैवेति । उपसर्गद्योत्यार्थविशिष्टैवेत्यर्थः ॥ साधनेन तत्तत्प्रयुक्तकार्येण । निर्वर्त्यते उत्पन्नबोधविषयीक्रियते ॥ उत्पन्ना उत्पन्नबोधा ॥ अन्यत उत्पन्नेन, अन्यत उत्पन्नबोधेन ॥ तथाप्यसतीति । कर्मण इत्यस्य कर्मबोधकादित्यर्थः स्यादिति भावः ॥ उत्पत्तिविशिष्टाया एव क्रियाया इति । विशिष्टाया एव क्रियाया धातुमात्राद्बोधोत्पत्तिमाश्रित्येत्यर्थः ॥ एवं च पक्षान्तरत्वादविरोध इति भावः ॥ अथवेति । साधनसम्बन्धोत्तरमपि उपसर्गसम्बन्धे—इच्छत्यर्थकसन् सम्बन्धापेक्षयान्तरङ्गत्वात्पूर्वमुपसर्गसम्बन्धः ॥ अत एव न विशेष्यांशलाभेनेच्छाया निवृत्तिरित्यभिमानः ॥

१ साध्वसाधूनामित्यादिः । (र. ना.)
२ 'विशेषोपादाने' ॥
३ सूत्रे कर्मसमानकर्तृकग्रहणाभावे इत्यर्थः । तस्य—समानकर्तृकत्वादेः । तस्य—अनभिधानस्य । (र. ना.)
४ व्याप्तिन्यायाश्रयणेन करणादेरपि सन आपादनेऽपि इत्यर्थः । (र. ना.)

१ सनः पूर्वमित्यर्थः । (र. ना.)
२ अभिमानोक्तिबीजन्तु विशिष्टा क्रिया धातुमात्रवाच्यैव इति सिद्धान्तः । किञ्च प्रकृते सन् संबन्धोत्तरमेव तदन्तस्य धातुत्वे साधनसंबन्धस्तदुत्तरञ्चोपसर्गसंबन्ध इत्येव प्रक्रियान्यास्य इति । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( पूर्वदत्तदूषणोद्धारभाष्यमेकदेशिनः )

**ननु चोक्तम्[1]—सोपसर्गस्य कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वाद्—इति ॥ नैष दोषः। कर्मण इति नैषा धातुसमानाधिकरणा पञ्चमी कर्मणो धातोरिति। किं तर्हि ? अवयवयोगे[2] एषा षष्ठी—कर्मणो यो धातुरवयव इति ॥**

( प्रदीपः ) **किं तर्हीति** । व्याप्तिग्रहणाय षष्ठीपक्ष आश्रीयते पञ्चम्यां हि सत्यामनुपसर्गादेवोत्पत्तिः स्यात्र तु सोपसर्गात्। षष्ठीपक्षे तु सोपसर्गादपि सिध्यति ॥

( उद्द्योतः ) **व्याप्तिग्रहणायेति** । व्याप्तिलाभायेत्यर्थः ॥ बहुलक्ष्यसम्बन्धलाभायेति यावत् ॥

परेतु गतिर्गतावितिसूत्रे वक्ष्यमाणभाष्यकैयटरीत्योपपदमतिङिति सूत्रोक्तरीत्या च पिपठिपतीति सिद्ध्युत्तरमुपसर्गयोगेन सर्वसिद्धेः धातुग्रहणानर्थक्यमेव । युक्तं यत्सोपसर्गं कर्मेति एव सिद्धान्त्युक्तिः। तस्य चोपसर्गार्थविशिष्टधात्वर्थः कर्मेत्यर्थः । समानकर्तृकादिस्थुक्त्या सन्नन्तकारकेणास्य संबन्धे साध्यत्वप्रतीतावुपसर्गसम्बन्धात्॥ अत एव न विशेष्यांशलाभेनेच्छानिवृत्तिः ॥

इतर इदमबुद्ध्वा शङ्कितवान्—सोपसर्गस्य कर्मत्वे इत्यादि ॥ तत्र एकदेशिनः कर्मण इत्यवयवषष्ठीत्युत्तरम् ॥ यदि कैयटरीत्या सनुत्पत्तेः पूर्वमुपसर्गसंबन्धः स्यात्तदात्रैव धातूपसर्गयोः समासो दुर्वार इति उपपदमतिङितिसूत्रस्थभाष्यविरोध इत्याहुः ॥

( अवयवयोगषष्ठीभूषणभाष्यम् )

**यद्यवयवयोगा षष्ठी । केवलादुत्पत्तिर्न प्राप्नोति चिकीर्षति जिहीर्षतीति ॥**

( अवयवयोगषष्ठीसमर्थनभाष्यम् )

**एषोऽपि व्यपदेशिवद्भावेन कर्मणो धातुरवयवो भवति ॥**

( प्रदीपः ) **एषोऽपीति** । प्रयोगभेदाज्ज्ञानारूपस्य कर्माभिधायिनोऽवयवः सन्प्रकृतित्वे नाश्रीयमाणो धातुरित्यर्थः ॥

( व्यपदेशिवद्भावदूषणभाष्यम् )

**कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यः—महान्तं पुत्रमिच्छतीति 'कर्मणो यत्सुबन्तमवयवः' इति ॥**

( प्रदीपः ) **काममिति** । इच्छयेत्यर्थः । इच्छाया व्याघाताभावादित्यर्थः ।

( उद्द्योतः ) **व्याघाताभावादिति** । व्याघातः प्रतिबन्धः ॥

( व्यपदेशिवद्भावभूषणभाष्यम् )

**न कर्तव्यः । असामर्थ्यान्न भविष्यति ॥**

**कथमसामर्थ्यम् ? ।**

**सापेक्षमसमर्थं भवतीति ॥**

( प्रदीपः ) **असामर्थ्यादिति** । सुबन्तात् क्यज्विधानात्पदविधित्वात्**समर्थ**परिभाषोपस्थानादिति भावः । सन्विधौ तु तदनुपस्थानात्सापेक्षादपि सन उत्पत्तिः ॥ अथवा धातुरेव विशिष्टां क्रियामाह उपसर्गस्तु द्योतक इति सापेक्षत्वाभावः ॥

( उद्द्योतः ) सन्विधावपि वावचनानर्थक्यं चेत्यनेन तदुपस्थितेर्वक्ष्यमाणत्वादाह—अथवा धातुरेवेति ॥ पृथगुपस्थितस्य यत्रेतरापेक्षा स सापेक्ष इति भावः ॥ एवं चानुपसर्गस्य कर्मत्वमित्यत्यन्तमसङ्गतमिति भावः ॥

( १७२६ वावचनानर्थक्यवार्तिकम् ॥ १० ॥ )

**॥*॥ वा वचनाऽऽनर्थक्यं च तत्र नित्यत्वात्सनः ॥ * ॥**

**( भाष्यम् ) वा वचनं चाऽनर्थकम् । किं कारणम् ? । तत्र नित्यत्वात्सनः । इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च । स्वभावतश्चैतद्भवति वाक्यं च प्रत्ययश्च । तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसंबन्धुमन्यदतः संज्ञायाः । न च संज्ञाया भावाभावाविष्येते । तस्मान्नार्थो वावचनेन ॥**

( प्रदीपः ) **वा वचनानर्थक्यं चेति** । वृत्तेरेकार्थीभावविषयत्वाद् व्यपेक्षाविषयत्वाच्च वाक्यस्य भिन्नार्थत्वाद् बाध्यबाधकभावाप्रसङ्गादिति भावः ॥ **न च संज्ञाया इति** । अनर्थः प्रत्युत वाग्रहणाद्भवति प्रत्ययसंज्ञाया विकल्पे सति तन्निबन्धनकार्यविकल्पप्रसङ्गात् ॥

( उद्द्योतः ) **वृत्तेरिति** । नन्वस्य पदविधित्वाभावात्समर्थपरिभाषानुपस्थितौ कथमस्यैकार्थीभावविषयत्वमिति चेन्न; भाष्यप्रामाण्यादस्याप्येकार्थीभाव एव प्रवृत्तेरिति भावात् ॥ **प्रत्ययसंज्ञाया इति** । परत्वस्यापीदमुपलक्षणम् ॥ आद्युदात्तश्चेत्यस्य त्वेतद्विषये न सम्बन्धः [3]नित्वादिति बोध्यम् ॥

( १७२७ लघुन्यासप्रदर्शकपूर्तिवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ तुमुनन्ताद्वा तस्य च लुग्वचनम् ॥ * ॥**

**( भाष्यम् ) तुमुनन्ताद्वा सन् वक्तव्यः तस्य च तुमुनो लुग्वक्तव्यः । कर्तुमिच्छति चिकीर्षतीति ॥**

( प्रदीपः ) **तुमुन्नन्तादिति** लघ्वेवं लक्षणं भवतीति भावः ॥ वचनसामर्थ्याच्चोपपदश्रवणं बाधित्वा पक्षे तदीयेऽर्थे सन्प्रत्ययो भवति । इच्छाग्रहणं प्रत्ययार्थनिर्देशायावश्यं कर्तव्यम् ॥ अत्र चोदयन्ति—तुमुनन्तस्य पदत्वात्तुमुनो लुकि कृते जिघांसतीत्यादौ नलोपादीनि प्राप्नुवन्तीति ॥ नैष दोषः । तुमुनो लुको बहिरङ्गत्वादसिद्धत्वान्नलोपादीनि न भविष्यन्तीति। एतस्मिंस्तु सूत्रन्यासे धातोरिति सनो विधानाभावादार्धधातुकसंज्ञा न प्राप्नोतीति इको झलिति कित्त्वविधानं ज्ञापकमाश्रयणीयमिष्टसिद्धये ॥

---

१ 'योगैषा' ॥

२ व्याप्तिमेव दर्शयति—पञ्चम्यां हीत्यादिना—। ( र. ना. )

३ 'नित्यत्वात्' इति तु केषुचित्पुस्तकेषु ... शोधितं भवेत् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(उद्द्योतः) अत्रापि समर्थपरिभाषोपतिष्ठते इत्यर्थे वार्तिकसम्मतिं दर्शयंस्तामुदाहरति—भाष्ये तुमुनन्ताद्वेति ॥ वचनसामर्थ्याच्चेति। अत एव चोपपदाभावेऽपि तुमुन् वृत्तिविषये इति बोध्यम् ॥ बहिरङ्गत्वादिति ॥ सन्सन्नियोगेन विधानात् बहिरङ्गत्वं लुक इति भावः ॥ वस्तुतस्तु तुमुनोर्लुकि पदत्वे नैकदेशविकृतन्यायावतारः तत्वप्रत्ययमिश्राभावात् अर्थविकारात् । नापि स्थानिवद्भावः तुमुन्नन्तस्य षष्ठीनिर्दिष्टत्वाभावात् ॥ इष्टसिद्धये इति ॥ अनेन सर्वे शङ्काभासा निरस्ता इत्याहुः ॥

( १७२८ लघुन्यासप्रदर्शकपूर्तिवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ लिङ्क्तमाद्वा ॥ * ॥

(भाष्यम्) लिङ्क्तमाद्वा सन्वक्तव्यः। तस्य च लिङो लुक् वक्तव्यः। कुर्यामितीच्छति चिकीर्षति ॥

( १७२९ न्यूनतापूर्तिवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ आशङ्कायामचेतनेषूपसंख्यानम् ॥ * ॥

(भाष्यम्) आशङ्कायामचेतनेषूपसंख्यानं कर्तव्यम्। अश्मा लुलुठिषते। कूलं पिपतिषति ॥

किं पुनः कारणं न सिध्यति ॥

एवं मन्यते चेतनावत एतद्भवतीच्छेति[1]। कूलं चाचेतनम् ॥

(प्रदीपः) आशङ्कासंभावना तद्विशिष्टार्थाभिधायिनो धातोः स्वार्थे प्रत्ययः ॥ लुलुठिषत इति। रुठ लुठ प्रतीघात इति द्युतादिषु पठ्यते। वर्तमानसामीप्य इति लट्प्रत्ययः ॥

(उद्द्योतः) आशङ्केति सा च प्रयोक्तृधर्मः: 'शङ्के कूलं पतिष्यतीति' अर्थावगमात् ॥ तद्विशिष्टेति। तद्विषयत्वविशिष्टेत्यर्थः ॥ आत्मनेपदप्रयोगे बीजमाह—द्युतादिष्विति। रलोव्युपधादिति किस्वाद्गुणाभावः ॥ संभावनाविषयलोठने भविष्यत्त्वप्रतीतेराह—वर्तमानसामीप्य इति। भाष्ये एवं मन्यते चेतनावत इति वक्ष्यमाणेनाभिप्रायेण मन्यत इत्युक्तिः ॥

( अचेतनग्रहणखण्डनभाष्यम् )

अचेतनग्रहणेन नार्थः, 'आशङ्कायाम्' इत्येव। इदमपि सिद्धं भवति—श्वा मुमूर्षतीति ॥

(प्रदीपः) श्वा मुमूर्षतीति। शुनश्चैतन्येऽपि जीवितस्य प्रियत्वाद्याध्याद्यभिभवेऽपि तिर्यक्त्वान्मर्तुमिच्छा नास्ति ॥

(१७३० आशङ्कायामितिवार्तिकप्रत्याख्यानवार्तिकम् ॥ १४॥)

## ॥ * ॥ न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिः ॥ * ॥

(भाष्यम्) न वा वक्तव्यम्। किं कारणम् ?। तुल्यकारणत्वात्। तुल्यं हि कारणं चेतनावति देवदत्ते कूले चाचेतने ॥ किं कारणम् ?।

इच्छाया हि प्रवृत्तित उपलब्धिर्भवति। योऽप्यसौ कटं चिकीर्षुर्भवति नासावाघोषयति कटं करिष्यामीति। किं तर्हि ? सन्नद्धं रज्जुकीलपूलपाणिं दृष्ट्वा तत इच्छा गम्यते ॥ कूलस्यापि पिपतिषतो लोष्टाः शीर्यन्ते, भिदा उपजायते देशान्तरमुपसंक्रामति[2] ॥ श्वानः खल्वपि मुमूर्षवः एकान्तशीलाः[3] शूनाक्षाश्च भवन्ति ॥

(प्रदीपः) न चेति। कार्येणेच्छानुमीयत इतीच्छानुमानकारणं कार्यं लिङ्गं तुल्यमिति वास्तवसदसत्त्वानपेक्षं[4] लोकव्यवहाराश्रयकार्यानुमेयेच्छाश्रयेण सन् प्रयुज्यते इत्यर्थः ॥

(उद्द्योतः) कार्येणेति इच्छानुमितिजनकं कार्यरूपं लिङ्गं तुल्यमित्यर्थः ॥ नन्विच्छाया अचेतने बाधात् कथं बाधितविषयानुमितिरित्यत आह—वास्तवेति ॥ वास्तवं सद्ब्रह्म। अवास्तवमसत्प्रपञ्चः, तदनपेक्ष्यव्यवहारमात्रेण सत इतरस्येवासत्या[5] अपि तेन सत्यकार्येणानुमानमिति भावः। बालकादेरयुक्तवृक्षाद्यारोहणं कुर्वतो 'मर्तुमिच्छत्ययम्' इति व्यवहरति लोक इति तात्पर्यम् ॥ भाष्ये शूनाक्षा इति। प्रसृताक्षा इत्यर्थः ॥ शून्याक्षा इति पाठे विषयाग्राहिचक्षुष इत्यर्थः ॥

( १७३१ आशङ्कावार्तिकवैयर्थ्यवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ उपमानाद्वा सिद्धम् ॥ * ॥

(भाष्यम्) उपमानाद्वासिद्धमेतत्। लुलुठिषत इव लुलुठिषते। पिपतिषति इव पिपतिषति ॥

(प्रदीपः) उपमानाद्वेति। यदिच्छानिमित्तं कार्यं तदचेतनेषु नास्ति। यच्चास्ति, न तदिच्छायाः कार्यमिति मत्वा[6] परिहारान्तरोपन्यासः ॥

(उद्द्योतः) यदिच्छानिमित्तकमिति। बुद्धिपूर्वकप्रवृत्त्यादिकमित्यर्थः ॥

( आशङ्कावार्तिकसार्थक्यभाष्यम् )

न वै तिङन्तेनोपमानमस्ति ॥

(प्रदीपः) न वै तिङन्तेनेति। तिङन्तार्थेनेत्यर्थः। क्रियायाः साध्यैकस्वभावत्वादनिष्पन्नरूपत्वादिदं तदिति परामर्शविषयवस्तुगोचरत्वादुपमानोपमेयभावस्येदं तदिति परामर्शाभावादिति भावः[7]। इवशब्दप्रयोगे तु अध्यारोपस्तु विद्यते। रोदितीव गायति[8] नृत्यतीव गच्छति देवदत्त इति। परिपूर्णेन

---

१ इच्छेत्येतच्चेतनावतो भवतीति संबन्धः। इच्छापदप्रतिपाद्यं वस्त्विति तदर्थः। ( र. ना. )

२ 'देशाद्देशान्तर' ॥

३ एकान्तदेशाध्यसनं शीलं येषां ते तथेत्यर्थः। ( र. ना. )

४ अनपेक्षान्तं व्यवहारविशेषणं तदाश्रयीभूतकार्येत्यादिरर्थः। ( र. ना. )

५ असत्या अपीति पाठो भाति। ( र. ना. )

६ 'कृत्वा' ॥

७. उपमानोपमेयभावस्येदं तदिति परामर्शविषयवस्तुगोचरत्वात् क्रियायाः साध्यैकस्वभावत्वादनिष्पन्नरूपत्वादिदं तदिति परामर्शाभावादिति योजना। ( र. ना. )

८ 'गायतीयम्' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



च न्यूनस्योपमानं भवति । क्रिया च सर्वा स्वाश्रये समाप्तेति न्यूनत्वासंभवस्तस्याम् । तदुक्तम्—

**येनैव हेतुना हंसः पततीत्यभिधीयते ।**
**आतौ तस्य समाप्तत्वादुपमार्थो न विद्यत इति ॥**

भिन्नजातीयानां च क्रियाणां सादृश्यं नास्ति भुङ्क्त इव गच्छतीति ॥

( उद्द्योतः ) तिङन्तार्थेनेति । क्रिययेत्यर्थः ॥ भाष्यस्योपमानशब्दस्य सादृश्यमित्यर्थं इति भावः ॥ केचित्तु तिङन्तेनोपमानबोधो नास्तीति भाष्यार्थमाहुः ॥ तदुपपादयति—क्रियाया इति ॥ सिद्धरूपतया प्रतीयमानस्य वस्तुनः 'इदंतद्'इति परामर्शविषयत्वादुपमानत्वं भवति नान्यस्येत्यर्थः ॥ इदं तदितिपरामर्शाभावादित्यस्योपमानत्वाभावः इति शेषेण संबन्धः ॥ तथापरामर्शाभावे हेतुमाह—साध्यैकेत्यादिना ॥ तथापरामर्शाभावे कुतो न सं[1] इत्यत आह—इदंतदिति—अत्र शब्दशक्तिस्वभावो वस्तुशक्तिस्वभाव एव वा बीजम् ॥ अत्रोपमानोपमेयभावस्येति । उपमेयग्रहणं चिन्त्यम् । क्षत्रियवदधीते इत्यादौ क्रियाया उपमेयत्वस्येष्टत्वादिति बोध्यम् ॥ कथं तर्हि रोदितीव गायतीत्यादिप्रयोगोऽत आह—इवशब्देति । अत्र वाक्ये तुशब्दद्वये फलं चिन्त्यम् ॥ अध्यारोप उत्प्रेक्षा ॥ तिङन्तार्थस्योपमानत्वाभावे युक्त्यन्तरमप्याह—परिपूर्णेनेति ॥ समाप्तत्वादिति । पातस्य सम्पूर्णत्वादित्यर्थः ॥ आतिः पक्षिविशेषः ॥ एवं चैकस्यां क्रियायां भेदासम्भवात् नोपमानोपमेयभावः ॥ भिन्नजातीयासु तु साधारणधर्मरूपसादृश्यासम्भवान्नोपमानत्वम् ॥ तदाह—भिन्नेति । समानजातीयास्वपि यथा न तथोक्तम्[2] ॥ यथा वै श्येनो निपत्या दत्ते एवमयं भ्रातृव्यं निपत्यादत्त इत्यादौ यद्धर्मवच्छ्येनकर्तृकमानं तद्धर्मवदेतत्कर्तृकमादानमिति वाक्यार्थेऽवगते यत्तद्भ्यामैक्यमापन्नं तं धर्मं निमित्तीकृत्य श्येनयागयोः पश्चात्सादृश्यबोध इति न तत्र क्रिययोरुपमानोपमेयभाव इति बोध्यम् ॥

( आशङ्कावार्तिकवैयर्थ्यभाष्यम् )

**एवं तर्हि इच्छेवेच्छा ॥**

( प्रदीपः ) **एवं तर्हीति ।** इच्छाशब्दस्य सत्त्वभूतार्थाभिधायित्वादस्ति तदर्थस्योपमानत्वं ततश्चेच्छासदृशेऽपि व्यापारे सन् भवति । गौणमुख्यन्यायश्च क्वचिल्लक्ष्यापेक्षया नाङ्गीक्रियते ॥

(उद्द्योतः) इच्छासदृशेऽपीति । पूर्वं व्यवहारादिच्छां तत्राप्यङ्गीकृत्य[3] प्रत्यय इत्युक्तम्, इदानींतु इच्छासदृशेऽर्थे प्रत्यय इति भेदः ॥

( १७३२ आशङ्कावार्तिकवैयर्थ्यवार्तिकम् ॥ १६ ॥ )

**॥ * ॥ सर्वस्य वा चेतनावत्त्वात् ॥ * ॥**

( भाष्यम् ) **अथ वा सर्वं चेतनावत् ॥ एवं ह्याह—कंसकाः[4] सर्पन्ति, शिरीषोयं स्वपिति, सुवर्चला आदित्यमनुपर्येति । आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति । अयस्कान्तमयः संक्रामति ॥ ऋषिः[5] पठति—शृणोत ग्रावाणः ॥**

( प्रदीपः ) **सर्वस्य वेति ।** आत्माद्वैतदर्शनेनेति भावः ॥ ऋषिरिति । वेदः सर्वभावानां चैतन्यं प्रातिपादयतीत्यर्थः । वैचित्र्येण च पदार्थानामुपलम्भात्सर्वचेतनधर्मप्रसङ्गः सर्वत्र नोद्भावनीयः ॥

(उद्द्योतः) वैचित्र्येणेति । चेतनेषु मनुष्येष्वपि नानाजातीयव्यवहारदर्शनादिति भावः ॥ सर्वत्र परिणामदर्शनेन चेतनाधिष्ठानं विना च तदसम्भवात्[6]सर्वस्य तदधिष्ठितत्वं ज्ञायत इति तात्पर्यम् ॥

( इष्धातुनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**इमे इषयो बहवः पठ्यन्ते । तत्र न ज्ञायते—'कस्यायमर्थे सन् विधीयते'इति ? ॥**

( प्रदीपः ) **इम इति ।** शश्नाश्यन्विकरणास्त्रय इत्यर्थः ॥ **तत्रेति ।** इच्छेति निपातनं त्रयाणामपि संभवतीति मन्यते ॥

( उद्द्योतः ) मन्यत इति । छत्वमपि निपातनादिति तद्भावः ॥

( समाधानभाष्यम् )

**इषेश्छत्वभाविनः ॥**

( प्रदीपः ) **छत्वभाविन इति ।** इच्छेति शप्रत्ययो यगभावश्च निपात्यते । छत्वं लक्षणेनैव सिद्धम् । तच्च शविकरणस्यैव विहितमित्यर्थः ॥

( उद्द्योतः ) यगभावश्चेति । भावे शस्य सत्त्वाच्चकः प्राप्तिरिति भावः ॥ शविकरणस्यैवेति । गमियमिसाहचर्येणाकारविकरणस्यैवेषेर्ग्रहादिति भावः ॥

( आक्षेपभाष्यम् )

**यद्येवं कर्तुमन्विच्छति कर्तुमन्वेषणा अत्रापि प्राप्नोति[7] ॥**

( प्रदीपः ) **यद्येवमिति ।** अन्विच्छतीति तौदादिकस्यैव रूपमिति भावः ॥

( सिद्धान्तिसमाधानभाष्यम् )

**एवं तर्हि यस्य क्रियामिच्छेत्येतद्रूपं निपात्यते[8] ॥**

---

१ स इत्यस्योपमानोपमेयभाव इत्यर्थः । ( र. ना. )

२ क्रियायाः साध्यैकस्वभावत्वादित्यादिना कैयटेनोक्तमित्यर्थः । ( र. ना. )

३ अनुमायेत्यर्थः । ( र. ना. )

४ कंसकाः, कंस इव प्रतिकृतय इत्यर्थः । अनेन पाषाणादिप्रतिमानां चेतनत्वं दर्शितम् । शिरीषवृक्षो यदा म्लानपर्णो मुकुलितपुष्पो भवति तदेदमुच्यते । अनेन वृक्षाणां तत्त्वं बोधितम् । सुवर्चलाऽऽदित्यपत्नी अन्वेति पर्येतीति धा । अनेनादित्यस्य तेजोमयपिण्डस्य चेतनत्वं ज्ञापितम् । कपिलकः कपिलवर्णो गोवत्सः । अनेन पशुषु तत्त्वं सिद्धम् । ( र. ना. )

५ 'ऋषिः पठति' इत्यपि उदाहरणमेव सर्वसंमतप्रयोगदर्शनात् । वेदस्य शब्दरूपस्यार्थरूपस्य वा चेतनभिन्नत्वेपि पाठकर्तृत्वबोधनाय सर्वसंमतप्रयोगात् । अन्ये तु 'शृणोत ग्रावाणः' इत्युदाहरणं वैदिकमिति दर्शयितुमेव—ऋषिः पठति इत्युक्तमिति वदन्ति ॥

६ परिणामासंभवादित्यर्थः । ( र. ना. )

७ सन्निति शेषः । ( र. ना. )

८ तदर्थे सन्निति शेषः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**कस्य चैतन्निपात्यते ? ।**

**कान्तिकर्मणः ॥**

( प्रदीपः ) **एवं तर्हीति** । अर्थविशेषे निपातनमाश्रितमिति भावः ॥ **कान्तिकर्मण इति** । कान्तिः कामनाऽभिलाषस्तत्क्रियस्येत्यर्थः ॥ **अन्विच्छतीत्यस्य** गवेषयतीत्यर्थः, न तु कामयत इति सत्र भवति ॥

( उद्योतः ) तौदादिकस्यैव क्रियामिच्छेति निपातनात् कथं यस्येत्यादिना समाधानमत आह—अर्थविशेष इति ॥ यस्येति भाष्यस्य यदर्थकस्येत्यर्थः ॥ लोके कान्तिशब्दस्य शोभायां प्रसिद्धत्वादाह—कान्तिः कामनेति ॥

( क्रियाप्राधान्याधिकरणम् )

( आक्षेपभाष्यम् )

**अथेह ग्रामं गन्तुमिच्छतीति कस्य किं कर्म ? ।**

( प्रदीपः ) **अथेहेति** । क्रियाद्वयसन्निधानाचङ्क्रमणादिकामस्य गमनमात्रेप्सासंभवदन्यास्य चोभयेप्सासंभवात् प्रश्नः ॥

( उद्योतः ) ग्रामस्य गतिकर्मत्वं गमेरिषिकर्मत्वं च स्पष्टमेवेति कथं सन्देहस्तत्राह—क्रियाद्वयेति ॥ चङ्क्रमणादिकामस्य अनुद्देश्यकगमनादिकामस्य ॥ अन्यस्य ग्रामप्रासिकामस्य ॥

( समाधानभाष्यम् )

**इषेरुभे कर्मणी ।**

( प्रदीपः ) **इषेरुभे इति** । यो हि ग्रामगमनमिच्छति तस्येषिक्रियायोभयमीप्सितं न केवलो ग्रामो नापि केवलं गमनमित्यर्थः ।

( उभयोरिषिकर्मत्वबाधकभाष्यम् )

**यद्येवं ग्रामं गन्तुमिच्छति ग्रामाय गन्तुमिच्छतीति । गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ न प्राप्नुतः ॥**

( प्रदीपः ) **यद्येवमिति** । इषिकर्मत्वे ग्रामस्य गतिकर्मत्वाभावादिति भावः ।

( उद्योतः ) इषिकर्मत्व इति । उभयोरिषिकर्मत्वे ग्रामस्य गतिकर्मत्वाभावं मन्यमानस्य चोद्यमिति भावः ॥

( ग्रामस्य गमिकर्मत्वाङ्गीकारभाष्यम् )

**एवं तर्हि गमेर्ग्रामः कर्म । इषेर्गमिः कर्म ।**

( ग्रामस्य गमिकर्मत्वे दूषणभाष्यम् )

**एवमपीष्यते ग्रामो गन्तुमिति । परसाधन उत्पद्यमानेन लेन ग्रामस्याभिधानं न प्राप्नोति ॥**

( प्रदीपः ) **परसाधन इति** । परस्येषेः साधनं यत्कर्म तत्र लकार उत्पद्यते । तच्च गमनमेव न तु ग्राम इत्यर्थः ॥

( उद्योतः ) परस्येति । गम्यपेक्षयेत्यर्थः ॥ यदर्थक्रियानिरूपितं यत्कर्म तस्मिन्नेव कर्मणि ततो धातोर्लाद्युत्पत्तिर्न्याय्येत्यर्थः ॥

१ इच्छागमनरूपेत्यादिः । उभयेप्सासंभवात्, ग्रामगमनरूपोभयेप्सासंभवादित्यर्थः । ( र. ना. )

२ 'प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा, तदा गुणे तद्वद् अनुक्तापि प्रतीयते ॥'

( ग्रामे उभयक्रियाकर्मत्वाङ्गीकारसिद्धान्तिभाष्यम् )

**एवं तर्हि गमेर्ग्रामः कर्म, इषेरुभे कर्मणी ॥**

( प्रदीपः ) **एवं तर्हीति** । इष्यते ग्रामो गन्तुमित्यत्र गमनस्य ग्रामार्थत्वादप्राधान्याद्भिन्नकक्षयोः कर्मणोरेकेन शब्देनाभिधानासंभवात् प्रधाने कार्यसंप्रत्ययाद् ग्रामस्यैवाभिधानं लकारेण भवति । इषिक्रियायाश्चाख्यातवाच्यत्वात् प्राधान्यमिति प्रधानक्रियाशक्त्यभिधाने गुणक्रियाशक्तेरभिहितवच्चकासनाद् गमिक्रियापेक्षे द्वितीयाचतुर्थ्यौ न भवतः ॥

( उद्योतः ) नन्विषेरुभयकर्मत्वे कदाचिद्गमनरूपे कर्मणि प्रत्यये 'इष्यते ग्रामं गन्तुमित्यपि स्यादत आह—इष्यते ग्राम इति ॥ ग्रामार्थत्वादिति । ग्रामप्राप्त्युद्देश्यकत्वादित्यर्थः ॥ अत एव गमनस्य स्वतोऽनुद्देश्यत्वादप्राधान्यं तदाह—अप्राधान्यादिति ॥ एतेन युगपदुभयोरभिधानं स्यादिति परास्तम् ॥ भिन्नकक्षयोरिति । प्रधानाप्रधानयोरित्यर्थः ॥ नन्वेवं कदाचिदप्रधाने एवस्यादत आह —प्रधाने इति ॥ नन्वेवमपि गमिनिरूपितकर्मत्वस्यानभिधानात्ततो द्वितीया स्यादेवेति पूर्वोक्तप्रयोगापत्तिर्दुर्वारेत्यत आह—इषिक्रियाया इति ॥ एतेन युगपदुभयत्र ग्रामस्य शाब्दान्वयासंभवात् कदाचिदिषौ कदाचिद्गमौ शाब्दान्वयः तत्र यदा यत्र शाब्दोऽन्वयः तदा तत्र विभक्तिरिति 'इष्यते ग्रामो गन्तुम्' 'इष्यते ग्रामं गन्तुमित्युभयमपीष्यते' इति परास्तम् ॥ एवं तर्हि गमेर्ग्रामः कर्म, इषेरुभे कर्मणी इति भाष्यविरोधात् ॥ कस्य किं कर्मेत्याद्युपक्रमभाष्यपर्यालोचनयाऽस्यापि भाष्यस्य एकप्रयोगे उभयत्र ग्रामस्यावृत्त्या शाब्दान्वयपरत्वलाभात् ॥ तथासति कदाचिद्गमेर्ग्रामः कदाचिदुभाविषेरित्येव स्पष्टत्वाय वदेदिति दिक् ॥

( सन्नन्तात्सन्वारणाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ सन्नन्तात्सना भवितव्यम्—चिकीर्षितुमिच्छति जिहीर्षितुमिच्छतीति ॥**

( प्रदीपः ) **अथेति** । प्रयोगादर्शनाल्लक्षणसद्भावाच्च पृच्छति ॥

( आक्षेपबाधकभाष्यम् )

**न भवितव्यम् । किं कारणम् ? । अर्थगत्यर्थः शब्दप्रयोगः अर्थं प्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्याऽपरस्य प्रयोगेण न भवितव्यम् । 'उक्तार्थानामप्रयोगः' इति ॥**

( प्रदीपः ) **न भवितव्यमिति** । एकत्वादिच्छायाः तस्याश्च पूर्वोत्पन्नेनाभिहितत्वाद् परः सन्न भवतीत्यर्थः ॥

( उद्योतः ) नन्वेकस्या इच्छाया उक्तावपि इच्छान्तराभिधानाय द्वितीयः सन् भविष्यतीत्यत आह—इच्छाया एकत्वादिति ॥

'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥'
इति हरिवाक्येन स्पष्टं तस्यार्थस्य प्रतीतेः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्तद्धात्वर्थविषयेच्छात्वेनैक्यादिति भावः ॥ इच्छाविषयेच्छायां तु न प्रत्ययः । इच्छाविषयेच्छाभावादित्यभिमानः ॥

( आक्षेपसाधकभाष्यम् )

**न तर्हीदानीमिदं भवति—पिपठिषितुमिच्छति पिपठिषिषतीति ॥**

( प्रदीपः ) न तर्हीति । इषिणैव धातुनेच्छाया अभिधानात् सन्न प्राप्नोतीति भावः ॥

( आक्षेपबाधकभाष्यम् )

**अस्त्यत्र विशेषः—एकस्यात्र इषेरिषिः साधनं वर्तमानकालश्च प्रत्ययः । अपरस्य-बाह्यं साधनं सर्वकालश्च प्रत्ययः ॥**

( प्रदीपः ) एकस्येति । इच्छतीत्यत्र य इषिस्तस्यैषितुमित्येतत्पदवाच्य इषिः कर्मेत्यर्थः । तथा हि । कश्चिदालस्याद्युपहतोऽध्ययनादिविषयामिच्छामेवेच्छति ॥ सर्वकाल इति । समानकर्तृकेषु तुमुनित्यनेन तुमुनः कालसामान्ये विधानात् ॥

( उद्योतः ) नन्विच्छाविषयेच्छाभावात्कथमत्र सन्नित्यत आह—कश्चिदालस्यादीति । तुमुन्ण्वुलाविति तुमुनो भविष्यति विधानात् कथं सर्वकालः प्रत्ययस्तत्राह—समानेति ॥

( आक्षेपसाधकभाष्यम् )

**इहापि तर्ह्येकस्येषेः करोतिविशिष्ट इषिः साधनं वर्तमानकालश्च प्रत्ययः । अपरस्य बाह्यं साधनं सर्वकालश्च प्रत्ययः । येनैव खल्वपि हेतुना एतद्वाक्यं भवति—चिकीर्षितुमिच्छतीति, तेनैव हेतुना वृत्तिरपि प्राप्नोति । तस्मात्सन्नन्तात्सनः प्रतिषेधो वक्तव्यः । तं चापि ब्रुवता इषि सन इति वक्तव्यम् । भवति हि जुगुप्सिषते मीमांसिषते इति ॥**

( समाधानभूतेष्टिभाष्यम् )

**'शैषिकान्मतुवर्थीयाच्छैषिको मतुबर्थिकः ।**

**सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते' इति ॥**

**धातोः कर्मणः ॥ ७ ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये तृतीयाध्यायस्य प्रथमे पादे प्रथमाह्निकम् ॥**

(प्रदीपः) शैषिकादिति । सन्प्रसङ्गेनान्योऽप्यनिष्टप्रत्ययो निवार्यते[1] । प्रतिव्यक्ति लक्षणाप्रवृत्तौ वाचनिको निषेधः । आकृतिपक्षे तु सकृल्लक्षणप्रवृत्तौ तत्प्रवृत्तेः प्राक्तत्प्रत्ययान्तप्रकृत्यसंभवात्तदन्तात् प्रत्ययोत्पत्तिर्न भवतीति न्यायानुवादोऽयं संपद्यते[2] ॥ तत्र शैषिकाच्छैषिकः सरूपो न भवति । शालायां भवः शालीयो घटः तत्र भवमुदकमिति पुनश्छो न भवति । विरूपस्तु भवति—अहिच्छत्रे भव आहिच्छत्रः तत्र भव आहिच्छत्रीयः ॥ तथा दण्डोऽस्यास्तीति दण्डिकः सोऽस्यास्तीति पुनष्ठन्न भवति । विरूपस्तु भवति—दण्डिमती सेनेति ॥ सन्नन्तान्न सनिष्यत इति । सरूप इत्यपेक्ष्यते सारूप्येण चात्र सादृश्यं लक्ष्यते तच्चार्थद्वारकमिति इच्छासन्नन्तादित्यर्थो लभ्यते ॥ ७ ॥

इति जैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमपादे प्रथममाह्निकम् ॥

( उद्योतः ) तत्प्रवृत्तेः । तत्तल्लक्षणप्रवृत्तेः ॥ तत्प्रत्ययान्तेति । सनादिप्रत्ययान्तेत्यर्थः ॥ न्यायानुवादोऽयमिति । अनुवादफलं चान्यत्र व्यक्तिपक्षाश्रयणेन त्वादिसिद्धिः घटत्वत्वमित्यादौ अनुवादेनात्रैवं तदाश्रयणबोधनादित्याहुः ॥ परेतु आर्धधातुक इतिसूत्रभाष्योक्तरीत्या जातौ परत्वाश्रयत्वाभाववत् तदनभित्वाभावात् वृद्धादित्वादि जातिपक्ष आश्रयितुं न शक्यते इति वचनमेवेदम् अत एव त्वान्तात् त्वसिद्धिरित्याहुः[3] ॥ शब्दकृतसादृश्यग्रहणे व्यावर्त्यासंभवादाह—तच्चार्थेति ॥ ७ ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते प्रदीपोद्योते तृतीयस्य प्रथमे पादे प्रथममाह्निकम् ॥

---

( ३८६ क्यज्विधिसूत्रम् ॥ ३।१।२ आ. १ सूत्रम् )

## ६२५ सुप आत्मनः क्यच् ॥ ३।१।८ ॥

( चकारानुबन्धप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थश्चकारः ॥**

( प्रदीपः ) सुप आत्मनः ॥ ८ ॥ किमर्थ इति । वक्ष्यमाणोऽभिप्रायः ॥

( उद्योतः ) सुप आत्मनः क्यच् ॥ ५ ॥ वक्ष्यमाण इति । केषां चित्प्रयोजनानामन्यथासिद्धिरूप इत्यर्थः ॥

( समाधानभाष्यम् )

**स्वरार्थः । चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् ॥**

( प्रदीपः ) शिष्यबुद्धिपरीक्षार्थं परिहाराभासमाह—चित इति ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । एकाजयम् तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । प्रत्ययस्वरेणैव सिद्धम् ॥**

---

१ 'विचार्यते' ॥

२ शैषिकादिप्रत्ययेष्वेवैतन्न्यायाश्रयणबोधनादित्यर्थः । ( र. ना. )

३ एवं च नागेशस्य 'हलन्ताच्च' इति सूत्रस्थभाष्यविरोधवत्त्वोक्तिविरोधोपि दुष्परिहरति आर्धधातुक इति सूत्रेऽस्मदुक्तिर्न विस्मरणीया ॥ 'नह्याकृतिपदार्थस्य द्रव्यं न पदार्थः । द्रव्यपदार्थस्य वाऽऽकृतिर्न पदार्थः ॥' इति सिद्धान्तानुसारेण जातिव्यक्तिपक्षयोरेकफलत्वे सिद्धे फलभेदकथनमेव कैयटस्य न युक्तिसहमिति दाधिमथाः ॥ वस्तुतस्तु क्वचिद् आकृतिपदार्थवादिनोऽपि लक्ष्यानुरोधेन क्वचिद् द्रव्यं पदार्थः । तथा क्वचिद् द्रव्यपदार्थवादिनोऽपि लक्ष्यवशादेव क्वचिदाकृतिः पदार्थ इत्यत्रैव पूर्वोक्तभाष्यतात्पर्यात् पक्षभेदेन फलभेदकथनं कैयटस्य युक्तमेवेति वयम् । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रदीपः) प्रत्ययस्वरेणैवेति । यद्यप्यत्र धातुस्वरेण भाव्यं तथापि पूर्वं प्रत्ययस्वरो भवति । पश्चात्सतिशिष्टो धातुस्वर इति क्रमः ॥

(उद्योतः) पश्चादिति । एवं चान्तरङ्गत्वात्प्रत्ययस्वरकृतैवान्यथासिद्धिरुक्तेत्यर्थः ॥

(समाधानान्तरभाष्यम्)

**विशेषणार्थस्तर्हि ।**

**क्व विशेषणार्थेनार्थः ? ।**

**'अस्य च्वौ' 'क्यचि च' इति । क्य इति ह्युच्यमाने अपि काकः श्येनायते अत्रापि प्रसज्येत ॥**

(समाधानान्तरबाधकभाष्यम्)

**नैतदस्ति । 'तदनुबन्धकग्रहणे अतदनुबन्धकस्य ग्रहणं न' इत्येवमेतस्य न भविष्यति ॥**

(प्रदीपः) तदनुबन्धकेति । स एव यस्यानुबन्धः तस्य ग्रहणम् । यस्य तु स चान्यश्च तस्य न ग्रहणमित्येवमेतद्वचनसामर्थ्यादाश्रीयते ॥

(उद्योतः) ननु यत्किञ्चिदनुबन्धयुक्तस्य ग्रहणे तद्विरहितस्य ग्रहणाभावो वचनमन्तरापि सिध्यतीत्यत आह—स एवेति ॥ उच्चारित एवेत्यर्थः ॥ वचनसामर्थ्यात् सावधारणो बहुव्रीहिराश्रीयते ॥ अतदित्यादावपि शब्दघटितश्च[1] स आश्रीयत इति भावः ॥ क्यङो ह्यनुबन्धकत्वान्न क्यग्रहणेन ग्रहणमिति तात्पर्यम् ॥

(समाधानान्तरभाष्यम्)

**सामान्यग्रहणाविघातार्थस्तर्हि ।**

**क्व च सामान्यग्रहणाविघातार्थेनार्थः ? ।**

**नः क्य इति ॥**

(आत्मग्रहणप्रयोजनकथनाधिकरणम्)

(आक्षेपभाष्यम्)

**अथात्मग्रहणं किमर्थम् ।**

([2]उद्योतः) अथात्मग्रहणं किमिति । इच्छापेक्षया कर्तरि षष्ठीतिप्रश्नः ॥

(समाधानभाष्यम्)

**आत्मेच्छायां यथा स्यात् परेच्छायां मा भूत्—राज्ञः पुत्रमिच्छतीति ॥**

(प्रदीपः) आत्मेच्छायामिति । आत्मन इच्छेति शेषषष्ठ्या समासः, न तु कर्तृषष्ठ्या । सुबन्तद्वारकश्चात्मन इच्छया संबन्धः, न तु साक्षात् तेनायमर्थः—आत्मनः सुबन्तार्थं यदेच्छति तदा यथा स्यादिति । एवं परेच्छायामिति व्याख्येयम् ॥

(उद्योतः) न तु कर्त्रीति । तथा सति राज्ञः पुत्रमिच्छतीत्यादावपि प्रसङ्ग[3] इति भावः ॥ शेषषष्ठ्यामपि साक्षात्सम्बन्धेनान्वये दोषस्तदवस्थ इत्यत आह—सुबन्तेति ॥ आत्मशब्दः स्वपर्यायएषितृपरः । आत्मनः पुत्रं परस्य दासमिच्छतीत्यादौ तु न दोषः इष्यमाणरूपस्यात्मसम्बन्धित्वाभावात् ॥ परेच्छेति । परसम्बन्धिसुबन्तार्थेच्छायामित्यर्थः ॥

(समाधानबाधकभाष्यम्)

**क्रियमाणेऽपि वै आत्मग्रहणे परेच्छायां प्राप्नोति । किं कारणम् ? । आत्मन इतीयं[4] कर्तरि षष्ठी । इच्छेत्यकारो भावे । स यद्येवात्मन इच्छति । अथापि परस्य । आत्मन एवेच्छासौ भवति ।**

(प्रदीपः) आत्मन इतीयमिति । क्रियाकारकसंबन्धस्यान्तरङ्गत्वादिति भावः ।

(उद्योतः) कर्तरीयं षष्ठीति[5] । अनेनैव सम्बन्धेनेच्छायां तदन्वयात् ॥ परम्परासम्बन्धस्तु न षष्ठ्यर्थस्तदाह—क्रियाकारकसम्बन्धस्येति ॥ अन्तरङ्गत्वं साक्षात्सम्बन्धत्वम् । अत[6] एव सुबन्तविशेषणत्वेन परिहारः ॥

(समाधानसाधकभाष्यम्)

**नैष दोषः । नात्मग्रहणेनेच्छाभिसंबध्यते ॥ किं तर्हि ? । सुबन्तमभिसंबध्यते—'आत्मनो यत्सुबन्तम्' इति ॥**

(प्रदीपः) नात्मग्रहणेनेति । आत्मग्रहणोपादानसामर्थ्यात् । नह्येषितारमन्तरेणेच्छा भवतीति व्यभिचाराभावादिच्छाया विशेषणस्य निष्फलत्वात् ॥

(उद्योतः) एषितारमिति । स एवात्मपदार्थः इति भावः ॥

(अल्पग्रहणप्रयोजननिराकरणभाष्यम्)

**यद्यात्मग्रहणं क्रियते, छन्दसि परेच्छायां न प्राप्नोति—'मा त्वा वृका अघायवो विदन्' । तस्मान्नार्थ आत्मग्रहणेन ॥**

(आक्षेपभाष्यम्)

**'कस्मान्न भवति राज्ञः पुत्रमिच्छतीति ।**

(समाधानभाष्यम्)

**असामर्थ्यात् ।**

**कथमसामर्थ्यम्' । सापेक्षमसमर्थं भवतीति ॥**

(आक्षेपभाष्यम्)

**छन्दस्यपि तर्हि न प्राप्नोति–'मा त्वा वृका अघायवो विदन्' ॥**

(समाधानभाष्यम्)

**अस्त्यत्र विशेषः । अन्तरेणाप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते ॥**

---

१ असोऽप्यनुबन्धो यस्येति विग्रहः । (र. ना.)

२ एतदनन्तरं 'मत्वे'ति शेषः । उपस्थितत्वादात्मकर्तृकेच्छायामेव भविष्यतीति भावः । (र. ना.)

३ अत्राप्यात्मकर्तृकेच्छास्त्येवेति भावः । (र. ना.)

४ 'इति कर्तरीयं षष्ठी' इति पाठो नागेशदृष्ट उद्द्योते तथा प्रतीकलेखनात् ॥

५ 'इतीयं कर्तरि षष्ठी' इत्याधुनिकभाष्यपुस्तकेषूपलभ्यते ॥ वस्तुतस्तु 'आत्मन इतीयमिति' इति कैयटे प्रतीकदर्शनेन परमप्राचीनोऽयं पाठः । (र.ना.)

६ परम्परासंबन्धस्य षष्ठ्यर्थत्वाभावादेवेत्यर्थः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कथं पुनरन्तरेणाप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते ? ।

( प्रदीपः ) कश्चात्मन इति । अघं व्यसनं दुःखमुच्यते । तच्चात्मनो न कश्चिदिच्छतीत्यर्थः ॥

( उद्द्योतः ) भाष्ये एवमात्मका हिंस्रा इति । एवंस्वभावा हि परस्यैव दुःखमिच्छन्तीत्यर्थः ॥ दुःखमिति । पापवाच्चिनाघशब्देन तत्फलं दुःखं लक्ष्यते इति भावः 'दुःखीयति सुखहेतोः' इत्यादिप्रयोगस्तु वास्तवदुःखस्य सुखत्वभ्रमेणेच्छायां बोध्यः ॥

( आत्मग्रहणाप्रयोजनसाधकभाष्यम् )

ते चैव हि वृका एवमात्मका हिंस्राः । [1]कश्चात्मनोऽघमेषितुमर्हति । अतोन्तरेणापि तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते ॥

यथैव तर्हि च्छन्दस्यघशब्दात् परेच्छायां क्यज् भवति । एवं भाषायामपि प्राप्नोति अघमिच्छतीति । तस्मादात्मग्रहणं कर्तव्यम् ॥

छन्दसि कथम् ? ।

आचार्यप्रवृत्तिर्ज्ञापयति—भवत्यघशब्दात् छन्दसि परेच्छायां क्यजिति । यदयमाह "अश्वाघस्यात्" इति, क्यचि प्रकृते ईत्वबाधनार्थमाकारं शास्ति ॥

( प्रदीपः ) यदयमिति । न च तदाचारक्यजर्थम् । छन्दस्यघशब्दादाचारे क्यचः प्रयोगाभावादिति भावः ॥

( सुब्ग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

अथ सुब्ग्रहणं किमर्थम् ? ।

( प्रयोजनभाष्यम् )

सुबन्तादुत्पत्तिर्यथा स्यात् प्रातिपदिकान्मा भूदिति ॥

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम् । नास्त्यत्र विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा ॥

( प्रयोजनसाधकभाष्यम् )

अयमस्ति विशेषः । सुबन्ताद्धुत्पत्तौ सत्यां पदसंज्ञा सिद्धा भवति । प्रातिपदिकात्पुनरुत्पत्तौ सत्यां पदसंज्ञा न प्राप्नोति ॥

( प्रयोजनबाधकभाष्यम् )

ननु च प्रातिपदिकादप्युत्पत्तौ सत्यां पदसंज्ञा सिद्धा । कथम् । आरभ्यते "नः क्ये" इति । तच्चावश्यं वक्तव्यं सुबन्तादुत्पत्तौ सत्यां नियमार्थम् । तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति ॥

( उद्द्योतः ) भाष्ये विध्यर्थं भविष्यतीति । ननु [2]सुबित्यस्याभावे प्रातिपदिकात्सुबन्ताच्चोत्पत्तव्यमविशेषात् तत्र 'नः क्ये' इत्यस्य नियमार्थत्वे नान्तेभ्यः प्रातिपदिका[3]दुत्पत्तौ नलोपो न स्यात् ॥ विध्यर्थत्वे तु वाच्यतीत्यादौ सुबन्तादुत्पत्तिपक्षे अश्वादिपदकार्यं स्यादिति चेन्न, 'धातोः कर्मणः' इत्यतः कर्मग्रहणमनुवर्त्तते । तत्र च धातुरूपं कर्म परिनिष्ठितत्वप्रयोजकप्रत्ययान्तत्वानाक्रान्तम् । अतस्तत्साहचर्यात्तादृशस्यैव कर्मणो ग्रहणात् सुबन्तेऽप्राप्तेरिति भाष्याशयात् ॥

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—सुबन्तादुत्पत्तिर्यथा स्याद्, धातोर्मा भूदिति ॥

(उद्द्योतः) भाष्ये धातोर्मा भूदिति । तिङन्तात्तु न शङ्कितः, तस्य कर्ममात्रप्रतिपादकत्वाभावात् ॥

( प्रयोजनबाधकभाष्यम् )

एतदपि नास्ति प्रयोजनम् । धातोः सन्विधीयते, स बाधको भविष्यति ॥

( प्रयोजनसाधकभाष्यम् )

अनवकाशा हि विधयो बाधका भवन्ति न सावकाशाः । सावकाशश्च सन् ॥ कोऽवकाशः ? ।

परेच्छा ॥

( प्रयोजनबाधकभाष्यम् )

न परेच्छायां सना भवितव्यम् ॥

किं कारणम् ? ।

समानकर्तृकादित्युच्यते । यावच्चेहात्मग्रहणम्, तावच्च तत्र समानकर्तृकग्रहणम् ॥

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम् । सुबन्तादुत्पत्तिर्यथा स्याद् । वाक्यान्मा भूदिति—महान्तं पुत्रमिच्छति ॥

( प्रदीपः ) महान्तं पुत्रमिच्छतीति । यद्यत्र सुबन्तसमुदायात् परः क्यच्प्रत्ययः स्यात् तदा प्रत्यया[4]र्थाभिधाने पदद्वयस्य प्रवर्तनात्परस्परस्य समासाभावादुत्तरपदनिबन्धन[5]मात्त्वं न स्यात् ॥

( उद्द्योतः ) ननु महान्तं पुत्रमिति विग्रहेऽपि क्यचि सन्महदिति समासे आत्वे च महापुत्रीयतीत्येव भाव्यमिति तदा न भवितव्यमिति कथमत आह—यद्यत्रेति ॥ परस्परस्येति । अन्यत्रैकार्थीभावमापन्नयोर्निष्कृष्य परस्परेण सामर्थ्याभावादिति भावः ॥ वस्तुतस्तु विशिष्यैकार्थीभावाभावेऽप्येकार्थीभावमात्रेण समासस्य समर्थसूत्रादिस्थभाष्यसम्मततया आत्वं भवत्येव । स्वरे तु भेदः सतिशिष्टतया समासस्वरेण पुत्रीतीकारोदात्तत्वरूप इति भाष्याशयः ॥

---

1 काक्षौ किम् न कोऽपीत्यर्थः ।

2 'सुप इत्यस्य' इत्येवोचितम् ॥

3 प्रातिपदिकादुत्पत्तिपक्षे नान्तेभ्यः क्यचि नलोपो न स्यादिति योजना । (र. ना.)

4 प्रत्ययार्थविशिष्टस्वार्थाभिधाने इत्यर्थः । (र. ना.)

5 'आन् महतः' इत्यनेनेति भावः ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( इष्टापत्त्यभिप्रायेण प्रश्नभाष्यम् )

न वा[1] भवति–महापुत्रीयतीति ॥

( इष्टापत्तिनिरासाभिप्रायेण समाधानभाष्यम् )

भवति, यदैतद्वाक्यं भवति,—महान् पुत्रो महापुत्रः, महापुत्रमिच्छति महापुत्रीयतीति ॥ यदा त्वेतद्वाक्यं भवति–महान्तं पुत्रमिच्छतीति, तदा न भवितव्यम् ॥ तदा च प्राप्नोति। तदा मा भूदिति ॥

( उद्द्योतः ) तदा न भवितव्यमिति । भाष्ये क्यचेति शेषः । तथा च स्वरेऽनिष्टमिति भावः ॥ तदा च प्राप्नोतीति क्यजिति शेषः ॥

( आक्षेपभाष्यम् )

अथ क्रियमाणेऽपि सुब्ग्रहणे कस्मादेवात्र न भवति । सुबन्तं ह्येतद् भवति वाक्यम् ॥

( समाधानभाष्यम् )

नैतत् सुबन्तम् । कथम् ?। 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवति' इति ॥

( उद्द्योतः ) नैतत्सुबन्तमिति । समुदायः कर्मेति भावः । प्रत्येकं कर्मत्वे कर्मसमुदायस्याकर्मत्वादेवाप्रसङ्ग इति बोध्यम् ।

( आक्षेपभाष्यम् )

अथ यदत्र सुबन्तं तस्मादुत्पत्तिः कस्मान्न भवति? ।

( १७३३ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ समानाधिकरणानां सर्वत्राव्टत्तिरयोगादेकेन ॥ * ॥

( भाष्यम् ) समानाधिकरणानां सर्वत्र वृत्तिर्न भवति ॥ क्व सर्वत्र ? । समासविधौ प्रत्ययविधौ च । समासविधौ तावत्—ऋद्धस्य राज्ञः पुरुषः, महत् कष्टं श्रित इति । प्रत्ययविधौ—ऋद्धस्योपगोरपत्यम्, महान्तं पुत्रमिच्छतीति ॥ किं पुनः कारणं समानाधिकरणानां सर्वत्र वृत्तिर्न भवतीति ? । अयोगादेकेन । न ह्यत्र एकेन पदेन योगो भवति । इह तावत् 'ऋद्धस्य राज्ञः पुरुष' इति, षष्ठ्यन्तस्य सुबन्तेन सामर्थ्ये सति समासो विधीयते । यच्चात्र षष्ठ्यन्तम् न तस्य सुबन्तेन सामर्थ्यम् । यस्य च सामर्थ्यम् न तत् षष्ठ्यन्तम् , वाक्यं तत् । ऋद्धस्योपगोरपत्यमिति षष्ठीसमर्थादपत्येन योगे प्रत्ययो विधीयते यच्चात्र षष्ठ्यन्तं, न तस्यापत्येन योगः, यस्य चापत्येन योगो, न तत् षष्ठीसमर्थम् , वाक्यं तत् ॥

(प्रदीपः) समानाधिकरणानामिति । समानाधिकरणानां पदानां मध्ये एकेन पदेनायोगात्समुदायेनैव योगाद् वृत्तिर्न भवतीत्यर्थः । सगुणस्य हि पुत्रस्येषिणा संबन्धो न केवलस्येति भावः ॥

( उद्द्योतः ) समानाधिकरणनामेकेन संबन्धिनाऽयोगादिति नार्थः । ऋद्धत्वविशिष्टराज्ञः पुरुषेण संबन्धात् अत आह—मध्य इति । निर्धारणे षष्ठीति भावः ॥ अयोगादिति । इच्छत्यादीनामिति शेषः ॥ न केवलस्येतीति । सविशेषणप्रयोगविषये इति भावः ॥ यस्य[6] च सामर्थ्यमिति । वाक्ये व्यपेक्षारूपमित्यर्थः । तदभावादेव तन्मूलक एकार्थीभावो नेति भावः ॥

( आक्षेपभाष्यम् )

समानाधिकरणानामित्युच्यते । अथ कथं व्यधिकरणानाम्—राज्ञः पुत्रमिच्छतीति ॥

( समाधानभाष्यम् )

एवं तर्हि इदं पठितव्यम् 'सविशेषणानां सर्वत्रावृत्तिरयोगादेकेन'—इति ॥

( १७३४ वाक्यकर्मत्वे दूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ द्वितीयानुपपत्तिस्तु ॥ * ॥

( भाष्यम् ) द्वितीया तु नोपपद्यते महान्तं पुत्रमिच्छतीति । किं कारणम् ? । न पुत्र इषिकर्म । यदि पुत्रो नेषिकर्म, न चावश्यं द्वितीयैव, किं तर्हि ?, सर्वा अत्र द्वितीयादयो विभक्तयो न स्युः, महता पुत्रेण कृतं, महते पुत्राय देहि, महतः पुत्राद् आनय, महतः पुत्रस्य स्वं, महति पुत्रे निधेहीति । तस्मान्नैतच्छक्यं वक्तुं न पुत्र इषिकर्मेति । पुत्र एवेषिकर्म । तत्सामानाधिकरण्यान्महतोऽपि द्वितीयादयो भविष्यन्ति ॥

( प्रदीपः ) द्वितीयानुपपत्तिस्त्विति । यदि केवलस्य प्रातिपदिकार्थस्येषिसंबन्धो नेष्यते तदा कर्मत्वाभावात् केवलात् प्रातिपदिकाद् द्वितीया न प्राप्नोति, नापि समुदायात्, तस्याप्रातिपदिकत्वाद् गुणे च संख्याया विवक्षितत्वात्[7] ॥ पुत्र एवेति । तस्यैवेप्सिततमत्वाद् गुणानां चेप्साप्रकर्षाभावात् ॥ स्वयमकर्मत्वेऽपि तत्सामानाधिकरण्यनिबन्धना विभक्तिरित्यर्थः॥

---

१ वाशब्द एवकारार्थः । काका च प्रश्नः । ( र. ना. )

२ राज्ञ इतीति भावः । ( र. ना. )

३ ऋद्धस्य राज्ञ इति समुदायस्येति भावः । ( र. ना. )

४ तदादि नियमेन पष्ठ्यन्तत्वाभावादिति भावः । ( र. ना. )

५ सविशेषणस्येत्यर्थः । ( र. ना. )

६ न तस्य सुबन्तेन सामर्थ्यमितीति प्रतीकोल्लेखो युक्तः । तदभावादेवेत्यादि वक्ष्यमाणग्रन्थानुरोधात् । ( र. ना. )

७ कर्मणि द्वितीयेत्यत्र कर्मगतमेकत्वं विवक्षितमिति न समुदायाद् द्वितीयाप्राप्तिः न च विधेयगतैव संख्या विवक्षिता न गुणगतेति वाच्यम् । एतन्नियमस्य वैयाकरणैरनादृतत्वात् । अत एवोक्तं भूषणे । लक्ष्यानुरोधात्संख्यायास्तत्रातन्त्रे मते यत इत्यादिना । तस्माद् 'इदं चिन्त्य'मिति नागेशोक्तिरेव चिन्त्या । (र. ना.)

८ विशेषणानामित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( उद्योतः ) गुणे चेति । इदं चिन्त्यम् । तस्मात्प्रातिपदिकसमुदायस्याप्रातिपदिकत्वेन समुदायान्न स्यात् । किं च महान्तं पुत्रमित्युक्तमत्रेष्टद्वितीयानुपपत्तिरेवेति तत्त्वम् ॥ भाष्ये यदि पुत्रो नैषिकर्मेति यतः पुत्रो नेपिकर्मेत्यर्थः ॥ ननूभयं कर्मेति वाच्ये पुत्र एवेत्यनुपपन्नमत आह—तस्यैवेति । प्रधानत्वादिति वक्तुं युक्तम् ॥ सामानाधिकरण्यनिबन्धनेति । समानाधिकरणविशेषणस्य विशेष्यसमानशक्तिकत्वादिति भावः ॥

( आक्षेपभाष्यम् )

**वृत्तिस्तर्हि कस्मान्न भवति ? ।**

( समाधानभाष्यम् )

**सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं न प्रयुज्यते इति वक्तव्यम् ॥**

( प्रदीपः ) सविशेषणानामिति । एकस्यैकदा व्यपेक्षैकार्थीभावविरोधादिति भावः ।

( उद्योतः ) एकस्येति । सुब्ग्रहणेन पदविविधित्वात्समर्थपरिभाषोपस्थितेरिति भावः ॥ व्यपेक्षेति । विशेषणेन व्यपेक्षा, विशेष्येणैकार्थीभाव इत्यर्थः । इदमेव सुब्ग्रहणस्य फलमिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**यदि तर्हि 'सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं न प्रयुज्यते' इति उच्यते, 'मुण्डयति माणवकम्' अत्र वृत्तिर्न प्राप्नोति ॥**

( उद्योतः ) सविशेषणानामिति सापेक्षोपलक्षणम् । अत एव 'ऋद्धस्य राज्ञः पुरुष' इत्यत्र ऋद्धपदेनापि न समास इत्याशयेन शङ्कते—भाष्ये मुण्डयति माणवकमिति । एतेन 'मुण्डस्य गुणशब्दत्वान्माणवकस्य द्रव्यशब्दत्वात्तस्यैव विशेष्यताया न्याय्यत्वेन मुण्डस्य कथं सविशेषणत्वमित्यपास्तम् ॥

( प्रतिप्रसवेन समाधानभाष्यम् )

**एवं तर्हि 'अमुण्डादीनामि'ति वक्तव्यम् ॥**

( तृतीयस्याक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम्—'सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं न प्रयुज्यते, अमुण्डादीनामि'ति॥**

( सिद्धान्तिभाष्यम् )

**न वक्तव्यम् ।**

( पूर्वपक्षिभाष्यम् )

**वृत्तिस्तर्हि कस्मान्न भवति—महान्तं पुत्रमिच्छतीति ॥**

( सिद्धान्तिभाष्यम् )

**अगमकत्वात्[1]। इह समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च । यश्चेहार्थो वाक्येन गम्यते—महान्तं पुत्रमिच्छतीति । नासौ जातुचित्प्रत्ययान्तेन गम्यते–महान्तं पुत्रीयतीति । एतस्माद्धेतोर्ब्रूमः अगमकत्वादिति । न ब्रूमः—अपशब्दः स्यादिति । यत्र च गमकं[3] भवति, तत्र वृत्तिः, तद्यथा—मुण्डयति माणवकमिति ॥**

( प्रदीपः ) अगमकत्वादिति । लौकिके प्रयोगेऽनुमानादपि गाव्यादिभ्यो गवाद्यर्थप्रतिपत्तिवद् महान्तं पुत्रमिच्छतीत्यादिवाक्यार्थस्य महान्तं पुत्रीयतीत्यादेः प्रतीतिर्नास्तीत्यर्थः । सिद्धानां च शब्दानां संकरनिरासाय अन्वाख्यानं क्रियते, न त्वप्रयुक्तापूर्वशब्दव्युत्पादनाय ॥ न ब्रूम इति । अपशब्दो हि लोके प्रयुज्यते साधुशब्दसमानार्थश्च, अयं त्वप्रयुक्तत्वादपशब्दव्यपदेशस्यापि न भाजनमित्यर्थः ॥

( उद्योतः ) अनुमानादपीति । साध्वनुमानादित्यर्थः । अपिना साधुसरणसंग्रहः । वस्तुतोऽपभ्रंशानामपि वाचकत्वमपिना ग्राह्यम् ॥ भाष्ये—एतस्माद्धेतोरिति । अपशब्दः स्यादिति हेतोर्वृत्तिर्नेति न ब्रूमः, किं तर्हि अगमकत्वादिति हेतोरित्यन्वयः, तदेवाह—सिद्धानामिति । अर्थप्रत्यायनायासाधूनामिवास्य प्रयोगाभावात् । किं तन्निवृत्त्यर्थेन वचनेनेत्यर्थः ॥ भाष्ये यत्र च गमकमिति । मुण्डयतीति प्रयोगे मौण्ड्यस्य क्रियारूपत्वेन कारकांशे नित्यसापेक्षतया गमकत्वमिति भावः ॥

( क्यजन्तकारकनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**अथास्य क्यजन्तस्य कानि साधनानि भवन्ति ॥**

( समाधानभाष्यम् )

**भावः कर्ता च ॥**

(प्रदीपः) भावः कर्ता चेति । कर्माभावप्रतिपादनपरमेतत् । अधिकरणादौ हि ल्युडादयो यथायोगं भवन्त्येव । भावस्य च लकाराद्युत्पत्तिनिमित्ततया साधनव्यपदेशः ॥

( उद्योतः ) कर्माभावेति । लकारवाच्यसाधनानामेव प्रश्नादिति भावः ॥ नन्वेवं 'कानि साधनानि' इति प्रश्ने 'भावः' इत्युत्तरमसंगतम्, तस्य क्रियारूपस्य साध्यत्वेन साधनत्वाभावादत आह—भावस्य चेति । लकारनिमित्तमेव साधनशब्देनोच्यत इति भावः ॥

( प्रत्याक्षेपभाष्यम् )

**अथ कर्म[5] ।**

( प्रत्याक्षेपसमाधानभाष्यम् )

**नास्ति कर्म ॥**

( आक्षेपभाष्यम् )

**ननु चायमिषिः[6] सकर्मकः, यस्यायमर्थे क्यज्विधीयते ॥**

१ केवलादेव सुबन्ताद् यथा स्यात् सविशेषणत्वे मा भूदित्येतदेवेत्यर्थः । (र.ना.)
२ अबोधकत्वादित्यर्थः । ( र. ना. )
३ 'गमकत्वं' ॥
४ 'समानायामर्थावगतौ शब्देन चापशब्देन च' इति भाष्योक्तेः 'चाचकत्वाविशेषेपि नियमः पुण्यपापयोः' इति हर्युक्तेश्च ॥
५ 'क्यजन्तधातोः कर्माभावात् कथं कर्मणि प्रत्ययः संभवेत् ॥
६ क्यज्वाच्येच्छावाचकस्य इषेः सकर्मकत्वेन क्यजन्तस्यापि सकर्मकत्वमेति शङ्काशयः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( आक्षेपपरिहारभाष्यम् )

**अभिहितं तत्कर्मान्तर्भूतं धात्वर्थः संपन्नः, न चेदानीमन्यत्कर्मास्ति येन सकर्मकः स्यात् ॥**

( प्रदीपः ) **अभिहितमिति** । ततश्च जीवतीत्यादिवदिच्छाक्यजन्तस्याकर्मकत्वात्कर्मणि लाद्यभावः । न चेदानीमिति । नियतविषयाया इच्छाया क्यजन्तेन प्रतिपादनात्तस्याश्च वस्त्वन्तरविषयीकरणाभावादिति भावः ॥

( उद्द्योतः ) नियतविषयाया इति । कर्मविशेषेणैकार्थीभावादित्यर्थः । अत एव कर्मान्तरेणानन्वयः । राजपुरुषो भार्याया इतिवदिति भावः ॥[1]

( आक्षेपभाष्यम् )

**कथं तर्ह्ययं सकर्मको भवति—अपुत्रं पुत्रमिवाचरति पुत्रीयति माणवकमिति ।**

( प्रदीपः ) **कथं तर्हीति** । अत्रापि पुत्रैकर्मणो[2]ऽस्त्यन्तर्भाव इति प्रश्नः ॥

( आक्षेपपरिहारभाष्यम् )

**अस्त्यत्र विशेषः—द्वे ह्यत्र कर्मणी—उपमानकर्मोपमेयकर्म च, उपमानकर्मान्तर्भूतम्, उपमेयेन कर्मणा सकर्मको भवति । तद्यथा—'अपि काकः श्येनायते' इति । अत्र द्वौ कर्तारौ । उपमानकर्ता उपमेयकर्ता च । उपमानकर्तान्तर्भूतः, उपमेयकर्त्रा सकर्तृको भवति ॥**

( प्रदीपः ) **द्वे इति** । वाक्य एव कर्मद्वयमाकाङ्क्षितमित्यर्थः ॥

( उद्द्योतः ) वाक्ये एवेति । क्यजर्थाचारस्य[3] नियमेनोपमानविषयत्वेऽपि उपमानस्योपमेयसापेक्षत्वात्कर्मद्वयसद्भाव इति भावः ॥ तत्र मुख्यं कर्मोपमेयमेव, उपमाने तु उपमेयसमानशक्तिकत्वात्कर्मत्वव्यवहार इति तस्यान्तर्भूतत्वेऽपि न क्षतिरिति तात्पर्यम् । उपमानपुत्रकर्मक उपमेयमाणवककर्मक इति बोधः ॥

( आक्षेपभाष्यम् )

**अयं तर्हि कथं सकर्मको भवति—मुण्डयति माणवकमिति ? ॥**

( प्रदीपः ) **मुण्डयतीति** । मुण्डगुणविशिष्टद्रव्यकर्मणो धात्वर्थेऽन्तर्भावादिति भावः ॥

( उद्द्योतः ) ननु मुण्डयतीत्यत्रापि द्वयोः कर्मत्वं मुण्डं करोति माणवकमिति विग्रहदर्शनादिति कथमत्र प्रश्न इत्यत आह—मुण्डगुणेति । मौण्ड्यस्य कर्मत्वे सति तस्याश्रयसापेक्षत्वेनासामर्थ्यप्रसङ्गात्, मुण्डगुणविशिष्टद्रव्यस्यैव कर्मत्वमभ्युपेयम्, तस्य च धात्वर्थेऽन्तर्भाव इति भावः ॥

( आक्षेपपरिहारभाष्यम् )

**अत्रापि द्वे कर्मणी सामान्यं कर्म, विशेषकर्म च । सामान्यं कर्मान्तर्भूतम्, विशेषकर्मणा सकर्मको भवति ॥**

( प्रदीपः ) **अत्रापीति** । ण्यन्तो धातुर्द्रव्यमात्रमन्तर्भावयितुं शक्नोति, न तु विशेषं माणवकादिकमिति भावः ॥

( आक्षेपभाष्यम् )

**ननु च वृत्त्यैवात्र न भवितव्यम् । किं कारणम् ? । असामर्थ्यात् ॥ कथमसामर्थ्यम् ? । सापेक्षमसमर्थं भवतीति ॥**

( प्रदीपः ) **ननु चेति** । यद्यप्येतच्चोदितं च परिहृतं च, तथापि गमकत्वागमकत्वविषयविभागप्रदर्शनाय पुनरुपन्यासः ।

( उद्द्योतः ) विशेषस्यापि कर्मत्वस्वीकारेऽसामर्थ्यमिति शङ्कते भाष्ये—ननु चेति ॥ विषयविभागेति । मुण्डशब्दादेर्णिच्चि गमकत्वम्, क्यच्यगमकत्वमिति—विषयविभागेत्यर्थः ॥

( समाधानभाष्यम् )

**नैष दोषः । नात्रोभौ करोतियुक्तौ मुण्डो माणवकश्च । नहि माणवकत्वं क्रियते ॥ यदा चोभौ करोतियुक्तौ भवतः, न भवति तदा वृत्तिः । तद्यथा । बलीवर्दं करोति मुण्डं चैनं करोतीति ॥**

( प्रदीपः ) **नात्रोभाविति** । मौण्ड्यमेव करोतियुक्तमिति मौण्ड्यं करोतीत्यत्रैवार्थे मुण्डयतीति णिजुत्पद्यत इत्यर्थः । मुण्डं करोति माणवकमित्यत्र तु वाक्ये कर्मत्वमेकस्यैव तत्सामानाधिकरण्यात्तु द्वितीयस्माद् द्वितीयोत्पत्तिः । गुणप्रधानभावश्च विवक्षावशादनियत इति माणवकादयो मौण्ड्याधारविशेषप्रतिपत्त्यर्थमुपादीयमानाः करोतियुक्ता न भवन्तीत्यर्थः । मुण्डयतेश्च क्रियाविशेषवाचित्वात्तदपेक्षं माणवकादेः कर्मत्वमिति माणवकं मुण्डयतीत्यादिप्रयोगोपपत्तिः ॥ **तद्यथेति** । बलीवर्दमेवात्मसंबन्धित्वेन करोति तं च मुण्डं करोतीति युगपदुभयोः करोतिकर्मत्वे विवक्षिते मुण्डयति बलीवर्दमिति प्रयोगो न भवतीत्यर्थः ॥[4]

(उद्द्योतः) मौण्ड्यमेवेति । वृत्तौ मुण्डशब्दो भावप्रधानः । अत एव भाष्ये न हि माणवकत्वं क्रियते इत्युक्तम्, तस्य[5] च वृत्तौ साध्यावस्थस्यैव भानात् क्रियारूपत्वेन कारकांशे नित्यसापेक्षत्वाद् गमकत्वमित्यदोषः । धर्मिपरत्वे हि गुणविशिष्टद्रव्यस्योत्पादनेनासामर्थ्याद्वृत्तिर्न[6] स्यादिति भावः ॥ वस्तुतो नित्यसापेक्षत्वाभावेऽपि गमकत्वे वृत्तिर्भवत्येवेति बोध्यम् ॥ एकस्यैवेति । मुण्डस्यैवेत्यर्थः । मौण्ड्यरूपतदर्थस्यैवोत्पद्यमानत्वादिति भावः ॥ माणवकपदार्थस्य

---

१ यथा पुरुषस्यैकेन संबन्धिना राज्ञाऽन्वयेनैकार्थीभावे भार्ययाऽपि स न भवतीति भावः । ( र. ना. )

२ 'पुत्रादिकर्मणो' ॥

३ आचार इति शेषः । ( र. ना. )

४ णिज् न स्यादितीति शेषः । ( र. ना. )

५ मौण्ड्यस्येत्यर्थः । ( र. ना. )

६ उत्पादनेन करोत्यर्थेन सह सामर्थ्याभावादित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्वथा करोत्यन्वयायोग्यत्वमेवेति बोध्यम् ॥ द्वितीयस्मात् । माणवकशब्दात् ॥ ननु माणवको विशेष्यस्तत्सामानाधिकरण्यान्मुण्डाद् द्वितीयेति युक्तम्, न तु विपरीतमत आह—गुणप्रधानेति । परिच्छेद्यपरिच्छेदकभाव इत्यर्थः । परिच्छेद्यसमानशक्तिकत्वं परिच्छेदकस्येति भावः ॥ एवं च वाक्येऽपि मुण्डस्यैव करोतियोग इति भावः । तदाह—माणवकादय इति । यद्यपि वाक्ये मुण्डशब्दो धर्मिपरस्तथापि तस्य सामान्यशब्दत्वात्तद्विशेषाकाङ्क्षायां तदन्वयेऽपि माणवकस्य न साक्षात्करोति युक्तत्वमिति बोध्यम् । एवं चात्र वृत्तौ 'कटोऽपि कर्म, भीष्मादयोऽपीति न्यायो नास्त्येवेति तात्पर्यम् ॥ ननु तस्य करोति योगाभावे कथं वृत्तौ माणवकस्य कर्मत्वं कथं च द्वितीयान्तत्वमत आह—मुण्डयतेश्चेति । मौण्ड्यरूपक्रियाश्रयत्वात्कर्मत्वमिति भावः । एवं च कृतपूर्वी कटमितिवद्वृत्तिरिति तत्त्वम् । ननु बलीवर्दत्वस्य क्रियमाणत्वासंभवादाह—बलीवर्दमेवात्मसंबन्धित्वेनेति । बलीवर्दशब्दस्य चित्रादिपरत्वे तु न शङ्कापि ॥ प्रयोगो न भवतीति । राजपुरुषो देवदत्तस्येत्यादाविवासामर्थ्यादिति भावः ॥

( आक्षेपभाष्यम् )

**कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यः—माणवकं मुण्डमिच्छतीति । नोभाविषियुक्ताविति ॥**

( प्रदीपः ) कामन्तर्हीति । अत्रापि मौण्ड्यमेवेष्यते माणवकस्तु तदाधारविशेषप्रतिपादनायोपात्त इति भावः ॥

( आक्षेपपरिहारभाष्यम् )

**न कर्तव्यः । उभावत्रेषियुक्तौ मुण्डो माणवकश्च । कथम् ? । न ह्यसौ मौण्ड्यमात्रेण संतोषं करोति माणवकस्थमसौ मौण्ड्यमिच्छति ।**

( प्रदीपः ) उभावत्रेति । माणवकस्य मौण्ड्यकरणेन संस्कार्यत्वादुभयोः कर्मत्वे सापेक्षत्वादेकतरस्मात्प्रत्ययोत्पत्तिर्न भवतीत्यर्थः ॥

( उद्द्योतः ) उभयोः कर्मत्वे इति । इषि निरूपिते इति शेषः ॥ सापेक्षत्वादिति । मुण्डस्य माणवकः समानाधिकरणं विशेषणमिति सापेक्षत्वमिति भावः ॥ एतावताप्यन्ते गमकत्वं क्यच्यगमकत्वमिति दर्शितम् ॥

( आक्षेपभाष्यम् )

**इहापि तर्हि न प्राप्नोति मुण्डयति माणवकमिति । अत्रापि ह्युभौ करोतियुक्तौ मुण्डो माणवकश्च । न ह्यसौ मौण्ड्यमात्रेण संतोषं करोति । किं तर्हि ? । माणवकस्थमसौ मौण्ड्यं निर्वर्तयति ॥**

( उद्द्योतः ) भाष्ये माणवकस्थमसाविति । एवं च तद्द्वारा माणवकस्येच्छाविषयत्ववत्करोत्यर्थविषयत्वमपीत्यभिमानः । यद्यपीषि फलेच्छाश्रयत्वं तस्य वक्तुं युक्तम्, न तु करोतिफलोत्पत्त्याश्रयत्वं तस्येति उभयोः करोति युक्तत्वाभावस्तथापि विशिष्टत्वेपेण तस्यापि तदाश्रयत्वमित्यभिमानेनैकदेशिनः शङ्केयम् ॥

( समाधानभाष्यम् )

**एवं तर्हि मुण्डादयो गुणवचनाः । गुणवचनाश्च सापेक्षाः । तत्र वचनात्सापेक्षाणां वृत्तिर्भविष्यति ॥**

( प्रदीपः ) गुणवचनाश्चेति । वचनसामर्थ्यात्सापेक्षेभ्योपि मुण्डादिभ्यः प्रत्ययो भवति, क्यच्प्रत्ययस्तु निरपेक्षेभ्यः पुत्रादिभ्यः सावकाश इति माणवकं मुण्डमिच्छतीत्यादौ सापेक्षेभ्यो न भवति ॥ नन्वयमपि णिज् गुणमात्रविवक्षायां सावकाशो मुण्डयत्ययं नापितः प्रवीणो मौण्ड्यकरण इत्यर्थावगमात् । ततश्च द्रव्यविशेषापेक्षायां प्रत्ययो न प्राप्नोति ॥ नैष दोषः । तत्करोतीति सिद्धे णिचि पुनर्विधानमिदं सापेक्षेभ्योऽपि मुण्डादिभ्यो यथा स्यादित्येवमर्थमेव ॥

( उद्द्योतः ) एवं च मुण्डपदार्थस्य विशेषापेक्षत्वेनासामर्थ्यम् ॥ वृत्तावुभयत्रापि मुण्डशब्दो धर्मिपर इति तद्भावस्तमभ्युपेत्य परिहरति—एवं तर्हीति । गुणवचना इत्यस्य गुणप्रवृत्तिनिमित्तका इत्यर्थः । सापेक्षा इत्यस्य परिच्छेद्यविशेषसापेक्षा इत्यर्थः ॥ ननु मुण्डो नित्यसापेक्षोऽन्यथा वा । नाद्यः । राजपुरुषादौ सावकाशस्यापि समासस्य गुरुकुलादौ प्रवृत्तिवदत्रापि क्यजापत्तेः । नान्त्यः, णिचोऽप्यनापत्तेः असापेक्षे चारितार्थ्यादिति शङ्कते—नन्विति ॥ नैष दोष इति । वचनादिति भाष्यस्य तत्करोतीति सिद्धे वचनसामर्थ्यादित्यर्थः । इति भावः । न च तत्करोतीत्यनेन प्रातिपदिकादुत्पत्तेः सुबन्तादुत्पत्त्यर्थमिदमावश्यकम्, विशेषाभावात् णिचि भेदाच्च ॥

( समाधानभाष्यम् )

**अथ वा धातव एव मुण्डादयः ॥**

**न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते ॥**

( प्रदीपः ) धातव इति । सौत्रा धातवो मुण्डादयस्तेभ्यश्चुरादिवत्स्वार्थिको णिजित्यर्थः ॥

न चैवेति । यद्यपि क्रियाविशेषाभिधायित्वं मुण्डादीनां नैवोपात्तं तथापि स्वाभाविकत्वादर्थाभिधानस्य प्रयोगादेव तदवसीयत इत्यर्थः । यथा कण्ड्वादयो द्विविधास्तथा मुण्डादय इति भावः ॥

( उद्द्योतः ) सौत्रा इति । उत्तरसूत्रस्थधातुग्रहणस्य पूर्वम-

---

१ यथाऽत्राविवक्षितकर्मकत्वरूपाकर्मकत्वमाश्रित्य पूर्वं भावे क्तप्रत्यये तद्धितवृत्युत्तरं कटस्य संबन्धस्तस्य चानुक्तत्वाद् द्वितीया तथा पूर्वं मुण्डयतीति वृत्तौ सत्यां पश्चान्मौण्ड्यरूपक्रियाश्रयत्वेन माणवकस्य कर्मत्वमिति भावः । (र.ना.)

२ मौण्ड्यविशिष्टरूपतया माणवकस्यापि करोतिफलोत्पत्त्याश्रयत्वमित्यर्थः । (र. ना.)

३ अभिमानोक्तिस्तु माणवकस्य वस्तुत उत्पत्त्याश्रयत्वाभावादिति । (र.ना.)

४ 'मुण्डमिश्र–' इति सूत्रे मुण्डग्रहणसामर्थ्यादिति भावः ॥

५ प्रातिपदिकादुत्पत्तावपीत्यादिः । तथा च प्रातिपदिकादुत्पत्तौ सुबन्तादुत्पत्तौ वा न फले विशेष इति भावः । । (र. ना.)

६ यद्यपि न चैव हि मुण्डादीनामर्था आदिश्यन्ते साक्षादुपादीयन्ते तथापि च क्रियावचनता प्रयोगादेव गम्यते इति शेषपूर्तिपूर्वकं संबन्धः । (र. ना.)

७ 'यथा च' ॥

८ 'धातोरेकाचः' इत्युत्तरसूत्रस्थेत्यर्थः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पकर्षादिति भावः ॥ भाष्ये न चैवेति शङ्का । क्रियावचनतेत्युत्तरमिति व्याचष्टे—यद्यपि[1] इति । यथा कण्ड्वादय इति । तथा च धातुभ्यो णिच् प्रातिपदिकेन वाक्यमिति भावः ॥

( समाधानभाष्यम् )

**अथ वा नेदमुभयं युगपद्भवति वाक्यं च प्रत्ययश्च । यदा वाक्यम्, न तदा प्रत्ययः । यदा प्रत्ययः, सामान्येन तदा वृत्तिर्भवति । तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । मुण्डयति कम्, माणवकमिति ॥**

**मुण्डविशिष्टेन वा करोतिना तमाप्नुमिच्छति ॥**

( प्रदीपः ) मुण्डविशिष्टेनेति । पूर्वस्मिन्परिहारे कर्मविशेषानपेक्षायां प्रत्ययोत्पत्तिरित्युक्तम् । अस्मिंस्तु यथा गां दोग्धि पय इति शुद्धस्य दुहेर्गवा[2] पूर्वं संबन्धः पश्चात्तु गोदुहिना[3] पयसः । एवं शुद्धः करोति मौण्ड्येन संबध्यते मौण्ड्यविशिष्टन्तु माणवकेनेत्युच्यते ॥

( उद्योतः ) भाष्ये परिहारान्तरमाह—मुण्डविशिष्टेन वेति ॥ ननु पक्षद्वयेऽपि 'पूर्वं करोतेर्मुण्डसंबन्धः, पश्चान्माणवकस्य संबन्धः' इति प्रतीतेः को विशेषोऽत आह—पूर्वस्मिन्निति ॥ अथवा नेदमुभयमिति परिहारे इत्यर्थः । तत्र पूर्वं कर्मविशेषस्यानपेक्षणात् असंबन्धः । उत्तरत्र त्वपेक्षायामपि बहिरङ्गत्वान्न पूर्वं संबन्ध इत्युच्यते इति विशेष इत्यर्थः ॥ गवा पूर्वमिति । प्रधाने[2]व्यापारेणाप्यमानत्वादिति भावः ॥ पश्चात्त्विति । विशेषे[3]णव्यापारेणाप्यमानत्वादिति भावः ॥ अन्तस्थितवस्तुविभागानुकूल[व्यापा[4]रानुकूल]व्यापारो हि दुहेरर्थः ॥ मौण्ड्यविशिष्टस्तु माणवकेनेति । मौण्ड्यद्वारेत्यर्थः ॥

( समाधानभाष्यम् )

**अथ वोक्तमेतत्—नात्र[5] व्यापारोऽनुगन्तव्यः । गमकत्वादिह वृत्तिर्भविष्यति मुण्डयति माणवकमिति ॥**

( प्रदीपः ) अनेनैव न्यायेन माणवकं मुण्डमिच्छतीति क्यच् प्राप्नोतीत्याशङ्क्याह—अथ वेति । व्यापारो नार्भ्[6]यणीयः प्रयत्नमन्तरेणापीष्टस्य सिद्धत्वादित्यर्थः । क्यच्[7]चागमकत्वान्न भवति । तदुक्तं हरिणा—

**सदपीच्छाक्यचः कर्म तदाचारक्यचा हृतम् ।**
**वाक्यवाच्यमतोऽव्यक्तेर्यथाभ्यासः क्रमादिष्विति ॥**

( उद्योतः ) व्यापार इति । 'सापेक्षेभ्योऽपि[8] मुण्डादिसूत्रारम्भसामर्थ्यादित्येवंरूपो, 'धातवः' इत्येवंरूपो वा, 'नेदमुभयम्' इत्यादिरूपो वेत्यर्थः ॥ अगमकत्वादिति । अयं भावः—ण्यन्तवृत्तौ मुण्डशब्दो भावप्रधान इत्युक्तन्यायेन भवति वृत्तिः । क्यजन्तवृत्तौ तु धर्मिपर एवातस्तत्र नेच्छाक्यजू, असामर्थ्यात् । अत एव क्यजन्तात्तस्मादाचारार्थप्रतीतिरेव तदाह—सदपीति । न्यायतः संभवदपीत्यर्थः ॥ आचार क्यचाहृतं निरवकाशीकृतं, निरूढतया तदर्थस्यैव प्रतीतेरिति भावः । अतस्तद् वाक्यवाच्यमेव माणवकं मुण्डमिच्छति इत्यनेनैव बोधनीयम्, न तु क्यजन्तेन ॥ तत्र हेतुमाह—अत इति । क्यजन्तादव्यक्तेरित्यर्थः । यथा क्रमादिधातुपु अभ्यासः पौनःपुन्यं वाक्येनैव गम्यते न तु यङा, तत्प्रकृतिकस्य तस्य कौटिल्ये निरूढेरिति भावः ॥ अन्यत्रोक्तं हरिणा—

> "सदपीच्छाक्यचः कर्म वाक्य एव प्रयुज्यते ।
> प्रसिद्धेन हृतः शब्दो भावगर्हाभिधायिना ।
> अभ्यासे तुल्यरूपोऽपि न यङन्तः प्रवर्तते ॥[9]" इति ॥

एतेन 'वेदादिविषयोऽभ्यासो यथा क्रमादिषु[10] व्यज्यते इत्यर्थः । यद्वा विसर्गरहितपाठेनाभ्यासेन वर्णक्रमादिविषयाभिव्यक्तिरित्यर्थौ विवरणकारोक्तोऽपास्तः ॥ एतदेवात्र मुख्यं समाधानमिति ध्वनयितुमस्य पुनरुल्लेखः[11] । एवं च मुण्डादिसूत्रं प्रपञ्चार्थमेवेति बोध्यम् ॥

( आक्षेपभाष्यम् )

**अथेह क्यचा भवितव्यम्—इष्टः पुत्रः, इष्यते पुत्रः ? ॥**

अथेहेति । इच्छाक्यजन्तात्कर्मणि प्रत्ययोत्पत्तिः प्रकारान्तरेणाशङ्क्यते । तथा हि—यत्र क्यज् भवति तदेच्छामात्रस्य क्यचाभिधानादवश्यं कर्मणोऽभिधानाय तद्वाच्चिना प्रत्ययेनोत्पत्तव्यम् । यथा पुत्रीयतीति कर्त्रभिधानाय तिपा ॥

( उद्योतः ) नन्वकर्मकत्वाक्यजन्तात्कर्मणि प्रत्ययो नेति

---

[1] 'न चैव ह्यर्था आदिश्यन्ते' इत्यस्यादौ 'यद्यपि' इति, अन्ते 'तथापि' इति शेषपूरणे न ग्रन्थो लापनीय इति प्रदीपतोऽपि प्रतीयते ॥ यद्यपि स्तम्भ्वादयोऽपि दृष्टान्तत्वेनोपन्यसनीयाः तथापि मुण्डादीनां स्वतन्त्रप्रातिपदिकानामपि दर्शनात् कण्ड्वादय एव दृष्टान्तयोग्या इति प्रदीपाशय इति भावः ॥

[2] गोपव्यापारेणेत्यर्थः । ( र. ना. )

[3] गोव्यापारेणेत्यर्थः । ( र. ना. )

[4] कोष्ठकान्तर्गतपाठो यद्यपि पुस्तकेषु नोपलभ्यते तथापि प्रधानव्यापार–विशेषणव्यापारेति व्यापारद्वयदर्शनेनास्माभिर्वर्धितः ॥

[5] अथवोक्तमेतत्, गमकत्वादिह वृत्तिर्भविष्यति मुण्डयति माणवकमिति नात्र व्यापारोऽनुगन्तव्य इति योजना । ( र. ना. )

[6] 'नारम्भणीयः' ॥

[7] 'क्यच् त्वगमक' ॥

[8] सापेक्षत्वेनेत्यादिः । ( र. ना. )

[9] अस्योदाहरणं माणवकं मुण्डमिच्छतीति । भावगर्हाभिधायिना प्रसिद्धेन लोलुप्यते इत्यादिना अभ्यासार्थको लोलुप्यते इत्यादि शब्दो हृत इत्यर्थः । कौटिल्यार्थकेन तुल्यरूपोऽपि चंक्रम्यते इत्यादि यङन्तोऽभ्यासे न प्रवर्तते इत्यर्थः । ( र. ना. )

[10] क्रमपाठादिष्वित्यर्थः । ( र. ना. )

[11] एतेन पुनरुक्त एव विषयो अपुनरुक्तविषयात्प्रामाणिक इति ध्वनयति ॥ एवं च बहुत्राङ्गीकृतायां बहिरङ्गपरिभाषायाश्रिपाद्यां प्रवृत्तावेव भाष्यकारसंमतत्वम् न तु एकत्रोक्ते—'अयुक्तोऽयं परिहारः—'न वा बहिरङ्गलक्षणत्वात्' इति प्रौढिवादे' इति स्पष्टमेव नागेशस्याप्यभिमतम् ॥ तथा च नागेशस्यापि त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तिकथने नैवाभिनिवेश इति बोध्यम् ॥ इति दाधिमथाः ॥ वस्तुतस्तु अयं दाधिमथविचारोऽसंगतः । एकस्मिन् विषये एकस्य समाधानस्य पुनरुक्तौ प्रामाणिकत्वमिति स्वीकारेण त्रिपाद्यां बहिरङ्गपरिभाषायाः प्रवृत्त्या समाधानस्य एकस्मिन् विषये पुनरुक्तत्वाभावादिति । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रागुक्तमेव तत्किमर्थेहेत्यनेनोच्यते इत्यत आह—इच्छा क्यजन्तादिति ॥ कर्मणोभिधानायेति । पुत्र इति प्रथमान्तस्येष्टशब्दसामानाधिकरण्यात्कर्मत्वसद्भावेऽपि तस्य तद्वाचकत्वाभावात्ततः क्यचि तेन कर्मणोऽनभिधानादिति भावः । एवं सर्वत्राभिधानविषये बोध्यम् ॥

( समाधाने मतान्तरभाष्यम् )

**केचित्तावदाहुः—न भवितव्यमिति ॥ किं कारणम् ? । स्वशब्देनोक्तत्वात् ॥**

( प्रदीपः ) स्वशब्देनेति । इष्टशब्दसामानाधिकरण्यात्पुत्र इत्यनेन निर्मुक्तेषिक्रियापेक्षकर्मभावस्यार्थस्य प्रतिपादनादित्यर्थः । अयमर्थः—यदा क्रियाफलस्य कर्मणः प्राधान्यं प्रतिपिपादयिषितं तदा वाक्यमेव प्रयुज्यते 'पुत्र इष्ट' इत्यादि । न तु क्यजन्तः । तस्याकर्मकत्वात् कर्मणि प्रत्ययानुत्पादात् ॥

( उद्द्योतः ) इष्टशब्देति । एवं च तत्सामानाधिकरण्यात्तदर्थगतकर्मत्वस्य साक्षात्कर्मवाचिना क्तेनाभिधानात् प्रातिपदिकार्थमात्रपरत्वेन पुत्र इति सुबन्तस्य कर्मत्ववाचित्वाभावान्न ततः क्यजिति भावः ॥ निर्मुक्तेति । इतरसामानाधिकरण्याज्जातकर्मभावस्य सत इत्यर्थः । निर्मुक्तेति पाठे स्ववाच्यतया त्यक्तकर्मभावस्येत्यर्थः ॥ स्वशब्देनोक्तत्वादिति भाष्यस्य स्वं कर्मत्वं तद्वाचकशब्देन क्तेन कर्मत्वोक्तेः । पुत्र इत्यस्य सुबन्तस्य कर्मत्ववाचकत्वाभावान्न भवितव्यं तदर्थे क्यचेत्यर्थः ॥ यदा क्रियाफलस्येति । तथा च विग्रहे फलस्य विशेष्यतया, पुत्रीयतीत्यादौ व्यापारस्य विशेष्यतया भिन्नार्थत्वान्न तदर्थेऽयं क्यच् किं तु पुत्रमिच्छतीत्यत्रार्थ एव । कर्मणि च फलस्य विशेष्यत्वम् 'इष्टः पुत्रः' इत्यादौ सामानाधिकरण्यानुरोधेनावश्यमङ्गीकार्यमिति भावः ॥ कर्मण इति । कर्मसंज्ञाप्रयोजकस्येत्यर्थः । वस्तुत इयं व्याख्या इति इह भवन्त इति मते उचिता । कर्मण इत्यस्य कर्मत्वविशिष्टबोधकस्येत्यर्थः । इत्येवैतद्व्याख्योचिता, अग्रिममतद्वये तु वस्तुतः कर्मत्वविशिष्टो यस्तद्वाचकादिति सूत्रार्थः इत्याशयः ॥

( मतान्तरेण समाधानभाष्यम् )

**अपर आहुः—भवितव्यमिति ॥ किं कारणम् ? । धात्वर्थेयं क्यज्विधीयते । स च धात्वर्थः केनचिदेव शब्देन निर्देष्टव्य इति ।**

( प्रदीपः ) स च धात्वर्थ इति । इच्छायाः प्रत्ययार्थत्वं दर्शयितुं वाक्यमुपादेयम् । तत्र वाक्ये कर्तृप्रत्ययः प्रयुज्यतां कर्मप्रत्ययो वा । प्रत्यये तूत्पन्नेऽकर्मकत्वात्कर्मप्रत्ययो न भवति ॥

( सिद्धान्तिसमाधानभाष्यम् )

**इहभवन्तस्तावदाहुः—न भवितव्यमिति । किं कारणम् ? । समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च । यश्चेहार्थो वाक्येन गम्यते—इष्टः पुत्रः इष्यते पुत्र इति । नासौ जातुचित्प्रत्ययान्तेन गम्यते ॥**

( प्रदीपः ) नासौ जातुचिदिति । प्रत्ययान्तस्याकर्मकत्वात्कर्मणि प्रत्ययोत्पत्त्यसंभवादित्यर्थः ॥

( उद्द्योतः ) भाष्ये इह भवन्त इति । सर्वत्र वृत्तिवाक्ययोः समानार्थत्वमेव । चित्रगुरित्यादि विग्रहेऽपि विशेष्यविशेषणभावव्यत्यासात्तत्त्वमिति तदाशयः ॥

( १७३५ आपत्तिनिवारणवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ क्यचिमान्ताव्ययप्रतिषेधः ॥ * ॥**

( भाष्यम् ) **क्यचि मान्ताव्ययानां प्रतिषेधो वक्तव्यः । इह मा भूत्—इदमिच्छति । किमिच्छति । उच्चैरिच्छति । नीचैरिच्छतीति ॥**

( उद्द्योतः ) भाष्ये मान्ताव्ययानामिति । मान्तत्वं न सुबन्तविशेषणम् पुत्रीयतीत्यादेरसङ्गत्यापत्तेः । किं तु मान्तप्रकृतिकेत्यर्थः । तेन कैमिच्छतीत्यादावपि नेति बोध्यम् ॥

( परिगणनेनापत्तिवारणवार्तिकम् )

**॥ * ॥ गोसमानाक्षरनान्तात् ॥ * ॥**

**"इत्येके वक्तव्यमित्याहुः । [गो-] गामिच्छति गव्यति । समानाक्षर—घटीयति दधीयति मधूयति कर्त्रीयति । नान्तात्—राजीयति तक्षीयति ॥ सुप आत्मनः ॥ ८ ॥**

( प्रदीपः ) गोसमानाक्षरेति । अकारादयो दश समानाः[3] । तत्र लृवर्णान्तस्य प्रातिपदिकस्यासंभवादकारान्तस्य च सप्तानां ग्रहणम् । आसिस्तु न्यासेऽव्याप्तिः । वाच्यतीत्याद्यसिद्धिप्रसङ्गात् । भाष्यकारेण तु मतभेदप्रदर्शनायोपन्यासि ॥ ८ ॥

( उद्द्योतः ) तत्र लृवर्णेति । यद्यप्यनुकरणे लृकारान्तं लृकारान्तं ऋकारान्तं च संभवति, तथापि तत्र क्यचः प्रयोगदर्शनाभाव इत्यर्थः । ऋकारान्तस्य चेति । असंभवादित्यपकर्षः ॥ वस्तुत स्तादृशानुकरणस्यैव लोके प्रयुज्यमानस्याभाव इति तात्पर्यम् ॥ मतभेदेति । तथा चेदं मतमरुचिग्रस्तमिति भावः ॥ अन्ये तु अजन्तेभ्यो गोसमानाक्षरेभ्य एव अनुनासिकान्तेभ्यस्तु नान्तेभ्य एवेत्यर्थः । अत एव रैशब्दात्क्यच् छान्दस इत्युक्तं स्थानेऽन्तरतमसूत्रे भाष्ये ॥ वाच्यतीत्यादौ च न दोषः । वाच्यति स्रुच्यतीति च, नः क्ये इति सूत्रे भाष्ये प्रयुक्तमित्याहुः ॥ ८ ॥

---

१ पुत्रादिविषयकेच्छारूपक्रियायाः क्यजन्तवाच्यायाः फलस्य इति क्रियाकर्मणः पुत्रादेरित्यर्थः । ( र. ना. )

२ 'किमः कः' इत्यनेन कादेशे मान्तत्वविघातेऽपि प्रत्ययप्रकृतौ मान्तत्वेन न क्यजापत्तिरिति भावः ॥

३ अ आ इ ई उ ऊ ऋ ॠ लृ ॡ इति दशेत्यर्थः । ( र. ना. )

४ लृकारान्तस्य लॄकारान्तस्य चेत्यर्थः । एवं हि वक्ष्यमाणग्रन्थोपपत्तिः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(३८७ काम्यच् प्रत्ययविधिसूत्रम् ॥३।१।२ आ. २ सूत्रम्)

## ६२६ काम्यच्च ॥ ३ । १ । ९ ॥

(काम्यचश्चित्करणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

किमर्थश्चकारः ? ।

(परिहारभाष्यम्)

स्वरार्थः । चितोन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् ॥

(आक्षेपसाधकभाष्यम्)

नैतदस्ति प्रयोजनम् । धातुस्वरेणाप्येतत्सिद्धम् ॥

(परिहारान्तरशङ्काभाष्यम्)

ककारस्य तर्हीत्संज्ञापरित्राणार्थं आदितश्चकारः कर्तव्यः[1] ।

(प्रदीपः) कामच्च ॥ ९ ॥ आदित इति । अन्तेऽपि कृत आदिकृतफलसंपादनादादितः संपद्यते । तथा हि । यदादौ क्रियते तदा ककारस्यानादित्वादित्संज्ञा न भवति । एवमन्तेऽपि कृतश्चित्कार्येऽन्तोदात्तत्वे सिद्धे नियमार्थः संपद्यते—चिदेवायं व्यपदेष्टव्यः,—न त्वनुबन्धान्तरेण किदिति ।

(उद्योतः) काम्यच्च ॥ ८ ॥ ननु च स्यादितः पाठे सूत्रभेदः स्यादत आह—अन्तेऽपीति । नियमार्थतयादिपाठफलं संपन्नमित्यर्थः ॥

अत[2] उत्तरं पठति ।

(१७३६ चकारप्रत्याख्यानवार्तिकम् ॥ १ ॥)

### ॥ * ॥ काम्यचश्चित्करणानर्थक्यं कस्येदर्थाभावात् ॥ * ॥

(भाष्यम्) काम्यचश्चित्करणमनर्थकम् ककारस्येत्संज्ञा कस्मान्न भवति ? । इदर्थाभावात् । इत्कार्याभावादत्रेत्संज्ञा न भविष्यति ॥

(हेत्वसिद्धिप्रदर्शकभाष्यम्)

ननु च लोप एवेत्कार्यम् ॥

(हेतूपपत्तिभाष्यम्)

अकार्ये लोपः । इह हि शब्दस्य कार्यार्थो वा स्यादुपदेशः श्रवणार्थो वा । कार्यं चेह नास्ति । असति कार्ये यदि श्रवणमपि न स्यात् । उपदेशोऽनर्थकः स्यात् ।

(कित्करणप्रयोजनभाष्यम्)

इदमस्ति कार्यम्—अग्निचित्काम्यति । कितीति गुणप्रतिषेधो यथा स्यात् ॥

(प्रयोजननिराकरणभाष्यम्)

नैतदस्ति प्रयोजनम् । सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते । धातोश्च विहितः प्रत्ययः शेष आर्धधातुकसंज्ञां लभते । न चायं धातोर्विधीयते ॥

(प्रयोजनभाष्यम्)

इदं तर्हि प्रयोजनम् । उपयट्काम्यति[3] । कितीति संप्रसारणं यथा स्यात् ॥

(प्रयोजननिराकरणभाष्यम्)

एतदपि नास्ति प्रयोजनम् । यजादिभिरत्र कितं विशेषयिष्यामः । यजादीनां यः किदिति ॥ कश्च यजादीनां कित् ? । यजादिभ्यो यो विहितः ॥

(प्रदीपः) यजादिभ्यो यो विहित इति । अयं तु सुबन्ताद्विहितः ॥

(सिद्धान्तिसमाधानभाष्यम्)

अथापि कथं चिदित्कार्यं स्यात् । एवमपि न दोषः । क्रियते न्यास एव द्विचकारो निर्देशः "सुप आत्मनः क्यच्[4] काम्यच्चे"ति ॥ अथ वा छान्दसमेतत्[5] । दृष्टानुविधिः छन्दसि भवति । न चात्र संप्रसारणं दृश्यते ॥ काम्यश्च ॥ ९ ॥

(प्रदीपः) अथापीति । यदा यजादिभिः किन्न विशेष्यते कार्यित्वेनैव यजादयो निर्दिश्यन्त इति भावः ॥ अथवेति । विजुपे छन्दसीति विचश्छन्दसि विधानात् ॥ इह वाक्काम्यतीति संप्रसारणं कित्कार्यमस्ति तस्मात् पूर्वः परिहार आश्रयणीयः अथवा धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् ॥ ९ ॥

(उद्योतः) वाक्काम्यतीति । क्विब्वचिप्रच्छीति वार्तिकेन क्विब्दीर्घासंप्रसारणानि ॥ अस्य प्रयोगस्य सत्त्वे दृढं मानं चिन्त्यम् ॥ पूर्वपरिहार इति । यजादिभ्यो विहित इतीत्यर्थः । वाच् अमित्यवस्थायां काम्यच् प्रवृत्तेर्नायं वच्यादिभ्यो विहितः ॥ काम्यचश्चित्करणानर्थक्यमिति वार्तिकविरोधेन पुत्रकाम्यिष्यतीत्यादौ सति शिष्टस्य[6] स्वरं बाधित्वा चित्स्वर एव यथा स्यादिति चित्त्वमिति हरदत्तोक्तमपास्तम् ॥ ९ ॥

---

1 'सुप आत्मनः क्यच् काम्यचेति संहिता पाठेपि 'अनचि च' इति चकारस्य द्वित्वेन द्विचकारं निर्देशं ज्ञात्वा योगं कद्वारादिमेव जानाति प्रयोजनवदिति योगादि समध्यापयिष्यति आसिद्धान्तीति तु दाधिमथानां सिद्धान्तः ॥

2 अस्याः परिहारान्तरशङ्काया उत्तरं पठतीत्यर्थः । आद्यादित्वात्सार्वविभक्तिकस्तसिः । (र. ना.)

3 उपयट् काम्यतीत्येतदित्यर्थः । (र. ना.)

4 काशीमुद्रितपदमञ्जरीशोधकदामोदरशास्त्रिभिस्तु 'क्यच् काम्यच्च' इति निर्देशं दर्शयद्भिः स्वस्मिन् सत्यमेव भारद्वाजत्वं दर्शितम् ॥ पूर्वपक्षिसिद्धान्तिनोर्ज्ञानभेदे कारणाभावात् ॥

5 भारद्वाजदामोदरशास्त्रिशोधितपदमञ्जरीपुस्तकेपि मकारो पकाररहित एवोपलभ्यते । परंतु 'यस्य हलः' इत्यस्याङ्गसंज्ञानिमित्तस्य यकारस्य लोप इति भाष्यसंमतेऽर्थे यलोपस्याप्राप्त्या यकारसहित एव मकारः साधुरिति दाधिमथाः ॥

6 'सति शिष्टमपि' इति पदमञ्जर्यामुपलभ्यते ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ३८८ क्यच्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. ३ सूत्रम् )

## ६२७ उपमानादाचारे ॥ ३ । १ । १० ॥

( १७३७ न्यूनतापूरकवार्तिकम् ॥ १ ॥ )

॥ * ॥ अधिकरणाच्च ॥ * ॥

( भाष्यम् ) अधिकरणाच्चेति वक्तव्यम् । इहापि यथा स्यात्—कुटीयति प्रासादे । प्रासादीयति कुट्याम् ॥ उपमानादाचारे ॥ १० ॥

( प्रदीपः ) उपमाना ॥ १० ॥ कुट्यामिति । उपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमिति कर्मविवक्षाया-मेतत्प्रयोगासंभवात् वार्तिकारम्भः ॥ १० ॥

( ३८९ क्यङ्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. ११ सूत्रम् )

## ६२८ कर्तुः क्यङ् सलोपश्च ॥३।१।११॥

( सलोपस्यान्वाचयशिष्टत्वाधिकरणम् )

( आक्षेपभाष्यम् )

सलोपसन्नियोगेनायं क्यङ् विधीयते तेन यत्रैव सलोपस्तत्रैव क्यङ् स्यात्—पयायते । इह न स्यात्—अपि काकः श्येनायते ॥

( प्रदीपः ) कर्तुः क्यङ् ॥ ११ ॥ सलोपविधौ कर्तु-रिति स्थानषष्ठी । सकारेण कर्तुर्विशेषणात्तदन्तविधिसद्भावाद् हंसायत इत्यादौ सलोपाभावः ॥ सलोपसन्नियोगेनेति । एकवाक्यतां संनियोगार्थं च चशब्दं मत्वा चोद्यते ॥

( उद्द्योतः ) कर्तुः क्यङ् ॥ ११ ॥ एकवाक्यतोपपादकं संनियोगार्थं चेत्यादि । एतावतैवैकवाक्यतेति व्यवहारः ॥ एतेन विधेयानेकत्वात्कथमेकवाक्यतेत्यपास्तम् ॥

( आक्षेपपरिहारभाष्यम् )

नैतदस्ति । प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टः सलोपः—यत्र च सकारं पश्यसीति । तद्यथा—कश्चित्कंचिदुक्तो 'ग्रामे भैक्षं चर देवदत्तं चानय' इति । स ग्रामे भैक्षं चरति, यदि च देवदत्तं पश्यति तमप्यानयति ॥

(प्रदीपः) वाक्यभेदमन्वाचये च चशब्दमाश्रित्य परिहारः॥

( १७३८ न्यूनतावार्तिकम् ॥ १ ॥ )

॥ * ॥ स लोपो वा ॥ * ॥

( भाष्यम् ) सलोपो वेति वक्तव्यम् । पयायते पयस्यते ॥

( १७३९ न्यूनतावार्तिकम् ॥ २ ॥ )

॥ * ॥ ओजसोप्सरसोर्नित्यम् ॥ * ॥

( भाष्यम् ) ओजसोप्सरसो नित्यं सलोपो वक्तव्यः । ओजायमानं योऽहिं जघान । अप्सरायते ॥

( मतान्तरभाष्यम् )

अपर आह—सलोपोऽप्सरस एव । ओजस्यत इत्येव भवितव्यम् ॥

( आक्षेपभाष्यम् )

कथम्-'ओजायमानं योऽहिं जघान'इति ? ।

( समाधानभाष्यम् )

छान्दसत्वात्सिद्धम् ॥

( प्रदीपः ) अपर आहेति । मतभेदप्रदर्शनायोप-न्यासः न स्वयं स्थितः पक्ष इत्याहुः ॥

( उद्द्योतः ) इत्याहुरिति । अत एव उपक्रमभाष्ये पयायते इत्यत्रैव क्यङ् स्यात् सलोपसंनियोगशिष्टत्वादिति शङ्कायां तत्प्रयोगा-भावरूपं समाधानमनभिधायान्यदेव समाधानं कृतम् ॥

( १७४० न्यूनतावार्तिकम् ॥ ३ ॥ )

॥ * ॥ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा ॥ * ॥

( भाष्यम् ) आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः । अवगल्भते । अवगल्भायते । विक्लीबते । विक्लीबायते । विहोडते । विहोडायते । किं प्रयोज-नम् ? । क्रियावचनता यथा गम्येत ॥

( प्रदीपः ) क्रियावचनतेति । आचारलक्षणक्रियाव-चनतेत्यर्थो विवक्षितो, धातुपाठे हि पाठात्तेषां क्रियावचनता सिद्धैव ॥

( उद्द्योतः ) क्रियावचनत्वस्य धातुगणमध्ये तत्तदर्थविशिष्टानां पठितत्वादेव सिद्धत्वादाह—आचारेति ॥

( क्विब्विधिवैयर्थ्यभाष्यम् )

नैतदस्ति प्रयोजनम् । धातव एवावगल्भादयः॥

( शङ्काभाष्यम् )

न चैव ह्यर्था आदिश्यन्ते ॥

( प्रदीपः ) न चैव हीति । अनेकार्थत्वाद्धातूनामाचार-क्रियावृत्तित्वस्यासिद्धत्वादित्यर्थः ॥

( उद्द्योतः ) भाष्ये न चैव ह्यर्था इति । अस्य 'धातुपाठे' इति शेषः । अर्था इत्यस्य सर्वे अर्था इत्यर्थः ॥

( समाधानभाष्यम् )

क्रियावचनता च गम्यते ।

( उद्द्योतः ) क्रियावचनतेति । तादृशक्रियेत्यर्थः । गम्यत इत्यस्य लोकत इति शेषः । अनिर्दिष्टार्थधातूनामेवानेकार्थत्वमित्ये-तद्भाष्यार्थमन्ये ॥

( क्विब्विधिप्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम् । अवगल्भा विक्लीबा विहोडा । "अप्रत्ययात्" इत्यकारप्रत्ययो यथा स्यात् ॥

१ माधुक्तोद्द्योताद्युरोधेनायं विषयविभागः ॥ दाधिमथमते तु यद्यपि–तथापि पूरणेन यथा मन्यैकत्वं तथा प्रागेवोक्तं न विसरणीयम् ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रयोजननिराकरणभाष्यम् )

मा भूदेवम्। "गुरोश्च हलः" इत्येवं भविष्यति॥

( प्रयोजनान्तरभाष्यम् )

इदं तर्हि प्रयोजनम्। अवगल्भांचक्रे विक्लीबांचक्रे। विहोडांचक्रे। "कास्प्रत्ययादाममन्त्रे लिटि" इत्याम् प्रत्ययो यथा स्यात्॥

अपर आह—

( १७४१ क्विब्विधिमतान्तरवार्तिकम् ॥ ४ ॥ )

॥ * ॥ सर्वप्रातिपदिकेभ्य आचारे क्विब्वा वक्तव्यः। अश्वति गर्दभतीत्येवमर्थम् ॥ * ॥

( प्रदीपः ) अश्वतीति। प्रातिपदिकादेवायं क्विब्विधीयते न सुबन्तात्। तेन पदत्वाभावाद्तोगुण इति पररूपत्वं भवति। एतच्च सर्वेभ्य इति वक्तव्ये सर्वप्रातिपदिकेभ्य इति वचनाल्लभ्यते॥

( अनुयोगभाष्यम् )

न तर्हि इदानीं गल्भाद्यनुक्रमणं कर्तव्यम्।

( समाधानभाष्यम् )

कर्तव्यं च। किं प्रयोजनम्?। आत्मनेपदार्थानुबन्धानासङ्क्ष्यामीति। गल्भ क्लीब होड॥ कर्तुः क्यङ्॥ ११॥

( प्रदीपः ) आत्मनेपदार्थानिति । वाक्येऽकारस्यानुदात्तत्वानुनासिकत्वे प्रतिज्ञायेते[1] इति भावः॥ ११॥

( उद्योतः ) वाक्ये इति । वार्तिके इत्यर्थः ॥ अकारस्येति ॥ ननु क्विप इकारस्यैवानुदात्तत्वमनुनासिकत्वं च प्रतिज्ञायतां किमनेनानुबन्धत्रयकरणेनेति चेन्न। अश्वतीत्यादावप्यात्मनेपदापत्तेः। अतिरिक्तक्विप्पदकरणे तु गौरवमिति भावः ॥ भाष्ये आत्मनेपदार्थानित्यादेरामविषये क्विस्संनियोगेनेति शेषः ॥ आसङ्क्ष्यामीति। तद्गुणविशिष्टमवर्णान्तरं प्रश्लेषेणोपदेक्ष्यामीत्यर्थः। अत एवेत्संज्ञा। अन्यथा क्लीबादीनां पचाद्यजन्तानां क्विबर्थमनुवादेनोपदेशाभावात्सा न स्यात्। प्रश्लेषे तु तस्य[2] मानान्तरेण सिद्ध्यभावादुपदेश एव । तद्विशिष्टस्य क्लीवादेरप्युपदेश एवेति अनुबन्धानामेकान्तत्वे करणसाधने उपदेशशब्दे च न दोषः। अत[3] एव प्रत्यायान्तादामो मित्त्वे न विशेष इति ह्रस्वनद्याप इति सूत्रस्थभाष्यं संगच्छते। अन्यथाऽवगल्भादिहलन्तप्रकृतिके विशेषः स्यात्। अन्यहलन्तेभ्यस्त्वाचारे क्विब्नेति तदाशयः॥ ११॥

( ३९० क्यङ्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ० ५ सूत्रम् )

# ६२९ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ ३ । १ । १२ ॥

( हल्लोपस्यान्वाचयशिष्टत्वाधिकरणम् )

( आक्षेपभाष्यम् )

हलो लोपसन्नियोगेनायं क्यङ् विधीयते। तेन यत्रैव हलो लोपः, तत्रैव प्राप्नोति॥

( प्रदीपः ) भृशादिभ्यो ॥ १२ ॥ हल इति। हला भृशादयो विशेष्यन्ते तेन हलन्तानामेव क्यङ्लोपाभ्यां भवितव्यमित्यर्थः॥

( उद्योतः ) भृशादिभ्यो ॥ १२ ॥ ननु भृशादीनां हल्घटितानामेव सत्त्वात्तत्रैव प्राप्नोतीत्यस्य[4] व्यावर्त्याभाव इत्यत आह— हलेति । आवृत्त्या विभक्तिविपरिणामेनेति भावः । अन्यथा हि सर्वत्र हलो लोपः स्यादित्यापादयेदिति आशयः॥

( आक्षेपपरिहारभाष्यम् )

नैष दोषः। प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टो हलो लोपः यत्र च हलं पश्यसीति॥

( प्रदीपः ) प्रधानशिष्ट इति। वाक्यभेदेन सर्वेभ्यो भृशादिभ्यः क्यङं विधाय हलन्तानां लोपो विधीयत इत्यर्थः। अन्यथाऽनर्थकः पाठः स्याद् हलन्तानाम्॥

( १७४२ न्यूनतावार्तिकम् ॥ १ ॥ )

॥*॥ भृशादिष्वभूततद्भावग्रहणम् ॥*॥

(भाष्यम्) भृशादिष्वभूततद्भावग्रहणं कर्त्तव्यम्। इह मा भूत्—क्व दिवा भृशा भवन्तीति॥

(प्रदीपः) क्व दिवा भृशा भवन्तीति। ये रात्रौ भृशालोका[5] नक्षत्रादयस्ते दिवसे क्व प्रदेशे भवन्तीत्यर्थः। अत्राभूततद्भावाभावः॥

( उद्योतः ) भृशालोका इति। अधिकालोका इत्यर्थः॥

( १७४३ अच्विग्रहणवैयर्थ्यवार्तिकम् ॥ २ ॥ )

॥ * ॥ च्विप्रतिषेधानर्थक्यं च भवत्यर्थे क्यङ्वचनात् ॥ * ॥

(भाष्यम्) च्विप्रतिषेधश्चानर्थकः। किं कारणम्। भवत्यर्थे क्यङ्वचनात्। भवत्यर्थे क्यङ्विधीयते॥

( १७४४ वैयर्थ्यसाधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ भवति योगे च्विविधानम् ॥ * ॥

( भाष्यम् ) भवतिना योगे च्विर्विधीयते। तत्र च्विनोक्तत्वात्तस्यार्थस्य क्यङ् न भविष्यति॥

( प्रदीपः ) च्विनोक्तत्वादिति। च्विसहचरितेन भवतिनेत्यर्थः॥

---

१ 'प्रतिज्ञाते' ॥

२ अवर्णान्तरस्य प्रश्लेषेणोपदेशादेवेत्यर्थः। ( र. ना. )

३ अस्य, हल्ग्रहणस्येत्यर्थः। ( र. ना. )

४ हलन्तेभ्यः क्यङो विधानाभावे इत्यर्थः। ( र. ना. )

५ 'भृशा आलोका' इति पाठोऽपि कुत्रचित्॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्द्योतः ) भवत्यर्थे च्वेरविधानेन च्विनोक्तत्वादित्यसंगतमित्यत आह—च्विसहचरितेनेति ॥

( डाजन्तात्क्यषोऽनुपपत्तिभाष्यम् )

**डाजन्तादपि तर्हि न प्राप्नोति—पटपटायते । डाजपि हि भवतिना योगे विधीयते । भविष्यत्यर्थे क्यष् विधीयते ॥**

( उद्द्योतः ) भाष्ये डाजन्तादपीति । क्यषिति शेषः ॥

( १७४५ डाजन्तात्क्यषुपपत्तिवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ डाचि वचनप्रामाण्यात् ॥ * ॥**

( भाष्यम् ) **डाचि वचनप्रामाण्याद्भविष्यति ॥ किं वचनप्रामाण्यम् ? । "लोहितादिडाज्भ्यः क्यष्" इति ।**

( प्रदीपः ) **डाचि वचनप्रामाण्यादिति ।** अप्रयुक्त एव भवतौ भवत्यर्थविवक्षायां वचनप्रामाण्याद् डाचं विधाय भवत्यर्थे क्यष्विधीयत इत्यर्थः ॥

( उद्द्योतः ) वचनप्रामाण्यस्य क्यष्प्रवृत्तौ हेतुत्वे क्यषन्तसमभिव्याहारे भवतेरपि प्रयोगः स्यादत आह—अप्रयुक्तेति । भवत्यर्थेति । कृभ्वस्तियोग इत्यस्य डाज्विधावनुवृत्तस्य तदर्थयोग इत्यर्थः । च्विविधौ तु शब्दयोग इत्येवार्थ इति भावः । कृभ्वस्तियोग इव क्यष्योगेऽपि डाजिति ज्ञाप्यते इति वृत्तिग्रन्थस्यापीदमेव तात्पर्यम् ॥

( आक्षेपभाष्यम् )

**इह किंचिदक्रियमाणं चोद्यते । किंचिच्च क्रियमाणं प्रत्याख्यायते । सूत्रभेदः कृतो भवति ।**

( उद्द्योतः ) भाष्येऽक्रियमाणमिति । अभूततद्भावग्रहणमित्यर्थः ॥

( सिद्धान्तिभाष्यम् )

**यथान्यासमेवास्तु ॥**

( प्रदीपः ) **यथान्यासमिति ।** अच्वेरिति पर्युदासाश्रयेण दोषद्वयस्यापि परिहार इत्यर्थः ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—इह कस्मान्न भवति क दिवा भृशा भवन्तीति ।**

( परिहारभाष्यम् )

**"नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" । नञ्युक्तमिवयुक्तं वा यत् किंचिदिह दृश्यते ततः[1] अन्यस्मिंस्तत्सदृशे[2] कार्यं विज्ञायते[3] । तथा ह्यर्थो गम्यते । अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृश एवानीयते नासौ लोष्टमानीय कृती भवति । एवमिहाप्यच्वेरिति प्रतिषेधादन्यस्मिन्नच्व्यन्ते च्विसदृशे कार्यं विज्ञायते । किं चान्यदतोऽच्व्यन्तं च्विसदृशम् । अभूततद्भावः ॥**

( उद्द्योतः ) नञिव युक्तमिति न्याये इव युक्तमिति दृष्टान्तार्थम् । अन्यस्मिंस्तत्सदृशे इत्यनेनाभेदेऽपि सादृश्यमस्तीति सूचयति ॥

( विप्रतिपत्तिभाष्यम् )

**इह काश्चित्प्रकृतयः सोपसर्गाः पठ्यन्ते—अभिमनस् सुमनस् उन्मनस् दुर्मनस् । तत्र विचार्यते—भृशादिषूपसर्गः प्रत्ययार्थविशेषणं वा स्यात् अभिभवतौ सुभवतौ उद्भवतौ दुर्भवताविति । प्रकृत्यर्थविशेषणं वा—अभिमनस्शब्दात् सुमनस्शब्दात् उन्मनस्शब्दात् दुर्मनस्शब्दाद्वेति ।**

( प्रदीपः ) **इह काश्चिदिति ।** यदा मनःशब्देनासमस्ता एव सूद्दुरभय इति पक्षस्तदा प्रत्ययार्थविशेषणं ते भवन्ति । मनःशब्दश्च वृत्तिविषये तद्वति वर्तते । मनस्वी सुष्ठु, भवति । दुर्भवति दुष्टु भवति । आभिमुख्येन भवतीत्यत्रार्थे क्यङ्विधिः । अन्ये त्वाहुः प्राप्त्यर्थस्यात्र वृत्तिविषये भवतेर्ग्रहणम् तेन मनः कर्म शोभनं प्राप्नोतीत्यादिरर्थः क्यङन्तस्य भवति ॥ यदा तु मनःशब्देन स्वादीनां बहुव्रीहिरिति पक्षः पदा प्रकृत्यर्थविशेषणं ते भवन्तीति विचारः क्रियते ।

( उद्द्योतः ) प्राक्प्रवृत्तेः पाठेन प्रत्ययार्थविशेषणत्वपक्षोऽसंभावितोऽत आह—यदेति । समस्तासमस्तत्वाभ्यां पक्षद्वयसंभव इति भावः । असुमनाः सुमना भवतीत्यर्थस्य क्यङन्तात्प्रतीतेः समास एव आवश्यको अत आह—मनःशब्दश्चेति । तदर्थं मतुबादीनामेव साधुत्वात् लक्षणयापि प्रकृतिमात्रस्यासाधुत्वं स्यादत आह—अन्ये त्विति । असुमनाः सुमना भवतीत्यर्थस्तु पक्षद्वयेऽप्यार्थ इति भावः ॥ मनः कर्मेति । मनः कर्तृ शोभनं कर्म प्राप्नोतीत्यन्वयः ॥

( आक्षेपभाष्यम् )

**युक्तं पुनरिदं विचारयितुम् ॥**

( आक्षेपोपपादकभाष्यम् )

**नन्वनेनासंदिग्धेन[4] प्रकृत्यर्थविशेषणेन भवितव्यम् । यावता प्राक् प्रकृतेः पठ्यन्ते, यदि प्रत्ययार्थविशेषणं स्युः प्राग्भवतेः पठ्येरन् ॥**

( प्रदीपः ) **प्राक् प्रकृतेरिति ।** प्रकृतेरेवावयवाः पूर्वभूताः पठ्यन्त इत्यर्थः ॥

( उद्द्योतः ) प्रकृतेः प्राक्पाठे एव असमस्तत्वसमस्तत्वाभ्यां पक्षद्वयोपपत्तेरुक्तत्वेनाह—प्रकृतेरेवेति । अवयवसंबन्धे षष्ठी । प्राकृत्वं चावयवान्तरापेक्षयेति भावः ॥ बहुव्रीहिविवक्षयैवमुक्तमित्याशयः ॥

१ अच्वेरित्येतदित्यर्थः । ( र. ना. )

२ 'तत्र' ॥ एकस्मिन्पुस्तके तु नैवास्ति ॥

३ 'विज्ञास्यते' ॥

४ 'नन्वेतेन' ॥

५ प्राक् प्रकृतेरित्यत्रेति भावः । ( र. ना. )

६ प्रकृत्या सहोपसर्गाणामिति शेषः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( विचारौचित्यसाधकभाष्यम् )

नेमे शक्याः प्राग्भवतेः पठितुम् । एवं हि विशिष्टे प्रत्ययार्थे भृशादिमात्रादुत्पत्तिः प्रसज्येत । तस्मान्नैवं शक्यं वक्तुम् । न चेदेवम् जायते विचारणा ॥

( उद्योतः ) न चेदेवं जायते विचारणेत्यस्य समस्तत्वासमस्तत्वाभ्यामिति शेषः ॥

( विशेषानुयोगभाष्यम् )

कश्चात्र विशेषः ? ।

( १७४६ प्रत्ययार्थविशेषणपक्षदूषणवार्तिकम् ॥ ५ ॥ )

॥ * ॥ भृशादिषूपसर्गः[1] प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषः ॥ * ॥

( भाष्यम् ) भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषो भवति । अभिमनायते–"तिङ्ङतिङः" इति निघातः प्रसज्येत ॥

( प्रदीपः ) निघात इति । मनःशब्दात् क्यङि कृते मनायत इत्यस्य तिङन्तस्य पदस्यातिङन्तात् स्वादेः पदादुत्तरत्वात् ॥ प्रकृत्यर्थविशेषणत्वे तु सुमनायत इत्यादि तिङन्तं संपद्यत इति तद्व्यतिरिक्तपदान्तराभावान्निघाताभावः ॥

( प्रकृत्यर्थविशेषणपक्षाश्रयणभाष्यम् )

अस्तु तर्हि प्रकृत्यर्थविशेषणम् ।

( १७४७ दूषणवार्तिकम् ॥ ६ ॥ )

॥ * ॥ सोपसर्गादिति चेदटि दोषः ॥ * ॥

( भाष्यम् ) सोपसर्गादिति चेदटि दोषो भवति । स्वमनायतेति ॥

( वार्तिकान्तरावतरणभाष्यम् )

अत्यल्पमिदमुच्यते [ "[2]अटि" इति ] ।

( वार्तिकम् )

॥ * ॥ अड्ल्यब्द्विर्वचनेषु ॥ * ॥

( भाष्यम् ) अड्[3]ल्यब्द्विर्वचनेष्विति वक्तव्यम् । अटि उदाहृतम् । ल्यपि—सुमनाय्य । द्विर्वचने—अभिसिमनायिषते ।

( प्रदीपः ) उपसर्गस्य तु धात्वन्तर्भावात्ततः पूर्वमडाटौ प्राप्नुतः । क्यङन्ते च तस्यानुप्रवेशात्तद्व्यतिरिक्तपदाभावात्समासाभावाल्ल्यपोऽप्रसङ्गः । क्यङन्ताच्च सनि कृते सोपसर्गस्य द्विर्वचनप्रसङ्गः ।

( उद्योतः ) समासाभावादिति । क्त्वान्तेन समासाभावादित्यर्थः । अनञ्पूर्वे समासे विद्यमानस्य क्त्वो ल्यबिति सूत्रार्थ इति भावः ॥ तत्राड्द्विर्वचनयोरिष्टदेशेऽप्राप्तिः । ल्यपस्त्वसिद्धिरेवेति भावः ॥

( दूषणपरिहारभाष्यम् )

नैष दोषः । अवश्यं संग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या=असंग्रामयत शूर इत्येवमर्थम् । तन्नियमार्थं भविष्यति संग्रामयतेरेव सोपसर्गान्नान्यस्मात्सोपसर्गादिति ।

( प्रदीपः ) अवश्यमिति । ग्रामशब्द एव युद्धे वर्तते सामान्यतोदृष्टाच्चानुमानात् क्रियाविशेषस्य द्योतकः संशब्दः । तथा च वा पदान्तस्येति परसवर्णविकल्पो भवति । उपसर्गसदृशानर्थकशब्दान्तरा[4]वयवे तु संग्रामशब्देऽभ्युपगम्यमाने परसवर्णविकल्पो न स्यात् । तत्र ग्राम युद्ध इत्येव वक्तव्यं संशब्दस्तु द्योतकः प्रयोगदर्शनाल्लभ्यते[5] । यथा इक् स्मरणे इङ्ध्ययने इत्यनयोः अधिः । नियमार्थस्तु संग्रामेति पाठः । नियमार्थत्वे च प्र[6]त्ययोत्पत्तावुपसर्गः पृथक् क्रियते । अतो धातौ तेषामनन्तर्भावाद् यथेष्टमडादिसिद्धिः । प्रत्ययार्थविशेषणपक्षे तु विरोधादभूततद्भावविषयत्वं नाश्रीयते ॥ असंग्रामयतेति । संग्रामयतिरनुदात्तेद् बोद्धव्यः ॥ १२ ॥

(उद्योतः) भाष्ये—अवश्यं संग्रामयतेरिति । संग्रामयतेः सो[7]पसर्गात् यथा उत्पत्तिर्भवति तिङां, तथा णिजुत्पत्तिर्वक्तव्येत्यर्थः । अवश्यमित्यनेन चास्य फलान्तरमपि सूचितम् , तच्च समः पूर्वमड् अन्यथा तत्करोतीत्यनेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव, तद्ध्वनयन्नुदाहरति—असंग्रामयतेति । यद्यपि संग्रामशब्दे संशब्दो नोपसर्गस्तथापि सोपसर्गादित्यस्य सोपसर्गसमानाकारादित्यर्थो बोध्यः ॥ ननु प्रातिपदिकाद्धात्वर्थ इत्येव णिच् सिद्ध इति चेन्न । प्रजयतीत्यादावुपसर्गरहितस्यैव धातुताया दृष्टत्वेनात्रापि तद्रहितणिजन्तस्यैव धातुत्वबुद्धिवारणाय तत्सत्त्वात् । प्रकृते तु विशिष्टस्यैव प्रकृतित्वेनोपदेशात्स्वादीनां वाचकत्वाच्च विशिष्टस्यैव धातुत्वापत्तिरित्याशयात् । तदाह—ग्रामशब्द एवेति । अनेनेतरद्योतकसाम्यं बोधितम् ॥ सामान्यत इति । क्रियावाचकयुक्तानां क्रियाविशेषद्योतकत्वस्य दृष्टत्वेनात्रापि युद्धक्रियाद्योतकत्वमनुमीयत इत्यर्थः ॥ उपसर्गसदृशानर्थकेति । अनर्थकत्वमात्रं निषिध्यते तत्सदृशो निपात इत्यर्थः । इदं चिन्त्यम्, उपसर्गसमानाकारत्वेन निपातत्वादनर्थकस्यापि निपातस्य प्रातिपदिकत्वेन सुबन्तत्वात् ॥ तत्रेति । युद्धे वर्तमानो यो ग्रामशब्दस्तस्मादित्युक्ते सामर्थ्येन संपूर्वाद्भविष्यति णिच्, तद्वि-

1 केवलेभ्यो भृशादिभ्य इत्यर्थः । सोपसर्गेभ्यस्तु न स्यादिति भावः ।

2 कोष्ठकान्तर्गतभाष्यं यद्यपि प्राचीनपुस्तकेषु नोपलभ्यते तथापि भाष्येऽन्यत्र 'कटाय क्रमणे' इत्यादि सूत्रभाष्येषु बहुत्र तथानुवाददर्शनादत्र प्राक्तनलेखकप्रमादतस्त्रुटितं भवेदिति मत्वा सार्वत्रिकशैलीसंवादायास्माभिर्वर्धितम् ॥ अमूलकभाष्यपाठकल्पनं दाधिमथानां महत्साहसमिति तु वयम् । ( र. ना. )

3 अड्ग्रहणम् आटोऽप्युपलक्षणम् । अत एव प्रदीपे 'अडाटौ प्राप्नुतः' इत्युक्तम् पदमञ्जर्यां च 'अडाड् ल्यब्द्विर्वचनेषु' इत्युक्त्वा आह—अभ्यमनायत उदमनायत इत्युदाहृतम् ॥

4 अवयवशब्देन शब्दान्तरान्तस्य बहुव्रीहिः । ( र. ना. )

5 गणे पाठं विनाऽपीति शेषः । ( र. ना. )

6 अन्यत्रेत्यादिः । ( र. ना. )

7 सोपसर्गात्संग्रामयतेस्तथा णिजुत्पत्तिर्वक्तव्या यथा तत एव तिङामुत्पत्तिर्भवतीति योजना । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शिष्टादेव च तिङ् भविष्यतीति भावः॥ नियमार्थं इति। संग्रामयतेरेव सोपसर्गाद्यथा तिङुत्पत्तिस्तथा प्रत्ययोत्पत्तिः। अन्यस्मात्तु सोपसर्गाद् यथा तिङुत्पत्तिः न तथा प्रत्ययोत्पत्तिरिति नियमार्थः॥ तत्फलितमाह—प्रत्ययोत्पत्ताविति। प्रत्ययोत्पत्तिकाले पृथक्करणेऽपि सामर्थ्यात्तद्विषयके लक्षणे सुबन्तादित्यंशे यस्माद्विहितस्तदादीत्यंशाप्रवृत्त्या प्रत्ययोत्पत्तौ न दोष' इति भावः॥ पृथक्करणं च जातसमासाभावः। अत एव सुमनाय्येत्यादौ पुनः क्त्वान्तेन समासे ल्यप्सिद्धिरिति ध्येयम्॥ ननु प्रत्ययार्थविशेषणपक्षोऽसंगतः तत्र मनस्वी सुष्ठु भवतीत्यर्थेऽभूततद्भावाभावादत आह—प्रत्ययार्थेति। एवं चैतद्विरोधादेव प्रत्ययार्थविशेषणपक्षोऽसंगत इति भावः। सङ्ग्रामयतिरनुदात्तेदिति। 'सङ्ग्रामयुद्धे' इत्यत्राकारस्यानुदात्तत्वानुनासिकत्वे प्रतिज्ञेये, अवयवे च तस्या चारितार्थ्यात्समुदायविशेषकतेति भावः॥ ननु अकारस्यानुदात्तत्वानुनासिकत्वप्रतिज्ञाने तत्सामर्थ्यादुच्चारणकालाव्यवहितोत्तरकाले इत्त्वे लोपे उपस्थितमान्तग्रामशब्दस्य तदन्तस्य वा लोके युद्धे वर्तमानत्वाभावेन युद्धे योऽयं ग्रामशब्द इत्यनुवादासंभवेन संपूर्वस्यालाभेन च 'संग्राम युद्धे वर्तते ततश्च णिच्' इत्यर्थे विशिष्टपाठस्यावश्यकत्वेन कथं नियमार्थत्वमिति चेन्न। द्वितीयमकारं प्रश्लिष्य तस्यानुदात्तत्वानुनासिकत्वे प्रतिज्ञेये इति तत्तात्पर्यात्॥ अत्रानुदात्तत्वे मानं चिन्त्यम्। भाष्यप्रयोगस्य पाक्षिकात्मनेपदेनोपपत्तेः॥

( आक्षेपभाष्यम् )

यदि नियमः क्रियते। स्वरो न सिध्यति॥

( समाधानभाष्यम् )

एवं तर्हि भृशादिषु उपसर्गस्य पराङ्गवद्भावं वक्ष्यामि[3]।

( उद्द्योतः ) भाष्ये एवं तर्हि भृशादिषूपसर्गस्येति। भृशादिषु पठितस्योपसर्गस्येत्यर्थः। तेनाभिभृशायते इत्यादौ न निघातः। देवदत्तः सुमनायत इत्यादौ च सोऽपि तिङ्ङतिङ इति निघातः॥१२॥

( आक्षेपभाष्यम् )

यदि पराङ्गवद्भाव उच्यते। अट्त्वयवृद्धिर्वचनानि न सिध्यन्ति॥

( समाधानभाष्यम् )

स्वरविधाविति वक्ष्यामि॥

( प्रत्ययार्थविशेषणपक्षाङ्गीकारभाष्यम् )

एवं च कृत्वास्तु प्रत्ययार्थविशेषणमिति॥

( दूषणस्मारणभाष्यम् )

ननु चोक्तं *भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोष *इति॥

( परिहारस्मारणभाष्यम् )

स्वरे पराङ्गवद्भावेन परिहृतम्॥

( प्रत्ययार्थविशेषणपक्षदूषणभाष्यम् )

अयं तर्हि प्रत्ययार्थविशेषणे सति दोषः। क्यङुक्तत्वात्तस्यार्थस्य उपसर्गस्य प्रयोगो न प्राप्नोति। किं कारणम्?। उक्तार्थानामप्रयोग इति। तद्यथा—'अपि काकः श्येनायते' इत्यत्र क्यङोक्तत्वादाचारार्थस्य आङ्प्रयोगो न भवति॥

( प्रत्ययार्थविशेषणपक्षे दत्तदूषणपरिहारभाष्यम् )

अस्त्यत्र विशेषः। एकेनात्र विशिष्टे प्रत्ययार्थे प्रत्यय उत्पद्यते[6]। इह पुनरनेकेन। तत्र मनायत इत्युक्ते संदेहः स्यात्—अभिभवतौ सुभवतौ दुर्भवतौ उद्भवताविति। तत्रासंदेहार्थमुपसर्गः प्रयुज्यते॥

( प्रश्नभाष्यम् )

यत्र तर्ह्येकेन उत्पुच्छयते॥

( समाधानभाष्यम् )

अत्राप्यनेकेन—पुच्छादुदसने 'पुच्छाद्यसने' 'पुच्छात्पर्यसने चे'ति॥ भृशादिभ्यो भुव्यच्वेः॥१२॥

( ३९१ क्यष्प्रत्ययविधिसूत्रम्॥ ३।१।२ आ. ५ सूत्रम्)

## ६३० लोहितादिडाज्भ्यः क्यष्॥ ३। १। १३॥

( ककारप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थः ककारः?।

( प्रयोजनभाष्यम् )

गुणवृद्धिप्रतिषेधार्थः। "क्ङिति च" इति गुणवृद्धिप्रतिषेधो यथा स्यात्॥

( उद्द्योतः ) लोहितादि॥ १३॥ भाष्ये गुणवृद्धीति। गणरत्नपठितेगन्तेभ्यस्तत्प्राप्तिः॥

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम्। सार्वधातुकार्द्धधातुकयोरङ्गस्य गुण उच्यते। धातोश्च विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञां लभते। न चायं धातोर्विधीयते। लोहितादीनि प्रातिपदिकानि॥

---

१ ग्रामशब्दे इत्यर्थः। (र. ना.)

२ मकारान्तग्रामशब्दान्तस्य

३ 'सुवामन्त्रिते' इत्यस्यानन्तरं 'भृशादिषूपसर्गः' इति वक्ष्यामि। इहापि तर्हि प्राप्नोति—अभिभृशायते सुभृशायते इति। यदि नेष्यते 'मनस्युपसर्गः' इति वक्ष्यामि॥ इति पदमञ्जरी॥

४ 'विशेषणमपि' इति तूपलभ्यते॥

५ अत्रोपसर्गपदं मनःशब्दः प्राक्प्रयोज्योपसर्गपरम्। अत एव 'स्वादीनामपि न स्यात्' इति पदमञ्जर्यां विवृतम्॥

६ एकेनोपसर्गेणाङ्गा विशिष्टे प्रत्ययार्थे आचारे श्येनायते इत्यत्र प्रत्यय उत्पद्यते इत्यर्थः। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रयोजनभाष्यम्)

सामान्यग्रहणार्थस्तर्हि । क सामान्यग्रहणार्थेनार्थः ? । "नः क्ये" इति ॥

(प्रयोजननिरासभाष्यम्)

नायं नान्ताद्विधीयते ॥

(प्रयोजनभाष्यम्)

इह तर्हि "यस्य हलः क्यस्य विभाषा" इति ॥

(प्रयोजननिरासभाष्यम्)

नायं हलन्ताद्विधीयते ॥

(प्रयोजनभाष्यम्)

इह तर्हि "आपत्यस्य च तद्धितेऽनाति, क्यच्व्योश्च" इति ॥

(प्रयोजननिरासभाष्यम्)

नायमापत्याद्विधीयते ॥

(प्रयोजनभाष्यम्)

इह तर्हि "क्याच्छन्दसि" इति ॥

(प्रयोजननिरासभाष्यम्)

याच्छन्दसीत्येव तद्वक्तव्यम् । चुरण्युस्तुरण्युर्भुरण्युरित्येवमर्थम् ।

(प्रदीपः) लोहितादि ॥ १३ ॥ भुरण्युरिति । कण्ड्वादियगन्तादुप्रत्ययः ॥

(प्रयोजनभाष्यम्)

इदं तर्हि प्रयोजनम् । यत्तद्=अकृद्यकार इति दीर्घत्वम्, तत्र क्ङिद्ग्रहणमनुवर्तते । तदिहापि यथा स्यात्—लोहितायतीति ।

किं पुनः कारणं तत्र क्ङिद्ग्रहणमनुवर्तते ? ।

इह मा भूत्—उरुया धृष्णुयेति ।

(प्रदीपः) उरुयेति । सुपां सुलुगिति तृतीयास्थाने यादेशः ॥

(आक्षेपभाष्यम्)

यदि तत्र क्ङिद्ग्रहणमनुवर्तते । पित्र्यमिति रीङ्भावो न प्राप्नोति ॥

(प्रदीपः) पित्र्यमिति । पितुरागतमिति पितुर्यच्चेति यत्प्रत्ययः ॥

(उद्योतः) पित्र्यमिति । रीङ् । यस्येति लोपः ॥

(समाधानभाष्यम्)

रीङ्भावं क्ङिद्ग्रहणं निवर्तिष्यते ॥

(आक्षेपभाष्यम्)

यदि निवर्तते । कथमसूया वसूया च यजामह इति ? ॥

(प्रदीपः) यदीति । यदि रीङ् भाव एव निवर्तते न तु दीर्घविधावपि तदा असुवसुशब्दाभ्यां पूर्ववद्यादेशे कृते दीर्घाभावादसूया वसूयेति न सिद्ध्यति ।

(उद्योतः) ननु क्ङितीति निवृत्तौ असूयेत्यपि सिद्धमत आह—यदीति ॥

(समाधानभाष्यम्)

असूयतेरसूया वसूयतेर्वसूया ।

(प्रदीपः) असूयेः कण्ड्वादियगन्तस्यासूया । वसूयतेरिच्छाक्यजन्तस्य वसूयेत्युत्तरम् ।

(उद्योतः) उत्तरमिति । असूयया धनेच्छया च यजामहे इति श्रुत्यर्थः । अप्रत्ययान्तटावन्ताद्विभक्तेश्छान्दसो लुगिति भावः ॥

(समाधानान्तरभाष्यम्)

अथ वा छान्दसमेतत् । दृष्टानुविधिश्छन्दसि भवति ॥

(सिद्धग्रहणानुवृत्तिवैयर्थ्यम्)

यदि च्छान्दसत्वं हेतुः । नार्थः क्ङिद्ग्रहणेनानुवर्तमानेन ॥

कस्मान्न भवति उरुया धृष्णुयेति ? ।

छान्दसत्वात् ॥

अथ वास्त्वत्र दीर्घत्वं, छान्दसं ह्रस्वत्वं भविष्यति । तद्यथा 'उपगायन्तु मां पत्नयो गर्भिणयो युवतय इति ॥

(प्रदीपः) अथ वेति । वर्णव्यत्ययेन दीर्घः क्रियत इत्यर्थः ॥ यदीति । अनेन ककारः प्रत्याख्यातः ॥

(उद्योतः) अथ वेति पक्षे—प्राणैर्वसुभिश्च यजामह इत्यर्थः ॥ भाष्ये नार्थः क्ङिद्ग्रहणेनेति । अत एव ज्यादादीयस इत्यसाङ्गवृत्तपरिभाषाज्ञापकत्वं सङ्गच्छते ।

(षकारप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

अथ किमर्थः षकारः ॥

(समाधानभाष्यम्)

विशेषणार्थः । क विशेषणार्थेनार्थः ? । "वा क्यषः" इति । "वा याद्" इति ह्युच्यमाने पाश्या अत्रापि प्रसज्येत ॥

(प्रदीपः) इदानीं षकारप्रत्याख्यानाय विचारः क्रियते—अथ किमर्थ इति ॥ पाश्येति । पाशादिभ्यो यः इति समूहे यप्रत्ययः । वायादिति सूत्रं विध्यर्थं मन्यते । टापि कृते एकादेशस्यान्तवद्भावाद्यप्रत्ययान्तमेतत् ॥

१ असूयादिकमित्यर्थः । (र. ना.)

२ अत्र उरुया धृष्णुयेत्यत्र ॥

३ ईयस ईकारलोपेन अकृदिति ज्यशब्दाकारस्य दीर्घेण चेष्टसिद्धौ आकारविधानस्येत्यर्थः । (र. ना.)

४ 'अतोऽपि' बहुत्रोपलभ्यते ॥

५ लकारस्थानिकपरस्मैपदविधानार्थमित्यर्थः । नियमार्थमिति तु तत्त्वम् । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( समाधानबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । परस्मैपदमित्युच्यते । न चात्र परस्मैपदं नाप्यात्मनेपदं पश्यामः ॥

( समाधानान्तरभाष्यम् )

सामान्यग्रहणाविघातार्थस्तर्हि ॥

क्व सामान्यग्रहणाविघातार्थेनार्थः ? ।

"क्याच् छन्दसि" इति ॥

( ककारप्रत्याख्यानभाष्यम् )

"यँाच् छन्दसि" इत्येवं च तद्वक्तव्यम् । चुरण्युः तुरण्युर्भुरण्युरित्येवमर्थम् ।

( प्रदीपः ) नैतदस्तीति । सामान्यविहितानामात्मनेपदपरस्मैपदानां नियमार्थं प्रकरणमित्यदोषः ॥

( उद्योतः ) नियमार्थमिति । ननु नियमार्थत्वेऽपि पाश्या सम्यादिशब्देभ्य आचारक्विबन्तेभ्यः पक्षे तङ् स्यात् तद्व्यावृत्त्यर्थं षकारोच्चारणमिति चेन्न । एतद्भाष्यप्रामाण्येन मूलभूतानुबन्धमन्यद्वा निमित्तमादायाचारक्विबन्ते एतत्प्रकरणाप्रवृत्तेः ॥ अनभिधानादीदृशे विषये आचारक्विपोऽभाव एवेत्यन्ये ॥

( आदिशब्दप्रत्याख्यानाधिकरणम् )

( १७४८ आदिशब्दप्रत्याख्यानवार्तिकम् ॥ १ ॥ )

॥*॥ लोहितडाज्भ्यः क्यष्वचनम् ॥*॥

(भाष्यम्) लोहितडाज्भ्यः क्यष् वक्तव्यः । लोहितायति लोहितायते । [ डाच् ] पटपटायति पटपटायते । [ दमदमायति । दमदमायते मटमटायति मटमटायते ] ।

( प्रदीपः ) लोहितडाज्भ्य इति । आदिशब्दप्रत्याख्यानमेतत् ॥ अपठितसंग्रहार्थोप्यादिशब्दो न भवति तस्य वार्तिककारेण दूषितत्वात् ॥ १३ ॥

( आक्षेपभाष्यम् )

अथान्यानि लोहितादीनि ॥

( १७४९ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ भृशादिष्वितराणि ॥ * ॥

( भाष्यम् ) भृशादिष्वितराणि पठितव्यानि । किं प्रयोजनम् ? । ङित इति नित्यमात्मनेपदं यथा स्यात् ॥ लोहितादि ॥ १३ ॥

( उद्योतः ) भाष्ये भृशादिष्वितराणीति । ननु अभूततद्भावे क्यङ्, क्यष् तु तदभावे इति तदभावे पदद्वयार्थमावश्यकमादिग्रहणमिति चेन्न । अत्राप्यच्वेरित्यनुवर्त्यास्यापि अभूततद्भावे एव प्रवृत्तेः । अत एव नित्यात्मनेपदार्थं भृशादिपाठ इत्युक्तम् ॥ अपठितेति । तेन चर्मायति चर्मायते इत्यादिवृत्त्याद्युक्तमसंगतम्, नायं हलन्ताद्विधीयत इति भाष्योक्तेश्चेति बोध्यम् ॥ १३ ॥

—∘∘∘—

१ अत्र पाश्या इत्यादौ ॥

२ "क्याच्" इति तु सर्वथाऽसंबद्धम् ॥

३ क्यषः षकाराभावे तदनुबन्धकग्रहणपरिभाषयाऽस्यैव ग्रहणमत्रस्यान्न तु क्यच इति भावः । ( र. ना. )

( ३९२ क्यङ्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. ६ सूत्रम् )

## ६३१ कष्टाय क्रमणे ॥ ३ । १ । १४ ॥

( निपात्यनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

कष्टायेति किं निपात्यते ॥

( समाधानभाष्यम् )

कष्टशब्दाच्चतुर्थीसमर्थात्क्रमणेऽनार्जवे क्यङ् निपात्यते । कष्टाय कर्मणे क्रामति कष्टायते ॥

( न्यूनताप्रदर्शकभाष्यम् )

अत्यल्पमिदमुच्यते—"कष्टायक्रमणे" इति ॥

( १७५० विवक्षितवार्तिकम् ॥ १ ॥ )

॥ * ॥ सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम् ॥ * ॥

( भाष्यम् ) सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् । सत्र—सत्रायते—सत्र । कक्ष—कक्षायते कक्ष । कष्ट—कष्टायते कष्ट । कृच्छ्र—कृच्छ्रायते—कृच्छ्र । गहन—गहनायते—गहन ॥

( मतान्तरभाष्यम् )

अपर आह—

( वार्तिकरूपान्तरम् )

*सत्रादिभ्यश्चतुर्थ्यन्तेभ्यः क्रमणेऽनार्जवे क्यङ् वक्तव्यः* ।

तान्येवोदाहरणानि ।

( प्रदीपः ) कष्टाय ॥ १४ ॥ कष्टायेति किं निपात्यत इति । विधावनार्जवमेव क्रमणमिति विशेषो न लभ्यत इति क्रमणविशेषलाभाय निपातनाश्रयणम् ॥ सत्रेति । सत्रादयोत्र वृत्तिविषये पापपर्यायाः ॥ कण्वं पापमुच्यते ॥

( उद्योतः ) कष्टाय क्र ॥ १४ ॥ कष्टशब्दाच्चतुर्थ्यन्तात्क्रमणेर्थे क्यङित्यर्थे विशेषो न लभ्यते तदर्थं निपातनमित्याह—विधाविति । भाष्ये । क्रमणेनार्जव इति । यद्यत्र अनार्जवमेव क्रमणशब्दार्थस्तदा कष्टाय कर्मणे कुटिलो भवति इत्यर्थः स्यात् । न चायमर्थः कष्टायत इत्यतो गम्यते । किं च सत्रादिभ्य इति किमर्थम्? कुटिलायानुवाकाय क्रामतीत्युदाहरणे कुटिलायेत्यस्य वैयर्थ्यापत्तिः । किं च चतुर्थ्यन्तेभ्य इति किमर्थम्? अनार्जवयुक्तं पन्थानं गच्छतीत्यर्थकम् अजः कष्टं क्रामतीत्युदाहरणं भाष्ये दत्तमसंगतं स्यात् ॥ अनार्जवरूपे क्रमणेऽवृत्तेर्दर्शकविकलत्वात् । तस्मादनार्जवे इत्यस्यानृजुविषये क्रमणे इत्यर्थः । स्वार्थिकाणन्तार्जव-

४-५ प्राचीनपुस्तकेषु नैवोपलभ्यते ॥

६ अपठितानीत्यर्थः । ( र. ना. )

७ कष्टायेति क्यङ्प्रत्ययान्तानुकरणमिति मत्वा प्रश्नः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शब्देन नञ्तत्पुरुषः। एवं चानृजौ वर्तमानात् कष्टशब्दात्क्रमणेऽर्थे क्यङित्यर्थः फलति। कष्टाय कर्मणे क्रामतीत्यस्य च कष्टम् अनृजु कर्म कर्तुं गच्छतीत्यर्थः। अनृजुं च पापम् तेन पापार्थककष्टशब्दात्प्रत्यय इत्यर्थलाभार्थं निपातनम्। तेन दुःखपर्यायाद्दुःखमनुभवितुं क्रामतीत्यर्थे न, एतदेव ध्वनयता कष्टाय कर्मणे इति कर्मपदं प्रयुक्तम्। अत एव सत्राद्यर्थव्याख्यानोत्तरं 'अत्यल्पमिदमुच्यते कष्टाय क्रमण इति। सत्रादिभ्यः कण्वचिकीर्षायामिति वक्तव्यम्' इत्युत्तरभाष्यं सङ्गच्छते। पापचिकीर्षायां गम्यमानायामित्यर्थः। न च चिकीर्षोत्साह एव तस्या गम्यत्वे क्रामतीति परस्मैपदप्रयोगानुपपत्तिः। गमनरूपक्रमणपदार्थेनोत्साहस्य गम्यत्वेऽपि क्रमेस्तदर्थत्वाभावात्। नन्वेवं तु वृत्तिसर्गेत्यादौ क्रमोत्साहार्थत्वमेवाश्रित्य चिकीर्षाया एवोत्साहरूपायाः प्रत्ययार्थत्वमाश्रित्य क्रमते इत्यात्मने पदं प्रयुक्तं तद्भाष्यविरुद्धम्॥ अनार्जवमेव क्रमणमिति अनृजुविषयकमेव क्रमणमित्यर्थः। तद्ध्वनयन्वक्ष्यति—अनार्जवयुक्तं पन्थानं गच्छतीत्यर्थं इति॥ अपर आहेत्यनेन च परस्परं वाक्यानां व्याख्येयव्याख्यानभावो गम्यते इति न कश्चिद्विरोधः॥

(आक्षेपभाष्यम्)

**सत्रादिभ्य इति किमर्थम्?।**

(समाधानभाष्यम्)

**कुटिलाय अनुवाकाय क्रामति॥**

(प्रदीपः) **कुटिलायेति।** दुरध्येयत्वादनुवाकस्यानार्जवमस्तीति भावः

(आक्षेपभाष्यम्)

**चतुर्थ्यन्तेभ्य इति किमर्थम्?।**

**अजः कष्टं क्रामति।**

(प्रदीपः) **अज इति।** अनार्जवयुक्तं पन्थानं गच्छतीत्यर्थः॥

(अनुयोगभाष्यम्)

**तर्हि वक्तव्यम्।**

(सिद्धान्तिभाष्यम्)

**न वक्तव्यम्। नेदं प्रत्ययान्तनिपातनम्॥ किं तर्हि?। तादर्थ्ये एषा चतुर्थी—कष्टाय यत् प्रातिपदिकम्=कष्टार्थं यत्प्रातिपदिकमिति॥ कष्टाय॥१४॥**

(प्रदीपः) **कष्टाय यदिति।** कष्टलक्षणार्थप्रतिपादनाय यत् प्रातिपदिकं प्रयुज्यते तस्मात् क्रमणेऽर्थे क्यङ् भवतीत्यर्थः। क्रमणविशेषस्त्वानार्जवमभिधानशक्तिस्वाभाव्याल्लभ्यते। व्यवस्थितविभाषाविज्ञानाच्च पापादिभ्योऽतिप्रसङ्गाभावः॥ १४॥

(उद्योतः) **व्यवस्थितेनेति।** अनभिधानादिति तत्त्वम्॥१४॥



(३९३ क्यङ्प्रत्ययविधिसूत्रम् ॥ ३।१।३ आ. ७ सूत्रम्)

## ६३२ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः॥ ३।१।१५॥

(रोमन्थपदार्थनिर्णयाधिकरणम्)

(आक्षेपभाष्यम्)

**रोमन्थ इत्युच्यते। कोयं रोमन्थो नाम?।**

(प्रदीपः) **कर्मणो॥ १५॥ उद्गीर्णस्येति।** मुखप्रदेश आकृष्टस्येत्यर्थः॥ **अवगीर्णस्येति।** अपानप्रदेशान्निःसृतस्येत्यर्थः॥

(उद्योतः) **कर्मणो॥ १५॥** भाष्येऽवगीर्णस्य वा मन्थ इति। मन्थो मन्थनम् तच्चोद्गीर्णस्य चर्वणम्। अन्यस्याशनरूपम्॥

(समाधानभाष्यम्)

**उद्गीर्णस्य वावगीर्णस्य वा मन्थो रोमन्थः। यद्येवं।**

(१७५१ वार्तिकम्॥ १॥)

**॥ * ॥ हनुचलने ॥ * ॥**

(भाष्यम्) **"हनुचलन" इति वक्तव्यम्। इह मा भूत्—कीटो रोमन्थं वर्तयतीति॥**

(प्रदीपः) **हनुचलन इति।** हनुचलनसहचरितं चर्वितस्य मुखप्रदेश आकृष्य यच्चर्वणं तत्र यथा स्यादित्यर्थः॥ **कीट इति।** अपानप्रदेशान्निःसृतमश्नातीत्यर्थः॥

(उद्योतः) **हनुचलन** इत्युक्त्या उद्गीर्णविषये एव प्रयोगः। तदुपपादयति—सहचरितमिति। अश्नातीत्यर्थं इति॥ वर्तुलं करोतीत्यर्थं इत्यन्ये॥

(अनुयोगभाष्यम्)

**तर्हि वक्तव्यम्।**

(१७५२ समाधानवार्तिकम्॥ २॥)

**॥ * ॥ न वानभिधानात्॥ * ॥**

(भाष्यम्) **न वा वक्तव्यम्॥ कस्मान्न भवति कीटो रोमन्थं वर्तयतीति?। अनभिधानात्॥**

(प्रदीपः) **अनभिधानादिति।** रोमन्थायत इति क्यङन्तेन लौकिके प्रयोगे चर्वितचर्वणस्यैवाभिधानं न त्वर्थान्तरस्येत्यर्थः॥ १५॥

(उद्योतः) **न तु इति।** एवं च तत्र प्रयोगाभावात्किं तन्निवृत्त्यर्थेन यत्नेनेति भावः॥ १५॥

(१७५३ न्यूनतावार्तिकम्॥ ३॥)

**॥ * ॥ तपसः परस्मैपदं च॥ * ॥**

(भाष्यम्) **तपसः परस्मैपदं चेति वक्तव्यम्। तपश्चरति तपस्यति॥**

---

१ भाष्ये—कष्टाय कर्मणे क्रामतीति परस्मैपदप्रयोगादिति भावः। (र. ना.)
२ पूर्ववाक्यस्य व्याख्येयत्वमस्य च व्याख्यानत्वमिति भावः। (र. ना.)
३ लक्षणशब्दः स्वरूपार्थकः। (र. ना.)
४ अन्यस्य अवगीर्णस्येत्यर्थः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( आक्षेपभाष्यम् )

कथं 'तपस्यते लोकजिगीषुरग्रेः'[1] ॥

( समाधानभाष्यम् )

छान्दसत्वाद् भविष्यति ॥ कर्मणो ॥ १५ ॥

( ३९४ क्यङ्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. ८ सूत्रम् )

## ६३३ बाष्पोष्मभ्यामुद्वमने ॥ ३।१।१६ ॥

( १७५४ न्यूनतापूरकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ फेनाच्च ॥ * ॥

( भाष्यम् ) फेनाच्चेति वक्तव्यम् । फेनायते । वाष्पो ॥ १६ ॥

( ३९५ क्यङ्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. ९ सूत्रम् )

## ६३४ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ ३ । १ । १७ ॥

( १७५५ न्यूनतापूरकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणम् ॥ * ॥

( भाष्यम् ) अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम् । अटा—अटायते । अट्टा—अट्टायते । शीका—शीकायते । कोटा—कोटायते । पोटा—पोटायते । सोटा—सोटायते । प्रुष्टा—प्रुष्टायते । प्लुष्टा—प्लुष्टायते ॥

( १७५६ न्यूनतापूरकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सुदिनदुर्दिनाभ्यां च ॥ * ॥

( भाष्यम् ) सुदिनदुर्दिनाभ्यां चेति वक्तव्यम् । सुदिनायते । दुर्दिनायते ॥

( १७५७ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ नीहाराच्च ॥ * ॥

(भाष्यम्) नीहाराच्चेति वक्तव्यम् । नीहारायते ॥ शब्दवैर ॥ १७ ॥

( ३९६ क्यङ्प्रत्ययविधिसूत्रम् ॥ ३ । १ । २ आ. ९ सूत्रम् )

## ६३५ सुखादिभ्यः कर्तृवेदनायाम् ॥ ३ । १ । १८ ॥

( कर्तृवेदनापदार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

कर्तृवेदनायामिति किमर्थम् ? ।

( समाधानभाष्यम् )

इह मा भूत् । सुखं वेदयते प्रसाधको देवदत्तस्य ॥

( समाधानबाधकभाष्यम् )

कर्तृवेदनायामित्युच्यमानेपि अत्र प्राप्नोति । किं कारणम् ? । कर्तुरितीयं कर्तरि षष्ठी । वेदनायामिति चाणो भावे । स यथैवात्मनो वेदयते । अथापि परस्य । कर्तृवेदनैवासौ भवति ॥

( प्रदीपः ) सुखादिभ्यः ॥ १८ ॥ किं तर्हीति । वेदनायाः कर्तारमन्तरेणाभावात् कर्तृग्रहणसामर्थ्यात् सुखादीनि विशेष्यन्ते । कर्तृग्रहणं च सुपां सुलुगिति, षष्ठीलुका निर्दिष्टम् । ततश्च वेदयिता यदात्मसंबन्धीनि सुखादीनि वेदयते तदा प्रत्ययो नान्यदीयसुखादिवेदने ॥ १८ ॥

( उद्योतः ) सुखादिभ्यः ॥ १८ ॥ भाष्ये सुखं वेदयत इति । सुखप्रसादादिना देवदत्तस्य सुखं प्रसाधको वेदयत इत्यन्वयः ।

( समाधानसाधकभाष्यम् )

न कर्तृग्रहणेन वेदनाभिसंबध्यते । किं तर्हि ? । सुखादीन्यभिसंबध्यन्ते कर्तुर्यानि सुखादीनीति ॥ सुखादिभ्यः ॥ १८ ॥

( उद्योतः ) यद्यप्यन्तरङ्गत्वात्कारकत्वेन वेदनायामन्वयो न्याय्यः तथापि सामर्थ्यात्सुखादिभिरन्वय इत्याह—वेदनाया इति ॥ समस्तस्यान्यत्रान्वयासंभवदाह—सुपां सुलुगिति ॥ वेदना शब्दे 'विद' चेतनेति चौरादिकण्यन्तात् ण्यासश्रन्थेति युच् ॥ नान्यदीयेति । सुखप्रसादादिना लिङ्गेनेति भावः ॥ १८ ॥

( ३९७ क्यच्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. १० सूत्रम् )

## ६३६ नमोवरिवश्चित्रङः क्यच् ॥ ३ । १ । १९ ॥

( वृत्तिघटकनमःशब्दयोगे द्वितीयोपपत्त्यधिकरणम् )

( १७५८ द्वितीयानुपपत्तिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ नमसः क्यचि द्वितीयानुपपत्तिः ॥ * ॥

( भाष्यम् ) नमसः क्यचि द्वितीया नोपपद्यते ।

---

1 अग्नेरिति लोकान्वयि । ( र. ना. )

2 'अन' इति । 'ण्यासश्रन्थो युच्' "घट्टिवन्दिविदिभ्यश्च" इत्यौपसंख्यानिको वा ॥' इति पदमञ्जरी ॥ 'आत्मनः' इति शोधने तु भावः शोधकैरेव ज्ञायते ॥

3 सुखमिति शेषः । ( र. ना. )

4 'दीन्यनुसंबध्यन्ते' इति तु बहुत्रोपलभ्यते ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नमस्यति देवानिति ॥ किं कारणम् ? । नमःशब्देन योगे चतुर्थी विधीयते सा प्राप्नोति ॥

( १७५९ चतुर्थीप्राप्त्यभाववार्तिकम् ॥ २ ॥ )

॥ * ॥ प्रकृत्यन्तरत्वात् सिद्धम् ॥ * ॥

( भाष्यम् ) नमःशब्देन योगे चतुर्थी विधीयते । नमस्यतिशब्दश्चायम् ॥

(प्रदीपः) नमोवरिव ॥ १९ ॥ प्रकृत्यन्तरत्वादिति । नमस्येति धातुं व्युत्पादयितुं निपातनमःशब्दसदृशशब्दान्तरावयवकल्पना क्रियते । परमार्थतस्तु अविद्यमानावयवार्थो नमस्यशब्दः पूजावाची प्रकृत्यन्तरमित्यर्थः ॥

( उद्द्योतः ) नमो वरि ॥ १९ ॥ नमस्यशब्दस्य प्रकृत्यन्तरत्वेऽपि नमःशब्दात्प्रत्ययो विधानेन तद्योगे चतुर्थी स्यादत आह—नमस्येतीति ॥

( चतुर्थीप्राप्तिसाधकभाष्यम् )

ननु च नमस्यतिशब्दे नमःशब्दोस्ति । तेन योगे प्राप्नोति ॥

( प्रदीपः ) ननु चेति । स एवायमिति प्रत्यभिज्ञानान्निपात एवायमिति भावः ॥

( उद्द्योतः ) निपात एवेति । अव्ययत्वोपलक्षणमेतत् । अन्यथा साक्षात्प्रभृतीनीत्यनेन कृञ्योग एव च्व्यर्थे एव च निपातत्वविधानादत्र तदभावेनासंगतिः स्यात् ॥

( चतुर्थीप्राप्तिबाधकभाष्यम् )

नैष दोषः । अर्थवतो नमःशब्दस्य ग्रहणम् । न च नमस्यतिशब्दे नमःशब्दोर्थवान् ॥

( प्रदीपः ) अर्थवत इति । नमस्यशब्दस्य समुदायस्यैवार्थवत्त्वादिति भावः ॥

( उद्द्योतः ) अर्थवत्त्वादिति । अस्य शुद्धरूढत्वेन वृत्तेर्जहत्स्वार्थत्वादिति भावः ॥

( एकदेशिसमाधानभाष्यम् )

अथ वा-'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति द्वितीया विभक्तिर्भविष्यति ॥

अथ वेति ।

( प्रदीपः ) अर्थवत्ताभ्युपगमेन नमस्कारेण पूजयतीत्यर्थाङ्गीकारेण परिहारान्तरम् । चतुर्थ्यास्तु नमोस्तु देवेभ्य इत्यादिरवकाशः । नमस्करोमि नारायणमित्यत्रापि कारकविभक्तिरेव भवति ॥

( उद्द्योतः ) इत्यर्थाङ्गीकारेणेति । अनेनैतत्सूचयति—'नायमर्थोऽतः प्रतीयते, किं तु वरिवस्याशब्दादिभ्यः सपर्यादिमात्रप्रतीतिवदस्मात्पूजामात्रप्रतीतिरित्यर्थः एव समाधिरत्र युक्तः अयं त्वेकदेशिन इति ॥

( प्रत्ययार्थनिर्देशाधिकरणम् )

( १७६० न्यूनतापूरकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ क्यजादिषु प्रत्ययार्थनिर्देशः ॥ * ॥

( भाष्यम् ) क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः । नमसः पूजायाम् । वरिवसः सपर्यायाम् । चित्रङ आश्चर्ये । भाण्डात्समाचयने । चीवरादर्जने परिधाने च । पुच्छादुदसने व्यसने पर्यसने चेति । किं प्रयोजनम् ? । क्रियावचनता यथा स्यात् ॥

( प्रदीपः ) क्यजादिष्विति । करणग्रहणस्य वेदनाग्रहणेन व्यवधानादनधिकारे स्वार्थे प्रत्ययप्रसङ्ग इति वचनम् ॥ वरिवस इति । सपर्या सेवा । परिचर्यायामिति पाठान्तरम् ॥

( उद्द्योतः ) करणपदानुवृत्त्या क्रियासामान्ये विधावपि प्रयोगवशादेव तद्विशेषप्रतीतिर्भविष्यतीति किमेतैरित्यत आह—करणग्रहणस्येति ॥

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—'क्रियावचनाः क्यजादयः' इति । यदयं "सनाद्यन्ता धातवः" इति धातुसंज्ञां शास्ति ॥ कथं कृत्वा ज्ञापकम् ? । धातुसंज्ञावचन एतत्प्रयोजनं "धातोः" इति तव्यदादीनामुत्पत्तिर्यथा स्यात् । यदि चात्र क्रियावचनता न स्याद् धातुसंज्ञावचनमनर्थकं स्यात् । सत्यामपि धातुसंज्ञायां तव्यदादयो न स्युः । किं कारणम् ? । साधने तव्यदादयो विधीयन्ते । साधनं च क्रियायाः । क्रियाया अभावात्साधनाभावः । साधनाभावात्सत्यामपि धातुसंज्ञायां तव्यदादयो न स्युः । पश्यति त्वाचार्यः 'क्रियावचनाः क्यजादयः' इति, ततः "सनाद्यन्ता धातवः" इति धातुसंज्ञां शास्ति ॥

( उद्द्योतः ) भाष्ये—साधने तव्यदादय इति । भावोऽपि क्रियारूप एवेति भावः ॥

( प्रयोजनान्तरभाष्यम् )

ननु चेदं प्रयोजनं स्यात् परसाधने तव्यदादीनामुत्पत्तिं वक्ष्यामीति ॥

---

१ समभिव्याहृतपदान्तरसमभिव्याहारनिमित्तकत्वेन बहिरङ्गायाश्चतुर्थीतः प्रातिपदिकार्थपञ्चकान्तर्गतस्वार्थकारकनिमित्तिकायाः कारकविभक्तेर्द्वितीयायाः प्रबलत्वादिति भावः ॥

२ आद्य एवेति । 'अर्थवद्ग्रहणे नानर्थकस्य' इति परिभाषया वृत्तावेकार्थीभावस्वीकारसिद्धान्ते तद्घटकावयवानामनर्थकत्वेन नैव तद्योगे चतुर्थी प्राप्तिरिति बोध्यम् । अत एव स्वयंभुवे नमस्कृत्य इत्यादौ 'अनुकूलयितुम्' इत्यध्याहृत तद्योगे चतुर्थी साधिता ॥ तुमुनन्तस्याध्याहाराभावे तु चतुर्थी प्राप्तिरेव नेति द्वितीयैव भवति । एकार्थीभूत क्रियाकर्मत्वादिति भावः ॥

३ समाचयनं राशीकरणम् । ( र. ना. )

४ क्यजाद्यन्तादन्यस्याः क्रियायाः साधने इत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रदीपः) परसाधन इति । शब्दान्तरवाच्यायां क्रियायां यत्कर्मादि कारकं तत्र तव्यादीनां वृक्षं पश्येत्यादौ द्वितीयादीनामिव स्वार्थिकत्वाद् द्रव्यवाचित्वेपि क्यजाद्यन्तानामुत्पत्तिः स्यादेवेति भावः ।

(उद्द्योतः) शब्दान्तरेति । स्वार्थिकत्वात्क्यजाद्यन्तानां द्रव्यवाचित्वेऽपि शब्दान्तरवाच्यक्रियाकारके तव्यादीनामुत्पत्तिः स्यादेवेत्यन्वयः ॥ तत्र दृष्टान्तो वृक्षमित्यादि ॥

(प्रयोजनान्तरनिराकरणभाष्यम्)

**न परसाधने उत्पत्त्या भवितव्यम् । किं कारणम् ? । साधनइति संबन्धिशब्दोयम् । संबन्धिशब्दाश्च पुनरेवमात्मका यदुत संबन्धिनमाक्षिपन्ति । तद्यथा—मातरि वर्तितव्यं पितरि शुश्रूषितव्यमिति । न चोच्यते—स्वस्यां मातरि स्वस्मिन् पितरीति । संबन्धाच्चैतद् गम्यते—या यस्य माता, यश्च यस्य पितेति । एवमिहापि संबन्धादेतद् गन्तव्यम्—यस्य धातोर्यत् साधनमिति ॥**

(प्रदीपः) न परसाधन इति । द्वितीयादीनां प्रातिपदिकाद्विधानात् तस्य च, द्रव्यवचनत्वाद्वचनप्रामाण्यात् परसाधन उत्पत्तिर्भवति । तव्यादयस्तु धात्वन्तरेषु क्रियावाचिषु स्वसाधने सावकाशाः परसाधने नोत्पद्यन्त इत्यर्थः ॥

(उद्द्योतः) तव्यादयस्त्विति । एवं च धातुसंज्ञाविधानमेवैषां क्रियावाचकत्वे मानमिति भावः ॥

(प्रत्ययार्थनिर्देशवैयर्थ्यभाष्यम्)

**अथ वा धातव एव क्यजादयः ॥**

(आक्षेपभाष्यम्)

**न चैव ह्यर्था आदिश्यन्ते ॥**

(उत्तरभाष्यम्)

**क्रियावचनता च गम्यते । कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोति येनैव खल्वपि हेतुना पचादयः क्रियावचनाः, तेनैव क्यजादयोपि । एवमर्थं खल्वप्याचार्यश्चित्रयति क्वचिदर्थानादिशति, क्वचिन्नेति ॥**

(प्रदीपः) अथ वेति । अभिधानशक्तिस्वाभाव्यादन्तरेणाप्यर्थादेशनं विशिष्टक्रियावचनत्वस्य सिद्धत्वादित्यर्थः ॥ चित्रयतीति । चित्रवैचित्र्यकरण इति चौरादिकस्य रूपम् अनेकमार्गमाश्रयतीत्यर्थः ॥

(उद्द्योतः) भाष्ये—अथवा धातव एवेति । क्रियावचना एवेत्यर्थः ॥ कः खल्वपीति । पचादीनामर्थरहितानामेव पाठात् ॥ क्वचिदर्थानिति । अनेकान् क्वचित्त्वेकमित्यर्थः ॥ क्वचिन्नेति । एकमपि नादिशतीत्यर्थः ॥

(अर्थादेशावश्यकताभाष्यम्)

**एवमप्यर्थादेशनं कर्तव्यम् । कथमिमे अबुधा बोध्येरन्निति ॥**

(अर्थादेशवैयर्थ्यभाष्यम्)

**अथ वा शक्यमेवार्थादेशनमकर्तुम् । कथम् ? । 'करणे' इति वर्तते । करणं च करोतेरर्थः । करोतिश्च क्रियासामान्ये वर्तते ॥ नमो वरि ॥ १९ ॥**

क्रियासामान्यइति । सामान्येन च विशेषाणामाक्षेपात्कश्चित् प्रत्ययः क्वचिद्विशेषे भवतीत्यर्थः । न च वेदनग्रहणेन करणस्य विच्छेदः, तयोर्विरोधाभावात् ॥ १९ ॥

(उद्द्योतः) एवमप्यर्थादेशनमिति । नमसः पूजायामित्यादिः ॥ बोध्येरन्निति । निवृत्तप्रेषणात्स्वार्थे णिच् । बुध्येरन्निलेव क्वचित्पाठः ॥ १९ ॥

(३९८ णिच्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. ११ सूत्रम्)

## ६३८ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ ३।१।२० ॥

(अनुयोगभाष्यम्)

**इमौ हलिकली स्तः इकारान्तौ-[हलिः कलिः] । अस्ति हलशब्दः कलशब्दश्चाकारान्तः । कयोरिदं ग्रहणम् ? ।**

(प्रदीपः) मुण्डमिश्र ॥२१॥ कयोरिदं ग्रहणमिति । किमिकारान्तयोः कृताच्त्वयोर्ग्रहणमुताकारान्तयोरेवेति प्रश्नः ॥

(उद्द्योतः) मुण्डमिश्र ॥ २१ ॥ निर्देशादेवाकारान्तनिर्णयेन प्रश्नानुपपत्तिरत आह—किमिकारेति । भाष्ये इमाविति । समीनार्थावित्यर्थः ॥

(समाधानभाष्यम्)

**याविकारान्तौ तयोरत्वं निपात्यते ॥**

(उद्द्योतः) यद्यप्यकारान्तयोरेव ग्रहणेऽपि तयोर्नियमार्थत्वादिकारान्ताभ्यां णिजभावेन सर्वदोषपरिहारोस्ति तथाप्येकदेश्याह—भाष्ये याविति ॥ नियमश्च—एतत्सजातीयानुपूर्वीकानामेतदर्थकानां चेद्धलकलयोरेवेति ॥ प्रकारान्तरेणाप्येकदेश्युक्तिस्वमसानुपदं वक्ष्यते ॥

१ 'भविष्यति' ॥

२ क्यजाद्यन्तान्यधातुष्वित्यर्थः । (र. ना.)

३ अर्थरहितानामिति । पाणिनिना 'स्वेध स्पर्धे—' इत्येवं धातुपाठः कृतः । अर्थनिर्देशस्तु पाश्चात्योऽर्वाचीनः । अत एव—भूवादिसूत्रे "परिमाणग्रहणं च" इति वार्तिकम् 'परिमाणग्रहणं च कर्तव्यम्—इयानवधिर्धातुसंज्ञो भवतीति वक्तव्यम् । कुतो ह्येतत्—भूशब्दो धातुसंज्ञो भविष्यति न पुनर्'स्वेध' शब्दः' इति इति भाष्यं च संगच्छते ॥

४ 'करणे' इत्यनुवृत्तौ चिकीर्षितायां मध्ये 'कर्तृवेदनायाम्' इति वेदनाशब्देन व्यवधानशङ्का न कार्येति भावः ॥

५ 'स्तः' इति सविसर्गलेखः सर्वत्र दृश्यते तत्संगतये 'असंहितया निर्देशः' 'इयुकः किति' इत्यत्रैव ज्ञेयः इति बोध्यम् ॥

६ कोष्ठकान्तर्गतो बहुत्र नोपलभ्यते ॥

७ अकारान्ताभ्यामित्यादिः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रश्नभाष्यम् )

**किं प्रयोजनम् ? ।**

( प्रदीपः ) किंप्रयोजनमिति । हलि कलि इत्येव कस्मान्न क्रियत इत्यर्थः ॥

( १७६१ अत्वनिपातनप्रयोजनवार्त्तिकम् ॥ १ ॥ )

## ॥ * ॥ हलिकल्योरत्त्वनिपातनं सन्वद्भावप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) हलिकल्योरत्त्वनिपातनं क्रियते सन्वद्भावो मा भूदिति । अजहलद् अचकलत् ॥

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम् । इकारलोपे कृते 'अग्लोपिनां नेति प्रतिषेधो भविष्यति ।

( प्रयोजनसाधकभाष्यम् )

वृद्धौ कृतायां लोपः तत्राग्लोप्यङ्गं भवति । इदमिह संप्रधार्यम्—वृद्धिः क्रियताम्, लोप इति । किमत्र कर्तव्यम् ? । परत्वाद् वृद्धिः ॥

नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोति, अकृतायामपि [प्राप्नोति] ॥

वृद्धिरपि नित्या । कृतेपि लोपे प्राप्नोति, अकृतेपि ॥

अनित्यो लोपः । अन्यस्य कृतायां वृद्धौ प्राप्नोति, अन्यस्याकृतायाम् । 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति' ॥

वृद्धिरप्यनित्या । अन्यस्य कृते लोपे प्राप्नोति, अन्यस्याकृते । 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति' । उभयोरनित्ययोः परत्वाद् वृद्धिः । वृद्धौ कृतायां लोपः, तत्राग्लोप्यङ्गं भवति ॥

अत्त्वे पुनः सति वृद्धिः क्रियतां लोप इति । यद्यपि परत्वाद् वृद्धिः, वृद्धावपि कृतायामगेव लुप्यते । तस्मात्सूच्यते—हलिकल्योरत्त्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति ॥ मुण्डमिश्र ॥ २१ ॥

( प्रदीपः ) शब्दान्तरस्य चेति । यद्यपि वृद्धौ कृतायामपि लोपस्य प्रवृत्तिस्तथापि[3] वाचनिकं तस्यानित्यत्वम् । अथ वा अन्यस्य प्रवृत्तावप्यन्यस्य स्थानिनोऽप्रवृत्त्या लोपस्यानित्यत्वम् ॥ अन्यस्य कृते लोप इति । अत उपधाया इत्यनेनाकारस्येत्यर्थः ॥ ननु लोपस्य स्थानिवद्भावात्कथमकारस्य प्राप्नोति ॥ नैष दोषः । प्राप्तौ सत्यां स्थानिवद्भावेन प्रतिबन्धः क्रियते । पूर्वस्य विधौ स्थानिवद्भावविधानात् । अप्राप्तौ तु पूर्वविध्यभावात् स्थानिवद्भाव एव न स्यात् ॥ यद्यपि भिन्नलक्षणा भिन्नस्वभावा च वृद्धिस्तथापि वृद्धिशब्दवाच्यत्वादभेदमाश्रित्य शब्दान्तरप्राप्त्या वृद्धेरनित्यत्वं कथितम् । तत्त्वतस्तु लोपे कृते वृद्धेरप्राप्त्याऽनित्यत्वं वक्तव्यम् । न्यायव्युत्पादनाय त्वन्यथाभिहितम् ॥ सूत्रं चेदं प्रातिपदिकाद्धात्वर्थे[5] इति णिचि सिद्धे प्रपञ्चार्थमित्याहुः ॥ न च तत्करोतीत्यादिना तत्र धात्वर्थनियमः क्रियते । राजानमतिक्रान्तवानत्यरराजदित्यादावपि णिचो दर्शनात् । मुण्डं करोति माणवकमित्यादौ सापेक्षेभ्योपि णिजर्थं[6] वा ॥ २१ ॥

( उद्द्योतः ) भाष्ये वृद्धिरपि नित्येति । कार्यमात्रं[7] नित्यमिति भावः ॥ वाचनिकमिति । शब्दान्तरस्येति वचनमिति भावः ॥ वस्तुतस्तदपि न्यायसिद्धमित्याह—अथ वेति ॥ प्राप्तौ सत्यामिति । अत्र तूभयोरनित्ययोः[8] परत्वादन्त्यस्यैव वृद्धिर्नतूपधाकारस्येति भावः ॥ तदनाश्रयापि[9] समाहितमित्यत्र तात्पर्यम् ॥ ननु पूर्वमन्त्यवृद्धिप्राप्तावपि लोपे उपधावृद्धिप्राप्तिरिति नैकस्या अनित्यत्वमिति शङ्कते—यद्यपीति ॥ भिन्नस्वभावेति भिन्नस्थानिकेत्यर्थः । वस्तुतोऽचोञ्णितीत्यस्य लोपेन बाधेऽपि अत उपधाया इत्यस्याप्रवृत्तिरेव स्थानिवत्त्वेन वाच्या । अचोञ्णितीत्यस्य चानित्यत्वं लोपे कृतेऽप्राप्त्यैवेत्याशयेनाह—तत्त्वतस्त्विति । न्यायेति । पूर्वोक्तेत्यर्थः ॥ परे त्विदं भाष्यमेकदेश्युक्तिः । भिन्नलक्षणया भिन्नस्थानिकाया वृद्धेर्नित्यत्वोक्तेः सिद्धान्त्युक्तित्वाभावात् ॥ कृते लोपे स्थानिवद्भावेन वृद्धेरप्राप्तेरपि तदुक्तेस्तदुक्तित्वाभावात्[11] । अत एव णौ चङीति सूत्रे लोपस्य शब्दान्तरप्राप्त्या वृद्धेर्लोपोत्तरमप्राप्त्योभयोरनित्ययोः परत्वाद्वृद्धिरित्याशङ्क्य नाग्लोपीति सूत्रेऽग्ग्रहणाद् वृद्धेर्लोपो बलीयानिति सिद्धान्तितम्[12] । तेनात्रत्यस्यैकदेश्युक्तित्वं[13] स्पष्टमेवोक्तम् । इदमेवाभिप्रेत्य सप्तमे कैयट आह—अनाश्रित्य ज्ञापकमत्वनिपातनमुक्तम् । ज्ञापकाश्रयणमेव तु ज्याय इति ॥ प्रातिपदिकाद्धात्वर्थे इति । चुरादिगणसूत्रमिति भावः ॥ तत्करोतीति । हेतुमति चेत्यत्र वार्तिकादिदं गणसूत्रमप्रामाणिकम् । अत एव सत्यापपाशेति सूत्रे पाशादिग्रहणं चरितार्थम् ॥ वार्तिके करोतिर्धात्वर्थमात्रोपलक्षणम् । तेनात्यरराजदित्यादीनां सिद्धिः ॥ सत्यापेति सूत्रेऽनुवृत्तकरण इतिवदित्यन्ये ॥ धात्वर्थे नियम इति । एवं च

---

१ प्राचीने पुस्तकेषु नोपलभ्यते ॥

२ कृताकृतप्रसङ्गित्वेऽपीत्यर्थः । ( र. ना. )

३ वृद्धिप्रवृत्त्यप्रवृत्त्योर्लोपस्य समानस्थानिकत्वाभावेनानित्यत्वमिति भावः । ( र. ना. )

४ शब्दान्तरस्येति न्यायस्य विषयविशेषप्रदर्शनायेत्यर्थः । ( र. ना. )

५ प्रातिपदिकाद् धात्वर्थे इत्यनेनेत्यर्थः । धात्वर्थनियम इति । प्रातिपदिकात्करोत्याचष्टे इत्यर्थद्वये एवणिजित्याकारक इति भावः । ( र. ना. )

६ सूत्रं चेदमिति पूर्वेणान्वेति । ( र. ना. )

७ ननु शास्त्रमित्यर्थः । । ( र. ना. )

८ वृद्ध्योरित्यर्थः । ( र. ना. )

९ वृद्ध्योर्भिन्नत्वमनाश्रित्यापीत्यर्थः ।

१० तथाचोपधावृद्धेरपि न बाधकाबाधितप्रसक्तिरूपा प्राप्तिः अचोञ्णितीत्यस्य च लोपे कृतेऽप्राप्तिरेवेति वृद्धिसामान्यस्यात्रानित्यत्वं सिद्ध्यतीति भावः । (र.ना.)

११ एवं हि तत्रत्यं भाष्यम्—'एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—वृद्धेर्लोपो बलीयान्' इति । यदयम् 'अग्लोपिनां न' इति निषेधं शास्ति' इति ॥

१२ नित्यत्वोक्तेः सिद्धान्त्युक्तित्वाभावादिति भावः । ( र. ना. )

१३ अत्वनिपातनपरभाष्यस्येत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धात्वर्थमात्रे विधानार्थं स्यात् । करणे इति च धात्वर्थमात्रोपलक्षणं स्यात् । अत एव वर्मणी संनह्यति संवर्मयतीत्यादिसिद्धिरिति भावः ॥ सापेक्षेभ्योपीति । अयमभ्युच्चय इति सुप आत्मन इत्यत्र भाष्ये स्पष्टम् ॥ २१ ॥

( ३९९ यङ्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. १२ सूत्रम् )

## ६३९ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ ३ । १ । २१ ॥

( समभिहारशब्दार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**समभिहार इति कोयं शब्दः ? ॥**

( उत्तरभाष्यम् )

**समभिपूर्वाद्धरतेर्भावसाधनो घञ्-समभिहरणं समभिहार इति । तद्यथा—[पुष्पाभिहारः] उत्पलाभिहारः मालाभिहारः [फलाभिहार] इति ॥**

( उत्तरबाधकभाष्यम् )

**विषम उपन्यासः । बह्व्यो हीमाः सुमनसः, तत्र युक्तः समभिहार इति । इह पुनरेका क्रिया ॥**

( उत्तरसाधकभाष्यम् )

**यद्यप्येका सामान्यक्रिया । अवयवक्रियास्तु बह्व्यः । अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणक्रियाः । ताः कश्चित् कार्त्स्न्येन करोति । कश्चिदकार्त्स्न्येन । तत्र यः कार्त्स्न्येन करोति स उच्यते पापच्यत इति । पुनःपुनर्वा पचति पापच्यते इति ॥**

( प्रदीपः ) धातोरेकाचो ॥ २२ ॥ इह समभिहारो नाम मूर्तस्यानेकस्यैककालस्य भवति, धातुवाच्या तु क्रियैकैव युगपदेकेन धातुनानेकस्या अनभिधानात् । सा च निवृत्तभेदा साध्यैकस्वभावत्वाद्धातुना प्रत्याय्यते । अधिश्रयणादीनां च क्रमजन्यत्वाद्युगपदवस्थानाभावाच्च क्रियासमभिहारो न संभवतीति मन्यमानः पृच्छति—समभिहार इति कोयमिति ॥

( उद्द्योतः ) धातोरेका ॥ २२ ॥ इहेति । यथा फलादीनां समभिहारश्चौत्तराधर्यं तेन क्रियाया विशेषणानुपपत्त्या प्रश्न इत्यर्थः । एककालस्येति । एकदेशस्याप्युपलक्षणमेतत् ॥ ननु दिवेर्विजिगीषा क्रीडाद्यनेकार्थत्वदर्शनादाह—युगपदिति ॥ ननु विषयभेदात्कर्तृभेदाच्च पाकादीनां नानात्वेन कथमेकैवेत्यत आह—सा चेति । एतद्व्यङ्ग्यमेव साध्यत्वमित्याह—साध्यैकेति । अत एव भवद्भिरासत इत्यादौ बहुवचनं नेति भावः ॥ अधिश्रयणादीनां नानात्वादाह—अधीति । युगपदिति । उत्पन्नविनाशित्वादिति भावः । अमूर्तत्वाच्चेत्यपि बोध्यम् । भाष्ये कोयमित्यस्य किमर्थकोयमित्यर्थः ॥

( प्रदीपः ) इतरस्तद्बुद्धिपरीक्षार्थं शब्दव्युत्पत्तिमाह—समभिपूर्वादिति ॥

( उद्द्योतः ) मालाभिहारे कर्मधारयः ॥ उत्पलाभिहारे षष्ठीतत्पुरुषः ॥

(प्रदीपः) यद्यप्येकेति । मुख्यस्य समभिहारस्येहासंभवाद् गौण आश्रीयते । बुद्धिगोचरानेकसकलावयवक्रियाप्रातः पौनःपुन्येनानुष्ठीयमानप्रधानक्रियाविषयो वेत्यर्थः ॥ सामान्यक्रियेति । साधारणी समूहरूपा क्रिया धातुवाच्येत्यर्थः ।

यथोक्तं हरिणा—

**गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।**
**बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥**
**समूहश्च तथाभूतः प्रतिभेदं समूहिषु ।**
**समाप्यते ततो भेदे कालभेदस्य संभवः ॥** इति ॥

अथ वा अधिश्रयणादीनां तादर्थ्येन प्रवर्तनाद् गुणत्वादवयवत्वं तस्याश्च साधारणत्वमुच्यते । तदुक्तम्—

**अनन्तरं फलं यस्याः कल्प्यते तां क्रियां विदुः ।**
**प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता ॥**

कार्त्स्न्येनेति । विजातीयाऽव्यवहिता साकल्येनेत्यर्थः ॥

( उद्द्योतः ) बुद्धीति । अनेकासां सकलानां अवयवक्रियाणां बुद्धिविषयत्वेन यौगपद्यमिति भावः । बुद्धौ युगपदवस्थानमत्र समभिहार इति बोध्यम् ॥ प्रधानेति । पौनःपुन्येन तस्या एवानुष्ठानादिति भावः । अत्रापि समभिहारो बौद्ध एवेति बोध्यम् । क्रियाया जातित्वरूपसामान्यत्वासंभवादाह—साधारणीति ॥ सकलावयवसाधारणीत्यर्थः । तदाह—समूहरूपेति ॥ गुणभूतैरिति । क्रमजन्मनाम् अधिश्रयणादीनां बुद्ध्या प्रकल्पितो योऽभेदस्तद्रूपसमूहस्तैरेव गुणभूतैरवयवैः सह क्रियेत्युच्यत इत्यन्वयः ॥ ननु प्रकृतः कटं देवदत्त इत्यादौ कथं भूते क्त इत्यत आह—समूहः

---

१ गणसूत्रमिति शेषः । ( र. ना. )

२ सत्यापेति सूत्रेऽनुवृत्तमिति शेषः । ( र. ना. )

३ क्वापि नोपलभ्यते लिखितपुस्तकेषु ॥

४ व्यत्यासेन पाठ उपलभ्यते ॥

५ नोपलभ्यते लिखितपुस्तकेषु ॥

६ 'बह्व्यस्ताः सुमनसः' ॥

७ 'फलादीनां' ॥

८ दर्शनमत आहेति पाठो भाति । ( र. ना. )

९ धातुव्यङ्ग्यमेवेत्यर्थः । ( र. ना. )

१० धातुना निवृत्तभेद क्रियाया उपस्थानादेवेत्यर्थः । ( र. ना. )

११ 'इतरस्तु बुद्धि' ॥

१२ मालारूपोऽभिहार इति विग्रहः । अभिमुखं ह्रियते प्राप्यते इति कर्मव्युत्पत्त्याभिहार उपदेति भावः ।

१३ उत्पलानामभिहार औत्तराधर्येण समवस्थितिः समाहर इति विग्रहः । (र.ना.)

१४ 'समूहः स तथा' ॥

१५ ननु समूहस्यैकत्वात्कालभेदासंभवेन क्रमासंभवात् पचतीत्यादौ क्रमिकक्रियाप्रतीतिर्नस्यादत आह—समूहश्चेत्यादि । तथाभूत उद्भूतावयवभेदः समूहश्च प्रतिभेदं प्रत्येकं समूहिष्ववयवेषु समाप्यते पर्यवसितो भवति तस्मात्तत्र पूर्वकारिकोक्तरीत्या बुद्धिप्रकल्पिताभेदे सत्यपि व्यापाराणामवयवरूपाणां क्रमिकत्वेन समूहेऽपि कालभेदस्य संभव इति योजना । ( र. ना. )

१६ बहुवचनं "नञ्" सूत्रभाष्यतात्पर्यप्रकाशकस्तग्रन्थविरुद्धमेव कथं कृतमिति चिन्त्यम् ॥

१७ युगपदवस्थानरूप इति शेषः । ( र. ना. )

१८ कर्तुमारब्धवानित्यर्थः । आदिकर्मणि निष्ठा । कथं भूते इति । प्रारब्धे चेत्यपि बोध्यम् । कृधात्वर्थक्रियायाः समूहरूपाया अभिन्नत्वेन क्रमिकत्वसमानाधिकरणप्रारब्धत्वासंभवादिति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स इति ॥ तथाभूत उद्भूतावयवः ॥ समूहिषु अवयवेषु । प्रतिभेदं प्रत्येकम् । अभेद इति । बुद्धिकृताभेदेपीत्यर्थः ॥ तस्याश्चेति । यदव्यवधानेन फलोत्पत्तिस्तस्या इत्यर्थः ॥ अनन्तरमिति । अव्यवधानेन फलोत्पादिकां प्रधानां क्रियामाहुः—अन्यासां तु तादर्थ्यात्तदाख्यता गौणो व्यवहार इत्यर्थः ॥ विजातीयेति । यथा द्रव्याणां द्रव्यान्तरैरव्यवेतानां समभिव्याहारस्तथा क्रियाणामपि क्रियान्तरैरव्यवहितानामेव स इत्यर्थः ॥ पुनः पुनर्वेति भाष्ये समूहरूपायाः क्रियायाः कालभेदाद्भेदेपि साजात्यात्सैव पुनः पुनरनुष्ठीयत इति बुद्ध्या पौनःपुन्यमिति तात्पर्यम् ॥

( धातुग्रहणप्रत्याख्यानाधिकरणम् )

( पूर्वपक्षभाष्यम् )

अथ धातुग्रहणं किमर्थम् ? ।

( प्रदीपः ) अथेति । धातुरेव समभिहारविशिष्टक्रियावाची द्योतकस्तूपसर्गो न तु वाचक इत्यर्थः ।

( उद्द्योतः ) धातुरेवेति । क्रियासमभिव्याहार इत्यस्य समभिह्रियमाणक्रियावाचकादित्यर्थ इति भावः ।

( प्रयोजनभाष्यम् )

इह मा भूत्—प्राटति भृशमिति ।

( प्रदीपः ) प्राटतीति । धातूपसर्गसमुदायस्य क्रियाविशेषावगतिहेतुत्वात्ततो यदि प्रत्ययः स्यात् ततः सोपसर्गस्य द्विर्वचनं प्रसज्येत । प्राटाट्यत इति चेष्यते ॥

( उद्द्योतः ) क्रियाबोधकादित्यर्थोपि संभाव्येतेत्युत्तरम्[1] ।

( प्रत्याख्यानभाष्यम् )

अत उत्तरं पठति—

( १७६२ प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ यङ्विधौ धातुग्रहण उक्तम् ॥ * ॥

( भाष्यम् ) यङ्विधौ धातुग्रहणे उक्तम् । किमुक्तम् ? । तत्र तावदुक्तम्—*कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यं सोपसर्गे कर्मेति चेत्कर्मविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म । सोपसर्गस्य हि कर्मत्वे धात्वधिकारेपि सनो ऽविधानमकर्मत्वात्* इति । एवमिहापि 'क्रियासमभिहारग्रहणाद्यङ्विधौ धातुग्रहणानर्थक्यम् । सोपसर्गः क्रियासमभिहार इति चेत् क्रियासमभिहारविशेषकत्वादुपसर्गस्यानुपसर्गः क्रियासमभिहारः । सोपसर्गस्य हि क्रियासमभिहारत्वे धात्वधिकारेपि यङोऽविधानमक्रियासमभिहारत्वाद्' इति ॥

( प्रदीपः ) सन्सूत्रोक्तं वस्त्विहाप्यतिदिशति—यङ्विधाविति ॥ धात्वधिकारेपीति । प्रपापच्यत इत्यादौ ।

( उद्द्योतः ) सनिति । एवं चार्धधातुकसंज्ञार्थं धातुग्रहणमित्याद्यपि तत्रत्यमत्र बोध्यमिति ध्वनितम् । तत्फलं च सोसूच्यत इत्यादौ णिलोपः ॥ प्रपापच्यत इति । सूत्रं तु केवलधातौ चरितार्थमिति भावः ॥

( एकाज्झलादिग्रहणप्रत्याख्यानाधिकरणम् )

( पूर्वपक्षभाष्यम् )

अथैकाज्झलादिग्रहणं किमर्थम् ? ।

( समाधानभाष्यम् )

इह मा भूत्-जागर्त्ति भृशम् । ईक्षते भृशमिति[2] ॥

( १७६३ प्रत्याख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ एकाज्झलादिग्रहणे चोक्तम् ॥ * ॥

( भाष्यम् ) एकाज्झलादिग्रहणे चोक्तम् । किमुक्तम् । तत्र तावदुक्तम्—*कर्मसमानकर्तृग्रहणानर्थक्यं चेच्छाभिधाने प्रत्ययविधानात् । अकर्मणो ह्यसमानकर्तृकाद्वा अनभिधानाद्* इति । इहापि 'एकाज्झलादिग्रहणानर्थक्यं च क्रियासमभिहारे यङ्वचनाद् अनेकाचो हलादेर्ह्यनभिधानम्' इति ॥ तच्चावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणेपि ह्येकाज्झलादिग्रहणे यत्रैकाचो हलादेश्चोत्पद्यमानेन यङाऽर्थस्याभिधानं न भवति, न भवति तत्रोत्पत्तिः तद्यथा—भृशं शोभते भृशं रोचते ॥ यत्र चानेकाचोऽहलादेर्वोत्पद्यमानेन यङा ऽर्थस्याभिधानं भवति, भवति तत्रोत्पत्तिः । तद्यथा—अटाट्यते अरार्यते अशाश्यते सोसूच्यते सोसूत्र्यते मोमूत्र्यते ॥

( १७६४ न्यूनतापूरकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ ऊर्णोतेश्चोपसंख्यानम् ॥ * ॥

( भाष्यम् ) ऊर्णोतेश्चोपसंख्यानं कर्तव्यम् । प्रोर्णोनूयते ॥

( न्यूनताप्रदर्शकभाष्यम् )

अत्यल्पमिदमुच्यते—ऊर्णोतेरिति ।

( १७६५ न्यूनतापूरकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिग्रहणं यङ्विधावनेकाजहलाद्यर्थम् ॥ * ॥

( भाष्यम् ) सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहणं कर्तव्यम् । किं प्रयोजनम् ? । यङ्विधावनेकाजहलाद्यर्थम् । सोसूच्यते । सोसूत्र्यते । गोमूत्र्यते[3] । अटाट्यते । अरार्यते । अशाश्यते । प्रोर्णोनूयते ॥

( प्रदीपः ) ऊर्णोतेश्चेति । यथान्यासे सिद्ध्यभावाद्वचनम् ।

( उद्द्योतः ) एकाज्झलादिग्रहणप्रत्याख्यानादाह—यथान्यास इति ॥

( ऊर्णुग्रहणानावश्यकताभाष्यम् )

ऊर्णोतेर्न वक्तव्यः ।

---

[1] सूत्रस्थस्येत्यादिः । ( र. ना. )
[2] इह मा भूत् । प्राटति भृशमिति समाधानग्रन्थाशय इत्यर्थः । (र. ना.)
[3] क्रिया समभिहारः, क्रिया समभिहारार्थकः । एवमग्रेऽपि । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेड्डुपग्रहात् ॥

( प्रदीपः ) कार्यान्तरसिद्धयेऽवश्यमूर्णोतेर्णुवद्भावो वाच्यस्तेनैव यङोपि सिद्धिमाह—वाच्य इति । तत्र यङि भावातिदेश आमिटोस्त्वभावातिदेशस्तयोर्नैतेरभावात् । इड्डुपग्रहः । इट्प्रतिषेधः । विभाषा गुण इति पञ्चमी । फलस्य चात्र हेतुत्वं यथाध्ययनेन वसतीति । उदाहरणानि—प्रोर्णोनूयते । प्रोर्णुतः । प्रोर्णुतवानिति ।

( उद्योतः ) वचनेन वचनप्रत्याख्याने लाघवाभावादाह—कार्यान्तरेति । इड्डुपग्रहस्य फलत्वेन हेतुत्वाभावादाह—फलस्य चेति । प्रोर्णुत इति । श्र्युकः कितीति इट् प्रतिषेधः ॥

( १७६६ लोटो यङ्बाधकत्ववार्तिकम् ॥ ५ ॥ )

॥ * ॥ क्रियासमभिहारे यङो विप्रतिषेधेन लोड्विधानम् ॥ * ॥

( भाष्यम् ) क्रियासमभिहारे यङो लोड् भवति विप्रतिषेधेन । क्रियासमभिहारे यङ् भवतीत्यस्यावकाशः—धातुर्य एकाज्झलादिः क्रियासमभिहारे वर्तते, अधातुसंबन्धश्च लोलूयते । पोपूयते ॥ लोटोवकाशः—धातुर्योनेकाजहलादिः क्रियासमभिहारे वर्तते, धातुसंबन्धश्च स भवान् जागृहि जागृहीत्येवायं जागर्ति, स भवानीहस्व ईहस्वेत्येवायमीहते ॥ धातुर्य एकाज्झलादिः क्रियासमभिहारे वर्तते धातुसंबन्धश्च, तस्माद् उभयं प्राप्नोति—स भवान् लुनीहि लुनीहीत्येवायं लुनाति । लोड् भवति विप्रतिषेधेन ॥

(प्रदीपः) यङैव क्रियासमभिहारस्य द्योतितत्वान्नित्यवीप्सयोरिति क्रियासमभिहारे द्वे भवत इति वा द्विर्वचनं न भवति । यदा तु भृशार्थेपि पौनःपुन्यं विवक्ष्यते तदा पापच्यते पापच्यत इति द्विर्वचनं भवत्येव ॥ स भवानिति । सामान्यविशेषभावेन क्रियाभेदाश्रयो धातुसंबन्धः ॥

( उद्योतः ) इति चेति । वस्तुतस्तद्वार्तिकस्य लोड्विषयतैवेति लोड्विधायके वक्ष्यते ॥ भवत्येवेति । नित्यवीप्सयोरित्यनेन ॥ सामान्येति । लोडन्तार्थः सामान्यम् । अनुप्रयोगार्थश्च कर्त्राद्यालिङ्गितत्वाद्विशेषः । अन्यथाऽर्थभेदाभावेन धातुसंबन्धाभावात्प्रत्ययो दुर्लभः स्यादिति भावः ॥ भाष्ये लोड्भवति विप्रतिषेधेनेति । पुनः पुनर्लवनाभिन्नं वर्तमानं लवनमित्येवं विवक्षायां धातुसंबन्धस्य सत्त्वादुभयप्राप्तिः ॥

( अनुयोगभाष्यम् )

न तर्हीदानीमिदं भवति—स भवान् लोलूयस्व लोलूयस्वेत्येवायं लोलूयत इति ॥

( समाधानभाष्यम् )

भवति च ॥

( प्रदीपः ) स इति । भृशार्थपौनःपुन्ययोः प्रतिपिपादयिषितत्वादेकतरस्मिन् यङ् प्रत्ययः । अपरस्मिंस्तु लोट् । लोटश्च केवलस्य समभिहारमभिव्यङ्क्तुमसामर्थ्यात्तदन्तस्य द्विर्वचनं प्रवर्तते ॥

( उद्योतः ) ननु विप्रतिषेधाश्रयणे लोटा भाव्यं, स्वार्थिकत्वाद्यङोन्तरङ्गत्वे तेनैव भाव्यमिति किमुच्यते भवति चेतीत्यत आह—भृशार्थेति । तत्रैकतरार्थेऽधातुसंबन्धे यङं कृत्वा परार्थे धातुसंबन्धे यङं कृत्वा परार्थे धातुसंबन्धे लोडिति भावः ॥ लोटश्चेति । विध्यादिष्वपि लोटो विधानात् इति भावः ॥

( १७६७ विप्रतिषेधवैयर्थ्यवार्तिकम् ॥ ६ ॥ )

॥ * ॥ न वा नानार्थत्वात्कर्तृकर्मणो हि लविधानं क्रियाविशेषे स्वार्थे यङ् ॥ * ॥

( भाष्यम् ) न वार्थो विप्रतिषेधेन । किं कारणम् ? । नानार्थत्वात् । का नानार्थता ? । कर्तृकर्मणोर्हि लोड्विधीयते । क्रियाविशेषे स्वार्थे यङ् । तत्रान्तरङ्गत्वाद्यङा भवितव्यम् ॥

( प्रदीपः ) तत्रेति । लोड् बहिरङ्गः । कर्त्राद्यपेक्षणाद्धातुसंबन्धापेक्षणाच्च ।

( अनुयोगभाष्यम् )

न तर्हीदानीमिदं भवति—स भवान् लुनीहि लुनीहीत्येवायं लुनातीति ॥

( समाधानभाष्यम् )

भवति च । विभाषा यङ् । यदा न यङ्, तदा लोड् ॥

( प्रदीपः ) विभाषा यङिति । धातोः कर्मण इत्यतो वेत्यनुवर्तनात् ॥

( वार्तिकशेषभाष्यम् )

नित्यं कौटिल्ये गतौ ३।१।२३॥

लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ३।१।२४॥

( १७६८ नित्यग्रहणानर्थक्यवार्तिकम् ॥ ७ ॥ )

॥ * ॥ उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यम् ॥ * ॥

( भाष्यम् ) उत्तरयोर्योगयोर्विग्रहेण विशेषस्या-

---

१ णुवद्भावे एकाच्त्वमनुदात्तत्वस्याप्यतिदेशे 'एकाच उपदेशेऽनुदात्तात्' इत्यनेनेट् प्रतिषेधप्राप्त्योदात्तेभ्योऽपीट्प्रतिषेधविधायकं सूत्रमुपन्यस्यति—श्र्युक इति ॥ ( र. ना. )

२ लोड् भवति यङो विप्रतिषेधेन' इति लिखितपुस्तकेपु पाठः ॥

३ धातुना संबध्यत इति कर्मणि घञ् । ( र. ना. )

४ वस्तुतस्तु विशेषस्य विशेषणत्वं सामान्यस्य विशेष्यत्वमित्येव घटो द्रव्यमित्यादौ सर्वत्रैवानुभवसिद्धम् । अत एव विशेषपदस्यानर्थत्वमपि । तथाच पौनःपुन्यालिङ्गितत्वेन लोडन्तार्थलवनस्यैव विशेषत्वं लडन्तोपात्तस्य तु सामान्यत्वं कर्त्रालिङ्गितत्वं तु उभयत्राप्यविशिष्टमिति बोध्यम् । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



संप्रत्ययान्नित्यग्रहणमनर्थकम् । नहि 'कुटिलं क्रामती'ति 'चङ्क्रम्यत' इति गम्यते ॥

( प्रदीपः ) नित्यं कौ । नहीति । चङ्क्रम्यत इत्यस्माद्योर्थः प्रतीयते नासौ 'कुटिलं क्रामतीति' वाक्येन शक्यः प्रत्याययितुमिति तदर्थानभिधानादेव वाक्यं न भविष्यति । अर्थान्तरे च कौटिल्यमात्रप्रतिपादने वाक्यं निवारयितुमशक्यमिति नित्यग्रहणमनर्थकमित्यर्थः ॥

( उद्द्योतः ) नित्यम् । उत्तरयोरिति पदस्वरसाद्धातोरेकाच इति सूत्र एवेदं वार्तिकमिति लभ्यते । तेनेतः पूर्वं नित्यमित्यादिसूत्रद्वयलेखो लेखकप्रमादात्[1] । तत्राद्यविषयं नित्यग्रहणानर्थक्यमिति, द्वितीयविषयं क्रियासमभिहारे चेति, तथैव भाष्ये उदाहरणादिति[2] सुधियो विभावयन्तु ॥ नासाविति । कुटिलं पन्थानं क्रामतीत्यर्थप्रत्ययादित्यर्थः ॥ अर्थान्तरे पथि ॥

( अनुयोगभाष्यम् )

अथैतेभ्यः क्रियासमभिहारे यङ्‌ भवितव्यम् ॥

( १७६९ समाधानवार्तिकम् ॥ ८ ॥ )

**॥*॥ क्रियासमभिहारे च नैतेभ्यः ॥*॥**

( भाष्यम् ) क्रियासमभिहारे च नैतेभ्यो यङ्‌ भवितव्यम् भृशं जपति ब्राह्मणः, भृशं समिधो दहतीत्येव ॥ धातोरेकाचो ॥ २२ ॥

( प्रदीपः ) क्रियासमभिहार इति । तक्रकौण्डिन्यन्यायेन कौटिल्यभावगर्हाभ्यां यङः क्रियासमभिहारादाच्छिद्य स्वीकृतत्वादिति भावः ॥ २२ ॥

( उद्द्योतः ) तक्रकौडिम्यन्यायेति । चिन्त्यमिदं 'विशेषविहितेन सामान्यविहितस्य बाध उत्सर्गापवादस्थले' इत्यत्रैवायं दृष्टान्तो मिदचोन्त्यात्सूत्रे भाष्ये उक्तो, न हि विशेषानुवादेन सामान्यानुवादबाधे दृष्टान्तो लौकिकोस्ति, नाप्येतद्विषये[3] नियमेन तत्प्राप्तिरस्ति[4] ॥ तस्माच्चकारेण क्रियासमभिहारे चेत्यत्रापि विशेषासंप्रत्ययादित्यस्य संबन्धात् भृशं जपतीत्याद्यर्थविशेषस्य यङन्तादप्रत्ययादित्यर्थ इत्याहुः ॥ २२ ॥

---

( ४०० णिच्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. १५ सूत्रम् )

## ६४२ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ॥ ३ । १ । २५ ॥

( निपातनीयनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

सत्यापेति किं निपात्यते ॥

( १७७० समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सत्यस्य कृञ्यापुक् च ॥ * ॥**

( भाष्यम् ) सत्यस्य कृञि आपुक् च निपात्यते णिच्च । सत्यं करोति सत्यापयति ॥

( न्यूनताभाष्यम् )

अत्यल्पमिदमुच्यते 'सत्यस्य' इति ॥

( १७७१ न्यूनतापूरकवार्तिकम् ॥ १ ॥ )

**॥*॥ णिविधावर्थवेदसत्यानामापुक्च ॥*॥**

( भाष्यम् ) णिविधावर्थवेदसत्यानामापुक् चेति वक्तव्यम् । अर्थापयति वेदापयति सत्यापयति ॥

( प्रदीपः ) सत्यापपाश ॥ २५ ॥ आचार्यमतभेदप्रदर्शनार्थोऽनेकपक्षोपन्यासः ।

( उद्द्योतः ) सत्याप ॥ २५ ॥ सर्वत्रै सामर्थ्यादेव टिलोपवारणे नानामतोपन्यासो व्यर्थोऽत आह—आचार्यैति ॥

( आपुकि दूषणभाष्यम् )

यद्यापुक् क्रियते टिलोपः प्राप्नोति ॥

( प्रदीपः ) टिलोप इति । णाविष्ठवदित्यतिदेशादिति भावः ॥

( पुगङ्गीकारमतभाष्यम् )

एवं तर्हि पुक्करिष्यते ॥

---

१ 'र्थस्य मत्व' ॥

२ कौटिल्यभावगर्हाविषये । ( र. ना. )

३ क्रियासमभिहारप्राप्तिरित्यर्थः । ( र. ना. )

४ सर्वेषु आपुगादिविधानपक्षेषु तत्तद्विधानसामर्थ्यादेवेत्यर्थः । ( र. ना. )

---

1 नायं लेखकप्रमादः व्याचिख्यास्यमानसूत्रलेखस्यान्यत्रापि हयवरट्सूत्रे 'प्रत्याहारेऽनुबन्धानाम्' इत्यतः पूर्वम् 'अइउण्–' इत्यादि सूत्रचतुष्टयस्य भाष्ये दर्शनेन तादृशलेखस्य शैली सिद्धत्वात् ॥ अत एव 'ह्रस्वो नपुंसके–' इति सूत्रभाष्येपि '*उपसर्जनह्रस्वत्वे च*' इति वार्तिकतः प्राक् 'गोस्त्रियोरुपसर्जनस्य' इति सूत्रोल्लेखो बहुषु पुस्तकेषु समुपलभ्यते ॥ अस्माभिस्तु मान्यपण्डितलिखितैकपुस्तके शुद्धत्वं मत्वा तदनुसारेणैव बहुपुस्तकानुरोधस्त्यक्त इति क्षन्तव्यं क्षमाशीलैरिति सारग्राहिणो दाधिमथाः ॥

2 उदाहरणादिति । पूर्ववार्तिकस्य 'चंक्रम्यते' इत्युदाहरणस्य द्वितीयवार्तिकस्य 'भृशं जपति' 'भृशं दहति' इत्युदाहरणस्य दानादित्याशयः ॥ परं तु उत्तरयोरिति द्विवचनस्वारस्येनोभयोरेव सूत्रयोर्नित्यग्रहणस्योपात्तस्यापरस्यानुदात्तस्य चानर्थक्यकथनानन्तरमेव 'अथैतेभ्यः क्रियासमभिहारे' इत्यनुयोगभाष्ये 'एतेभ्यः' इत्यनेन पूर्वोपक्रान्तसूत्रद्वयोपात्तक्रम्यादीनां परामर्शो न विचारितः । तस्मादुभयत्राप्युदाहरणानि । 'नह्युदाहरणमादरणीयम्' इत्यन्यत्र भाष्याद् उपलक्षणपरतयैव नेयानि । तथाचोभयसूत्रोपात्तेभ्य एव यङ् 'क्रियासमभिहारे च नैतेभ्यः' इत्यनेन निषिध्यते ॥ अटाट्यते अरार्यते इत्यत्र यङ् तु क्रियासमभिहारे वार्तिकेन विहित इति न स क्रियासमभिहारे गत्यर्थमात्राद्यङ् साधकः एकाज्हलादिग्रहणसत्त्वेऽप्राप्त इव वार्तिकेन सूत्रयोर्नियमपरत्वेन वा क्रियासमभिहारेऽप्राप्त एव विधीयत इति 'गत्यर्थेभ्यः क्रियासमभिहारे यङ् स्थितिशीलस्थावरप्रतिद्वन्द्विजंगमशब्दतो गमनशीलत्वप्रतीतये भवत्येव' इति शब्देन्दुशेखरोक्तमपि चिन्त्यमेव स्वापासनकाले जंगमशब्दे प्रयोगानुपपत्तेः । तस्माद् दंदशूक–जंगमादिशब्देषु यङ् कृत्युत्तरं 'प्रार्थयन्ति' 'रामो राज्यमचीकरत्' इत्यादौ प्रेरणाया इव कौटिल्यभावगर्हयोरविवक्षाश्रयणीयेति दाधिमथानां सिद्धान्तः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( पुकि दूषणभाष्यम् )

**एवमपि टिलोपः प्राप्नोति ॥**

( आगङ्गीकारभाष्यम् )

**एवं तर्ह्याक्करिष्यते ॥**

( आकि दूषणभाष्यम् )

**एवमपि टिलोपः प्राप्नोति ॥**

( अगङ्गीकारभाष्यम् )

**एवं तर्ह्यक्क् करिष्यते ॥**

( प्रदीपः ) अक्करिष्यत इति । तत्र पररूपे कृते अचो-ञ्णितीति वृद्धौ कृतायां पुगागम इति भावः ॥

( उद्योतः ) अग्विधौ पुक्सिद्धये आह—तत्रेति । प्रातिपदिकाण्णिजिति भावः ॥

( अकि दूषणभाष्यम् )

**एवमप्यनाकारान्तत्वात् पुङ्न प्राप्नोति ॥**

( आडङ्गीकारभाष्यम् )

**एवं तर्ह्याट्ट् करिष्यते ॥**

( आटि दूषणभाष्यम् )

**एवमप्यनाङ्गत्वात्पुङ्न प्राप्नोति ॥**

( प्रदीपः ) अनाकारान्तत्वादिति । यद्यच वृद्धिः स्यादविधानमनर्थकं स्याद् अगागममन्तरेणापि तस्याः प्रसङ्गात् । ततश्च तद्बाधनार्थमगागमः स्यादिति भावः ॥

( उद्योतः ) यद्यप्यत्रापि टिलोपप्राप्तिरस्ति तथापि दूषणान्तरसद्भावात्तदनुपन्यासः ॥ अनर्थकं स्यादिति । न च टिलोपबाधनद्वारा वृद्धिसिद्ध्यर्थमेव तदिति वाच्यम् । अन्त्यादेशाकारविधानसामर्थ्येनैव टिलोपबाधे सिद्धे आगमलिङ्गककारोच्चारणसामर्थ्येन वृद्धेरपि बाधः स्यादित्यभिमानः ॥[1]

( आपुगङ्गीकारभाष्यम् )

**एवं तर्ह्यापुट्ट् करिष्यते ॥**

( प्रदीपः ) आपुगिति । तस्य च णिज्भक्तत्वादकारस्य पूर्वस्य टिलोपे सति सत्यापयतीत्यादि सिध्यतीति भावः ॥२५॥

( उद्योतः ) भाष्ये एवं तर्हि आपुगिति । नन्वत्र पक्षे चङि णौ चङीति ह्रस्वानापत्तिः । आपुकि प्राप्नोतीति फलभेद इति चेन्न । लुङ्यस्यानभिधानात् ॥ २५ ॥

( सर्वमतानां निर्दोषताभाष्यम् )

**अथ वा पुनरस्त्वापुगेव ॥**

**ननु चोक्तं टिलोपः प्राप्नोतीति ।**

**आपुग्वचनसामर्थ्यान्न भविष्यति ॥**

**अथ वा पुनरस्तु पुगेव ।**

**ननु चोक्तमेवमपि टिलोपः प्राप्नोतीति ।**

**पुग्वचनसामर्थ्यान्न भविष्यति ॥**

**अथ वा पुनरस्त्वागेव ।**

**ननु चोक्तमेवमपि टिलोपः प्राप्नोतीति ॥**

**आग्वचनसामर्थ्यान्न भविष्यति ॥ सत्याप-पाश ॥ २५ ॥**

—•—

( ४०१ णिच्प्रत्ययविधिसूत्रम् ॥ ३।१।२ आ. १६ सूत्रम् )

## ६४३ हेतुमति च ॥ ३ । १ । २६ ॥

( हेतुमच्छब्दार्थविशेष्यनिर्णयाधिकरणम् )

( विप्रतिपत्तिभाष्यम् )

**कथमिदं विज्ञायते—हेतुमत्यभिधेये णिज्भवतीति, आहोस्वित्—हेतुमति यो धातुर्वर्तते इति ॥**

( प्रदीपः ) हेतुमति च ॥ २६ ॥ कृत्रिमस्य पारिभाषिकस्य प्रयोजकस्येह हेतोर्ग्रहणम् । तदीयो व्यापारः प्रेषणाध्येषणतत्समर्थाचरणलक्षणो हेतुमानिह गृह्यते ॥ ननु सकलकारकसाध्यपाकाद्यपेक्षः प्रयोजकस्य हेतुव्यपदेशो न तु तदर्थान्तरस्वसाध्यप्रेषणाद्यपेक्षः । यथा काष्ठस्य पाकापेक्षं करणत्वं न तु ज्वलनापेक्षम् । तदपेक्षन्तु कर्तृत्वमेव । ततश्च पाकादेरेव हेतुमद्व्यपदेशो युक्तो न तु प्रेषणादेः ॥ नैष दोषः । णिच्प्रकृत्या धातुनैव तस्यार्थस्य प्रकाशितत्वात् प्रयोजनाभावात्तत्रैवार्थे णिचोऽनुत्पादात् । प्रयोज्योऽपि हेतुमच्छब्देन न गृह्यते । तस्य द्रव्यत्वात् । णिचश्च स्वभावतः करणाधिकाराद्वा क्रियावाचित्वात् । तस्मात् पारिशेष्यात् पाकाद्यर्थो यः प्रेषणादिलक्षणो लब्धपाकाद्यपेक्षहेतुव्यपदेशहेतुत्वोपलक्षितप्रयोजकसाध्यो व्यापारः स एव गृह्यते ॥

( उद्योतः ) हेतुमति ॥ २६ ॥ हेतुमच्छब्दार्थज्ञाने संदेहस्योपपादयितुमशक्यत्वादाह—कृत्रिमस्येति । तस्यैव व्याख्यानं क्वचित्पारिभाषिकस्येति । तत्प्रयोजको हेतुरित्यस्येत्यर्थः । उत्कृष्टेन निकृष्टप्रेरणम् आद्यम् । विपरीतं द्वितीयम्, प्रयोज्यव्यापारानुकूलमाचरणं तृतीयम् यथा—भिक्षा वासयतीत्यादौ ॥ पाकाद्यपेक्ष इति । तद्विषयत्वात्प्रेरणाया इत्यर्थः ॥ न तु तदर्थेति । तन्निमित्तेत्यर्थः । हेतुरस्यास्तीति विग्रहेण हेतुत्वनिरूपकस्य तत्कार्यपाकादेरेव प्रतीतेस्तत्रैव णिच् स्यादित्याह—पाकादेरेवेति ॥ तत्रैवार्थे इति । न चान्यप्रयुक्तः पचतीत्यर्थप्रतिपादनाय णिच् । णिजन्तेन तादृशार्थाप्रतीतेरिति भावः ॥ एवमपि हेतुसंबन्धिकार्यरूपार्थाभिधायिनां

---

१ अभिमानोक्तिबीजन्तु आगमलिङ्गककारोच्चारणस्याकारश्रवणार्थत्वेन तत्सामर्थ्यात्पररूपादिबाधेऽपि वृद्धिबाधे न मानमिति । ( र. ना. )

२ तदर्थः पाकाद्यर्थः । इदं सामानाधिकरण्येन प्रेषणाद्यन्वयि । ( र. ना. )

३ शब्दैर्वैरेत्यत इति भावः । ( र. ना. )

४ अयं भावः । देवदत्तशर्मा पश्यति हलैः कृपतीत्यत्र स स्वयं न कृपति पश्च-हलकरणैककर्तृककर्षणस्यासंभवात् किन्तु शूद्रद्वारेति प्रयोजकव्यापारोऽपि कृप्-धात्वर्थ इति । कृपतीत्यस्य प्रकृते कर्षयतीत्यर्थत्वात् । ( र. ना. )

५ प्रेषणम् अग्रे द्वितीयम् अध्येषणम् । तृतीयम् तत्समर्थाचरणरूपम् । (र.ना.)

६ अत्र प्रयोज्यदेवदत्तादिव्यापारस्य वासानुकूलस्यानुकूलमाचरणं स्वरूपेणावस्थानरूपा क्रिया भिक्षाया इति भावः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हेतुमच्छब्देन कथं प्रेरणोच्यतेऽत आह—तस्मादिति ॥ लब्धः पाकाद्यपेक्षो हेतुव्यपदेशो येन स चासौ हेतुत्वोपलक्षितश्चासौ प्रयोजकश्च तत्साध्यो व्यापारः इति विग्रहः। तत्प्रयोजक इत्यत्रापि कारके इत्यधिकाराद् णिजुत्पत्तेः प्राक् हेतुत्वस्याभावाद्धेतुत्वोपलक्षितेत्युक्तम्। स च व्यापार एव 'करणे' इत्यधिकारादिति भावः। तत्र मतुपः साधुत्वं तु हेतुः कर्ताऽस्त्यस्येत्यर्थेनेति भाष्यकृदेव वक्ष्यति ॥

(प्रदीपः) कथमिति। यदा पचतीत्युक्ते प्रयोज्यसाध्य एव व्यापारो गम्यते न प्रयोजकसाध्योऽपि तदा प्रत्ययार्थस्य करणाधिकारोपस्थापितस्य करणस्य विशेषणं हेतुमतीति संपद्यते। यदा त्वनेकार्थत्वाद्धातूनां तादर्थ्याद्वाधिश्रयणादिवत् प्रयोजकव्यापारोऽपि पचादिवाच्यो भवति यथा पञ्चभिर्हलैः कृषतीति। तदा प्रकृतिविशेषणपक्षो भवति तदा तु णिच्प्रत्ययो द्योतकः संपद्यत इति पक्षद्वयस्य संभवाद्दोषदर्शनाच्च प्रश्नः ॥

(उद्योतः) पक्षद्वयोपपादनपूर्वकं प्रत्ययार्थेनेति वक्तव्ये प्रत्ययार्थविशेषणेनेत्युक्तेरर्थमाह—पदेति। प्रत्ययार्थविशेषणमित्यस्य प्रत्ययार्थपरिच्छेदकमित्यर्थः ॥ प्रकृतिविशेषणेति। भाष्ये प्रकृत्यर्थविशेषणमित्यस्य प्रकृतेरर्थद्वारा विशेषणमित्यर्थ इत्यभिमानः॥ वस्तुतः प्रकृत्यर्थस्य पाकादेर्विशेषणमित्यर्थः ॥ द्योतकद्योत्यार्थस्य विशेषणत्वनियमात् ॥

(आक्षेपभाष्यम्)

युक्तं पुनरिदं विचारयितुम्। नन्वनेनासंदिग्धेन प्रत्ययार्थविशेषणेन भवितव्यम्, यावता 'हेतुमति च' इत्युच्यते। यदि हि प्रकृत्यर्थविशेषणं स्याद्; 'हेतुमतः' इत्येव ब्रूयात् ॥

(प्रदीपः) हेतुमत इति। हेतुमदर्थाभिधायिन इत्यर्थः ॥

(उद्योतः) धातोः शब्दस्य प्रागुक्त हेतुमत्त्वासंभवादाह—हेतुमदर्थेति। हेतुमदर्थविशेषणकार्थाभिधायिन इत्यर्थः ॥

(आक्षेपबाधकभाष्यम्)

नैतदस्ति। भवन्ति हि विषयसप्तम्योऽपि। तद्यथा—'प्रमाणे यत्प्रातिपदिकं वर्तते' 'स्त्रियां यत् प्रातिपदिकं वर्तत' इति ॥ एवमिहापि 'हेतुमत्यभिधेये णिज्भवति' इति, 'हेतुमति वा यो धातुर्वर्तते' इति जायते विचारणा ॥

(उद्योतः) भाष्ये—विषयसप्तम्योपीति प्रमाणे इत्यादेस्तद्विषयकबोधजनकं प्रातिपदिकमित्यादिक्रमेणार्थ इत्याह ॥

(समाधानभाष्यम्)

अत उत्तरं पठति—

(१७७० प्रत्ययार्थविशेषणतावार्तिकम् ॥ १ ॥)

**॥ * ॥ हेतुमतीति कारकोपादानं प्रत्ययार्थपरिग्रहार्थम् यथा 'तनूकरणे तक्षः' ॥ * ॥**

(भाष्यम्) हेतुमतीति कारकमुपादीयते। किं प्रयोजनम्?। प्रत्ययार्थपरिग्रहार्थम्। एवं सति प्रत्ययार्थः सुपरिगृहीतो भवति। यथा "तनूकरणे तक्षः" इति-तनूकरणमुपादीयते ॥

(प्रदीपः) कारकोपादानमिति। कारकशब्देन प्रत्ययार्थं उच्यते स हि प्रत्ययं करोति निष्पादयति ॥ प्रत्ययार्थ इति। प्रत्ययस्यार्थः प्रयोजनं स सुष्ठु परिगृहीतः परिपूर्णो भवति। वाचकत्वात् प्रत्ययस्य। प्रकृतिविशेषणे तु प्रत्ययस्यानुवादकत्वाद् द्योतकत्वात्प्रयोजनमपरिपूर्णं स्यादित्यर्थः। अथ वार्थोऽभिधेयमुच्यते, स चान्वयव्यतिरेकाश्रयव्यवस्थत्वात् प्रेषणादिः प्रत्ययस्यैव न प्रकृतेरिति सुष्ठु परिगृहीतो व्यवस्थापितो भवति ॥ यथा तनूकरण इति। यदा विकरणार्थाः कर्त्रादय इति पक्षस्तदा तनूकरणशब्देन कर्ताभिधीयते तदा साधर्म्येण दृष्टान्तः। यदा तु सार्वधातुकार्थाः कर्त्रादय इति पक्षस्तदा वैधर्म्येण दृष्टान्त इति व्याख्यानम्। यथा तनूकरणं प्रकृत्यर्थो न तथा हेतुमद्व्यापार इत्यर्थः ॥

(उद्योतः) हेतुमच्छब्दस्य प्रेरणापरत्वात्कारकोपादानमित्यसंगतमत आह—कारकशब्देनेति ॥ अन्वयव्यतिरेकाश्रयेति। पञ्चभिर्हलैः कृषतीत्यादौ पञ्चभिर्हलैरित्यस्यानन्वयात् वाचकान्तराभावाच्च धातोर्लक्षणेति भावः ॥ कर्ताभिधीयत इति। बाहुलकात्कर्तर्यन इति भावः ॥ तनूकरणस्य धात्वर्थत्वं विना तत्कर्तरि कथं प्रत्ययः स्यादिति तदर्थाक्षिप्तमिति बोध्यम् ॥

(प्रकृत्यर्थविशेषणतासाधकभाष्यम्)

यदि तर्हि तद्वत्प्रकृत्यर्थविशेषणमिदं भवति। प्रकृत्यर्थविशेषणं हि तत्तत्र विज्ञायते—'तनूकरणक्रियायां तक्षः' इति।

(प्रदीपः) परस्तु साधर्म्येण दृष्टान्तं सार्वधातुकत्वं च कर्त्रादीनां मन्यमान आह—यदीति।

(उद्योतः) यदि इदं तद्वत् तर्हि प्रकृत्यर्थविशेषणमेव भवतीति भाष्येऽन्वयः ॥

१ णिजुत्पत्तेः प्राक् प्रेषणाद्यर्थाभावेन तन्निरूपितकारकत्वाभावेन हेतुत्वस्याप्यभावादित्यर्थः। (र. ना.)

२ तत्पदार्थो हेतुमान्। (र. ना.)

३ अनुपदवक्ष्यमाणभाष्ये।

४ प्रेषणादिरूपप्रत्ययार्थोपलक्षणमित्यर्थः। प्रेषणादेस्तदानीमनभिधेयत्वेन हेतुमत्त्वस्य तद्विशेषणत्वासंभवादिति भावः। (र. ना.)

५ अनुपदवक्ष्यमाणभाष्ये।

६ स्वद्योत्यार्थस्य प्रकृत्यर्थत्वेऽपि विशेषणत्वेन तद्द्वारा प्रकृतेर्विशेषणमित्यर्थः। (र. ना.)

७ 'णत्वे तु' ॥

८ आश्रयान्तं बहुव्रीहिणा व्यवस्थाविशेषणं तत्रापि बहुव्रीहिः। (र. ना.)

९ एकस्य देवदत्तस्य पञ्चभिर्हलैः कर्षणासंभवादिति भावः। (र. ना.)

१० सार्वधातुकार्थत्वेषेति पाठः साधुर्मतिः। (र. ना.)

११ 'यदि तर्हीति' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रकृत्यर्थविशेषणत्वाभ्युपगमभाष्यम् )

**अस्तु प्रकृत्यर्थविशेषणम् । को दोषः ? ।**

( प्रदीपः ) **अस्त्विति** । विनापि णिचा पञ्चभिर्हलैः कृषतीति प्रयोजकव्यापारावगमात् प्रकृत्यर्थत्वं हेतुमत उपपद्यते । पचतीत्यादौ तु द्योतको णिज्नास्तीति तदप्रतिपत्तिरिति भावः ॥

( उद्द्योतः ) अस्त्वित्यनेन तत्पक्षोपपत्तिः सूचिता तामाह—विनापीति ॥ द्योतको णिज्नास्तीति । कृषतीत्यादौ तु पञ्चभिर्हलैरिति एकान्ते तूष्णीमासीनत्वादिकं च तद्[1]द्योतकमिति भावः ॥

( प्रकृत्यर्थविशेषणपक्षदूषणप्रदर्शनभाष्यम् )

**इह हि—उक्तः करोति, प्रेषितः करोतीति णिच् प्राप्नोति ॥ प्रत्ययार्थविशेषणे सति पुनर्न दोषो भवति । स्वशब्देनोक्तत्वान्न भविष्यति ॥**

( प्रदीपः ) **उक्तः करोतीति** । प्रकृतिविशेषणपक्षे यथा प्रकृ[2]त्यभिहिते प्रयोजकव्यापारे णिज् भवति, एवमुक्तप्रेषितादिशब्दाभिहितेऽपि प्राप्नोति । हेतुम[3]द्विषयत्वात्करोत्यर्थस्य ॥ प्रत्ययार्थविशेषणपक्षे तूक्तार्थत्वाद् णिजभावः ॥

( उद्द्योतः ) एवमुक्तप्रेषिते[4]ति । प्रकृतिविशेषणपक्षे शब्दान्तराभिहितद्योतनायैव णिच्प्रवृत्तिरिति भावः ॥ हेतुमद्विषयत्वादिति । प्रयोजकव्यापारविषयत्वादित्यर्थः । हेतुमतीत्यस्य विषयसप्तमीत्वादिति भावः ॥

( प्रकृत्यर्थविशेषणपक्षेऽपि दोषाभावप्रतिपादकभाष्यम् )

**प्रकृत्यर्थविशेषणेऽपि सति न दोषः । यत्र नान्तरेण शब्दमर्थस्य गतिर्भवति, तत्र शब्दः प्रयुज्यते । यत्र ह्यन्तरेणापि शब्दमर्थस्य गतिर्भवति न तत्र शब्दः प्रयुज्यते ॥**

( प्रदीपः ) **यत्रेति** । यस्यार्थस्य द्योतनाय णिज्विधीयते स यदा शब्दान्तरावगतो भवति तदा प्रयोजनाभावाद् णिज्न भवतीत्यर्थः ॥

( उद्द्योतः ) शब्दान्तरेति । वाचकशब्दान्तरेत्यर्थः ॥

( प्रकृत्यर्थविशेषणपक्षे दूषणभाष्यम् )

**इह तर्हि पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति उभयोः कर्त्रोर्लेनाभिधानं प्राप्नोति ॥ प्रत्ययार्थविशेषणे सति पुनर्न दोषः । प्रधानकर्तरि लादयो भवन्तीति प्रधानकर्ता लेनाभिधीयते । यश्चात्राप्र[6]धानं कर्ता, सिद्धा तत्र कर्तरीत्येव तृतीया ॥**

( प्रदीपः ) **उभयोरिति** । धातुवाच्यस्य व्यापारस्य कर्तरि लकारेणोत्पत्तव्यम् । यदा च पचिना द्वयोरपि प्रयोज्यप्रयोजकयोर्व्यापारोऽभिधीयते णिच्प्रत्ययः केवलं स्वार्थिकत्वात् प्रयोजकव्यापारस्य द्योतकस्तदा धातुवाच्यव्यापारसाम्यात् कर्त्रोरपि साम्यमिति द्वयोरप्यभिधानं स्यात् । ततः पाचयतो देवदत्तयज्ञदत्ताविति प्रसज्येतेत्यर्थः ॥ **प्रधानकर्तेति** । प्रकृत्यर्थोपसर्जनत्वाद् ण्यर्थस्य प्राधान्यात्तस्य कर्तापि प्रधानमिति भावः ॥

( उद्द्योतः ) यदा चेति । पच्यादिभिः पाकानुकूलत्वेन द्वयोरप्यभिधानमिति मते इदं भाष्यमिति भावः ॥ एवं चोभयोरपि व्यापारयोः समकक्षत्वेन विशेष्यविशेषणभावानापन्नतयोभयोरपि कर्त्रोः प्राधान्यमिति हृदयम् । अत एवात्र पक्षे प्रयोज्यस्य कर्मत्वं नापादितम् । प्रयोज्यव्यापारस्य विशेषणतयाऽबोधेन तस्य फलत्वाभावेन फलाश्रयत्वाभावात् । गत्यादि सूत्रं चैतत्पक्षे विध्यर्थमेवेति बोध्यम् । परे त्वेवं हि प्रकृत्यर्थविशेषणमिति भाष्याक्षरासंगतिः । तस्मात्प्रवर्तनाप्रयोज्यः पाकः पचेरर्थः तत्रान्यानधीनत्वलक्षणमार्थं प्राधान्यं प्रयोजकव्यापारस्य, शाब्दं च प्रयोज्यव्यापारस्येत्युभयाश्रययोः कर्तृत्वम् स्वतन्त्रः कर्तेत्यत्रोभयविधप्राधान्यस्यापि विनिगमनाविरहेण ग्रहात् ॥ एवं च ण्यन्तोत्तरलेन पर्यायेण द्वयोरप्यभिधानापत्तिरिति भाष्याशयः । प्रधानकर्तरीति । प्रकृतिभूतण्यन्तार्थकर्तरीत्यर्थः । प्रयोज्य कर्ता तु पच्यर्थस्य, न तु ण्यन्तार्थस्येति न ण्यन्तप्रकृतिकत्वेन तदभिधानमिति भावः ॥ प्रधानकर्ता । [10]स्वप्रकृत्यर्थप्रधानव्यापाराश्रयरूपः कर्तेत्यर्थः ॥ अप्रधानमिति । णिच्प्रकृत्यर्थप्रधानव्यापाराश्रय इत्यर्थः ॥

( प्रकृत्यर्थविशेषणपक्षदूषणभाष्यम् )

**इह च 'गमितो ग्रामं देवदत्तो यज्ञदत्तेनेति अव्यतिरिक्तो गत्यर्थ इति कृत्वा "गत्यर्थानां क्तः कर्तरी"ति कर्तरि क्तः प्राप्नोति ॥**

**इह च व्यतिसेदयन्ते व्यतिच्छेदयन्त इति अव्यतिरिक्तो हिंसार्थ इति कृत्वा "न गतिहिंसार्थेभ्य" इति प्रतिषेधः प्राप्नोति ॥**

( प्रदीपः ) **गमित इति** । प्रयोजकव्यापारस्य गमिवाच्यत्वात्तस्य कर्तरि प्रयोजके क्तः प्राप्नोतीत्यर्थः । प्रयोज्यस्य तु कर्मत्वात्तत्रैव क्त इष्यते । तदुक्तम्—**'अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः'** इति ॥

**व्यतिसेदयन्त इति** । प्रयोजकव्यापारस्य व्यतिहारो न तु प्रयोज्यव्यापारस्येति द्रष्टव्यम् ।

( उद्द्योतः ) अव्यतिरिक्त इति । प्रयोजकव्यापारवाचका-

---

१ हेतुमद्द्योतकमित्यर्थः । ( र. ना. )

२ 'प्रकृत्या' ॥

३ 'मद्विशेषणत्वा' ।

४ हेतुमतो वचनप्रेषणादेर्विषयत्वात्कार्यत्वादित्यर्थः । ( र. ना. )

५ 'सति न दोषः' ॥

६ '—धानं सिद्धा' ॥

७ प्रकृत्यर्थ उपसर्जनं यत्रेति बहुव्रीहिः । तस्येति । ण्यर्थस्येत्यर्थः । (र. ना.)

८ इदं चिन्त्यम् । ण्यन्तधातुजन्यबोधे ण्यर्थस्य प्रकृत्यर्थविशेष्यत्वेऽपि हेतुमति चेति सूत्रजन्यबोधे हेतुमति यो धातुरित्यनया रीत्या हेतुमतीत्यस्य धातुविशेषणत्वेन 'प्रकृत्यर्थविशेषण'मिति भाष्याक्षरसामञ्जस्योपपत्तेः । ( र. ना. )

९ त्वप्रकृतीत्यर्थः । ( र. ना. )

१० स्वशब्देन लादीनां ग्रहणम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तिरिक्तावाच्य इत्यर्थः। णिचस्तदर्थकत्वे तु प्रयोजककर्ता न गत्यर्थकर्ता किंतु ण्यन्तकर्तेति न दोष इत्याहुः॥

ननु प्रत्ययार्थविशेषणपक्षेऽपि कथमत्रात्मनेपदम्, हिंसारूपप्रयोज्यव्यापारस्यैव व्यतिहारो न तु णिज्वाच्यप्रयोजकव्यापारस्य सोऽत आह—प्रयोजकव्यापारस्य व्यतिहार इति॥

( प्रत्ययार्थविशेषणपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्हि प्रत्ययार्थविशेषणम्।**

( प्रत्ययार्थविशेषणपक्षदूषणभाष्यम् )

**यदि प्रत्ययार्थविशेषणं, पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोति। भवति हि तस्य तस्मिन्नीप्सा।**

**इह च ग्रामं गमयति ग्रामाय गमयतीति व्यतिरिक्तो गत्यर्थ इति कृत्वा "गत्यर्थकर्मणी"ति द्वितीयाचतुर्थ्यौ न प्राप्नुतः॥**

**इह चैधोदकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थ इति कृत्वा "कृञः प्रतियत्ने"इति षष्ठी न प्राप्नोति॥**

**इह च भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्तरि षष्ठी न प्राप्नोति॥**

**इह चाभिषावयति परिषावयतीति व्यतिरिक्तः सुनोत्यर्थ इति कृत्वा "उपसर्गात्सुनोतिसुवती"त्यादिना षत्वं न प्राप्नोति॥**

( प्रदीपः ) **भवति हीति**। ण्यर्थस्य प्राधान्यात्तद्व्यापारेणेप्सिततमत्वात् प्रयोज्यस्येत्यर्थः। प्रकृत्यर्थविशेषणत्वे तु द्वयोरपि प्रयोज्यप्रयोजकव्यापारयोरेकधातुवाच्यत्वाद्धातुवाच्यव्यापारापेक्षया द्वयोरपि कर्तृत्वात्तेनाभिधानं प्राप्नोतीति दोष उक्तः॥

**ग्रामं गमयतीति**। ण्यर्थस्यैव ग्रामः प्रयोज्यश्च कर्मेति भावः॥

**षष्ठी न प्राप्नोतीति**। ण्यर्थकर्मत्वादिति भावः। सुट् तु करोतिधात्वाश्रयत्वाद् णिजुत्पत्तावपि तद्रूपसंनिधानात्सिध्यत्येवेति तन्नाचूचुदत्॥

**प्रयोज्ये कर्तरीति**। तस्याप्राधान्यादिति भावः॥

**अभिषावयतीति**। ण्यर्थस्योपसर्गो विशेषक इति भावः॥

( उद्द्योतः ) **तद्व्यापारेणेप्सिततमत्वादिति**। तद्व्यापारप्रयोज्यव्यापाररूपफलाश्रयत्वादित्यर्थः॥ भाष्ये—तस्य। प्रयोजकस्य॥ तस्मिन्। प्रयोज्ये॥ एतेन स्वव्यापारे स्वातन्त्र्यात्परत्वेनान्तरङ्गत्वेन 'च कर्तृत्वमेवेत्यपास्तम्॥ अन्तरङ्गादपि प्रधानकार्यस्य लोके बलवत्ताया दर्शनादिति भावः॥ एकधातुवाच्यत्वादिति। ण्यन्तप्रकृतिधातुवाच्यत्वादित्यर्थः॥

ननु प्रयोज्यस्य ण्यर्थव्यापारापेक्षया कर्मत्वेऽपि ग्रामादेर्गम्यर्थनिरूपितमेव कर्मत्वमत आह—ण्यर्थस्यैवेति। प्राधान्यादित्यादिः। उत्तरदेशसंयोगे ण्यर्थव्यापारजन्यत्वस्यापि सत्त्वादिति भावः॥

प्रतियत्नवाचि करोत्यपेक्षया सुट्पक्षयोर्विधावविशिष्टे षष्ठ्यप्राप्तिरेव कथमुक्तेत्यत आह—सुट्त्विति। कर्मणि विधानादर्थसापेक्षा षष्ठी। उपात्प्रतियत्न इति सुट् धातुस्वरूपापेक्ष इति भावः॥

तस्याप्राधान्यादिति। कृत्प्रकृत्यर्थकर्त्रादौ हि तेन षष्ठी। कृत्प्रकृतिश्च ण्यन्ता। एवं च तदर्थकर्तर्येव स्यात्, ननु णिच्—प्रकृत्यर्थकर्तरि॥ प्राधान्यं च कृत्प्रकृत्यर्थकर्तृत्वमेवेति बोध्यम्।

( प्रत्ययार्थविशेषणपक्षे प्रथमदूषणपरिहारभाष्यम् )

**नैष दोषः। यत्तावदुच्यते—पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोतीति॥ "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणी"त्येतन्नियमार्थं भविष्यति—'एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसंज्ञो भवति, नान्येषाम्' इति॥**

( प्रदीपः ) **एतेषामेवेति**। ण्यर्थस्य प्राधान्यात्तेनेप्सिततमस्य प्रयोज्यस्य सिद्धा कर्मसंज्ञा। न च स्वव्यापारापेक्षया स्वातन्त्र्यात् परत्वात्कर्तृसंज्ञा प्राप्नोतीति युक्तं वक्तुम्। प्रयोज्यव्यापारस्याप्राधान्यात् प्रधानाप्रधानव्यापारसंनिधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वात्॥ नियमेन तु प्रधानप्रयुक्तकार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात्कर्तृत्वं भवत्येव॥ तदुक्तं हरिणा—

**'गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।**
**नियमात्कर्मसंज्ञायाः स्वातन्त्र्येणाभिधीयते॥' इति॥**

( उद्द्योतः ) नियमत्वे उपपत्तिमाह—**ण्यर्थस्येति**॥ **परत्वादिति**। अन्तरङ्गत्वादुपजीव्यत्वाच्चेत्यपि बोध्यम्॥ **प्रधानेति**। सर्वापेक्षया प्रधानकार्यस्य बलवत्त्वात्। न चोद्देश्यतालक्षणमार्थं प्राधान्यं प्रयोज्यव्यापारस्यापि, अन्यानधीनत्वलक्षणार्थप्राधान्यस्य प्रयोजकव्यापारेऽपि सत्त्वात्। शब्दशास्त्रे शाब्दप्राधान्यस्यैव मुख्यत्वाच्चेति भावः॥

**गुणेति**। प्रेषणे कर्मतां प्राप्तोऽपि पदार्थः कर्मसंज्ञायां नियमादप्राप्त्या गुणक्रियायां स्वातन्त्र्याच्च स्वधर्मेण कर्तृत्वेनाभिधीयत इत्यर्थः॥ **स्वातन्त्र्येणेति** पाठेऽपि कर्तृत्वेनेत्येवार्थः।

( प्रत्ययार्थविशेषणपक्षे द्वितीयदूषणपरिहारभाष्यम् )

**यदप्युच्यते—इह च ग्रामं गमयति ग्रामाय गमयति इति व्यतिरिक्तो गत्यर्थ इति कृत्वा "गत्यर्थकर्मणी"ति द्वितीयाचतुर्थ्यौ न प्राप्नुत इति॥ नासावेवं प्रैष्यते—'गच्छ'ग्राममिति। कथं तर्हि? साध-**

---

१ णिजर्थप्रयोजकव्यापारवाचकातिरिक्तवाच्यो व्यतिरिक्त इति।
२ 'तद्द्वारेण'॥
३ 'ण्यर्थस्य कर्म'॥
४ तदर्थेति। ण्यन्तार्थेत्यर्थः॥
५ 'वक्तुं युक्तम्'॥
६ उभयत्रापि प्रेष्यते पदं भाष्यते इत्यर्थकम्।। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**नविशिष्टां क्रियामसौ प्रेष्यते ग्रामं गच्छ ग्रामाय गच्छेति ॥**

( प्रदीपः ) **नासाविति** । ग्रामः प्रकृत्यर्थस्य कर्म न तु ण्यर्थस्येत्यर्थः ॥ **साधनविशिष्टामिति** । ग्रामकर्मिकां गमनक्रियां प्रयोज्यः प्रेष्यति प्राप्नोतीत्यर्थः । स च प्रेष्यते प्राप्यते ॥

( उद्द्योतः ) ग्रामः प्रकृत्यर्थस्येति । गमेः सकर्मत्वेनावश्यं कर्मापेक्षत्वात् । ण्यर्थस्य कर्माकाङ्क्षायाः प्रयोज्यकर्मणा शान्तत्वाच्चेति भावः । साधनविशिष्टां क्रियामसौ प्रेष्यत इत्यत्र कथं द्विकर्मकत्वं कथं च प्रयोज्ये कर्मणि लकार इत्यत आह—प्राप्नोतीति । तथा च प्रपूर्व इषिः प्राप्त्यर्थः । तस्माण्ण्यन्तात्कर्मणि प्रत्यये प्रेष्यत इतीति भावः ॥ प्राप्नोतीत्यर्थ इति पाठे प्रेष्यतिपदस्य स्वोक्तस्येदमर्थकथनं न तु 'भाष्ये तथा पाठः' इति भ्रमितव्यम् ॥

( तृतीयदूषणपरिहारभाष्यम् )

**यदप्युच्यते—इह च 'एधोदकस्योपस्कारयतीति व्यतिरिक्तः करोत्यर्थ इति कृत्वा "कृञः प्रतियत्न" इति षष्ठी न प्राप्नोतीति ॥ नासावेवं प्रेष्यते—उपस्कुरुष्वैधो दकस्येति । कथं तर्हि साधनविशिष्टां क्रियामसौ प्रेष्यते एधो दकस्योपस्कुरुष्वेति ॥**

( चतुर्थदूषणपरिहारभाष्यम् )

**यदप्युच्यते—'इह' भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्तरि षष्ठी न प्राप्नोतीति ॥ उक्तं तत्र कृद्ग्रहणस्य प्रयोजनं कर्तृभूतपूर्वमात्रेऽपि षष्ठी यथा स्यादिति ।**

( प्रदीपः ) **कर्तृभूतपूर्वमात्रेऽपीति** । प्रधानचरेऽपि कर्तरीत्यर्थः ॥

( उद्द्योतः ) भूतपूर्वत्वस्यानुपपत्तेराह—प्रधानचरेऽपीति । कृत्प्रकृतिघटकधात्वर्थकर्तर्यपीत्यर्थः । तत्सूत्रस्थकृद्ग्रहणमावृत्त्यैतदर्थकमपीति भावः ।

( पञ्चमदूषणपरिहारभाष्यम् )

**यदप्युच्यते—इह चाभिषावयति परिषावयतीति व्यतिरिक्तः सुनोत्यर्थ इति कृत्वा "उपसर्गात्सुनोतीत्यादिना षत्वं न प्राप्नोती"ति ॥ नासावेवं प्रेष्यते 'सुनु'अभीति । कथं तर्हि ? उपसर्गविशिष्टां क्रियामसौ प्रेष्यते अभिषुणुवीति ॥**

( प्रदीपः ) **सुनु अभीति** । न प्रयोजकव्यापारस्याभिमुख्यमभिशब्देन द्योत्यते । अपि तु प्रयोज्यव्यापारस्यैवेत्यर्थः ॥

( उद्द्योतः ) अपि स्विति । एवं चाभेर्न[3] कदाचिदपि ण्यर्थविशेषणतेति भावः ॥ भाष्यसंमतेन कैयटेन प्रयोज्यव्यापारस्यैवेत्येवकारेण तु तदाभिमुख्यद्योतकत्वाभाव एवाभेर्लभ्यत इति बहवः ॥

( अनुयोगभाष्यम् )

**युक्तं पुनरिदं विचारयितुम् । नन्वनेनासंदिग्धेन प्रत्ययार्थविशेषणेन भवितव्यम् । यावता व्यक्तमर्थान्तरं गम्यते पचति पाचयतीति च ॥**

( प्रदीपः ) **युक्तं पुनरिति** । संदेह एव विचारनिमित्तं नोपपद्यते । अन्वयव्यतिरेकाभ्यां भूयोदर्शनविषयाभ्यां प्रत्ययार्थविशेषणपक्षस्यैवोपपन्नत्वादिति भावः ।

( उद्द्योतः ) यद्यपि पूर्वं 'प्रमाणे द्वयसच्' 'शेषे' संभूते इति सप्तमीनिर्देशस्योभयथापि दर्शनाद्विचार उपपादितस्तथापि अन्वयव्यतिरेकाभ्यामिदानीं विचार आक्षिप्यत इत्याह—अन्वयेति ॥ भाष्ये व्यक्तमर्थान्तरं गम्यत इति । ण्यन्ताण्यन्ताभ्यां परस्परस्मादिति शेषः ॥

( समाधानभाष्यम् )

**बाढं युक्तम् ॥ इह पचेः कः प्रधानार्थः ? । याऽसौ तण्डुलानां विक्लित्तिः ।**

**अथेदानीं तदभिसंधिपूर्वकं प्रेषणमध्येषणं वा । युक्तं यत्सर्वं पच्यर्थः स्यात् ॥**

( प्रदीपः ) **यासाविति** । तदर्थत्वात्कारकग्रामस्य तदनन्तरञ्च फलोत्पादादिति भावः । तदुक्तं हरिणा—

**'अनन्तरं फलं यस्याः कल्प्यते तां क्रियां विदुः ।**
**प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता ॥'** इति ॥

तत्र यथाधिश्रयणादयस्तादर्थ्यात्पचिवाच्यास्तथा प्रेषणादिरपि । द्योतकस्तु णिजपेक्ष्यत इत्यर्थः । न च कारकाणामपि तादर्थ्यात्पच्यभिधेयत्वप्रसङ्गः, तेषामक्रियारूपत्वाद्धातोश्च क्रियावाचित्वाद् ॥ विक्लित्तिश्चात्र फलानन्तरव्यापारोपलक्षणमिष्टकाः पचन्तीत्यादौ तस्यासंभवादित्याहुः ॥ **पच्यर्थः स्यादिति** । संभावने लिङ् । संभाव्यते पच्यर्थत्वं प्रेषणादेः ॥ अत एव संशयाद्विचार्य **प्रत्ययार्थविशेषणपक्षो** भाष्यकारेण व्यवस्थापितस्तद्दोषाणां परिहृतत्वात् पक्षान्तरे दोषाणां चापरिहारात् ॥ अथवा **प्रकृत्यर्थविशेषणपक्षोऽपि** स्थापितस्तत्पक्षभाविनां दोषाणां सुपरिहरत्वात् । तथा हि—यदुक्तं द्वयोः कर्त्रोर्लेनाभिधानं प्राप्नोतीति ॥ नायं दोषः । प्रकृत्या प्रयोज्यव्यापारोपसर्जनस्य प्रयोजकव्यापारस्याभिधानात्तस्यैव णिचा द्योतनात् प्रधान एव कर्तरि लो भविष्यति नाप्रधाने ॥ णिचा द्योतकेन प्रधानभूतगत्यर्थत्वं निवर्तितं गमनारूपस्य प्रधानस्यार्थस्याभिधानादिति ण्यन्ताद् प्रयोजककर्तरि क्तस्यानु-

---

१ केवलं गमनप्रेरणया णिचि जाते कर्माकाङ्क्षायां ग्रामस्यान्वये ग्रामस्य णिजन्तकर्मत्वेन गत्यर्थकर्मत्वाभावाच्चतुर्थ्या अप्राप्तिराशङ्किता परंतु पूर्वमेव ग्रामकर्मकगत्यर्थमेव प्रेरणा जायते इति पूर्वमेव ग्रामस्य गत्यर्थकर्मत्वाच्चतुर्थी जाता । ततश्च गमेर्णिज् जायते इति भाष्यसंदर्भार्थः ॥ इति दाधिमथाः ॥

२ इदानीमेव कर्तृत्वस्य जायमानत्वेनेति शेषः । ( र. ना. )

३ णिजुत्पत्त्यनन्तरं नोपसर्गसंबन्धः किंतु—सोपसर्गधात्वर्थप्रेरणायामेव सोपसर्गादेव णिच् । परंतु अडादिकार्ये करणीये उपसर्गस्य पृथक्कृतिरेव करणीयेति भावः ॥

४ बहुव्रीहिः । ( र. ना. )

५ अथेति किंचेत्यर्थे । इदानीमित्यस्य विक्लित्तेः प्रागित्यर्थः । विक्लित्तौ उद्देश्यत्वलक्षणमार्थं प्राधान्यम्, प्रेषणादौ तु शाब्दं तत् । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्पत्तिः। व्यतिभेदयन्त इत्यत्रापि हिंसनालक्षणः प्रधानं धात्वर्थो न तु हिंसारूप इत्यात्मनेपदनिषेधाभावः॥

(उद्योतः) विक्लित्तेः प्रधानार्थत्वे युक्तिमाह—तदर्थत्वादिति॥ विक्लित्तिग्रहणं फलाव्यवहितपूर्ववर्तिव्यापारोपलक्षणम्। स्पष्टं चेदमनुपदं स्वयं वक्ष्यति। तद्ध्वनयन्नाह—तदनन्तरं चेति॥ तथा प्रेषणादिरपीति। विक्लित्त्यनुकूलत्वेनेत्यर्थः। वस्तुतः प्रवर्तनाप्रयोज्येत्येवं तस्य विशेषणता न्याय्या॥ संभावने इति॥ उपसंवादाशङ्कयोश्चेति सूत्रभाष्यपठितेनोपसंवादाशङ्कयोर्लिङ्लिलेन। तत्राशङ्कोत्प्रेक्षा। संभावनाऽप्युत्कटकोटिकाशङ्कैवेति बोध्यम्॥ भाष्ये तदभिसंधिपूर्वकमित्यस्य तद्विशेषणभूतमिति शेषः॥ अपरिहारादिति। सर्वं पच्यर्थः स्यादिति युक्तम्। तथापि स पक्षो दुष्ट इति शेषः। दोषाणामुक्तत्वादिति भाष्यार्थ इति भावः॥ अथवेति। अत्र पक्षे सर्वं पच्यर्थः स्यादिति यत् तद्युक्तमेवेति भाष्यार्थ इति भावः॥ प्रयोज्यव्यापारेति। प्रयोज्यव्यापार उपसर्जनं यस्येति विग्रहः। लोके प्रयोज्यप्रयोजकयोर्गुणप्रधानभावावगतेस्तद्व्यापारयोरपि तत्त्वमेवोचितम्। न तु फलानुकूलत्वेन समकक्षतया बोध उचितः॥ एवं च वाचकतापक्ष इव द्योतकतापक्षेऽपि द्वयोर्व्यापारयोर्गुणप्रधानभावेनैवोपस्थितेः प्रधानकर्तुरेव तेनाभिधानमिति। अप्रधाने कर्तरि तृतीयादि भवति॥

परे तु द्योतकत्वात्तस्य विशेषणतैवोचितेति भाष्योक्तदोषानुद्धारः। अत एवास्य पक्षस्य भाष्ये प्रकृत्यर्थविशेषणशब्देनोल्लेखः। किं च ण्यन्तात्प्रत्ययस्तत्प्रकृत्यर्थकर्तरि सामर्थ्यादित्यवश्यं वाच्यमेव तत्पक्षे॥ एवं च प्रयोज्ये कर्तरि तृतीयेव लकारोऽपि दुर्वारः। दुह्यादीनाम प्रधाने कर्मण्यपि लादिस्वीकारेण लादिविधौ कर्तृकर्मांशे प्रधानाप्रधानन्यायाप्रवृत्तेरुचितत्वाच्च। वाचकत्वे तु न दोषः। प्रयोज्यस्य ण्यन्तप्रकृत्यर्थकर्तृत्वेऽपि ण्यन्तकर्तृत्वाभावात्तत्र कर्तरि ण्यन्तात्प्रत्ययानुपपत्तेः। एवमन्यैयोरपि दूषणत्वमेवेत्याहुः॥ णिचेति। प्राधान्येनोत्तरदेशसंयोगानुकूलव्यापारार्थक एव गत्यर्थः [इति भावः।] अर्थग्रहणसामर्थ्यादिति बोध्यम्॥ व्यतीति। सोऽपि प्रागुक्तयुक्त्यैव प्रधानभूतप्राणवियोगानुकूलव्यापारार्थक एवेति भावः॥

(आक्षेपभाष्यम्)

**अथ हेतुमतीति को मत्वर्थः॥**

(प्रदीपः) अथेति। यद्यपि षष्ठ्यर्थः सप्तम्यर्थश्च मत्वर्थत्वेन निर्ज्ञातस्तथापि हेतुशब्दस्यानेकार्थत्वे सति हेत्वर्थापरिज्ञानात्तद्विशिष्टस्यापि मत्वर्थस्यापरिज्ञानात् प्रश्नः। स चार्थाद्धेतुविषय एवावतिष्ठते को हेतुरिति किंप्रयोजको हेतुः, अथ निमित्तमात्रम्॥

१ प्रवर्तनाप्रयोज्या विक्लित्तिरित्येवं रीत्या शाब्दबोधे प्रवर्तनारूपस्य णिजर्थस्य विशेषणतेत्यर्थः। अत्र बहुवक्तव्यं तदग्रेवोक्तम्। (र. ना.)

२ द्योतकत्वपक्षे णिचोऽनर्थकत्वादिति भावः। तत्पक्ष इति। द्योतकत्वपक्ष इत्यर्थः। (र. ना.)

३ गमितो ग्रामं देवदत्तो यज्ञदत्तेनेत्यत्र गत्यर्थानां कर्तरि इति कर्तरि क्तः प्राप्नोति। व्यतिभेदयन्ते व्यतिच्छेदयन्ते इत्यत्राव्यतिरिक्तो हिंसार्थ इति कृत्वा न गतिहिंसार्थेभ्य इति प्रतिषेधः प्राप्नोतीत्युक्त्योरित्यर्थः। (र. ना.)

४ गत्यर्थत्वेनेति शेषः। (र. ना.)

(समाधानभाष्यम्)

**हेतुः कर्तास्य स हेतुमतीति।**

(प्रदीपः) हेतुः कर्तेति। हेतुः प्रयोजक इति भावः॥

(उद्योतः) हेतुः प्रयोजक इति। तथा च पारिभाषिकस्यैव हेतोर्ग्रहणमिति भावः। वस्तुतस्तु को मत्वर्थ इत्यस्य किं पाकादिरूप प्रयोजकव्यापार इत्यर्थः। कृत्रिमाकृत्रिमन्यायेन हेतुसंज्ञाविधानसामर्थ्येन च तस्यैव ग्रहणं भविष्यतीति प्रश्नानौचित्यात् हेतुकर्तास्येति प्रयोजकव्यापार एवेत्युत्तरम्॥

(१७७१निमित्तमात्रस्य हेतुशब्दार्थत्वसमर्थकवार्तिकम्॥२॥)

**॥ * ॥ हेतुनिर्देशश्च निमित्तमात्रे, भिक्षादिषु दर्शनात्॥ * ॥**

(भाष्यम्) **हेतुनिर्देशश्च निमित्तमात्रे द्रष्टव्यः। यावद् ब्रूयाद्—निमित्तं कारणम्, तावद्—हेतुरिति। किं प्रयोजनम्? भिक्षादिषु दर्शनात्। भिक्षादिषु हि णिज् दृश्यते—'भिक्षा वासयति' कारीषोऽग्निरध्यापयतीति॥**

(उद्योतः) प्रयोजकस्य पारिभाषिकहेतुत्वेऽपि लक्ष्यानुरोधेनाह भाष्ये—हेतुनिर्देशश्चेति॥

(अनुयोगभाष्यम्)

**किं पुनः कारणं परिभाषिके हेतौ न सिध्यति?॥**

(समाधानभाष्यम्)

**एवं मन्यते चेतनावत एतद्भवति—प्रेषणमध्येषणं चेति। भिक्षाश्चाचेतनाः॥**

(समाधानबाधकभाष्यम्)

**नैष दोषः। नावश्यं स एव वासं प्रयोजयति य 'इहोष्यताम्'इति ब्रवीति किं तर्हि? तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽपि वासं प्रयोजयति। भिक्षाश्चापि प्रचुरा व्यञ्जनवत्यो लभ्यमाना वासं प्रयोजयन्ति॥ तथा कारीषोऽग्निर्निर्वाते एकान्ते सुप्रज्वलितोऽध्ययनं प्रयोजयति॥**

(प्रदीपः) नावश्यमिति। तत्समर्थाचरणमपि प्रयोजकव्यापारस्तत्सद्भावाधीनत्वात् प्रयोज्यक्रियासिद्धेरित्यर्थः॥

(उद्योतः) परिभाषिकेऽपि लक्ष्यसिद्धिमाह—नावश्यमिति। तदाशयमाह—तत्समर्थेति॥ भाष्ये ब्रवीतीत्यनेन तादृशशब्दप्रयोग एव मुख्या प्रवर्तनेति सूच्यते॥

५ दाधिमथास्तु—'को मत्वर्थः' इत्यस्यायमाशयः—व्यापारस्याश्रयत्वेन स न मत्वर्थः 'शालावान् दण्डी' 'पर्वतवान् गौः' इत्याद्यप्रयोगात्। किंतु तदुपवेशनस्थानादिरेव भवेत्। स चानिष्ट इति॥ 'हेतुः कर्ताऽस्य' इत्युत्तरस्य त्वयमाशयः—सप्तम्यर्थस्यासंभवेऽपि षष्ठ्यर्थोऽङ्गीकार्यः। षष्ठ्यर्थस्तु 'राज्ञः पुरुषः' 'पुरुषस्य राजा' इति 'कारकस्य क्रिया' 'क्रियायाः कारकः' इति 'कर्तुः क्रिया' 'क्रियायाः कर्ता' 'कर्तुर्व्यापारः' 'व्यापारस्य कर्ता' इत्येवमुभयविधव्यवहारदर्शनात्संभव एवेति' इति वदन्ति॥

६ 'प्रयोज्यस्य क्रिया'॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( आक्षेपभाष्यम् )

**इह कश्चित्कंचिदाह 'पृच्छतु मा भवान्' 'अनुयुङ्क्तां मा भवान्' इति अत्र णिच् कस्मान्न भवति ? ।**

**( प्रदीपः ) पृच्छतु मा भवानिति ।** प्रष्टा प्रयोज्यस्तस्य प्रेरकः प्रयोजको भवतीति तद्व्यापारे णिच् कस्मान्न भवतीति प्रश्नः । एकविषयत्वाल्लोडादेर्णिचश्च पर्यायप्रसङ्गः ॥

**( उद्द्योतः )** ननु प्रश्नक्रियाकर्तृतया कस्यचिदित्यभावात्प्रयोज्यस्याभावे प्रयोजकस्याप्यभावात् कथं णिच् शङ्का । तत्राह—प्रष्टेति । भावीति शेषः ॥ समानार्थत्वाद्युगपच्छोट्णिचोरप्रसक्तेराह—एकविषयत्वादिति ॥ वस्तुतस्तु लोडन्ते प्रयुज्यमानलोडन्तशब्द एव प्रयोजकव्यापारः, तस्य सत्त्वाण्णिच् स्यादिति प्रश्नाशयः । पर्यायस्य प्रश्नविषयत्वे लोटोक्तत्वात्प्रेषणस्य णिज् न भविष्यतीत्युत्तरपरभाष्यासंगतिः । न हि पर्याये लोटोक्तत्वमस्ति । पर्यायो नाम कदाचिल्लोडेव, कदाचिण्णिजेवेत्याकारः ॥ ननूक्तः करोतीत्यत्रोक्तन्यायेनात्रापि णिचोऽप्राप्त्या भवदुक्तव्याख्याने भाष्यासंगतिरिति चेन्न । लोडन्तशब्दप्रयोगरूपप्रयोजकव्यापारस्य लोड्वाच्यत्वमित्यभिमानेन शङ्कायाः सत्त्वात् । लोटोक्तत्वादित्युत्तरस्य चायमाशयः स प्रेरणात्वेन लोड्वाच्य एवेति । एतच्च विधिनिमन्त्रणेति सूत्र उपपादयिष्यते । मञ्जूषायां च निपुणतरमुपपादितम् ॥

( समाधानभाष्यम् )

**अकर्तृत्वात् । न ह्यसौ संप्रति पृच्छति । तूष्णीमास्ते ॥**

**( प्रदीपः ) अकर्तृत्वादिति ।** स्वतन्त्रस्य कर्तुः प्रयोजको हेतुरित्युच्यते प्रयोज्यश्चात्र कर्ता नेति प्रयोजको न हेतुसंज्ञ इत्यर्थः ॥ **तूष्णीमिति ।** निर्व्यापारत्वात्कारकत्वमात्रमपि तस्य नास्ति कुतस्तद्विशेषः कर्तृत्वमित्यर्थः । कर्तृत्वमेव तस्याधीयमानं 'प्रश्नक्रियायाः कर्ता त्वं भवेति । यथा राजा भव युध्यस्वेति राजत्वमेवाधीयते । यस्तु प्रवृत्तक्रियः संभावितक्रियो वा प्रयोज्यः कर्ता तस्य प्रयोजको हेतुरित्यत्र णिजभावः ॥

**( उद्द्योतः )** न कर्तेति । तत्र प्रश्नक्रियाया अभावादिति भावः ॥ कुतस्तद्विशेष इति ॥ तूष्णीमास्त इति भाष्यं कैमुतिकन्यायोपलक्षणं बोध्यम् ॥ आधीयमानं विधीयमानमित्यर्थः ॥ एतेन लोटा कर्तृत्वस्याभिधानात्कथमकर्तृत्वमित्यपास्तम् ॥ तदुपपादयति—यस्तु प्रवृत्तेति । अस्य विध्यर्थकलोडादिप्रयोगं विनापीत्यादिः । प्रवृत्तक्रियोपि शैघ्र्याय प्रेर्यत एव ॥

१ द्वितीयान्तस्यास्मच्छब्दस्य मादेशो न तु निषेधार्थकः । ( र. ना. )
२ लोडन्ते णिच् स्यादिति संबन्धः । ( र. ना. )
३ स्वशब्देनोक्तत्वान्न भविष्यतीत्येवं रूपेणेति भावः । ( र. ना. )
४ लोड्वाच्यत्वमिति पाठो भाति । ( र. ना. )
५ अभिमानोक्तिबीजमेव दर्शयति । ( र. ना. )
६ विध्यर्थकलोडादिशब्दप्रयोगं विनाऽपि प्रवृत्तक्रियानिरूपितस्य संभावितक्रियानिरूपितस्य वा कर्तृत्वस्याभावादित्यर्थः। प्रदीपोद्द्योतपर्यालोचनया लभ्यते। ( र. ना. )
७ 'न कर्तेति प्रयोजको' इत्येव प्राचीनः पाठः पदमञ्जर्यामपि लिखितः ॥

( आक्षेपभाष्यम् )

**किं च भो वर्तमानकालाया एव क्रियायाः कर्त्रा भवितव्यम्, न भूतभविष्यत्कालायाः ॥**

**( प्रदीपः )** इतरो वर्तमानक्रियसंबन्धेन कर्तृत्वमुक्तमिति मत्वा चोदयति—किं च भो इति ॥

( समाधानभाष्यम् )

**भूतभविष्यत्कालाया अपि भवितव्यम् । अभिसंबन्धस्तत्र क्रियते—इमां क्रियामकार्षीद्, [ इमां क्रियां ] करिष्यतीति ॥**

**( प्रदीपः ) अभिसंबन्ध इति ।** भूताया भाविन्याश्च क्रियायाः कर्त्राभिसंबन्धो भूतो भावी च प्रतिपाद्यत इत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—अभिसंबन्ध इति । बुद्धिकृतोऽभिसंबन्ध इत्यर्थः ॥

( प्रागुक्ताकर्तृत्वोपपादनभाष्यम् )

**इह पुनर्न कश्चिदभिसंबन्धः क्रियते । न चासौ संप्रति पृच्छति, न चासौ प्रक्ष्यति तूष्णीमास्ते ? ।**

**( उद्द्योतः )** भाष्ये—न चासौ प्रक्ष्यतीति । लोडन्तप्रयोगकृतप्रेरणां विनेत्यर्थः ॥

( अकर्तृत्वबाधकभाष्यम् )

**यदि तर्हि कर्ता नास्ति । कथं तर्हि कर्तृप्रत्ययेन लोटाभिधीयते ? ॥**

( आक्षेपभाष्यम् )

**अथ कथमस्मिन्नपृच्छत्ययं पृच्छतियैर्तते ? ॥**

**( प्रदीपः ) अथ कथमिति ।** असत्यर्थे शब्दप्रयोगासंभवात् ॥

( समाधानभाष्यम् )

**अभिसंबन्धस्तत्र क्रियते—इमां क्रियां कुर्वीति ॥**

**( प्रदीपः ) अभिसंबन्ध इति ।** बुद्धिपरिवर्तिन्यर्थे बहिरसत्यपि शब्दप्रयोगादिति भावः ॥

**( उद्द्योतः )** बुद्धीति । बुद्ध्या विषयीकृतस्यैव सर्वत्र बोधात् । प्रकृते च क्रियाया इव कर्तृत्वस्यापि तथाभूतस्यैव विधानमिति भावः ॥

( अकर्तृत्वबाधकभाष्यम् )

**कर्त्रापि तर्ह्यभिसंबन्धः क्रियते । कथम् ? । 'कर्ता अस्याः क्रियाया भवेति ॥**

( अकर्तृत्वसाधकभाष्यम् )

**एवं न च कर्ता कर्तृप्रत्ययेन लोटाभिधीयते ।**

८ इतिशब्दः पूर्ववाक्यार्थस्य हेतुत्वं बोधयति । ( र. ना. )
९ अत्र प्रश्नक्रियैव नास्ति किमुत तन्निरूपितकारकत्वविशेषः कर्तृत्वमिति रीत्येति भावः । ( र. ना. )
१० आधीयमानकर्तृत्वस्य लोटाऽभिधानेऽपि प्रवृत्तक्रियानिरूपितस्य संभावितक्रियानिरूपितस्य वा कर्तृत्वस्याभावेनेत्यर्थः । ( र. ना. )
११ प्राचीनलिखितपुस्तकेषु नोपलभ्यते ॥
१२ एवं सति, प्रकृते कर्तृत्वस्याधीयमानत्वे सति अन्यत्र कर्तृबोधकेनापि प्रत्ययेन लोटा कर्ता न चाभिधीयते किन्तु कर्तृत्वरहितस्य द्रव्यमात्रस्य प्रैष एवाभिधीयते इति भाष्ययोजना । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रदीपः) न च कर्तेति। तस्यैवाधीयमानत्वात्। तदुक्तं हरिणा—

**द्रव्यमात्रस्य तु प्रैषे पृच्छयादेर्लोङ् विधीयते।**
**सक्रियस्य प्रयोगस्तु यदा स विषयो णिच इति॥**

(उद्द्योतः) आधीयमानत्वादिति। विधेयत्वादित्यर्थः॥ द्रव्यमात्रस्य कर्तृत्वरहितस्य॥ प्रयोगः प्रैषः॥

(कर्तृत्वसद्भावेऽपि समाधानभाष्यम्)

**अथापि कथंचित्कर्ता स्यात्, एवमपि न दोषः। लोटोक्तत्वात् प्रैषस्य णिज्न भविष्यति। विधीयन्ते ह्येतेष्वर्थेषु प्रैषादिषु लोडादयः॥ यत्र च द्वितीयः प्रयोज्योऽर्थो भवति भवति तत्र णिच्। तद्यथा— आसय शाययेति।**

(प्रदीपः) अथापीति। दुर्बलपक्षाभ्युपगमेनापि परिहारोऽभिधीयत इति भावः॥ लोटोक्तत्वादिति। एकविषयत्वाण्णिचो लोडादीनां च, पाक्षिकत्वाद्यदा लोडुत्पद्यते तदा तेनैवाभिहितत्वात् प्रैषस्य णिज् न भविष्यति॥

(उद्द्योतः) दुर्बलेति। ईदृशकर्तुरपि यदि हेतुसंज्ञासूत्रे ग्रहणमिति भावः॥ पाक्षिकत्वात्। पर्यायेण जायमानत्वात्॥ एतद्भाष्यनिष्कर्षः प्रागेवोक्तः॥ कैयटोक्तव्याख्याने हि लोड्विशिष्टे तद्वारणेऽपि तदुक्तरीत्या शक्तितात्पर्यविषयस्य पर्यायस्यावारणात् चिन्त्यमिदम्॥ नन्वेवं णिज्लोटोः समावेशाभावे आसयेत्याद्यनुपपत्तिरत आह—भाष्ये यत्र च द्वितीय इति। प्रयोजकोऽपि ण्यर्थो यदाऽन्यापेक्षया प्रयोज्यो भवति भवति तदा तयोः समावेश इत्यर्थः॥

(१७७२ आक्षेपवार्तिकम्॥ ३॥)

## ॥ * ॥ कृष्यादिषु चानुत्पत्तिः ॥ * ॥

(भाष्यम्) **कृष्यादिषु चानुत्पत्तिर्वक्तव्या। एकान्ते तूष्णीमासीन उच्यते पञ्चभिर्हलैः कृषतीति। तत्र भवितव्यं पञ्चभिर्हलैः कर्षयतीति।**

(प्रदीपः) एकान्त इति। कृषावसामर्थ्यं दर्शयति॥ **तूष्णीमासीन इति।** व्यापाराभावकथनम्॥ कश्चिद्धि सामर्थ्यातिशयाद्युगपत्पञ्चभिर्हलैः कृषेत् पर्यायेण वेति तन्निराकरणाय **एकान्ते तूष्णीमासीन** इत्युक्तम्। तत्र पञ्चभिर्हलैर्भूमिमन्यैः कर्षयतीत्यर्थावगमाण्णिचि सति कृषतीति न प्राप्नोतीति तदनुत्पत्तिर्वक्तव्येत्यर्थः॥

(उद्द्योतः) ननु प्रयोजकव्यापारस्य पञ्चभिर्हलैरित्यनेनैव द्योतितत्वात्तद्द्योतनाय एकान्त इत्यादि व्यर्थमत आह—कश्चिदिति॥ तत्रेति। एवं च प्रयोजकव्यापारस्यात्र प्रतीतेस्तद्बोधनाय णिच् स्यादिति भावः॥

(१७७३ समाधानवार्तिकम्॥ ४॥)

## ॥ * ॥ कृष्यादिषु चानुत्पत्तिर्नानाक्रियाणां कृष्यर्थत्वात्॥ * ॥

(भाष्यम्) **कृष्यादिषु चानुत्पत्तिः सिद्धा। कुतः? नानाक्रियाणां कृष्यर्थत्वात्। नाना क्रियाः कृषेरर्थाः। नावश्यं कृषतिर्विलेखन एव वर्तते। किं तर्हि? प्रतिविधानेऽपि वर्तते। यदसौ भक्तबीजबलीवर्दैः प्रतिविधानं करोति, स कृष्यर्थः॥ आतश्च प्रतिविधानेऽपि वर्तते यदहरेवासौ न प्रतिविधत्ते, तदहरेव तत्कर्म न प्रवर्तते॥**

(प्रदीपः) प्रतिविधानेऽपीति। अनेकार्थत्वाद्धातूनां कृषिरेव प्रयोजकव्यापारे तत्समर्थाचरणलक्षणे वर्तत इत्यर्थः। धातुनैव चोपपदसहितेन तस्यार्थस्य प्रकाशितत्वाण्णिजभावः। **विभाषोपपदेन प्रतीयमान** इति पक्ष आत्मनेपदाभावश्च। यदा तु कृषिर्विलेखने वर्तते तदा भवत्येव पञ्चभिर्हलैः कर्षयतीति णिच्॥

(उद्द्योतः) अनेकार्थत्वादिति। प्रतिविधानान्तोऽत्र धात्वर्थः। फलानुकूलत्वेन स एव ना। करणस्य च फले एवान्वयः॥ भाष्ये—तत्कर्मेत्यस्य कृष्यर्थफलमित्यर्थः॥ आद्येऽत्र प्रयोज्यस्य कर्मत्वे इष्टापत्तिः। गतिबुद्धीति सूत्रं तु नियमस्य सजातीयापेक्षत्वादण्यन्त एव व्यावर्तकम्॥ अन्त्ये तु तत्प्राप्तिरेव नेति दिक्॥ णिजभाव इति। द्योतकतापक्षेऽप्युपपदेनैव द्योतितत्वाद् द्योतकणिचोऽभाव इति भावः॥ वस्तुतो द्योतकत्ववादिनो वचनारम्भः, द्योतकसमुच्चयदर्शनाद्वाचकत्ववादेन तत्खण्डनमिति तत्त्वम्॥ प्रयोजकव्यापारफलस्य कर्तृगामित्वात्कृषेरात्मनेपदमाशङ्क्याह—विभाषेति। सा च प्राप्तविभाषेति भावः॥

(१७७४ आक्षेपवार्तिकम्॥ ५॥)

## ॥ * ॥ यज्यादिषु चाविपर्यासः॥ * ॥

(भाष्यम्) **यज्यादिषु चाविपर्यासो वक्तव्यः। पुष्यमित्रो यजते याजका याजयन्तीति। तत्र**

---

१ द्रव्यमात्रस्य तु कर्तृत्वरहितस्य प्रैषेऽभिधेये पृच्छयादेर्लोङ् विधीयते। यदा तु सक्रियस्यात एव कर्तृरूपस्य द्रव्यस्य प्रयोगः प्रैषः तदा स णिचो विषयो वाच्यः इति कारिकार्थः। (र. ना.)

२ द्वितीयप्रेरणारूपोऽर्थो यत्र प्रयोज्यो भवतीत्यर्थः। तत्रास्स्वेति प्रथमा प्रेरणा। आसयेति च द्वितीयेति भावः। (र. ना.)

३ आधीयमानकर्तृत्ववत इत्यर्थः। (र. ना.)

४ प्रतिविधानं तत्समर्थाचरणमिति प्रदीपपर्यालोचनया प्रतीयते। भक्तं कर्मकरेभ्यो दीयमान ओदनपिण्डः। (र. ना.)

५ विलेखनानुकूलं प्रतिविधानमित्यर्थः। फलानुकूलत्वेनेत्यादि। कृष्यर्थफलानुकूलं प्रतिविधानमित्यर्थः। (र. ना.)

६ भृत्यादेरित्यर्थः। (र. ना.)

७ गत्याद्यर्थकाण्यण्यन्त एवेत्यर्थः। (र. ना.)

---

1 सक्रियस्य पठनक्रियां कुर्वत एव प्रेरणायां 'पाठयति' इति प्रयोगः। न तु तूष्णीमासीनस्य प्रेरणायां 'पाठयति' इति प्रयोग इति भावः॥

2 तत्कर्माकुर्वत उदासीनतया तूष्णीमासीनस्य तद्व्यापारानाविष्टस्येत्यर्थः॥

3 'आस्स्व' इति प्रेरणां कुर्वन्नपि यदा प्रेर्यते 'आसितुं प्रेरय' इति वाच्ये 'आसय' इति भवति इति भावः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवितव्यं पुष्यमित्रो[1] याजयते याजका याजयन्तीति ॥

( प्रदीपः ) यज्यादिष्विति । यजेः प्रक्षेपविशेषवाचित्वात् प्रक्षेपे च ऋत्विजां कर्तृत्वायजमानस्य प्रयोजककर्तृत्वासिच्प्रसङ्गनिवारणाय वचनम् ॥

( १७७५ समाधानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ यज्यादिषु चाविपर्यासो नानाक्रियाणां यज्यर्थत्वात् ॥ * ॥

(भाष्यम्) यज्यादिषु चाविपर्यासः सिद्धः । कुतः । नानाक्रियाणां यज्यर्थत्वात् । नाना क्रिया यजेरर्थाः । नावश्यं यजिर्हविःप्रक्षेपण एव वर्तते । किं तर्हि । त्यागेऽपि वर्तते । तद्यथा । अहो यजत इत्युच्यते यः सुष्ठु त्यागं करोति । तं च पुष्यमित्रः करोति याजकाः प्रयोजयन्तीति ॥

( प्रदीपः ) नानाक्रिया इति । तत्र त्यागवचनाश्रयेण यः प्रयोगस्तद्विपरीतैः प्रक्षेपवचने द्रष्टव्यः ॥

( उद्द्योतः ) तद्विपरीतः प्रक्षेपेति । अविपर्यासपदेनेष्टप्रयोगसिद्धिरेव न तु विपरीतप्रयोगव्यावृत्तेरपि इत्यर्थः ॥

( १७७६ णिच्प्रत्ययविधिवार्तिकम् ॥ ७ ॥ )

॥ * ॥ तत् करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम् ॥ * ॥

(भाष्यम्) तत् करोतीत्युपसंख्यानं कर्तव्यम् । किं प्रयोजनम् । सूत्रयत्याद्यर्थम् । सूत्रं करोति सूत्रयति [सूत्रयतीति] ॥

( उद्द्योतः ) भाष्ये तदिति प्रातिपदिकोपलक्षणम् । प्रातिपदिकादित्यर्थः । कर्मत्वाद्यन्तर्भावेणैकार्थीभावो लोकव्यवहारात् । करोतीति च धात्वर्थोपलक्षणम् । तेनाश्वेनाति क्रामति अश्वयतीत्यादिसिद्धम् । एवं च प्रातिपदिकाद्धात्वर्थे इत्यादि गणसूत्राणि प्रक्षिप्तानि । धातुपाठे सूत्रमूत्रधातू चेति बोध्यम् । तत्सत्त्वे तेनैव सिद्धे वार्तिकमफलं स्यात् । कैयेस्तदज्ञानकल्पनापेक्षया मदुक्तस्यैवौचित्यात् । एवं मुण्डमिश्रेति सूत्रस्थः कैयटश्चिन्त्य एवेति बोध्यम् ।

( आक्षेपभाष्यम् )

इह व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयतीति वाक्ये षष्ठी, उत्पन्ने च प्रत्यये द्वितीया । केनैतदेवं भवति ? ॥

( प्रदीपः ) इह व्याकरणस्येति । लक्ष्ये लक्षणसमुदाये वा व्याकरणशब्दो वर्तते इति भेदनिबन्धना षष्ठी । यदा तु लक्षण एव सूत्रे व्याकरणशब्दो वर्तते तदा व्यपदेशिवद्भावनिमित्ता षष्ठी । यदा व्याकरणं सूत्रं करोतीति सामानाधिकरण्यं तदा यथा मुण्डयति माणवकमिति भवति तथा व्याकरणं सूत्रयतीत्यपि भवति ॥

( उद्द्योतः ) लक्ष्ये इति । व्याकरणशब्दः कर्मल्युडन्त इति भावः ॥ लक्षणसमुदाये वेति । अष्टाध्यायीरूपेर्थे करणल्युडन्तः स इति भावः ॥ यदा तु लक्षण एवेति । प्रतिसूत्रं व्याकरणशब्द इत्यर्थः ॥ पदेति । व्यपदेशिवद्भावाचनाश्रयणे इत्यर्थः ॥

( समाधानभाष्यम् )

योसौ सूत्रव्याकरणयोरभिसंबन्धः स उत्पन्ने प्रत्यये निवर्तते अस्ति च करोतेर्व्याकरणेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति ॥

( प्रदीपः ) योसाविति । वाक्ये द्रव्यरूपं सूत्रं सूत्रशब्देनोच्यते । णिचि तूत्पन्ने सत्त्वभावातिवर्तनात्करोत्यर्थाभिधायी सूत्रशब्दः संपद्यते । तदुक्तं परार्थाभिधानं वृत्तिरिति ॥ एतच्च प्रक्रियागतविभागाश्रयेणोक्तम् । परमार्थतस्तु धात्वन्तरं सूत्रिर्विशिष्टक्रियावचनः ॥

( उद्द्योतः ) करोत्यर्थाभिधायीति । करोत्यर्थविशेषणीभूतसाध्यावस्थार्थाभिधायीत्यर्थः ॥ सूत्रणे च सूत्रेर्वृत्तिर्बोध्या ॥ भाष्ये व्याकरणेन सामर्थ्यमिति । तज्जन्यफलाश्रयत्वरूपमित्यर्थः ॥ निर्लिशब्ददर्शने सूत्रयतीत्यत्रावयवार्थाभावाच्छङ्कैव नास्तीत्याह—एतच्चेति ॥

( १७७७ णिच्प्रत्ययविधिवार्तिकम् ॥ ८ ॥ )

॥ * ॥ आख्यानात्कृतस्तदाचष्टे, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकम् ॥ * ॥

( भाष्यम् ) आख्यानात्कृदन्ताण्णिज्वक्तव्यः तदाचष्ट इत्येतस्मिन्नर्थे । कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । कंसवध-

१ विहितेऽधिकरणे देवतोद्देशेन द्रव्यप्रक्षेपरूपेत्यर्थः । ( र. ना. )

२ यजते इत्येवं रूपः । ( र. ना. )

३ याजयते इत्येवं रूपः । ( र. ना. )

४ लिखितपुस्तकेषु नैवोपलभ्यते ॥

५ 'ऋच्योः' इति द्विवचनमुपलभ्यते । तथा च सूत्रकारस्य वार्तिकाज्ञानम्, वार्तिककारस्य गणसूत्राज्ञानमिति परस्पराज्ञानेत्यर्थः ॥

६ द्रव्यरूपतापरित्यागादित्यर्थः । ( र. ना. )

७ करोत्यर्थव्यापारजन्योत्पत्तिरूपफलाश्रयत्वमित्यर्थः । ( र. ना. )

८ नहि सूत्रयब्दाण्णिचि सूत्रिर्निष्पन्न इति भावः । ( र. ना. )

1 'पातञ्जलं महाभाष्यं संग्रहाब्धिसुधासमम् ।
पुष्यमित्रस्य समये समुदेति स्म भारते ॥
साकेतमध्यमिकयोर्यवनेनोपरुद्धयोः ।
वर्णनं पुष्यमित्रीय यागस्य च पतञ्जलौ ॥
पुष्यमित्रे मृते पश्चान्त्रिंशद्वद्धिकयासने ।
अग्निमित्रोऽभवद्राजा तस्य पुत्रो महायशाः ॥'

इत्येवं कालिदासवर्णितमालविकाग्निमित्रनाटकनायकस्याग्निमित्रस्य पिता पुष्यमित्रः २९१६–२९५० कलिगताब्देषु राज्यं चकारेति भारतीयेति वृत्तनिर्मातारः ॥

2 'सूत्रं चेदं 'प्रातिपदिकाद्धात्वर्थे' इति णिचि सिद्धे प्रपञ्चार्थमित्याहुः' इत्थं हि तदीयो ग्रन्थ इति बोध्यम् ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**माचष्टे कंसं घातयति । बलिबन्धमाचष्टे बलिं बन्धयतीति ॥**

(प्रदीपः) **आख्यानादिति** । आख्यायत इत्याख्यानमितिवृत्तमुच्यते ॥ **प्रकृतिवदिति** । णिचो या प्रकृतिः कंसवधादिस्तया तुल्यं कंसादि कारकं भवति । यथाख्यानक्रियापेक्षं कंसवधादेः कर्मत्वं तथा कंसादेरपि अप्रतिपत्त्याख्यानकर्मभावस्येत्यर्थः । प्रकृतिवद्भावातिदेशेन च कंसादेः पृथक्कृतत्वात् कंसमघातयदित्यादौ कंसादिशब्दवर्जितस्याङ्गसंज्ञायामडादयः कंसादेर्न भवन्ति । वत्करणाच्च स्वाश्रयमपि भवति ॥ पुष्येण योजयतीति पुष्यस्य कर्मत्वाभावः । अथ वा प्रकृत्या तुल्यं वर्तत इति प्रकृतिवत्, प्रकृतेरिव प्रकृतिवद्, ण्यन्तस्य कारकमित्युभयथातिदेशाश्रयणात् क्वचित्कश्चित्परिगृह्यते । प्रकृतिप्रत्यापत्त्यां राजागमनादौ नलोपाद्यपि निवर्तत इति राजानमागमयतीत्याद्युपपन्नं भवति ॥ **कंसवधमिति** । यद्यप्यत्र **सन्नियोगनिर्दिष्टानामन्यतरापाये उभयोरप्यभाव** इति वधादेशनिवृत्तिः सिद्ध्यति तथापि पुष्येण योगं जानाति पुष्येण योजयतीति कुत्वस्य सन्नियोगशिष्टत्वाभावान्निवृत्तिर्न सिध्यतीति प्रकृतिप्रत्यापत्तिरुच्यते ॥

(उद्योतः) आख्यायत इति । बाहुलकात्कर्मणि ल्युट् । भावल्युटि हि आख्यानक्रियायां कर्मत्वं न स्यात् । णिच इति । कृतो या प्रकृतिरिति तु नोक्तं प्रत्ययलक्षणेन कृदन्ततयानेनातिदेशेन च षष्ठीप्रसङ्गात् । राजागमनमित्यादौ राज्ञः कर्तृतया राजानमिति द्वितीयानापत्तेश्च तदयमर्थः—णिच्प्रकृतेर्यथा आख्यानक्रियायां कारकता तथा कंसादेरपीति तदाह—यथेति । नन्वेवमडाद्यव्यवस्थेत्यत आह—प्रकृतिवद्भावातिदेशेनेति । प्रकृताविव प्रकृतिवत् । अत्र प्रकृतिशब्देन कृतः प्रकृतिः तस्यां यथा कंसादेरनन्तर्भावस्तथा कृदन्तप्रकृतिकणिजन्तेपीत्यर्थः ॥ नन्वेवं पुष्येण योजयतीत्यत्रापि द्वितीयापत्तिरत आह—वत्करणादिति ॥ क्वचिदिति । पुष्ययोगे ज्ञीत्यत्र च प्रकृतेरिव प्रकृतिवदित्येवाश्रयणीयमिति भावः ॥ एवं च द्वितीयाद्यन्तत्वाय पृथक्त्वाच्चातिदेशद्वयमाश्रयणीयं भवति, वैरूप्यं च भवतीति गौरवम् । अतः प्रकृतिवच्चेत्यस्य कृत्प्रकृतेर्हन्त्यादेर्ण्यन्तत्वे यथा कारकं द्वितीयाद्यन्तं धातावनन्तर्भूतं च तथेत्यर्थं उचितः । प्रकृतिप्रत्ययापत्तिरित्यत्र कृत्प्रकृतेरेव ग्रहणेनात्रापि तथैवौचित्याच्च ॥ पुष्येण योजयतीत्यत्र च न दोषः ॥ प्रकृतिप्रेति । कृत्प्रकृतेः प्रत्यापत्तावपि राजनशब्दे न लोपनिवृत्तिः कथमिति चिन्त्यम् ॥ वस्तुतः प्रकृतिवत्कारकमित्यतिदेशात्पृथक्करणेन समासाभावेनापदत्वात्तन्निवृत्तिरिति बोध्यम् ॥ अत्र प्रकृतिवच्चेति चः कारकमित्यनन्तरं बोध्यः प्रकृतिवत्कारकं चेति । तेन तद्वत्कार्यमप्यतिदिश्यते । तेन घातयतीत्यादौ कुत्वतत्वे सिध्यतः ॥ अन्यथा धातोः स्वरूपग्रहण इति परिभाषया न स्याताम् ॥ केचित्तु उभयत्रापि प्रकृतिपदेन हेतुमण्ण्यन्तप्रकृतिः । हेतुमण्ण्यन्तश्च प्रत्यासत्त्योपस्थितकृत्प्रकृतिप्रकृतिक एव ॥ प्रत्यापत्तिः प्रत्यभिज्ञा ॥ सा च तत्सत्त्वे तत्रत्य कार्यसत्त्वे च भवतीति अनेनैव कारकबहिर्भावो वधादेशनिवृत्तिः कुत्वतत्वादिकं च सिद्धम् ॥ नन्वेवं प्रत्ययलक्षणेन कृदन्तत्वात्कंसादेः षष्ठी स्यादतः प्रकृतिवच्च कारकमिति । यद्विभक्त्यन्तं तत्र, तादृशमत्रापीत्यर्थः । एवं चावृत्तिकल्पना न कुत्रापि । प्रत्यापत्तिशब्दस्य च प्रत्यभिज्ञाविषयतयापत्तिः । स्थितिरित्यर्थः । न तु नष्टस्य पुनः प्रादुर्भावः प्रत्यापत्तिः । अत एव रात्रिं विवासयति मृगान् रमयतीत्युदाहरणविषयवचने प्रकृतिप्रत्यापत्तिवचः संगतिः । अन्यथा तत्र प्रकृतेरादेशेनानपहारात्प्रत्यापत्तिव्यवहारासंगतिः स्पष्टैव । कारकबहिर्भावश्च तस्याः फलमित्याहुः ॥ यद्यप्यत्र संनियोगेति । एवं च तदनित्यत्वज्ञापकं प्रकृतिप्रत्यापत्तिवचोऽनर्थमिति बोध्यम् ॥

(१७७८ णिच्प्रतिषेधवार्तिकम् ॥ ९ ॥)

**॥ * ॥ आख्यानाच्च प्रतिषेधः ॥ * ॥**

**(भाष्यम्) आख्यानशब्दाच्च प्रतिषेधो वक्तव्यः —आख्यानमाचष्ट इति ॥**

(पूर्ववार्तिकस्थाख्यानशब्दग्राह्यनिर्णयाधिकरणम्)

(विप्रतिपत्तिभाष्यम्)

**किं पुनर्यान्येतानि संज्ञाभूतानि आख्यानानि तेभ्य उत्पत्त्या भवितव्यम् । आहोस्वित् क्रियाख्यानमात्रात् ॥**

(प्रदीपः) **किं पुनरिति** । कंसवधनलोपाख्यानादीनीत्यर्थः ॥

(उद्योतः) भाष्ये संज्ञाभूतानीत्यस्य प्रसिद्धानीत्यर्थः ॥

(विशेषजिज्ञासाभाष्यम्)

**किं चातः ? ।**

(संज्ञाभूताख्यानग्रहणपक्षदूषणभाष्यम्)

**यदि संज्ञाभूतेभ्यः । इह न प्राप्नोति—राजागमनमाचष्टे राजानमागमयतीति ॥**

(उद्योतः) भाष्ये राजानमागमयतीति । एवं च देवदत्तपाकमाचष्टे इत्यर्थे 'देवदत्तेन पाचयति' इत्येव, गतिबुद्धीति नियमेन देवदत्तस्य कर्मत्वाभावात् ॥

(क्रियाख्यानमात्रग्रहणपक्षभाष्यम्)

**अथ क्रियाख्यानमात्रम् । न दोषो भवति ॥**

---

१ अप्रतिपत्तिरप्राप्तिः । ( र. ना. )

२ तथाच प्रकृतिवदित्यत्रावृत्त्यार्थद्वयम् । प्रकृत्या तुल्यं प्रकृतिवदित्येकः । अत्र प्रकृतिशब्देन णिचः प्रकृतिः । प्रकृताविवेति द्वितीयः । अत्र च कृतः प्रकृतिः । ( र. ना. )

३ अर्थकृतवैरूप्यमित्यर्थः । ( र. ना. )

४ तथाच प्रकृतेरिव प्रकृतिवदित्येक एवार्थः । ण्यन्तत्वे इति च लक्ष्यानुरोधेनाध्याह्रियते इति भावः । ( र. ना. )

५ लक्ष्यानुरोधेन ज्ञायमानतात्पर्यान्यथानुपपत्त्या प्रकृतिपदस्य हेतुमण्ण्यन्तप्रकृतौ लक्षणेति भावः । ( र. ना. )

६ एतदुदाहरणविषयकवार्तिके इत्यर्थः । ( र. ना. )

७ अत्रेत्यादिः । ( र. ना. )

८ कंसवधमाचष्टे इत्येतदुदाहरणविषयकतयोपप्लुतमित्यर्थः अन्यथा पुष्येण योजयतीत्यत्र कुत्वनिवृत्तये आवश्यकत्वादनित्यत्वज्ञापकत्वासंगतिः स्पष्टैव । (र.ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यथा न दोषस्तथास्तु ॥

( १७७९ णिच्प्रत्ययवार्तिकम् ॥ १० ॥ )

**॥ * ॥ दृश्यर्थायां च प्रवृत्तौ ॥ * ॥**

( भाष्यम् ) दृश्यर्थायां च प्रवृत्तौ कृदन्ताण्णिज् वक्तव्यः, तदाचष्ट इत्येतस्मिन्नर्थे । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । मृगरमणमाचष्टे मृगान् रमयति ॥ दृश्यर्थायामिति किमर्थम् ? । यदा हि ग्रामे मृगरमणमाचष्टे मृगरमणमाचष्ट इत्येव तदा भवति ॥

( प्रदीपः ) दृश्यर्थायामिति । यदारण्यस्थो रममाणान् मृगान् प्रतिपद्य[1] व्याचष्टे एतस्मिन्नवकाश एवंविधा मृगा रमन्त इति, तदा प्रतिपाद्यदर्शनार्था प्रवृत्तिर्भवति ॥ यदा हि ग्राम इति । ग्रामे मृगाणामसंभवान्न तद्दर्शनार्था प्रवृत्तिः ॥ दृश्यर्थायामित्येतच्च मृगरमणादिविषयमेव द्रष्टव्यम् । राजागमनादिषु तु दृश्यर्थप्रवृत्त्यभावेपि णिज् भवति ॥

( उद्द्योतः ) दृश्यर्थेति । इक् कृष्यादिभ्य इति दृशिः साधुः ॥ रममाणान् मृगान् इति ॥ एतेन मृगरमणशब्द आखेटे रूढ इत्यपास्तम्[2] ॥ प्रवृत्तिर्भवतीति । आख्यानविषयेत्यर्थः ॥ इत्येतच्चेति । प्रयोगानुसारादिति भावः ॥

( १७८० णिच्प्रत्ययविधिवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ आङ् लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ॥ * ॥**

( भाष्यम् ) कालात्यन्तसंयोगे मर्यादायां कृदन्ताण्णिज् वक्तव्यः तदाचष्ट इत्येतस्मिन्नर्थे । आङ्लोपश्च कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । आरात्रिविवासमाचष्टे रात्रिं विवासयतीति ॥

( प्रदीपः ) आरात्रिविवासमिति । यावद्रात्रेर्विवासोतिक्रमणं तावत्कथाः कथयतीत्यर्थः ॥

( उद्द्योतः ) यावदिति । रात्रिरूपकालेनात्यन्तसंयोगः ॥ कथाश्चाख्याने कर्मेति भावः । आरात्रिविवासशब्देन तावत्पर्यन्तकथा लक्ष्यन्त इति बोध्यम् । कालात्यन्तसंयोगे गम्यमान इत्यर्थः ॥ वसेरकर्मकतया गतिबुद्धीति रात्रेः कर्मत्वं हेतुमण्णिचि तद्वदिहापि बोध्यम् ॥

( १७८१ णिच्प्रत्ययविधिवार्तिकम् ॥ १२ ॥ )

**॥ * ॥ चित्रीकरणे प्रापि ॥ * ॥**

( भाष्यम् ) चित्रीकरणे प्राप्तावर्थे कृदन्ताण्णिज् वक्तव्यः । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते । सूर्यमुद्गमयतीति ॥

( प्रदीपः ) चित्रीकरण इति । आश्चर्यकरणे गम्यमाने तत् प्राप्नोतीत्यत्रार्थे णिज् वक्तव्यः ॥ संभावयत इति । भू प्राप्तावात्मनेपदीत्यस्य रूपम् ॥

( उद्द्योतः ) भाष्ये प्रापीति । संपदादित्वेन भावक्विबन्तात्सप्तमी । एवं ज्ञीत्यपि ॥ भूप्राप्ताविति । संभावयत इत्यस्य प्राप्नोतीत्यर्थः ॥

( १७८२ णिच्प्रत्ययविधिवार्तिकम् ॥ १३ ॥ )

**॥ * ॥ नक्षत्रयोगे ज्ञि ॥ * ॥**

( भाष्यम् ) नक्षत्रयोगे[3] जानात्यर्थे कृदन्ताण्णिज् वक्तव्यः कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । पुष्ययोगं जानाति पुष्येण योजयति मघाभिर्योजयतीति ।

( प्रदीपः ) पुष्येणेति । पुष्यो योगक्रियायाः कर्ता, स हि चन्द्रमसं संबध्नाति । तत्रोभयप्राप्तौ कर्मणीति नियमात् षष्ठ्यभावे तृतीयासमासः । तत्र प्रकृतेरिव प्रकृतिवदित्येवं प्रकृतिवदतिदेशात्कर्तरि तृतीया[4] भवति लकारस्तु प्रधान एव कर्तरि भवति, नातिदेशिके ॥

( उद्द्योतः ) उभयप्राप्ताविति । नियमेन चन्द्रमसः प्रतीतेरुभयप्राप्तिः ॥ वस्तुतः[5] सहयोगेत्र तृतीया ॥ कर्तुः प्रयोगाभावेनोभयप्राप्तेरभावात् ॥ मतान्तरोक्ते प्रकृतिवदित्यस्यार्थेऽपि न दोषः । हेतुमण्णिचि गत्यादिनियमात् तृतीयाया एव पुष्येणेत्यत्र प्राप्तेः ॥ नातिदेशिके इति । णिज्प्रकृत्यर्थकर्तृत्वातिदेशेऽपि णिजर्थकर्तृत्वातिदेशाभावान्न तदुत्तरलेनास्याभिधानमित्यर्थः ॥

( अनुयोगभाष्यम् )

तत्तर्हीदं बहु वक्तव्यम् ? ।

( १७८३ प्रत्याख्यानवार्तिकम् ॥ १४ ॥ )

**॥ * ॥ न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम् ॥ * ॥**

( भाष्यम् ) न वा वक्तव्यम् । किं कारणम् ? । सामान्यकृतत्वात् सामान्येनैवात्र णिज् भविष्यति "हेतुमतीति ॥ किं कारणम् ? । हेतुतो ह्यविशिष्टम् । हेतुतो ह्यविशिष्टमेतद् भवति । तुल्या हि हेतुता देवदत्ते चादित्ये च ।

( प्रदीपः ) सामान्यकृतत्वादिति । सामान्यलक्षणे-

---

१ दृष्ट्वेत्यर्थः । ( र. ना. )

२ अतएव 'रजयांचकार विरजाः स मृगान्' इति भारविणा विश्वासदानेन समीपागमनाभिप्रायेणापि 'रजेर्णौ मृगरमणे' इति नलोपः कृतः । अतएव षष्ठभाष्ये 'मृगरमण इति किमर्थम् ? रजयति वस्त्राणि' इत्येवं प्रत्युदाहृतम् ॥

३ नक्षत्रयोग इति कृदन्तादित्यनेनान्वेति । ( र. ना. )

४ पुष्यो हि चन्द्रमसं संबध्नाति तत्र युजेर्गत्यादिष्वनन्तर्भावादणौ कर्तुः पुष्यस्य णिचि कर्तृत्वमेवेति कर्तृत्वात्तृतीया भवतीति पदमञ्जरी ॥

५ पुष्यस्य नक्षत्रत्वेन निष्क्रियत्वात्कर्तृत्वं नैव सिद्धान्तसिद्धमतो ग्रहाणामेव प्रतीच्यभिमुखं प्रतिवर्षं साधिकैकपञ्चाशद्विकलात्मकगतिमत्त्वात्कर्तृत्वे पुष्यात् कथं तृतीयेत्यत आह—वस्तुत इति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नैव सिद्धत्वादित्यर्थः ॥ देवदत्ते चेति । देवदत्तविषयान्यस्य हेतुतेत्यर्थः ।

( उद्योतः ) सूर्यमुद्गमयत इत्यादौ आदित्यस्य प्रयोज्यत्वा- चेतनदेवदत्तस्यापि तत्सजातीयता ध्वननाद्धेतुतेत्यनुपपन्नमत आह —देवदत्तविषयान्यस्येति ॥

( आक्षेपभाष्यम् )

**न सिध्यति । स्वतन्त्रस्य प्रयोजको हेतुसंज्ञो भवतीत्युच्यते । न चासावादित्यं प्रयोजयति ।**

( उद्योतः ) भाष्ये स्वतन्त्रस्य प्रयोजक इति । स्वाभिप्रेत- मात्रोद्देशेन प्रवृत्तस्य प्रवर्तक इत्यर्थः ॥ एवं प्रयोजयतीत्यस्य च स्वाभिप्रेतोद्देशेन प्रवृत्तं प्रवृत्तं प्रवर्तयतीत्यर्थः ॥ स्वाभिप्रेतमात्रो- द्देश्यकप्रयोज्यनिष्ठप्रवृत्त्यनुकूलव्यापारवत्त्वं हि प्रयोजकत्वमिति फलितम् । सर्वत्र स्वशब्देन प्रयोजकः । एवं प्रयोजकाभिप्रेतमात्रो- द्देश्यकप्रवृत्त्याश्रयत्वं प्रयोज्यत्वम् ॥ तदेव च स्वतन्त्रत्वम् । न चैतत्सूर्ये इति भावः ॥

( १७८३ समाधानवार्तिकप्रथमखण्डम् ॥ )

**॥ * ॥ स्वतन्त्रप्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्यम् ॥ * ॥**

( भाष्यम् ) **यं भवान् स्वतन्त्रप्रयोजकं मुक्तसंशयं न्याय्यं मन्यते पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति, तेनैतत्तुल्यम् ॥ कथम् ? ।**

( १७८४ समाधानवार्तिकद्वितीयखण्डम् ॥ १५ ॥ )

**॥ * ॥ प्रवृत्तिर्हुभयत्रानपेक्ष्यं ॥ * ॥**

( भाष्यम् ) **प्रवृत्तिर्हुभयत्रानपेक्ष्यैव किंचिद् भवति देवदत्ते चादित्ये च ॥ नेहँ कश्चित्परोनुग्रही- तव्य इति प्रवर्तते । सर्वे इमे स्वभूत्यर्थं प्रवर्तन्ते ॥ ये तावदेते गुरुशुश्रूषवो नाम तेऽपि स्वभूत्यर्थं प्रवर्तन्ते=पारलौकिकं च नो भविष्यति, इह च नः प्रीतो गुरुरध्यापयिष्यतीति ॥**

**तथा—य एते दासाः कर्मकरा नाम तेऽपि स्वभू- त्यर्थं प्रवर्तन्ते=भक्तं चैलं च लप्स्यामहे । परिभाषाश्च न नो भविष्यन्तीति ॥**

**तथा—य एते शिल्पिनो नाम एतेऽपि स्वभूत्यर्थं प्रवर्तन्ते=वेतनं च लप्स्यामहे । मित्राणि च नो भविष्यन्तीति ।**

( प्रदीपः ) परिभाषा इति । दण्डनादिकाः ।

( उद्योतः ) समाधत्ते—भाष्ये स्वतन्त्रेति । स्वतन्त्रप्रयोजकस्य हि हेतुत्वम् । अयं च न तथेत्यप्रयोजको हेतुरिति चेदित्यर्थः ॥ प्रवृत्तिर्हुभयत्रानपेक्ष्येति । प्रयोज्यप्रवृत्तिरुभयत्रापि प्रयोजका- भिप्रेतानपेक्षा तन्मात्रानुद्देश्यिकेत्यर्थः । उभयत्रानपेक्ष्यैव किंचि- दिति । किंचिदित्यस्य प्रयोजकाभिप्रेतमात्रं किंचिदनपेक्ष्यैवोभयोर्देव- दत्तादित्ययोर्भवतीत्यर्थः । तस्मान्मात्रांशो न निवेश्यः । अन्यथा णिजनवकाश इति भावः ॥ तदेव व्युत्पादयति—नेह कश्चिदिति । सत्यामपि प्रेरणायामिति शेषः ॥ सनिन्द उपालम्भः परिभाषणम् । तदाह—दण्डनादिका इति । अनेन सर्वत्र स्वेष्टसाधनताज्ञानं प्रवर्तकमित्युक्तम् ।

( वार्तिकादिशेषभाष्यम् )

**एवमेतेषु सर्वेषु स्वभूत्यर्थं प्रवर्तमानेषु—**

**(१७८५ देवदत्तादित्ययोः प्रयोज्यस्वसाधकवार्तिकम् ॥१६॥)**

**॥*॥ कुर्वतः प्रयोजक इति चेत्तुल्यम् ॥*॥**

( भाष्यम् ) **यदि कश्चित्प्रयोजको नाम कुर्वतो भवति तेनैतत्तुल्यम् ॥**

( उद्योतः ) भाष्ये—कुर्वतः प्रयोजक इति । प्रयोजका- भिप्रेतमात्रोद्देशं विनापि स्वेष्टोद्देशेनैव कुर्वतः पुंसः प्रयोजको दृश्यते यथा 'गुरुः शिष्यानध्ययने प्रवर्तयति' इत्यादौ तद्वत्सूर्यस्यापि इति भावः ॥

( आक्षेपभाष्यम् )

**यदि तर्हि सर्वे इमे स्वभूत्यर्थं प्रवर्तन्ते, कः प्रयो- ज्यार्थः ? ॥**

( उद्योतः ) प्रयोज्यार्थ इति । प्रेरणाजन्यप्रवृत्त्याश्रयः प्रयोज्यः । तस्य प्रेरणायाः कोऽर्थः 'प्रयोजनं किम्' इति प्रश्नः ॥

( समाधानभाष्यम् )

**यदभिप्रायेषु सज्जन्ते ईदृशौ वध्र्यौ कुरु, ईदृशौ पुटकौ कुरु इति । आदित्यश्चास्याभिप्राये सज्जते । एष तस्याभिप्रायः 'उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयेय' इति । तं चास्यादित्योभि- प्रायं निर्वर्तयति ॥**

( प्रदीपः ) यदभिप्रायेष्विति । तदुक्तं हरिणा ।

निमित्तेभ्यः प्रवर्तन्ते सर्वे एव स्वभूतये ।
अभिप्रायानुरोधोपि स्वार्थस्यैव प्रसिद्धय इति ॥

---

१ देवदत्तनिष्ठप्रयोज्यतानिरूपिता प्रयोजकतेत्यर्थः ॥
२ स्वाभीष्टसिध्युद्देशेनेत्यर्थः ॥
३ एतत् प्रयोजकाभिप्रेतमात्रोद्देश्यकप्रवृत्त्याश्रयत्वम् ॥
४ मुक्तसंशयमित्यस्य व्याख्या न्याय्यमिति । ( र. ना. )
५ 'न पेक्षा' ॥
६ किंचित्प्रयोजनमनपेक्ष्यैवेति संबन्धः । ( र. ना. )
७ नेति प्रवृत्त्यन्वयि । ( र. ना. )
८ प्रयोजकाभिप्रेतमात्रोद्देश्यकप्रवृत्त्याश्रयत्वं प्रयोज्यत्वमिति प्रयोज्यलक्षणे इति भावः । मात्रांशः, मात्रपर्यन्तांशः । तथा च सर्वत्र प्रयोज्येस्वोद्देश्यकप्रवृत्त्या- श्रयत्वमेवेति भावः । तत्प्रवृत्तेः प्रयोजकव्यापारजन्यत्वाच्च तस्य प्रयोज्यत्वमिति भावः । । ( र. ना. )
९ सर्वत्रैव स्वोद्देश्यकप्रवृत्त्याश्रयत्वस्यैव सत्त्वादिति भावः । ( र. ना. )
१० 'प्रेरणया' ॥
११ 'आसज्जन्ते' ॥
१२ वरत्रे इत्यर्थः । ( र. ना. )
१३ 'तं चाप्यादित्यो'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सज्जन्त इति । भाष्यकारवचनादात्मनेपदम् । परस्मैपदी तु सजिः गत्धुषस्जैगताविति ।

( उद्योतः ) उत्तरमाह—यदभिप्रायेष्वासजन्ते इति । प्रेरकाभिप्रायेष्वासज्जन्ते । तदभिप्रायं ज्ञात्वा तं निर्वर्तयन्ति यत्, एष एव प्रयोज्यस्य प्रेरणाया[1] अर्थ इत्यन्वयः ॥ एवं च क्रियायां[2] स्वाभिप्रायानुरोधफलकं तज्ज्ञापनमेव प्रेरणाफलमिति भावः ॥ अभिप्रायपदेन तद्विषय उच्यते । तदाह—ईदृशावित्यादिना । तदाह—निमित्तेभ्य इति । स्वभूतिसाधनत्वज्ञापकप्रेरणादिभ्य इत्यर्थः ॥ ननु स्वभूतिफलकप्रवृत्तौ प्रयोजकाभिप्रायानुरोधोऽपि किमर्थः, इत्यत आह—अभिप्रायेति ॥ ननु शिष्यादीनां स्वार्थसिद्धये गुर्वाद्यभिप्रायानुरोधेऽपि सूर्यस्य तदनुरोधे मानाभावः फलाभावश्चेति चेन्न । अभिप्रायसंपत्तिमात्रेण तदुद्देश्यकप्रवृत्त्याश्रयत्वादिरूपप्रयोज्यप्रयोजकभावाध्यारोपेण णिजिति तात्पर्यात् । भाष्यकारवचनादिति । तत्प्रयोगादस्यानुदात्तेत्त्वपि पाठोऽनुमीयत इति भावः ॥

( आक्षेपभाष्यम् )

**भवेदिह वर्तमानकालता युक्ता स्याद् उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते सूर्यमुद्गमयतीति, तत्रस्थस्य हि तस्यादित्य उदेति । इह तु कथं वर्तमानकालता[5] कंसं घातयति बलिं बन्धयतीति । चिरहते च कंसे, चिरबद्धे च बलौ ॥**

( प्रदीपः ) चिरहत इति । चिरप्रवृत्तत्वाद्वध्यघातकभावस्य प्रयोजकव्यापारस्य वर्तमानत्वासंभवात् । उपसंख्यानारम्भे तु न दोष, आख्यानस्य वर्तमानत्वादित्यर्थः ॥

( उद्योतः ) ननु चिरहते कंसे इत्युक्त्या प्रयोजकव्यापारस्य वर्तमानकालत्वाभावो नोक्त इत्यत—आह—चिरप्रवृत्तेति । कंसकृष्णयोर्वध्यघातकभावस्य चिरप्रवृत्तत्वेन तत्प्रयोजकव्यापारस्यापि तत्त्वमेवेति भावः ॥

( समाधानभाष्यम् )

**अत्रापि युक्ता ॥ कथम् ? । ये तावदेते शौभिका नाम एते प्रत्यक्षं कंसं घातयन्ति प्रत्यक्षं च बलिं बन्धयन्तीति ॥**

( प्रदीपः ) शौभिका इति । कंसाद्यनुकारिणां नटानां व्याख्यानोपाध्यायाः । कंसानुकारी नटः सामाजिकैः कंसबुद्ध्या गृहीतः कंसो भाष्ये विवक्षितः ॥

( उद्योतः ) कंसाद्यनुकारिणां कंसादिसदृशानाम् । भाष्ये प्रत्यक्षं कंसं घातयन्तीति । तादृशेनैव वासुदेवेनेत्यर्थः ॥

( आक्षेपभाष्यम् )

**चित्रेषु कथम् ? ।**

( समाधानभाष्यम् )

**चित्रेष्वपि उद्गूर्णा निपतिताश्च प्रहारा दृश्यन्ते कंसस्य कृष्णस्य च ॥**

( उद्योतः ) उद्गूर्णा इति । उद्यता इत्यर्थः । गूरी उद्यमने इत्यस्य रूपम् । एवं च चित्रलेखका अपि चित्रस्थं कंसं तादृशेनैव कृष्णेन घातयन्तीत्यर्थः ॥

( आक्षेपभाष्यम् )

**ग्रन्थिकेषु कथम् । यत्र शब्दग्रन्थगड्डुमात्रं लक्ष्यते ।**

( प्रदीपः ) ग्रन्थिकेष्विति । कथकेष्वित्यर्थः ॥

( उद्योतः ) ग्रन्थिकपदे अत इनिठनौ इति ठन् ॥ शब्दग्रन्थगड्डेति । शब्दः कथकमुखोच्चार्यमाणः । ग्रन्थस्तद्धस्तस्थपुस्तकरूपः । गड्डो[6] मनुष्यसंघातः । न तत्र कश्चिदपि कंसादिबुद्धिविषय इत्यर्थ इत्याहुः ॥

( समाधानभाष्यम् )

**तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशात् तद्वृद्धी[7]र्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति ॥ आतश्च सतः । व्यामिश्राश्च[8] दृश्यन्ते—केचित् कंसभक्ता भवन्ति, केचिद्वासुदेवभक्ताः । वर्णान्यत्वं खल्वपि पुष्यन्ति—केचित्कालमुखा भवन्ति केचिद् रक्तमुखाः । त्रैकाल्यं खल्वपि लोके लक्ष्यते—गच्छ हन्यते कंसः, गच्छ घानिष्यते कंसः, किं गतेन हतः कंस इति । हेतुमति च ॥ २६ ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमपादे द्वितीयमाह्निकम् ॥**

( प्रदीपः ) तेऽपीति । तदुक्तं हरिणा—
शब्दोपहितरूपां[9]स्तु बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन[10] मन्यत इति ॥
शिष्टं भाष्यं स्पष्टम् ॥ २६ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमपादे द्वितीयमाह्निकम् ॥

---

१ 'प्रेरणया' ॥

२ क्रियायाम्, प्रयोज्यक्रियायामित्यर्थः । स्वाभिप्रायेति । प्रयोजकाभिप्रायेत्यर्थः । तज्ज्ञापनमेवेति । स्वभूतिसाधनत्वज्ञापनमेवेत्यर्थः । तच्छब्दस्य बुद्धिस्थपरामर्शित्वात् । स्वं प्रयोज्यम् । ( र. ना. )

३ प्रयोज्यक्रियायां प्रयोज्यभूतिसाधनत्वज्ञापकेत्यर्थः । ( र. ना. )

४ प्रयोजकेऽभिप्रायसत्त्वमात्रेणेत्यर्थः । तदुद्देश्यकेत्यादेः प्रयोज्ये इत्यादौ शेषः । ( र. ना. )

५ 'अवर्तमानकाले वर्तमानकालता' ॥

६ गडशब्दस्तु न मनुष्यसंघातवाची । गडो मीनान्तराययोरिति मेदिनी । गडकः शकुलार्भक इत्यमरः । ( र. ना. )

७ 'तद्बुद्धी' ॥

८ व्यामिश्राश्च भवन्ति । नाना(विरुद्ध)पक्षसमाश्रयो व्याश्रय इति पदमञ्जरी ॥

९ शब्दैरुपहितानि स्वजन्यबुद्धौ समर्पितानि रूपाणि येषां तानित्यर्थः । यद्वा वाच्यतासंबन्धेन शब्दविशिष्टाकारानित्यर्थः । ( र. ना. )

१० कर्मकारकत्वेनेत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्द्योतः ) तेऽपि, ग्रन्थिका अपि ॥ तद्वृद्धीर्याचक्षणा इति । तदैश्वर्याणीत्यर्थः । तानि कथयन्तो ग्रन्थिकाः स्वबुद्धिविषयान्सतो विद्यमानान्कंसादीन्प्रकाशयन्ति श्रोतृबुद्धौ समर्पयन्तीत्यर्थः ॥ विद्यमानत्वेन बुद्धिविषयत्वे हेतुमाह—आतश्च सत इति ॥ व्यामिश्राश्चेति । चो हेतौ । यतो विरुद्धपक्षाश्रिता दृश्यन्ते इत्यर्थः ॥ नष्टातीतत्वबुद्धौ तत्संभवतीति भावः ॥ तत्कालमृते स्वपक्ष इव वर्णान्यत्वं पुष्यन्ति पुष्टं कुर्वन्ति दधतीत्यर्थः ॥ तत्रैव युक्त्यन्तरमाह—त्रैकाल्यं खल्वपीति । एवं च बुद्धिविषयसत्त्वैव सर्वोपि व्यवहार इति भावः ॥ शब्देति । शब्दसमर्पितबुद्धिविषयाकारानित्यर्थः ॥ साधनत्वेनेति । बुद्धिविषयवधादेरित्यर्थः ॥ २६ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते प्रदीपोद्द्योते तृतीयस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

## तृतीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

( ४०२ यक्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ३ आ. १ )

### ६४४ कण्ड्वादिभ्यो यक् ॥ ३।१।२७ ॥

( आक्षेपभाष्यम् )

**किमर्थः ककारः ? ।**

( प्रदीपः ) कण्ड्वादिभ्यो यक् ॥ २७ ॥ किमर्थ इति । द्वैविध्यं कण्ड्वादीनां दर्शयितुमुपन्यासः ॥

( उद्द्योतः ) कण्वादि ॥ २७ ॥ धातुभ्यो यकि गुणनिषेधकतया कस्य चारितार्थ्यादाह—द्विविध्यमिति ॥

( समाधानभाष्यम् )

**गुणवृद्धिप्रतिषेधार्थः । क्ङितीति गुणवृद्धिप्रतिषेधो यथा स्यात् ।**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते । धातोश्च विहितः प्रत्ययः शेष आर्धधातुकसंज्ञां लभते । न चायं धातोर्विधीयते । कण्ड्वादीनि हि प्रातिपदिकानि ॥**

( उद्द्योतः ) प्रातिपदिकत्वमात्रं तु प्रष्टा मन्यते ॥

( १७८६ यकोवैकल्पिकत्वसाधकवार्तिकप्रथमखण्डम् ॥ )

**॥ * ॥ कण्ड्वादिभ्यो वावचनम् ॥ * ॥**

( भाष्यम् ) **कण्ड्वादिभ्यो वेति वक्तव्यम् ॥**

( १७८६ वार्तिकद्वितीयखण्डम् ॥ १ ॥ )

**॥ * ॥ अवचने हि नित्यप्रत्ययत्वम् ॥ * ॥**

( भाष्यम् ) **अक्रियमाणे हि वावचने नित्यः प्रत्ययविधिः प्रसज्येत ॥**

१ सत्यामिति शेषः । विरुद्धपक्षाश्रितत्वं तत्पदार्थः । ( र. ना. )
२ धातुत्वाभावादिति भावः । ( र. ना. )

( प्रदीपः ) ककारप्रयोजनमेव दर्शयितुं वस्त्वन्तरमुपक्षिप्यते—**कण्ड्वादिभ्यो वावचनमिति** । यदा कण्ड्वादीनि प्रातिपदिकानि तदा वेति वक्तव्यमित्यर्थः ॥

( उद्द्योतः ) उपक्षिप्यते इति । तत्समाधानेनैव ककारप्रयोजनमप्युक्तमेव भवतीति भावः ॥ यदेति । प्रातिपदिकान्येवेत्यर्थः ॥ केवलधातुपक्षे तु वावचने क्रियमाणेऽपि कण्डवतीत्यनिष्टप्रसङ्गः, कण्ड्वावित्यादावुवङादिप्रसङ्गश्चेति भावः ॥ न च प्रातिपदिकान्येव सन्तु अत्र च सूत्रे 'करणे' इत्यनुवर्तते । तेन कण्डूं करोतीत्यर्थे यक्, अन्यदा त्वभावः । तेन कण्ड्वावित्यादेः सिद्धिः । यगन्तेभ्यस्तु न क्विब् अनभिधानात् । तेन नोवङ् सहितः प्रयोगः । एवं च वावचनं किमर्थमिति वाच्यम् । सुख्यतीत्यादावतो लोपानापत्तेः ॥

( दोषप्रश्नभाष्यम् )

**तत्र को दोषः ? ॥**

( प्रदीपः ) तत्र को दोष इति । नित्येपि प्रत्यये क्विपा कण्डूरित्यादि सिध्यतीति भावः ॥

( उद्द्योतः ) क्विपा संपदादि क्विपा ॥

( १७८७ दोषकथनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्र धातुविधितुक्प्रतिषेधः ॥ * ॥**

( भाष्यम् ) **तत्र धातुविधेस्तुकश्च प्रतिषेधो वक्तव्यः स्यात् । कण्ड्वौ कण्ड्वः "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" इत्युवङादेशः प्रसज्येत ।**

**इह कण्ड्वा कण्ड्वे इति "नोङ्धात्वोः" इति विभक्तेरुदात्तत्वप्रतिषेधः प्रसज्येत ॥**

**तुक् च प्रतिषेध्यः, वल्गुर्मन्तुरिति "ह्रस्वस्य पिति कृति तुक्" इति तुक् प्राप्नोति ॥**

( प्रदीपः ) क्विपा यथेष्टं रूपं न सिध्यतीति दर्शयितुमाह—**तत्रेति** । कण्डूयशब्दात् क्विपि विहितेऽकारलोपस्य स्थानिवत्त्वमुवङि कर्तव्ये नास्ति । क्विलुगुपधात्वचङ्परनिह्रासकुत्वेष्विति निषेधात् ॥ अथापि स्थानिवत्त्वादुवङ् स्यात्, तथापि वकारस्योठ् करिष्यते । आदिष्टादचः पूर्वो वकार इत्यूठि कर्तव्ये स्थानिवत्त्वाभावः । अत एवोठः पुनरुवङ् न भवति ॥ तत्र[३] कण्डू शब्दादौजसोः कृतयोरुवङ् प्राप्नोति । ओःसुपीति तु यणादेशोऽसंयोगपूर्वस्योक्तः ॥

( उद्द्योतः ) यथेष्टमिति । वीप्सायां यथाऽसादृश्य इत्यव्ययीभावः । अथापीति । तैदसार्वत्रिकम् । किं तु क्वौ विधौ नेत्येत सार्वत्रिकमिति भावः ॥ इदं प्रौढ्या ॥ आदिष्टादिति । क्वौ विधिमिति निषेधादित्यपि बोध्यम् ॥ अत एवेति । आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वाभावादेवेत्यर्थः । पुनरुवङ्नेति । लक्ष्ये लक्षणस्येति न्यायादित्यपि बोध्यम् । न चानादिष्टादचः पूर्वत्वं

३ ऊकारीलोपक्तदभावोभयपक्षे निष्पन्नात्कण्डूशब्दादित्यर्थः । ( र. ना. )
४ "क्वौ लुप्तं न स्थानिवत्" इति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्थानिवद्भावेन लभ्यम्, वस्यादेशत्वाभावात् । उवङ आदेशत्वेऽपि तस्य कार्याभावात् । न च सर्वे सर्वपदादेशा इति कण्डू इत्यस्य कण्डुवादेशे तस्य स्थानिवत्त्वादनादिष्टादचः पूर्वत्वेन तस्य कण्डू अ इत्यादेशे कार्ये स्थानिवत्त्वं, सर्वे सर्वपदादेशा इत्याश्रित्याचः परस्मिन्निलस्या प्रवृत्तेः । अत एव स्वरादिग्रहणस्य व्यवहितसाधारणपूर्वत्वग्रहणज्ञापकतेत्या आकरोक्ता संगच्छते । न च प्रातिपदिकानीत्युपक्रम्य भाष्ये वावचनाद् यदाकण्ड्वादीनि प्रातिपदिकानीत्यादिना स्वयं तथैव व्याख्यानाचाल्लोपस्य स्थानिवत्त्वेऽपि तत्र परे पूर्वस्य कण्डू इत्यस्य धातुत्वाभावादुवङोऽप्राप्त्याऽसंगतोयं कैयटः स्पष्टं चेदं लोपो व्योः इति सूत्रे कैयट इति वाच्यम् । अतिदेशेनाकारे सत्यपि श्रवणाभावेन तस्य लौकिकसत्ताविरहात् छिन्नपुच्छश्वदृष्टान्तमूलकेन प्राग्दीव्यतोण् इति सूत्रभाष्योक्तैनैकदेशविकृतन्यायेन कण्डू इत्यस्य धातुत्वमित्यभिमानात् ॥ तत्रेति । औजस्निमित्तक उवङ् प्राप्नोति । एकदेशविकृतन्यायेन कण्डू इत्यस्य धातुत्वात् । न चैतन्निमित्ते उवङि अल्लोपस्य स्थानिवत्त्वम्, कौ लुप्तमिति निषेधादिति भावः ॥ भाष्ये ह्रस्वस्य पिति इति । ह्रस्वोच्चारणसामर्थ्याद्दीर्घाभावं मन्यते ॥ तद्ध्वनयन्नाह—ह्रस्वयलोपौ चेति ।

( १७८८ दोषकथनवार्तिकम् ॥ ३ ॥ )

॥ * ॥ ह्रस्वयलोपौ च ॥ * ॥

( भाष्यम् ) ह्रस्वयलोपौ च वक्तव्यौ स्याताम् ॥ ह्रस्व—वल्गुर्मन्तुरिति ॥

किमर्थमिदम् न ह्रस्व एवायम् ? ।

अन्तरङ्गत्वाद् 'अकृद्यकार' इति दीर्घत्वं प्राप्नोति । ह्रस्वः ॥

यलोप—यलोपश्च वक्तव्यः । कण्डूर्मन्तुर्वल्गुरिति ।

किमर्थमिदम्, न 'वली'त्येव सिद्धम् ।

वलीत्युच्यते, न चात्र वलं पश्यामः ॥

ननु च क्विब्वलादिः ॥

क्विपो लोपे कृते वलाद्यभावान्न प्राप्नोति । इदमिह संप्रधार्यम् क्विब्लोपः क्रियतां वलि लोप इति । किमत्र कर्तव्यम् ? । परत्वात् क्विब्लोपः ॥ नित्यः खल्वपि क्विब्लोपः कृते यलोपे प्राप्नोति, अकृतेऽपि ॥ नित्यत्वात् परत्वाच्च क्विब्लोपे कृते वलाद्यभावाद् न प्राप्नोति ।

एवं तर्हि प्रत्ययलक्षणेन भविष्यति ॥

वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥

( प्रदीपः ) नित्यत्वाच्चेति । वेरपृक्तलोपात् पूर्वं वलिलोप इत्येतदनाश्रित्येदमुच्यते ॥ वर्णाश्रय इति । वल्रूपाश्रयो व्योर्लोपः न तु प्रत्ययाश्रयः ॥ वावचने तु सति पक्षे यगनुत्पादाद्यथेष्टसिद्धिः ।

( उद्द्योतः ) अन्तरङ्गत्वादिति । अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः ॥ वेरपृक्तलोपादिति । इदं कासीति चिन्त्यम् । लोपो व्योः इति सूत्रे क्ष्मायुपसंख्यानमिति वार्तिकम् ॥

( अनुयोगभाष्यम् )

अथ क्रियमाणेपि वावचने यदा यगन्तात् क्विप् तदैते दोषाः कस्मान्न भवन्ति ॥

( समाधानभाष्यम् )

नैतेभ्यस्तदा क्विबुत्पद्यते । किं कारणम् ? । "अन्येभ्योपि दृश्यते" इत्युच्यते । नैतेभ्यः तदा क्विब् दृश्यते ॥

( प्रदीपः ) नैतेभ्य इति । कर्तरि क्विपो विधानात् कण्डूरिति च कर्त्रर्थानवगमादिति भावः ॥

( उद्द्योतः ) कर्त्रर्थानवगमादिति । यत्र तु कर्त्रर्थावगमस्तत्र भवत्येव यथाभिषज्यतेः क्विपि भिषक्शब्दे इत्याहुः ॥ केचित्तु इदं भाष्यमजन्तपरमेवेत्याहुः ॥

( अनुयोगभाष्यम् )

यथैव तर्हि क्रियमाणेपि वावचने "अन्येभ्योपि दृश्यते" इत्यत्र क्विब् न भवति । एवमक्रियमाणेपि वावचने न भविष्यति ॥

( क्विपीष्टापत्तिभाष्यम् )

अवश्यमेतेभ्यः क्विबेषितव्यः । किं प्रयोजनम् । एतानि रूपाणि यथा स्युरिति ॥

( प्रदीपः ) अवश्यमिति । संपदादित्वाद्भावे कर्तव्य इति भावः ।

( उद्द्योतः ) संपदादित्वादिति । तेन वेदनामात्रप्रतिपादनेऽपि कण्डूरित्यादिसिद्धमिति भावः ॥ भाष्ये एतानीति । कण्डूरित्यादीनि दीर्घान्तप्रथमैकवचनान्तानीत्यर्थः ॥

( अनुयोगभाष्यम् )

तत्तर्हि वावचनं कर्तव्यम् ।

( उद्द्योतः ) एवमपि कण्ड्वादिलाभार्थं वावचनं कर्तव्यमेवेत्याह—तत्तर्हीति ॥

( समाधानभाष्यम् )

न कर्तव्यम् । उभयं कण्ड्वादीनि धातवश्च प्राति-

---

१ तदुदितसंनिवेशापेक्षस्य ततः पूर्वत्वस्यातिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वाचेति हरिदीक्षितोक्तिरपि न विस्मर्तव्या । ( र. ना. )

२ अल्लोपस्येति भावः । ( र. ना. )

३ यदि सर्वे सर्वपदादेशा इत्याश्रित्याचःपरस्मिन्निलस्य प्रवृत्तिः स्यात्तदा निमित्तस्य स्थानिविशेषणत्वेन चिकीर्ष अक इत्यस्यातो लोप इत्यनेन चिकीर्षक इत्यादेश इति कल्पनया प्रकृतिप्रत्ययव्यपवर्गाभावेन लित्स्वरामाप्त्याऽल्लोपस्य स्थानिवत्त्वाभावात्तौ तद्वारणार्थं न पदान्तसूत्रे स्वरग्रहणं व्यर्थमेव स्यात्कृतस्वरस्य व्यवहितसाधारणपूर्वत्वग्रहणज्ञापकत्वमिति भावः । ( र. ना. )

४ अभिमानोक्तिबीजं तु स्थानिवत्त्वेनाकारबुद्धौ सत्यां कण्डू अ इत्यस्यैवैकदेशविकृतन्यायेन धातुत्वं ननु कण्डू इत्यस्य, अकारस्य लौकिकसत्ताविरहेऽपि आतिदेशिकसत्तावत्त्वात्, व्याकरणे च तस्या अभ्यपेक्षणीयत्वादिति । ( र. ना. )

५ आह वार्तिके वक्ष्यतीत्यर्थः ॥

६ तथा च तदसिद्धवत्कृत्वाऽत्र यलोपो वक्तव्यत्वेनोपदिश्यते । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पदिकानि च ॥ आतश्चोभयम् । कण्डूयतीति हि क्रियां कुर्वाणे प्रयुज्यते । अस्ति मे कण्डूरिति वेदनामात्रस्य सांनिध्ये ॥

अपर आह—

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥

इति ॥ कण्ड्वादिभ्यो यक् ॥ २७ ॥

( प्रदीपः ) वेदनामात्रस्येति । वेदना च सत्त्वरूपा[1] प्रतीयते न च साध्यरूपेति भावः ॥

तत्र धात्वधिकाराद्धातुभ्य एव स्वार्थे यग् भवति । प्रातिपदिकेभ्यस्तु स्वाद्युत्पत्तौ सत्यां कण्डूरित्यादिरूपसिद्धिः ॥ कस्य चेति । धातुविधानप्रतिबन्द्धा[2]र्धधातुकसंज्ञाश्रयगुणनिषेधार्थात्ककारासञ्जनादपि धातुः कण्ड्वादिर्यकमुत्पादयतीति ज्ञायत इत्यर्थः ॥ आह चेति । दीर्घान्तपाठाच्च पाक्षिकं धातुत्वमेषां निश्चीयते । नित्ये हि धातुत्वे नित्ये च यकि सति अकृद्यकार इति दीर्घस्य सिद्धत्वाद्दीर्घपाठोनर्थकः स्यादित्यर्थः ॥ २७ ॥

( उद्द्योतः ) भाष्ये उभयं कण्ड्वादीनीति । उभयथेत्यर्थे उभयमित्यव्ययम् ॥ द्विप्रकाराणीत्यर्थः ॥ उभयाङ्गीकारे प्रमाणमाह— आतश्चेति ॥ ननु भावक्विबन्तेन वेदनामात्रे कण्डूरित्यादिसिद्धिरत आह—सत्त्वरूपेति । सैवेत्यर्थः ॥ भावक्विबन्ते हि प्रकृत्या साध्यरूपेणापि प्रतीतिः स्यादिति भावः ॥ एवं चैतेभ्यो भावे क्विब् नास्त्येवेति तत्त्वम् ॥ स्वार्थे इति । नित्यमिति शेषः । वा ग्रहणाननुवृत्तेः । तेन पक्षे कण्डवतीत्यादि न । आर्धधातुकसंज्ञेति[3] । न च साऽपि मास्तु कोऽ[4]पि मास्त्विति वाच्यम् । ग्रुख्यतीत्यादावतो लोपार्थं तस्या आवश्यकत्वात्[5] ॥ दीर्घपाठ इति । वल्गुमन्तुप्रभृतीनां ह्रस्वपाठः प्रातिपदिकविषये चरितार्थ इति तेषामपि दीर्घो भवति ॥ यत्तु केषांञ्चिद्दीर्घपाठेन वल्गुप्रभृतीनां दीर्घाभावो ज्ञाप्यते । तन्न, भाष्यविरोधा[6]त् । शास्त्र[7]बाधकल्पनापेक्षया प्रातिपदिकत्वकल्पनस्यैव लघुत्वाच्च । एतेन ककारेणार्धधातुकत्वमेव कल्प्यतामित्यपास्तम् । धातुत्व[8]कल्पनस्यैव लघुत्वात् ॥ २७ ॥

( ४०३ णिङ्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ३ आ. २ )

## ६४७ कमेर्णिङ् ॥ ३ । १ । ३० ॥

( आक्षेपभाष्यम् )

किमर्थो णकारः ।

( समाधानभाष्यम् )

वृद्ध्यर्थः । ञ्णितीति वृद्धिर्यथा स्यादिति ।

( समाधानबाधकभाष्यम् )

क्रियमाणेपि वैणकारे वृद्धिर्न प्राप्नोति । किं कारणम् । क्ङिति चेति प्रतिषेधात् ।

( समाधानसाधकभाष्यम् )

णित्करणसामर्थ्याद्भविष्यति ।

( समाधानबाधकभाष्यम् )

अत उत्तरं पठति—

( १७८९ समाधानबाधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ णिङि णित्करणस्य सावकाशत्वाद् वृद्धिप्रतिषेधप्रसङ्गः ॥ * ॥

( भाष्यम् ) णिङि णित्करणं सावकाशम् । कोवकाशः ? । सामान्यग्रहणार्थो णकारः । क्व सामान्यग्रहणार्थेन णकारेणार्थः ? । "णेरनिटि" इति । णिङि णित्करणस्य सावकाशत्वाद् वृद्धेः प्रतिषेधः प्राप्नोति ॥

( प्रतिबन्दीभाष्यम् )

ङित्करणमपि सावकाशम् । कोऽवकाशः ? । सामान्यग्रहणाविघातार्थो ङकारः । क्व सामान्यग्रहणाविघातार्थेनार्थः ? । अत्रैव[9] ॥

( उद्द्योतः ) कमेर्णिङ् ॥ ३० ॥ भाष्ये ङित्करणमिति । सावकाशमिति । एवं च परत्वाद्वृद्धिः प्राप्नोतीति भावः ॥

( ङित्करणवैयर्थ्यभाष्यम् )

शक्योत्र सामान्यग्रहणाविघातार्थोऽन्योऽनुबन्ध आसङ्क्तुम् । तत्र ङकारानुबन्धाद् वृद्धिप्रतिषेधः प्राप्नोति ।

( ङित्करणसार्थक्यभाष्यम् )

अवश्यमत्रात्मनेपदार्थो ङकारोनुबन्ध आसङ्क्तव्यः । ङित इत्यात्मनेपदं यथा स्यात् ॥

( प्रतिबन्दीबाधकभाष्यम् )

एवमप्युभयोः सावकाशयोः प्रतिषेधबलीयस्त्वात्प्रतिषेधः प्राप्नोति ॥

( प्रदीपः ) कमेर्णिङ् ॥ ३० ॥ प्रतिषेधबलीयस्त्वादिति । प्रतिषेधस्य विध्यपवादत्वोद् बाधकत्वाद् बलीयस्त्वम् ।

( प्रतिषेधाप्राप्तिभाष्यम् )

एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति—'न कमेर्वृद्धिप्रतिषेधो भवतीति' । यदयं न कम्यमिचमामिति मित्संज्ञायाः प्रतिषेधं शास्ति ॥

---

१ लिङ्गसंख्यान्वयित्वेन द्रव्यरूपेत्यर्थः । ( र. ना. )
२ प्रतिबन्धः संबन्धः । ( र. ना. )
३ आर्धधातुकसंज्ञेत्यर्थः ॥
४ यकि ककार इत्यर्थः ॥
५ एवञ्च गुणनिषेधार्थं ककारोऽप्यावश्यक इति भावः । ( र. ना. )
६ भाष्येऽविशेषेण सर्वेषामेव दीर्घोक्तेरिति भावः ।
७ दीर्घविधायकेत्यादिः । ( र. ना. )
८ आर्धधातुकत्वकल्पनद्वारा धातुत्वकल्पनापेक्षया साक्षाद् धातुत्वकल्पनस्येत्यर्थः । ( र. ना. )
९ सामान्यविशेषभावसत्त्वादभेदेनान्वयः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(उद्द्योतः) यदयमिति । मित्त्वनिषेधो ह्रस्वाभावफलकः वृद्ध्यभावे स्वत एव ह्रस्वसत्त्वाद् व्यर्थः सन् वृद्धिसत्तां ज्ञापयतीत्यर्थः ॥

(१७९० ज्ञापकत्वबाधकं मित्प्रतिषेधसार्थक्यवार्तिकम् ॥२॥)

**॥ * ॥ मित्प्रतिषेधस्य चार्थवत्त्वात् ॥ * ॥**

(भाष्यम्) मित्प्रतिषेधस्य चार्थवत्त्वाद्वृद्धिप्रतिषेधः प्राप्नोति । अर्थवान् मित्प्रतिषेधः । कोर्थः ? । णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं मा भूदिति ।

(प्रदीपः) णिङन्तस्येति । कामयमानं प्रयुङ्क्त इति णिच् ॥

(ज्ञापकत्वसाधकभाष्यम्)

ननु तस्या अपि क्ङितिचेति प्रतिषेधेन भवितव्यम् ।

(ज्ञापकत्वबाधकभाष्यम्)

न भवितव्यम् । उक्तमेतत् क्ङिति प्रतिषेधे तन्निमित्तग्रहणमुपधारोरवीत्यर्थमिति ।

(ज्ञापकत्वसाधकभाष्यम्)

एवं तर्हि[1] णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं न प्राप्नोति । किं कारणम् । णिङा व्यवहितत्वात् ।

(ज्ञापकत्वबाधकभाष्यम्)

लोपे कृते नास्ति व्यवधानम् ।

(ज्ञापकत्वसाधकभाष्यम्)

स्थानिवद्भावाद्व्यवधानमेव ।

(ज्ञापकत्वबाधकभाष्यम्)

णिङ्येव तर्हि मा भूदिति ।

(प्रदीपः) णिङ्येवेति । णिज्निमित्ता या वृद्धिस्तस्या णिङ्निमित्तं ह्रस्वत्वं मा भूदित्येवमर्थो मित्प्रतिषेधः स्यादित्यज्ञापको णिङ्[3]वृद्धेरित्यर्थः ॥

(उद्द्योतः) ननु णिङ्येवेत्ययुक्तं प्रतिषेधप्रवृत्तौ[4] ह्रस्वस्यैव भावादत आह—णिज्निमित्तेति । तां त्वसौ मन्यते ॥

(ज्ञापकत्वसाधकभाष्यम्)

णिङि च न प्राप्नोति । किं कारणम् ? । "असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे" इति ।

(प्रदीपः) णिङि चेति । ह्रस्वत्वमिति शेषः । असिद्धमिति । ह्रस्वे कर्तव्ये बहिरङ्गा वृद्धिरसिद्धेत्यर्थः ॥

(उद्द्योतः) ह्रस्वे इति । वृद्धेरसिद्धत्वे ह्रस्वस्य ह्रस्वे प्रयोजनाभावात्तस्याप्रवृत्तौ ज्ञापकत्वमेव स्थितमिति भावः ॥

(ज्ञापकत्वसाधकयुक्त्यन्तरभाष्यम्)

नैव वा पुनर्णिङन्तस्य णिचि वृद्धिः प्राप्नोति । किं कारणम् । णिङा व्यवहितत्वात् ॥

लोपे कृते नास्ति व्यवधानम् ॥

स्थानिवद्भावाद् व्यवधानमेव ॥

(प्रदीपः) स्थानिवद्भावादिति । क्लिलुगुपधात्वेत्युपधाविधौ स्थानिवत्त्वनिषेधः प्रत्ययाविधावेवेति तत्रैवोक्तम् । तथा च पठ्यतीत्यत्र वृद्धौ कर्तव्यायां निषेधो न भवति ॥

(उद्द्योतः) ननु पर्जन्यवल्लक्षणप्रवृत्तेर्ह्रस्वदृष्टावपि प्राप्तह्रस्ववारणेन दीर्घश्रवणाय मित्त्वनिषेधः सार्थक इत्यरुचेराह—भाष्ये नैवेति ॥ प्रत्ययविधावेवेति । पारिखीय इत्यादौ ॥

(ज्ञापकत्वबाधकभाष्यम्)

इदं तर्हि प्रयोजनम् । यत्तत् "चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इति दीर्घत्वं शास्ति, तत्कमेर्णिङि मा भूदिति ॥

(उद्द्योतः) भाष्ये इदं तर्हि प्रयोजनं यत्तच्चिण्णमुलोरिति । मित्संज्ञाप्रतिषेधस्येति शेषः[6] ॥

(ह्रस्वघटितन्यासकरणे लाघवभाष्यम्)

किं पुनः कारणं तत्र दीर्घोऽन्यतरस्यामित्युच्यते, न ह्रस्वोऽन्यतरस्यामित्येवोच्येत । यथाप्राप्तं कमेर्ह्रस्वत्वमेव ॥ तत्रायमप्यर्थः—ह्रस्वग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते । क्व प्रकृतम् ? । "मितां ह्रस्वः" इति ।

(प्रदीपः) किं पुनरिति । कमेर्णिङि वृद्धिप्रतिषेधा[7]न्नित्यं ह्रस्वत्वमेव स्थितमिति मित्प्रतिषेधो[8] न कर्तव्यो भवति । क्रियमाणस्तु णिङि वृद्धेर्ज्ञापक एवेति भावः ॥

(आक्षेपभाष्यम्)

का रूपसिद्धिः । अशमि अशामि । शमंशमम् । शामंशामम् ॥

(समाधानभाष्यम्)

वृद्ध्या सिद्धम् ॥

(आक्षेपसाधकभाष्यम्)

न सिध्यति । नोदात्तोपदेशस्य मान्तस्यानाचमेरिति वृद्धिप्रतिषेधः प्राप्नोति ॥

(आक्षेपबाधकभाष्यम्)

नैष दोषः । चिण्कृतोः स वृद्धिप्रतिषेधो, न णिचि ॥

---

१ णिङन्तस्य णिचिया वृद्धिः सा न ङित्प्रत्ययनिमित्तेति भावः । (र. ना.)

२ एवं तर्हीति–णिङन्तस्य णिचि ह्रस्ववारणरूपमित्प्रतिषेधफलस्योपन्यास इत्यर्थः । ह्रस्वत्वं न प्राप्नोतीति । एवञ्चात्र ह्रस्ववारणार्थो मित्प्रतिषेध इति वक्तुमशक्यत्वेन मित्प्रतिषेधस्य वृद्धिप्रतिषेधाभावज्ञापकत्वं सुस्थमिति भावः । (र. ना.)

३ मित्प्रतिषेधो णिङि वृद्धेरज्ञापक इत्यर्थः । (र. ना.)

४ क्ङिति चेति प्रतिषेधप्रवृत्तावित्यर्थः । (र. ना.)

५ णिङ्निमित्ताया वृद्धेः क्ङिति चेति प्रतिषेधेऽपि णिज्निमित्तां तामसौ मन्यत इत्यर्थः । मन्यते इत्युक्तिस्तु णिज् निमित्ताया अपि तस्या अप्राप्तिः, स्थानिवद्भावेन णिङा व्यवधानादिति वक्ष्यमाणत्वादित्यभिप्रेत्य । (र. ना.)

६ प्रयोजनपदस्येति भावः । (र. ना.)

७ क्ङिति चेत्यनेनेति शेषः । (र. ना.)

८ 'तस्य ह्रस्वविकल्पामास्या इति' आदौ शेषः । (र. ना.)



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( आक्षेपसाधकभाष्यम् )

इह तर्हि । अजनि अजानि जनंजनम् । जानंजानम् । जनिवध्योश्चेति वृद्धिप्रतिषेधः प्राप्नोति ॥

( आक्षेपबाधकभाष्यम् )

सोपि चिण्कृतोरेव, न णिचि ॥

( ह्रस्वघटितन्यासे गौरवभाष्यम् )

णिज्व्यवहितेषु तर्हि यङ्लोपे चोपसंख्यानं कर्तव्यं स्यात् । शमयन्तं प्रयोजितवान् अशमि अशामि । शमंशमम् । शामंशामम् ॥ शंशामयतेः— अशंशमि अशंशामि । शंशमंशंशमम् । शंशामंशंशामम् ॥

किं पुनः कारणं न सिध्यति ? ।

चिण्णमुल्परे णौ मितामङ्गानां ह्रस्वो भवतीत्युच्यते । यश्चात्र णिः चिण्णमुल्परः, न तस्मिन्निमदङ्गम् । यस्मिंश्च मिदङ्गम्, नासौ णिश्चिण्णमुल्परः ॥

णिलोपे तर्हि कृते चिण्णमुल्परः ॥

स्थानिवद्भावान्न चिण्णमुल्परः ॥

( प्रदीपः ) उपसंख्यानं कर्तव्यं स्यादिति । पाक्षिकवृद्धिप्राप्त्यर्थमित्यर्थः ॥

( उद्योतः) चिण्णमुलोरित्यत्र ह्रस्वघटितन्यासे दोषमाह— भाष्ये णिज्व्यवहितेष्विति । पाक्षिकेति । वृद्धेर्वैकल्पिकत्वार्थं वृद्धिर्वेत्युपसंख्यानं कर्तव्यमित्यर्थः । दीर्घविधाने तु कृतह्रस्वस्य दीर्घविधानात्सिध्यतीति भावः ॥

( दीर्घघटितन्यासेऽनुयोगभाष्यम् )

अथ दीर्घोऽन्यतरस्यामित्युच्यमाने यावता स्थानिवद्भावः कथमेवैतावता सिध्यति ॥

( समाधानभाष्यम् )

एतदिदानीं दीर्घग्रहणस्य प्रयोजनम्—'दीर्घविधिं प्रत्यजादेशो न स्थानिवद्भवती'ति स्थानिवत्त्वप्रतिषेधः सिद्धो भवति ॥

( प्रदीपः ) एतदिदानीमिति । ततश्च पाक्षिकदीर्घनिवृत्त्यर्थो मित्प्रतिषेधो न ज्ञापकः ॥

( उद्योतः ) भाष्ये दीर्घविधिं प्रतीति । न पदान्तसूत्रे जशादिसाहचर्येण त्रैपादिकदीर्घस्यैव ग्रहणेन पूर्वत्रासिद्धे न स्थानिवादित्यात्रित्य भगवता न पदान्तसूत्रे तेषां प्रत्याख्यानेन च स्थानिवत्त्वनिषेधाप्रसक्तेरिदं भाष्यमेकदेशयुक्तिरिति नार्थसाधकम् । णिजन्ताण्णिचि उपसंख्यानेन सिद्धेः । शीशमं शंशाममित्याद्यपि यङ्लुगन्ताण्णमुलि सिद्धम् । न च चिण्णमुलोरित्यत्र दीर्घविधानसामर्थ्यादत्रैपादिकेऽपि निषेध इति वाच्यम् हेड्धातोरहिंडि अहीडि इति साधनेन चारितार्थ्यात् । ह्रस्वविधाने ह्नहेडीति स्यादिति बोध्यम् ॥ केचित्तु एतद्भाष्यप्रामाण्यात्तत्रत्य वार्तिके वरेयलोपस्वरवर्जमित्यत्र दीर्घोऽप्युपलक्षणीयः एतदिदानीं दीर्घग्रहणस्य प्रयोजनमिति अत्रत्य भाष्यस्वारस्यात् हेडधातोर्घटादिष्वप्रामाणिकः पाठः ॥ ऊकालसूत्रस्थभाष्यप्रामाण्याच्च । वा दान्तेति सूत्रस्थभाष्यप्रामाण्याच्च, चिण्णमुलोरिति सूत्रस्थभाष्याच्चेति यथाश्रुतभाष्यं रमणीयमेवेत्याहुः ॥

( आक्षेपभाष्यम् )

यदा खल्वप्यायादय आर्धधातुके वा भवन्ति तदा णिचि णिङ् नास्ति तदर्थं च मित्प्रतिषेधः स्यात् । तस्मात्प्रतिषेधः प्राप्नोति ॥

( प्रदीपः ) यदेति । अणिङन्तात्कमेर्यदा णिच् क्रियते तदा ह्रस्वनिवृत्त्यर्थो मित्प्रतिषेधः स्यादित्यर्थः ॥ ३० ॥

( उद्योतः ) तस्मात्प्रतिषेधः प्राप्नोतीत्यस्य तन्निषेधो वक्तव्य इति शेषः । अत एवोक्तं वेति वाशब्दः संगच्छते ॥ ३० ॥

( समाधानभाष्यम् )

उक्तं वा । किमुक्तम् । तद्धितकाम्योरिक्प्रकरणादिग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः नचैषा इग्लक्षणा वृद्धिरिति ॥ कमेर्णिङ् ॥ ३० ॥

( ४०४ विकल्पसूत्रम् ॥ ३ । १ । ३ आ. ३ )

## ६४८ आयादय आर्धधातुके वा ॥ ३ । १ । ३१ ॥

( आर्धधातुक इति सप्तम्यर्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

कथमिदं विज्ञायते—आयादिभ्यो यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनां निवृत्तिर्भवतीति । आहो स्विद्—आयादिप्रकृतेर्यदार्धधातुकं तस्मिन्नवस्थिते आयादीनामुत्पत्तिर्भवतीति ॥

---

१ यदा शमिप्रभृतिभ्यो णिजन्तेभ्यो द्वितीयो णिच् क्रियते' इति पदमञ्जरी ॥

२ शमिप्रभृतिभ्यो यङन्तेभ्यो णिचि 'अल्लोपयलोपयोरिति पदमञ्जरी ॥

३ यत इत्यर्थः । एतावता, दीर्घोऽन्यतरस्यामिति वचनेनेत्यर्थः । ( र. ना. )

४ हेड् धातोर्णिजन्ताल्लुङि चिणि मित्त्वाद् उपधाह्रस्वत्वे तस्यानेनदीर्घविकल्पेऽहिडि, अहीडि इति रूपद्वयसिद्धिः अस्य ह्रस्वविकल्पविधायकत्वे तु मितां ह्रस्व इति प्राप्तं नित्यह्रस्वं बाधित्वाऽनेन ह्रस्वविकल्पेऽहिडि, अहेडि इति स्यादिति भावः । ( र. ना. )

५ अहेडि इत्येव भवतीति भावः । । ( र. ना. )

६ 'वा पदान्ते' इति तु केनचिद् वृथैव शोधितम् ॥

७ तस्मात्; मित्प्रतिषेधस्य वृद्धिज्ञापकत्वाभावात् कमेर्णिङि ङ्किति चेति वृद्धिप्रतिषेधः प्राप्नोतीत्यर्थः । ( र. ना. )

८ 'वा समुच्चय एवार्थे उपमानविकल्पयोः' इति कोशप्रामाण्याद् 'उक्तं वा' इत्यस्य 'उक्तमेव 'ङ्किति च' इति सूत्रभाष्ये इत्यर्थकत्वे तु नैव वाशब्दासंगति'रिति शेषपूर्णं नागेशभट्टानां व्यर्थमेवेति दाधिमथाः ॥

९ इक्प्रकरणादिग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधो नचैषा तद्धितकाम्योरिग्लक्षणा वृद्धिरिति योजना । तद्धितकाम्योरिति संबन्धसामान्ये षष्ठी । ( र.ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रत्याक्षेपभाष्यम् )

**किं गतमेतदियता सूत्रेण, आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ? ॥**

( प्रदीपः ) आयादयः ॥ ३१ ॥ आर्धधातुकइति परसप्तमीमाश्रित्य पक्षद्वयविचारः । द्वयोरपि च पक्षयोर्दोष इति मत्वा प्रश्नः—कथमिति ॥

आहोस्विदन्यतरस्मिन्निति । निवृत्तिशब्द उत्पत्तिशब्दो वा निर्देष्टव्य इति मन्यते ॥

( उद्योतः ) आयादय ॥ ३१ ॥ विषयसप्तम्यां विचारानारम्भादाह—परेति ॥

आयान्तादिभ्य आर्धधातुके सिद्धेऽस्य विध्यभावात् निवृत्तिर्विधेया तदर्थं तदुपादानं कार्यमित्याह—निवृत्तीति ॥ उत्पत्तिशब्दो वेति । अस्य प्रयोजनं चिन्त्यम् । सर्वत्र विधिवाक्ये तदभावेप्युत्पत्त्यवगतेः । एकतरपक्षेऽधिककर्तव्यतायामेव भाष्यतात्पर्याच्च । क्वचिद् अनुत्पत्तिशब्दो वेति पाठः ॥ आयाद्यनुवृत्त्यैव सिद्धे आयादय इति पञ्चम्या विपरिणम्यते । आयादिभ्यो यदार्धधातुकं तत्र परे गुपादिभ्य आयाद्यनुत्पत्तिरित्यर्थः ॥ परं त्विदं गुर्वीति दिक् ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**गतमित्याह । कथम् ? । यदा तावदायादिभ्यो यदार्धधातुकं तस्मिन्नवस्थिते वायादीनां निवृत्तिर्भवतीति तदाऽविशेषेण सर्वमायादिप्रकरणमनुक्रम्य "आयादय आर्धधातुके वा" इत्युच्यते ॥**

**यदाप्यायादिप्रकृतेर्यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनामुत्पत्तिर्भवतीति तदैकं वाक्यं तच्चेदं च । 'गुपूधूपविच्छिपणिपनिभ्य आयः । आर्धधातुके वा' । "ऋतेरीयङ् । आर्धधातुके वा" । "कमेर्णिङ् । आर्धधातुके वा" इति ॥**

( प्रदीपः ) यदा तावदिति । एतद्वाक्यनिरपेक्षैरायादिविधानवाक्यैः परनिमित्तानपेक्षा आयादयो यदा विधीयन्ते तदानेनार्धधातुके तेषां पक्षे निवृत्तिः क्रियते । यद्यपि नित्याः शब्दास्तथापि शास्त्रप्रक्रियायां क्वचिदुत्पन्नस्य लोपादिद्वारेण निवृत्तिः क्रियते । क्वचिदपवादविधानेनोत्सर्गस्यानुत्पत्तिर्ज्ञाप्यते । ततो निवृत्तिपक्षो नानुपपन्नः ॥

यदेति । यदा सूत्रत्रयस्यायं योगः शेषस्तदैकवाक्यतायां सत्यामार्धधातुके परत आयादयो विकल्पे नोत्पद्यन्त इति पक्षः । यदि तर्ह्येकवाक्यता ततः सार्वधातुक आयादयो नोत्पद्येरन् ॥ नैष दोषः । गुपूधूपेत्यत्रैवार्धधातुके वेति वक्तव्ये पृथक्पाठात्सार्वधातुकेऽप्यायादयो भवन्तीति ज्ञायते । आर्धधातुक एव त्वेकवाक्यतया विकल्पे न विधीयन्ते ॥

( उद्योतः ) पक्षे निवृत्तिरिति । निवृत्तिपदं विनापि सामर्थ्यादिति भावः ॥ क्वचिदिति । अदिप्रभृतिभ्य इत्यादौ ॥ क्वचिदिति । यथा—दीर्घविषये यागः ॥

सूत्रत्रयस्येति । आयादय इति पदोपादानसामर्थ्यादित्यर्थः । अन्यथाऽव्यवहितत्वात्कमेर्णिङित्यस्यैव शेषः स्यात् ॥ पृथक्पाठादिति । तत्सामर्थ्याद्भिन्नवाक्यतया एकवाक्यतया च वाक्यार्थं इति भावः ॥ एकं वाक्यमिति भाष्यस्य एकं वाक्यमपीत्यर्थः ॥

( अनुयोगभाष्यम् )

**कश्चात्र विशेषः ? ।**

( १७९१ विशेषदर्शकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ आयादिभ्यो यदार्धधातुकम् आयादिप्रकृतेर्यदार्धधातुकमिति चोभयथाऽनिष्टप्रसङ्गः ॥ * ॥

( भाष्यम् ) **'आयादिभ्यो यदार्धधातुकम्' 'आयादिप्रकृतेर्यदार्धधातुकम्' इति चोभयथाऽनिष्टं प्राप्नोति ॥**

**यदि विज्ञायते आयादिभ्यो यदार्धधातुकं तस्मिन्नवस्थिते वा आयादीनां निवृत्तिर्भवतीति । गुप्तिः—जुगोपेति चेष्टं न सिध्यति । इदं चानिष्टं प्राप्नोति—गोपांचकार गोपेति । इदं त्विष्टं सिद्धं भवति—गोपायांचकार गोपायेति ॥**

( प्रदीपः ) गुप्तिरिति । गोपायशब्दस्य प्रत्ययान्तत्वादकारेण क्तिनो बाधाद् गुप्तिर्न सिध्यति । आमि परत आयस्य पाक्षिक्यां निवृत्तौ जुगोपेति न सिध्यति ॥ दोषोपलक्षणं चैतत् गुप्त इत्यपि न सिध्यति । क्तप्रत्यये परत आयस्य निवृत्तौ सत्यां प्रत्ययलक्षणेन गुणप्रसङ्गात् । न च प्रत्ययलोपसूत्रे लोपसंज्ञासूत्रे वा तद्भावितग्रहणमाश्रितम् ॥

( उद्योतः ) अकारेण अ प्रत्ययादिति विहितेन ॥ क्तिनो बाधादिति । स्त्र्यधिकारादूर्ध्वं वाऽसरूपविधेरभावादिति भावः ॥ आमि परत इति । यद्यपि लिट्येवार्धधातुके आयादिनिवृत्तिस्तथापि प्रत्ययलक्षणेन प्रत्ययान्तत्वादाम्प्राप्नोति । वस्तुतः परत्वादामि कृते एवैतत्प्रवृत्तिरिति बोध्यम् ॥ तद्भावितेति । अत एव लुकि लोपसंज्ञासिद्धिः ॥

( द्वितीयपक्षदूषणभाष्यम् )

**अथ विज्ञायते—आयादिप्रकृतेर्यदार्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनामुत्पत्तिर्भवतीति । गुप्तिर्जुगोपेति चेष्टं सिद्धं भवति । इदं चानिष्टं न प्राप्नोति—गोपांचकार गोपेति । इदं त्विष्टं न सिध्यति—गोपायांचकार गोपायेति ॥**

---

१ निवृत्तिपदोपादानमित्यर्थः । ( र. ना. )

२ गुरुत्वमुपलक्षणम्, परस्परासंबद्धत्वेपि बोध्यम् । तथाहि आयादिविहितार्धधातुकपरत्वम्, गुपादिभ्य आयाद्यनुत्पत्तिश्चेयं न संयुज्यते । आयादिप्रकृतिभ्यो यदार्धधातुकं तत्र परे इति पाठे तु गौरवमेव दोषः । ( र. ना. )

३ 'इदं तावदिष्टं' ॥

४ 'बाधनात्' ॥

५ ननु वाऽसरूपोऽस्त्रियामिति विकल्पेन बाधः स्यादित्याशङ्क्यमावार्थमाह । ( र. ना. )

६ 'चकारेति' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( सिद्ध्युपपत्तिभाष्यम् )

इदं तावदिष्टं सिद्धं भवति गोपायांचकारेति ॥ कथम्? । अस्त्वत्रायादिप्रकृतेर्यदार्धधातुकं लिट् तस्मिन्नवस्थिते वा आयादयः आम्मध्ये पतिष्यति यथा विकरणस्तद्वत् ॥

( अनुपपत्तिभाष्यम् )

इदं तर्हीष्टं न सिध्यति—गोपायेति ।

( उद्योतः ) भाष्ये गुसिर्जुगोपेति चेष्टं सिद्धमिति । आयस्य वैकल्पिकत्वात् तदभावे सिध्यतीत्यर्थः ॥

इदं तर्हीष्टमिति । इदमुपलक्षणम् । क्तिनि कृते आयप्रत्यये गोपायतीत्यनिष्टमपि प्राप्नोतीत्यपि बोध्यम् । अह्नोपस्तु न, आर्धधातुकोपदेशे तदभावात् ।

( १७९२ इष्टसाधकन्यासान्तरवार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धं तु सार्वधातुके नित्यवचनादनाश्रित्य वा विधानम् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम्? । अविशेषेणायादीनां वा विधिमुक्त्वा "सार्वधातुके नित्यम्" इति वक्ष्यामि ॥

( उद्योतः ) सार्वधातुके नित्यमिति । अत्र नित्यग्रहणमार्थिकार्थकथनम् । सामान्यसूत्रेणैवेलेनैवास्य नित्यत्वसिद्धेः ॥

( १७९३ स्यादिबलीयस्त्वापत्तिवार्तिकम् ॥ ३ ॥ )

॥ * ॥ स्यादिबलीयस्त्वं तु विप्रतिषेधेन तुल्यनिमित्तत्वात् ॥ * ॥

( भाष्यम् ) स्यादिभिस्त्वायादीनां बाधनं प्राप्नोति ॥ किं कारणम्? । विप्रतिषेधेन तुल्यनिमित्तत्वात् । तुल्यं हि निमित्तमायादीनां स्यादीनां च । स्यादीनामवकाशः—करिष्यति हरिष्यति । आयादीनामवकाशः—गोपायति धूपायतीति । इहोभयं प्राप्नोति—गोपायिष्यति धूपायिष्यतीति । परत्वात् स्यादयः प्राप्नुवन्ति ॥

( प्रदीपः ) गोपायतीति । विशेषाभावादत्र शपोनुत्पत्तिरित्यायादीनामवकाशं मन्यते ॥

( उद्योतः ) स्यादिभिरिति । लादेशप्रवृत्त्युत्तरं स्यतासी इति पक्षे इदम् ॥ तुल्यं हि निमित्तमित्यनेनान्तरङ्गत्वं निरस्यति ॥ परत्वात्स्यादय इति । तथा च सकृद्गतिन्यायेनायो न स्यादेवेति भावः । न च सार्वधातुके नित्यमित्यस्य परत्वाद्बाधेऽपि सामान्यसूत्रेण वैकल्पिक आयो भविष्यति । न हि तेनापि विप्रतिषेधः, तस्यानैमित्तिकत्वेनान्तरङ्गत्वादिति वाच्यम् । अपवादविषये उत्सर्गाप्रवृत्त्या सार्वधातुकविषये तदप्रवृत्तेः ॥

( १७९४ स्यादिनामायादिबाधानापत्तिवार्तिकम् ॥ ४ ॥ )

॥ * ॥ न वाऽऽयादिविधानस्यानवकाशत्वात् ॥ * ॥

( भाष्यम् ) न वैष दोषः । किं कारणम्? । आयादिविधानस्यानवकाशत्वात् । अनवकाशा आयादयः । उच्यन्ते च ते वचनाद्भविष्यन्ति ॥

( अवकाशभाष्यम् )

ननु चेदानीमेवावकाशः प्रक्लृप्तः—गोपायति धूपायतीति ॥

( अवकाशाभावभाष्यम् )

अत्रापि शप् स्यादिर्भवति ॥

( अवकाशभाष्यम् )

यद्यत्रापि शप् स्यादिर्भवति । न त्वत्रास्ति विशेषः सति वा शप्यसति वा ॥

( उद्योतः ) न त्वत्रास्तीति । विशेषकृच्छास्त्रं तदभावे न प्रवर्तते इति मन्यते ॥

अन्यदिदानीमेतद्—यदुच्यते 'नास्ति विशेषः' इति । यत्तु तदुक्तम्—'आयादीनां स्यादिभिरुभ्याप्तोऽवकाशः' इति, स नास्त्यवकाशः । अवश्यं खल्वप्यत्र शप्स्यादिरेषितव्यः । किं प्रयोजनम्? । गोपायन्ती धूपायन्तीति "शप्श्यनोर्नित्यम्" इति नित्यो नुम् यथा स्यात् ॥

( प्रदीपः ) अन्यदिदानीमिति । विशेषाभावेऽपि लक्षणवशात् प्रवर्त्यं शपेति भावः ॥ कामयत इत्यत्र तु विशेषोऽस्त्येव । शपमन्तरेणास्य रूपस्याभावात् ॥

( उद्योतः ) स नास्त्यवकाश इति । पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः ॥ विशेषोऽप्यस्तीत्याह—कामयत इति ॥ गोपायन्तीत्यत्रापि विशेषं भाष्ये दर्शयति—अवश्यं खल्वपीति ॥

( आक्षेपभाष्यम् )

यदि तर्हि अनवकाशा आयादयः आयादिभिः स्यादीनां बाधनं प्राप्नोति ॥

( उद्योतः ) यदि तर्हीति । एवं चानवकाशत्वे तैः स्यादिबाधने गोपायिष्यतीत्याद्यसिद्धिरिति भावः ॥

( समाधानभाष्यम् )

यथा पुनरयं सूत्रभेदेन परिहारः यदि पुनः "शपि नित्यम्" इत्युच्यते ॥

१ अदन्तत्वेति तच्छब्दार्थः । ( र. ना. )
२ वेलनेनैवेलर्थः । ( र. ना. )
३ ननु गोपायतीत्यादौ शपाऽऽयादीनामवकाशो रुद्ध इत्याशङ्कां परिहरति । ( र. ना. )
४ सामान्यसूत्रेणापि । ( र. ना. )
५ सामान्यसूत्रस्य । ( र. ना. )
६ सामान्यसूत्रं तच्छब्दार्थः । ( र. ना. )
७–८ 'शप्स्यादिः' इत्यत्र स्यादिग्रहणं दृष्टान्ततयोपात्तम् नेमौ रहौ—इत्यत्र हकारवत् । ( र. ना. )
९ कामयत इत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रदीपः) यथा पुनरिति। वार्तिककारेण तु सिद्धं सार्वधातुके नित्यवचनादिति ब्रुवता सूत्रभेदेन परिहार उक्तोऽवश्यकर्तव्ये च सूत्रभेदे शपि नित्यमिति न्यासः कर्तव्यो येन दोषो न भवतीत्यर्थः॥ ननु तौदादिकत्वाद्विच्छेः शेन भाव्यं न तु शपा। एवं तर्हि न्यासभेदोपलक्षणार्थमिदमिति शिति नित्यमिति तु न्यासः कर्तव्यः॥ ३१॥

(उद्द्योतः) यथा पुनर्वार्तिककृता सूत्रभेदेन परिहार उक्तस्तथा सूत्रभेदमङ्गीकृत्य यदि पुनः शपि नित्यमित्युच्यते तदा सर्वदोषपरिहार इति भाष्याक्षरार्थः। क्वचिद्भाष्य एव शितीति पाठः॥

(आक्षेपभाष्यम्)

सिध्यति। सूत्रं तर्हि भिद्यते॥

(सिद्धान्तिभाष्यम्)

यथान्यासमेवास्तु॥

(दोषस्मारणभाष्यम्)

ननु चोक्तम्—*आयादिभ्यो यदार्धधातुकमायादिप्रकृतेर्यदार्धधातुकमिति चोभयथानिष्टप्रसङ्ग* इति।

(दूषणोद्धारभाष्यम्)

नैष दोषः। आर्धधातुक इति नैषा परसप्तमी। का तर्हि?। विषयसप्तमी। आर्धधातुके विषय इति। तत्रार्धधातुकविषये आयादिप्रकृतेरायादिषु (वा) कृतेषु यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति॥ आयादयः॥ ३१॥

(उद्द्योतः) विषयसप्तमीति। आर्धधातुक इति सूत्रभाष्योक्तरीत्या जातिनिर्देश इति भावः॥ सूत्रे आयादय इत्युक्तिरनन्तरस्यैव संबन्ध इति भ्रमवारणायेति तत्त्वम्॥ ३१॥

(४०५ धातुसंज्ञासूत्रम्॥ ३।१।३ आ. ४)

## ६४९ सनाद्यन्ता धातवः॥ ३।१।३२॥

(अन्तग्रहणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

अन्तग्रहणं किमर्थम्, न "सनादयो धातवः" इत्येवोच्येत?।

(प्रत्याक्षेपभाष्यम्)

केनेदानीं तदन्तानां भविष्यति॥

(प्रत्याक्षेपसमाधानभाष्यम्)

तदन्तविधिना॥

(समाधानभाष्यम्)

अत उत्तरं पठति—

(१७९५ समाधानवार्तिकम्॥ १॥)

### ॥*॥ सनादिष्वन्तग्रहण उक्तम्॥*॥

किमुक्तम्। *पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम्* इति। इदं चापि प्रत्ययग्रहणम्। अयं चापि संज्ञाविधिः॥

(सूत्रारम्भप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

किमर्थं पुनरिदमुच्यते। न "भूवादयो धातव" इत्येव सिद्धम्॥

(प्रदीपः) सनाद्यन्ता॥ ३२॥ भूवादय इत्येवेति। भुवो वादयो भूवादय इत्यर्थाश्रयणादिति भावः॥ ततश्च क्रियावाचित्वात्सनाद्यन्तानां धातुसंज्ञा सिध्यतीत्यर्थः॥

(उद्द्योतः) सनाद्यन्ता॥ ३२॥ गणपाठनिबन्धनार्संज्ञा कथमेषामत आह—भुवोवादय इति। वदन्तीति वादयः। भ्वर्थवाचकाः। क्रियावाचिन इति यावत्। यथा सुन्वादीनां क्रियावाचकत्वं तथोक्तम्।

(सूत्रारम्भसाधकभाष्यम्)

न सिध्यति। पाठेन धातुसंज्ञा क्रियते। न चैते तत्र पठ्यन्ते॥

(प्रदीपः) पाठेनेति। आदिशब्दस्य प्रत्येकं संबन्धादर्थपाठाभ्यां धातुसंज्ञा विहिता। तेनाणवयत्यादयः समानशब्दश्च सर्वनामादयो निवर्तिता भवन्तीति भावः॥

(उद्द्योतः) तेनेति। पाठे नाणवत्यादयः। अर्थेन या इत्येवमादय इत्यर्थः॥ पाठेनेत्यादि। न चैते तत्र पठ्यन्ते इत्यन्तैवात्र भाष्यकारोक्तिः॥

(सूत्रप्रत्याख्यानसाधकप्रत्याक्षेपभाष्यम्)

कथं तर्ह्यन्येषामपठ्यमानानां धातुसंज्ञा भवति—"अस्तेर्भूः" "ब्रुवो वचिः" "चक्षिङः ख्याञिति"॥

(प्रदीपः) स्थानिवद्भावेन धातुसंज्ञासिद्धिं वक्ष्यामीति पृच्छति—कथं तर्हीति॥ ननु भूवचिख्यादिशब्दा धातुपाठे पठिता एव। नैतदस्ति। नहि ये धातुपाठे पठितास्त इहातिदिश्यन्ते शब्दान्तरत्वादादेशानाम्। जग्ध्यादीनां तु पाठशङ्कापि नास्ति॥

(उद्द्योतः) धातुसंज्ञासिद्धिमिति। सनाद्यन्तेऽपीति शेषः॥ पृच्छतीत्यस्यैकदेशीति शेषः॥ शब्दान्तरत्वादिति। स्थानषष्ठीनिर्देशादपूर्वोपदेशाच्च तस्यैवात्र ग्रहणे तदीयप्रयोगनियम एव स्यादिति भवतीत्याद्यसिद्धिरिति भावः॥ पठितसादृश्येन भवतीत्यादिस्थानामिवैषामपि तेनैव धातुत्वेऽप्याह—जग्ध्यादीनामिति भाष्यमुपलक्षणमिति भावः॥ अनेनास्यैकदेश्युक्तित्वं ध्वनितम्॥

१ प्राचीनपुस्तकेषु न लभ्यते॥ अत्र वाशब्दो वाक्यालङ्कारे। (र. ना.)

२ ननु—आयादय आर्धधातुके वेति सूत्रे—आयादीनामनुवृत्त्यैव सिद्धेरायादय इत्युक्तिर्विफलेत्याशङ्क्य समाधत्ते सूत्र इति। (र. ना.)

३ 'न चैमे'॥

४ भूश्च वाश्च भूवौ इति द्वन्द्वे व्यवस्थाप्रकारवाचिनोरादिशब्दयोरेकशेषो भूवौ आदी येषाम् इति विग्रहे 'द्वन्द्वान्ते श्रूयमाणम्' इति न्यायेनेति भावः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( सूत्रारम्भसाधकप्रत्याक्षेपसमाधानभाष्यम् )

**यद्यप्येते तत्र न पठ्यन्ते । प्रकृतयस्त्वेषां पठ्यन्ते । तत्र स्थानिवद्भावात्सिद्धम् ॥**

( सूत्रप्रत्याख्यानभाष्यम् )

**इमेऽपि तर्हि यद्यपि तत्र न पठ्यन्ते । येषां त्वर्थे आदिश्यन्ते=ते तत्र पठ्यन्ते । तत्र स्थानिवद्भावात्सिद्धम् ॥**

( प्रदीपः ) येषां त्वर्थे इति । इष्यादीनामित्यर्थः ॥

( सूत्रारम्भसाधकभाष्यम् )

**न सिध्यति । आदेशाः स्थानिवदित्युच्यते । न चेमे आदेशाः ॥**

( प्रदीपः ) न चेम इति । रूढिशब्दस्यादेशशब्दस्य तत्र ग्रहणात्[१] येषामेव स्थानिनिवृत्त्यादेशत्वं प्रसिद्धं तेषामेव तत्र ग्रहणमित्यर्थः ॥

( उद्द्योतः ) रूढीति । तस्यायोगाद्बलवत्त्वादिति भावः ॥ न चे मे इति । भाष्ये इमे सनादय इत्यर्थः ॥ तत्रेति । स्थानिवदित्यत्रेत्यर्थः ॥ स्थानिनिवृत्त्येति । स्थानषष्ठीनिर्देशादिति भावः ॥

( सूत्रप्रत्याख्यानसाधकभाष्यम् )

**इमे अप्यादेशाः ॥ कथम् ? । आदिश्यते यः स आदेशः । इमे चाप्यादिश्यन्ते ॥**

( प्रदीपः ) इमेऽपीति । क्रियानिमित्तकस्यादेशशब्दस्य तत्र ग्रहणमित्यर्थः ॥ अत्र चोदयन्ति—यदि स्थानिवद्भावेन सनादीनां धातुसंज्ञा विधीयते, तदा तदन्तविध्यभावात् प्रत्ययानामेवाङ्गसंज्ञानिबन्धनान्यडादीनि प्राप्नुवन्ति प्रत्ययान्तानां चेष्यन्ते । यङ्प्रत्ययश्च समभिहारविशिष्टक्रियावचनाद्धातोः स्वार्थे विधीयते, आयादयश्च शुद्ध एव स्वार्थे विधीयन्ते इति तेषां स्थानिनः कस्य चिन्निवृत्त्यभावात् स्थानिवत्त्वाभावाद्धातुसंज्ञा न प्राप्नोति ॥ अत्रोच्यते । कर्तुमिच्छतीति करणाङ्ग इष्यर्थे सर्वे सर्वपदादेशा इति न्यायाद्वर्तमानस्य इषेः प्रसङ्गे चिकीर्षशब्दः सन्नन्त आदिश्यत इति सिद्धं तदन्तस्य धातुत्वम् । एवं समभिहारविशिष्टलवनक्रियावाचिलुशब्दप्रयोगप्रसङ्गे लोलूयशब्द आदिश्यते । गुपेः प्रसङ्गे गोपायशब्द इति भगवतो भाष्यकारस्याभिप्रायः ॥ ३२ ॥

( उद्द्योतः ) क्रियानिमित्तकस्येति । आदेशग्रहणसामर्थ्यादानुमानिकस्येव यौगिकस्यापि ग्रहणमित्याशयः ॥ तदन्तविध्यभावादिति । स्थानिवत्सूत्रे विशेष्यासन्निधानात्तदभावे आदेशान्तस्यातिदेशेन धातुत्वाभाव इति भावः ॥ यद्वा तिबादिविधौ तदभावादित्यर्थः ॥ अत्रोच्यते इति । धातोः कर्मण इत्यादेः 'समानकर्तृककर्मभूतधात्वर्थविशिष्टेच्छायां प्रतिपाद्यायां तत्स्थानेऽर्थाभिधानयोग्यो यद्धात्वर्थकर्मत्वमिच्छायां प्रतिपिपादयिषितं तद्धात्वादिः सन्नन्त आदेश' इत्यादिक्रमेणार्थ इति भावः ॥ तत्तद्गुणप्रयुक्ता विकरणास्तु न, अदादित्वादेरनतिदेशात्[३] । करणाङ्गे इष्यर्थे कर्तुमित्येतत्समभिव्याहारेण वर्तमानस्येषेः प्रसङ्गे सर्वे सर्वपदादेशा इति न्यायात् सन्नन्त आदिश्यत इति अन्वयः ॥ भगवतो भाष्यकारस्येति । एकदेशिन इति शेषः ॥ अनेन इमे[ऽपि] तर्हि यद्यपीत्यादिभाष्यग्रन्थ एकदेशिनोरुक्तिप्रत्युक्तिपरतया प्रौढिवाद एवेति ध्वनितम् ॥ ३२ ॥

( स्थानिवत्त्वानुपपत्तिभाष्यम् )

**एवमपि षष्ठीनिर्दिष्टस्यादेशाः स्थानिवद्भवन्तीत्युच्यते[४] । न चेमे षष्ठीनिर्दिष्टस्यादिश्यन्ते ॥**

( स्थानिवत्त्वोपपादनभाष्यम् )

**षष्ठीग्रहणं निवर्तिष्यते ॥**

( निवृत्तिदूषणभाष्यम् )

**यदि निवर्तते । अपवादे उत्सर्गकृतं प्राप्नोति । 'कर्मण्यण्' 'आतोऽनुपसर्गे कः' इति केऽप्यण्कृतं प्राप्नोति ॥**

( दूषणपरिहारभाष्यम् )

**नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'नापवादे उत्सर्गकृतं भवतीति । यदयं श्यन्नादीन् कांश्चिच्छितः करोति श्यन्श्नम्श्नाश्नुरिति ॥ सनाद्यन्ता धातवः ॥ ३२ ॥**

( विधिप्रकरणे प्रत्ययप्रकरणे विकरणप्रकरणम् )

( प्रत्ययप्रकरणे विकरणप्रकरणम् )

( ४०६ स्यतासूप्रत्ययविधिसूत्रम् ॥ ३ । १ । ३ आ. ५ )

## ६५० स्यतासी लृलुटोः ॥ ३।१।३३ ॥

( विकरणानामुत्सर्गापवादत्वनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**इमे विकरणाः पठ्यन्ते । तत्र न ज्ञायते—'क उत्सर्गः, कोऽपवाद' इति ॥ तत्र वक्तव्यम्—अयमुत्सर्गः, अयमपवाद इति ॥**

( प्रदीपः ) स्यतासी ॥ ३३ ॥ उत्सर्गापवादधर्मज्ञानाय पृच्छति—इम इति ॥

( उद्द्योतः ) स्यतासी ॥ ३३ ॥ उत्सर्गापवादधर्मेति । स चापवादविषयेऽवश्यं प्राप्तिरूप उत्सर्गस्य धर्मः तदप्राप्तियोग्यविषयाभावेन निरवकाशत्वरूपोऽपवादस्य ॥

१ विशेष्यसन्निधानं तच्छब्दार्थः । ( र. ना. )

२ विशेष्यसन्निधानं तच्छब्दार्थः । ( र. ना. )

३ निषेधे हेतुमाह—अदादित्वादेरिति । (र.ना.)

४ सिद्धं तु षष्ठी निर्दिष्टस्य स्थानिवद्वचनात् इति स्थानिवत्सूत्रे वार्तिकोक्तेः ॥

५ स्थानिवत्सूत्रस्थप्रदीपोद्द्योतौ द्रष्टव्यौ ॥

६ उत्सर्गत्वेनाभिमतम् तच्छब्दार्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( समाधानभाष्यम् )

**इमे ब्रूमः—यगुत्सर्गः, अपवादाः शबादयः स्यादयश्च ॥**

( प्रदीपः ) यगुत्सर्ग इति । भावकर्मग्रहणानुवृत्त्या सार्वधातुकमात्रे विधानादिति भावः ॥

( उद्द्योतः ) भावकर्मग्रहणानुवृत्तौ उत्सर्गत्वासंभवादाह—भावेति ॥

( वार्तिकशेषभाष्यम् )

**यदि यगुत्सर्गः, अपवादः शबादिः स्यादयश्च—**

( १७९६ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अपवादविप्रतिषेधाच्छबादिबाधनम् ॥ * ॥**

( भाष्यम् ) अपवादविप्रतिषेधाच्छबादिभिः स्यादीनां बाधनं प्राप्नोति । शबादीनामवकाशः—पचति पठति । स्यादीनामवकाशः पक्ष्यते यक्ष्यते । इहोभयं प्राप्नोति—पक्ष्यति यक्ष्यति । परत्वाच्छबादयः प्राप्नुवन्ति ॥

( प्रदीपः ) अपवादविप्रतिषेधादिति । यगपवादानामुभयेषां शबादीनां स्यादीनां च विप्रतिषेधे सति परत्वाच्छबादयः स्युरित्यर्थः ॥

( उद्द्योतः ) भाष्ये स्याद्यवकाशः पक्ष्यते इति । कर्मादौ शपोऽप्राप्तेरिति भावः ॥

( १७९७ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

**॥*॥ अपवादो नामानेकलक्षणप्रसङ्गः ॥*॥**

( भाष्यम् ) अपवादो नाम स भवति यत्रानेकलक्षणप्रसङ्गः ॥ अत्र च भावकर्मणोर्यग्विधीयते, कर्तरि शप् । कः प्रसङ्गो यद्भावकर्मणोर्यकं कर्तरि शबादयो बाधेरन् ॥

( प्रदीपः ) अपवाद इति । यत्रोत्सर्गलक्षणस्यापवादलक्षणस्य च प्रसङ्गः तत्रापवादव्यवहारः । यग्विधौ तु भावकर्मग्रहणानुवर्तनात्कर्तरि यकोऽप्रसङ्गान्नास्ति तदपवादत्वमित्यर्थः ॥

( उद्द्योतः ) यत्रेति ॥ अनेकलक्षणप्रसङ्ग इति बहुव्रीहिः ॥ अपवादशब्दश्च तद्विषयपरः ॥ अनवकाशोऽपवाद इति भावः ॥ यग्विधौ त्विति । अन्यथा अस्ति च संभवो यदुभयं स्यादिति वार्तिकमते पचतीत्यादौ शपि कृते तमेव निमित्तीकृत्य यक् स्यादिति भावः ॥

( उत्सर्गापवादोदाहरणान्तरभाष्यम् )

**एवं तर्हि यक्शपावुत्सर्गौ, अपवादाः श्यनादयः स्यादयश्च ॥**

**एवमपि**

( १७९८ अन्यविधोत्सर्गापवादत्वविदूषणवार्तिकम् ॥ ३ ॥ )

**॥*॥ अपवादविप्रतिषेधाच्छ्यन्नादिबाधनम् ॥ * ॥**

( भाष्यम् ) अपवादविप्रतिषेधात् श्यन्नादिभिः स्यादीनां बाधनं प्राप्नोति । श्यन्नादीनामवकाशः—दीव्यति सीव्यति । स्यादीनामवकाशः—पक्ष्यति यक्ष्यति । इहोभयं प्राप्नोति—देविष्यति सेविष्यतीति । परत्वाच्छ्यन्नादयः प्राप्नुवन्ति ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । शबादेशाः श्यनादयः करिष्यन्ते ॥ शप् च स्यादिभिर्बाध्यते । तत्र दिवादिभ्यः स्यादिविषये शबेव नास्ति कुतः श्यन्नादयः ॥**

( आक्षेपभाष्यम् )

**तत्तर्हि शपो ग्रहणं कर्तव्यम् ॥**

( समाधानभाष्यम् )

**न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? । "कर्तरि शप्" इति ॥**

( समाधानबाधकभाष्यम् )

**तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ॥**

( समाधानसाधकभाष्यम् )

**नैष दोषः । दिवादिभ्य इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्ये'ति ॥**

( समाधानबाधकभाष्यम् )

**प्रत्ययविधिरयं न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥**

( समाधानसाधकभाष्यम् )

**नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृतश्चानुवर्तते ॥**

( समाधानान्तरभाष्यम् )

**अथ वा अनुवृत्तिः करिष्यते—सार्वधातुके यक् 'स्यतासी लृलुटोः' 'च्लि लुङि' 'च्लेः सिज्भवती'ति । कर्तरि शप् 'स्यतासी लृलुटोः' 'च्लि लुङि' 'च्लेः सिज्भवति । दिवादिभ्यः श्यन्' 'स्यतासी लृलुटोः' 'च्लि लुङि' 'च्लेः सिज्भवति' ॥**

( समाधानान्तरभाष्यम् )

**अथ वान्तरङ्गाः स्यादयः । काऽन्तरङ्गता ? । लावस्थायामेव स्यादयः । सार्वधातुके श्यन्नादयः ॥**

**स्यतासी ॥ ३३ ॥**

( प्रदीपः ) लावस्थायामिति । ननु च परत्वादादेशैर्भाव्यम् । न च लादेशानामनित्यत्वम् कृतेष्वपि स्यादिषु

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आतृतीयपरिसमाप्तेर्धात्वधिकारेऽपि 'धातोर्विहितस्य लस्य' इत्येवं विहितविशेषणाश्रयणाल्लादेशानां प्रसङ्गात् ॥ एवं तर्हि कृतेष्वपि लादेशेषु स्यादयो भवन्तोन्तरङ्गा एव भवन्ति। नहि तद्विधौ शब्देन सार्वधातुकत्वमर्थविशेषो वा कर्त्रादिराश्रितः। श्यनादयस्तु तदाश्रयत्वाद्बहिरङ्गाः ॥ अवश्यं चैतदभ्युपगन्तव्यं कृतेषु लादेशेषु स्यादयः क्रियन्त इति। अन्यथा तासेः परस्य लसार्वधातुकस्यानुदात्तत्वविधानं 'न विकरणस्य स्वरो लसार्वधातुकस्वरं बाधत' इत्यस्यार्थस्य कथं ज्ञापकं स्यात्। यदि हि लावस्थायां तासिः क्रियेत पश्चात्सार्वधातुकं तदा सति शिष्टत्वाल्लसार्वधातुकस्योदात्तत्वे प्राप्तेऽप्राप्तानुदात्तार्थं वचनमिति ज्ञापकत्वं नोपपद्येत ॥ ये त्वाहुः। संख्याविधानवाक्येनात्मनेपदपरस्मैपदप्रकरणेन च लादेशविधानवाक्यस्यैकवाक्यतायां लादेशानां बहिरङ्गत्वाल्लावस्थायामेवान्तरङ्गत्वात् प्रतिपदविधानाच्च स्यादयो भवन्तीति। तैस्तासेः परस्य लसार्वधातुकस्यानुदात्तविधानस्य पूर्वोक्तार्थज्ञापकत्वमसमर्थितं भवति ॥ ३३ ॥

( उद्द्योतः ) लावस्थायामिति भाष्यस्यादेशोत्पत्तेः प्रागेव स्यादय इत्यर्थः प्रतिभाति। तत्र शङ्कते—ननु चेति ॥ अनित्यत्वमिति। व्यवधानेन धातोः परत्वाभावादप्राप्तेरिति भावः ॥ अन्यथेति। इदं च ज्ञापकम्, अनुदात्तं पदमेकवर्जमित्यत्र भाष्ये स्पष्टम्। लादेशोत्तरं स्यादिप्रवृत्तौ तु सति शिष्टस्यादिस्वरनिमित्तकवर्ज्यमानस्वरेण लसार्वधातुकानुदात्तत्वे सिद्धे पुनर्विधीयमानं तज्ज्ञापकाय[2] संपद्यत इति भावः ॥ ये त्विति ॥ एतन्मते—अन्यत्र विकरणेभ्य इत्यंशो वाचनिक इति बोध्यम् ॥ प्रतिपदविधानाच्चेति चिन्त्यम् निरवकाशत्वाभावात् इति कश्चित् ॥ परेत्वनुदात्तमिति सूत्रे भाष्ये सतिशिष्टस्वरबलीयस्त्वे सुनुत इत्यादौ सार्वधातुकस्वरबाधः स्यादि शङ्कायां वार्तिककारेणोक्तम्—स्यादिस्वराप्रसङ्गस्तासेः परस्यानुदात्तवचनादिति। परत्वाल्लादेशा इत्येव च तन्मतम्[3]। अत्राप्यपवादविप्रतिषेधाच्छयनादिभिः स्यादिबाधनमिति वार्तिकोक्तपूर्वपक्षस्य तन्मतानुसारेण समाधानद्वयमुक्त्वा अथ चेति तृतीयं समाधानं भगवतोक्तम्। तस्यायं भावः—आर्धधातुक इत्यनुवृत्त्यार्धधातुकत्वावस्थायां स्यादय इत्यन्तरङ्गा इति विकरणस्वरस्य दुर्बलत्वं त्वेतत्पक्षे वाचनिकमेव ॥ कैयटोक्तमर्थापेक्षं सार्वधातुकादिसंज्ञापेक्षं च बहिरङ्गत्वं न युक्तम्, तस्यात्र शास्त्रेऽनाश्रयणादित्युक्तम्। अत एवात्र विप्रतिषेधो वार्तिककृतः संगच्छते ॥ न्याय्यमन्तरङ्गत्वम् ऋषिभ्यां न ज्ञातमित्युक्तिरत्यन्याय्या, कान्तरङ्गता लावस्थायां स्यादय इति भाष्योक्तिर्गर्भस्रावाच्च। अल्पापेक्षत्वात्तिवादिभ्यः पूर्वं स्यादय इत्येवं वक्तुमौचित्याच्चेत्याहुः ॥ ३३ ॥

( ४०७ सिब्विकरणविधिसूत्रम् ॥ ३।१।३ आ. ६ )

## ६५१ सिब्बहुलं लेटि ॥ ३।१।३४ ॥

( १७९९ छान्दसत्वनियमवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सिबुत्सर्गः छन्दसि ॥ * ॥

( भाष्यम् ) सिबुत्सर्गश्छन्दसि कर्तव्यः ॥

( १८०० सनादिषु विधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सनाद्यन्तेनेषत्वाद्यर्थः ॥ * ॥

( भाष्यम् ) सनाद्यन्ताधिकारे च कर्तव्यः। किं प्रयोजनम्?। नेषत्वाद्यर्थः। इन्द्रो नस्तेन नेषतु। गावो नेष्टादिति ॥

( प्रदीपः ) सिब्बहुलम् ॥ ३४ ॥ सिबुत्सर्ग इति। परनिमित्तमनुपादाय सनादिवर्गे धातोः सिब् विधेयः। तेन तदन्तस्य धातुसंज्ञायां सत्यां नेषत्वादीनि सिध्यन्ति। नीशब्दात्सिपि गुणे च कृते लोटि च नेषत्विति रूपम् ॥

( उद्द्योतः ) सिब्बहुलम् ॥ ३४ ॥ उत्सर्गपदार्थमाह—परनिमित्तमनुपादायेति। एवं हि सामान्यविधित्वादुत्सर्गत्वं भवति ॥ भाष्ये सनाद्यन्ताधिकार इति। सनाद्यन्तेति येषामधिकारो बुद्धिस्थता तेषु कर्तव्य इत्यर्थः ॥ सिध्यन्तीति। लोट्यपि सिप्सिद्धिरित्यर्थः। नेषत्विति प्रयोगे सिप्शपोः समावेशः सिध्यति। विकरणत्वे तु स न स्यादिति भावः ॥ लोट्त्वाच्छन्दसि लेटोऽडाटावित्यस्याप्राप्तिरिति बोध्यम् ॥

( १८०१ सनादिवर्गीयत्ववैयर्थ्यवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ प्रकृत्यन्तरत्वात्सिद्धम् ॥ * ॥

( भाष्यम् ) प्रकृत्यन्तरत्वात्सिद्धमेतत् ॥ कथं[5] प्रकृत्यन्तरं नेषः? ॥

( १८०२ प्रकृत्यन्तरत्वहेतुवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ नेषतु नेष्टादिति दर्शनात् ॥ * ॥

( भाष्यम् ) नेषतु नेष्टादिति हि दृश्यते ॥

( प्रदीपः ) प्रकृत्यन्तरत्वादिति जेषृणेषृ एषृ प्रेषृ गताविति पाठान्नयत्यर्थं उत्सर्गो न कर्तव्यः ॥ अवयासिसीष्ठा इत्याद्यर्थस्तु कर्तव्य एव ॥

( उद्द्योतः ) अत्र उत्सर्गः कर्तव्यः, स च 'सनाद्यन्ते कर्तव्यः' इति पूर्वपक्षद्वयम्। तत्रान्त्यः खण्डित एव। उत्सर्गतात्वावश्यकीत्याह—अवयचेति। लिङि सिप्सिद्ध्यर्थमुत्सर्गः[6] कर्तव्य इत्यर्थः ॥ भाष्ये इति हीति नेषत्वित्यर्थं सनादिवर्गे करणे नेष्टादित्यस्यासिद्धिः अत्र करणे नेषत्वित्यसिद्धिः ॥ प्रकृत्यन्तरत्वे तु नेष्टादिति नयतेः सिपि सिद्धम्। अत्रैव लेटीतिपदरहितसूत्रकरणा-

---

१ सार्वधातुकत्वादि तच्छब्दार्थः। ( र. ना. )

२ यत् तासेः परस्य लसार्वधातुकस्यानुदात्तत्वविधानं ज्ञापकम् तदुपकर्तुमित्यर्थः। ( र. ना. )

३ वार्तिककारमतम्। ( र. ना. )

४ प्राचीनलिखितपुस्तकेषु नैव लभ्यते।

५ अत्र त्रिधा भाष्यसंगतिः प्रतीयते 'कथम्' इति प्रश्ने 'प्रकृत्यन्तरं नेषः' इत्युत्तरे हेतुः 'नेषतु—' इति वार्तिकम्। इत्येका विधा ॥ 'कथं प्रकृत्यन्तरम्' इति प्रश्ने 'नेषः' इत्युत्तरम्। इति द्वितीया कथं प्रकृत्यन्तरं 'नेषः' इति प्रश्नस्यैवोत्तरम् 'नेषतु—' इति वार्तिकम्। इति तृतीया ॥

६ सेः सिद्ध्यर्थम्। ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दित्याशयः ॥ यद्वा नेष्टादित्यत्र विकरणव्यत्ययेन शपो लुक् । नेषतु नेषतादिति इष्यते[1] इति भाष्ये पाठः । लोकेपीति शेषः ॥ नेष्टादिति इष्यते इति लेखकप्रमादः । अन्यथा प्रकृत्यन्तरावश्यकत्वं न दर्शितं स्यात् ॥

( पित्करणप्रत्याख्यानाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ किमर्थः पकारः ? ॥**

( आक्षेपबाधकभाष्यम् )

**स्वरार्थः "अनुदात्तौ सुप्पितौ" इत्येष स्वरो यथा स्यादिति ॥**

( १८०३ प्रत्याख्यानवार्तिकम् ॥ ५ ॥ )

**॥*॥ पित्करणानर्थक्यं चानच्कत्वात् ॥*॥**

( भाष्यम् ) **पित्करणं चानर्थकम् । कुतः ? । अनच्कत्वात् । अनच्कोऽयम् । तत्र नार्थः स्वरार्थेनानुबन्धेन पकारेण ॥**

( प्रत्याख्यानबाधकभाष्यम् )

**इटि कृते साच्को भविष्यति ॥**

( १८०४ प्रत्याख्यानसाधकवार्तिकम् ॥ ६ ॥ )

**॥*॥ इटोऽनुदात्तार्थमिति चेदागमानुदात्तत्वात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **आगमानुदात्तत्वेनेटोऽनुदात्तत्वं भविष्यति ॥**

( उद्योतः ) भाष्ये आगमानुदात्तत्वादिति । तासिषदित्यादौ धातुस्वरप्रयुक्तशेषनिघातेनेति भावः ॥

( प्रत्याख्यानबाधकभाष्यम् )

**एवं तर्हि सवयं कर्तव्यः । किं प्रयोजनम् ? । यदवयासिसीष्ठाः पकाजुलक्षण इट्प्रतिषेधो मा भूदिति ॥**

( प्रदीपः ) **सवयमिति** । सनादिमध्येऽत्रैव वेति भावः ॥ **यदवयासिसीष्ठा इति** । यातेरवपूर्वात् सप् लिङ् थास् सुट् सीयुट् । सवन्तस्याङ्गस्यानेकाच्त्वात्सीयुडादेरिडागमो भवति । यदि पुनः सिप् क्रियते तदावश्यमिकार उच्चारणार्थो व्याख्येयः । अन्यथा तस्य श्रवणं स्यात् । तत्र सिबन्तस्य धातोरेकाच्त्वादिट्प्रतिषेधः प्रसज्येत ॥ ननु योऽत्र धातुरुपदेशेऽनुदात्तो याशब्दः न तस्मात् परमार्धधातुकं, सिपा व्यवधानात् । यस्माच्च सिबन्तात् परमार्धधातुकं नासावुपदेशेऽनुदात्तः ॥ एवं तर्हि **सनाद्यन्ता धातव** इत्यस्य यदा सनाद्यवयवा धातवो भवन्तीत्यर्थो व्याख्यायते तदा सिपो यात्यवयवत्वाद्यातिग्रहणेन ग्रहणादिट्प्रतिषेधप्रसङ्गः । यदापि स्थानिवद्भावाश्रयणेनै[2] सूत्रं प्रत्याख्यातं तदा स्थानिवद्भावेनानुदात्तादेकाचः श्रूयमाणात् प्राप्नोत्येवेट्प्रतिषेधः ॥

( उद्योतः ) **सनादिमध्ये इति** । लेटीति पदरहितमिति भावः ॥ एवं च सपः साच्कत्वेन पित्त्वं चरितार्थमिति बोध्यम् ॥ ननु स्थानपरिवर्तनेन सनादिवर्गे करणे फलाभावस्य भाष्ये उक्तेराह—अत्रैव वेति । अत्रापि करणेन इट् सिद्धिरिति तात्पर्यम् ॥ भाष्ये किं प्रयोजनमित्यकारविषयः प्रश्नः ॥ **यदवयासिसीष्ठा इति** । नन्वत्र सिप्यपि तेन व्यवधानान्निषेधाप्रवृत्ताविट् सिध्यत्येवेत्यत आह—सबन्तस्याङ्गस्येति । पकाच इत्यङ्गस्यैव विशेषणम् । उपदेश इति चानुदात्तेनैव संबध्यते । उपदेशे योऽनुदात्तस्तद्घटितादेकाचोऽङ्गादिति चार्थः । [3]सैवनैमित्तिकत्वात्पूर्वमेव, ततश्च ऌादेशा इति भावः ॥ **उच्चारणार्थ इति** । इत्संज्ञायां फलान्तराभावादिति भावः ॥ उच्चारणे सहायसंपादनेन चरितार्थस्येत्संज्ञया लोपेन नेष्टसिद्धिरिति बोध्यम् ॥ **सिबन्तस्य धातोरिति** । अङ्गस्येति वक्तुमुचितम् ॥ सीयुटः सस्य षत्वाभावश्छान्दसः ॥ ननु चैति । तद्घटितादित्यर्थे न मानमित्यभिमानः ॥ **नासावुपदेश इति** । सिबन्तस्योपदेशाभावादिति भावः ॥ एवं च सिपैव सिद्धे अकारोच्चारणं व्यर्थमिति पूर्वपक्षाशयः ॥ सनादिवर्गपाठाभिप्रायेणेदं फलमुक्तमिति समाधत्ते—एवं तर्हीति । अकारोच्चारणसामर्थ्यादुपदेशेनुदात्तघटितैकाचोऽङ्गादित्यर्थ इति न दोष इति तत्त्वम् । **अनुदात्तादेकाच इति** । सपि तु परत्वादिडादिषु कृतेषु अतो लोप इति भावः ॥

( आक्षेपभाष्यम् )

**क्वायमकारः श्रूयते ? ।**

( समाधानभाष्यम् )

**न क्वचिच्छ्रूयते । लोपोऽस्य भविष्यति । "अतो लोपः आर्धधातुके" इति ॥**

( प्रत्याख्यानसाधकभाष्यम् )

**यदि न क्वचिच्छ्रूयते । नार्थः स्वरार्थेन पकारेणानुबन्धेन ॥**

( पकारप्रयोजनभाष्यम् )

**एवमपि कर्तव्यः ? । किं प्रयोजनम् । अनुदात्तस्य लोपो यथा स्यादुदात्तस्य लोपो मा भूदिति । किं च स्यात् ? । उदात्तनिवृत्तिस्वरः प्रसज्येत ॥**

( प्रदीपः ) **अनुदात्तस्येति** । धातोरित्यनाश्रित्योक्तम् । अथ वैतत् प्रदेशपाठाश्रयमेतद्भाष्यम् ॥ **उदात्तस्येति** । छन्दस्युभयथेति सार्वधातुकत्वादुपदेशादिति लसार्वधातुकानुदात्तत्वे सति प्रत्ययस्वरेण धातुस्वरेण वा सशब्दाकारस्योदात्तत्वादुदात्तनिवृत्तिस्वर इष्टा प्रसज्येत । पकारे तु सति अनुदात्त एवेड् भवति पित्करणसामर्थ्यादेव च सशब्दाकारस्य धातुस्वरो न भवति एतत् प्रदेशपाठाद्वा । याशब्दस्यैव तु भवति । **तिङ्ङतिङ** इति यो निघातः स **निपातैर्य-**

1 'वक्तव्यः' इति बहुत्र पाठः ॥

2 'नैतत्सूत्रं' ॥

3 अनैमित्तिकत्वात् सुपूर्वमेवेत्यन्वयः । ( र. ना. )

4 लोपातिरिक्तफलेत्यर्थः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



घदीति प्रतिषिद्धः। अवशब्दस्य तिङि चोदात्तवतीति निघातः ॥

(उद्द्योतः) अथवेति । अत्र पाठे हि तदन्तस्याधातुत्वात्तदप्रवृत्तिरिति भावः ॥ इदमेव युक्तम्। नन्वत्र योऽनुदात्त इकारस्तत्र परतो न लोपः आर्धधातुके हि सः । न च तदनुदात्तमत आह—लसार्वधातुकानुदात्तत्वे सतीति । अत्र पाठे ॥ प्रत्ययस्वरेणेति । सनादिपाठे ॥ धातुस्वरेणेति । प्रत्ययस्वरेणेत्येव युक्तम्। सनादिपाठस्य स्थानत्यागे फलाभावेन भाष्ये दूषितत्वात् ॥ पित्करणसामर्थ्यादित्यपि चिन्त्यम् । एतत्प्रदेशेत्याद्येव युक्तम् ॥ या शब्दस्यैवेति । एवं च यासिसिष्ठा इत्याद्युदात्त इति भावः ॥ ननु तिङ्ङतिङ इति निघातः स्यादत आह—तिङ्ङतिङ इति । अत्रेदं तत्त्वम्—अत्रैव पाठो लेटीति पदरहितः कार्यः । अकारस्तु लसार्वधातुकानुदात्तत्वायोक्तरीत्येट्प्रतिषेधाभावाय च ॥ उदात्तनिवृत्तिस्वरवारणाय च पकारः। अन्तरङ्गत्वाच्च पूर्वं सपि ततो विकरणव्यवधानेऽप्यादेशाः । अत आर्धधातुकोपदेशेऽकारान्तत्वाल्लोपसिद्धिरिति ॥ ३४ ॥

(१८०५ सिपो णित्त्वविधिवार्तिकम् ॥ ७ ॥)

## ॥ * ॥ सिब् बहुलं छन्दसि णित् ॥ * ॥

(भाष्यम्) सिब् बहुलं छन्दसि णिद् वक्तव्यः सविता धर्मं साविषत्। प्र ण आयूंषि तारिषत् ॥ सिब्बहुलम् ॥ ३४ ॥

(प्रदीपः) साविषदिति । षू प्रेरण इत्यस्य लेटि रूपम् ॥ तारिषदिति तरतेः ॥ ३४ ॥

(आम्विकरणप्रकरणम्)

(४०८ आम्विकरणविधिसूत्रम् ॥ ३।१।३ आ० ७)

## ६५२ कास्प्रत्ययादाममन्त्रे लिटि ॥ ३।१।३५ ॥

(१८०६ आम्विधिवार्तिकम् ॥ १ ॥)

## ॥ * ॥ कास्ग्रहणे चकास उपसंख्यानम् ॥ * ॥

(भाष्यम्) कास्ग्रहणे चकास उपसंख्यानं कर्तव्यम्। चकासांचकार ॥

(न्यासान्तरेण वैयर्थ्यभाष्यम्)

न कर्तव्यम्। चकास्प्रत्ययादिति वक्ष्यामि ॥

(१८०७ न्यासान्तरेपि वार्तिककरणम् ॥ २ ॥)

## ॥ * ॥ चकास्ग्रहणे कास उपसंख्यानम् ॥ * ॥

(भाष्यम्) चकास्ग्रहणे कास उपसंख्यानं कर्तव्यम्। कासांचक्रे ॥

(दूषणभाष्यम्)

सूत्रं च भिद्यते ॥

(सिद्धान्तिसमाधानभाष्यम्)

यथान्यासमेवास्तु ॥

(दूषणस्मारणभाष्यम्)

ननु चोक्तम् *कास्ग्रहणे चकास उपसंख्यानम्* इति ॥

(दूषणोद्धारभाष्यम्)

नैष दोषः । चकास्शब्दे कास्शब्दोऽस्ति तत्र कास्प्रत्ययादित्येव सिद्धम् ॥

(दूषणस्थैर्यभाष्यम्)

न सिध्यति । किं कारणम् । अर्थवतः कास्शब्दस्य ग्रहणम् । न च चकास्शब्दे कास्शब्दोऽर्थवान् ॥

(उद्द्योतः) कास्प्रत्यया ॥ ३५ ॥ नन्वत्र प्रत्ययग्रहणं व्यर्थम् 'आममन्त्रे लिटि' इति योगविभागेन सामान्यत आमं विधाय कास्ग्रहणं नियमार्थं व्याख्येयम्। औपदेशिकधातोश्चेत्कास एवेति प्रत्ययान्ते सिद्धेरिति चेन्न। अनेकाच् प्रत्ययान्तग्रहणार्थत्वात्। तेन कादिभ्य आचारक्विबन्तेभ्य आम्न। ध्वनितं चेदं हरदत्तग्रन्थे। न चैकाच्प्रत्ययान्तपरमेवास्तु क्विग्रहणेनैव सिद्धेः प्रत्ययग्रहणवैयर्थ्यापत्तेः ॥ गोपायांचकारेत्यादि भाष्यप्रयोगविरोधापत्तेश्च ॥

(समाधानसिद्धान्तिवार्तिकशेषभाष्यम्)

एवं तर्हि।

(१८०८ समाधानवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ कास्यनेकाचश्चुलुम्पाद्यर्थम् ॥ * ॥

(भाष्यम्) कास्यनेकाचः इति वक्तव्यम्। किं प्रयोजनम्?। चुलुम्पाद्यर्थम्। चुलुम्पांचकार दरिद्रांचकार ॥ कास्प्रत्यया ॥ ३५ ॥

(उद्द्योतः) कास्यनेकाच इति । कासिपदमनेकाज्धातुमात्रस्य यथा भवति तथा व्याख्येयमित्यर्थः। तथा हि। 'एकदेशेन धातोश्चेल्लोप एव' इति नियमपरतया तद्व्याख्येयमिति । एवं च

---

१ अयं वार्तिकपाठो नैव पुस्तके कुत्राप्युपलब्धः। तथापि भाष्ये व्याख्यामात्रदर्शनेन व्याख्याया मूलमन्तराऽनुपपत्त्या मूलवार्तिकमासीत् इति अन्यत्र व्याख्याया मूलपूर्वकत्वस्यैव दर्शनेन मूलवार्तिकं कल्पनीयमेवेति सिद्धे 'साधनं कृतेति पादहारकार्थम्' १२५८ वार्तिकस्यैव 'साधनं कृता समस्यत इति वक्तव्यम्। किं प्रयोजनम्? पादहारकाद्यर्थम्' इति व्याख्यायाः, 'कर्मवल्लाद्यर्थम्' १४७३ वार्तिकमिति रहितमपि 'कालाध्वानौ कर्मवद्भवतः इति वक्तव्यम्। किं प्रयोजनम्? । लाद्यर्थम्' इति व्याख्यातं भाष्यकृतेति दृष्ट्वा मूलभूतं वार्तिकम् अस्माभिः कोष्टकमध्ये वर्धितमिति क्षन्तव्यम् ॥ नागेशभट्टैस्तु "अनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इति शेखरे दर्शितम्। उद्द्योते तु मौनमेवाश्रितम् ॥ "वयं तु—कास्यनेकाच इति वक्तव्यमिति भाष्यवार्तिकं नतु कात्यायनवार्तिकव्याख्यानभूतं येन कात्यायनवार्तिकं कल्प्येत—इति तत्कल्पनमनुचित इति वदामः"। (र.ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चकास उपसंख्यानमिति वार्तिकं सूत्रस्थं प्रत्ययग्रहणं च न कार्यमिति भाष्यतात्पर्यम्[१]॥ यथाश्रुतवार्तिकेऽपि प्रत्ययग्रहणस्थानेऽनेकाज्ग्रहणं कर्तव्यमित्येव तात्पर्यमिति हरदत्तानुसारिणः । अन्ये तु कासीति सप्तमी कास्प्रत्यये सूत्रे-इत्यर्थः । अन्यथा समाहारद्वन्द्वे टजापत्तिः । इतरेतरयोगे तु द्विवचनापत्तिः ॥ प्रत्ययग्रहणापनयने च न मानम् । सूत्रे प्रत्ययग्रहणं तु योगविभागनियमकल्पनारूपगौरवपरिहारेण स्पष्टार्थमेव ॥ एवं च कशब्दादिभ्य आचारक्विपि कामीसेत्यादिरूपाण्येव सत्यभिधाने[३] इत्याहुः ॥ ३५ ॥

---

( ४०९ आम्प्रत्ययविधिसूत्रम् ॥ ३।१।३ आ. ८ )

## ६५३ इजादेश्च गुरुमतोऽनृच्छः ॥ ३ । १ । ३६ ॥

( १८०९ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ गुरुमत आम्विधाने लिण्निमित्तात् प्रतिषेधः ॥ * ॥

( भाष्यम् ) **गुरुमत आम्विधाने लिण्निमित्ताद् गुरुमतः प्रतिषेधो वक्तव्यः । इयेष उवोष । गुणे कृते "इजादेश्च गुरुमतोनृच्छ" इत्याम् प्रसज्येत ॥**

( प्रदीपः ) इजादेः ॥ ३६ ॥ उवोषेति । नन्वत्रोषविदेतिविकल्पेनामा भाव्यम् ॥ अत्राहुः—द्विवचनबहुवचनयोर्गुणाभावादगुरुमत्त्वाभावाद्विकल्पः सावकाश इति यत्र गुरुमत्त्वं तत्र नित्यमेवाम् प्राप्नोति एतच्च विप्रतिषेधे परमिति प्रतिपदविधेश्च बलवत्त्वमनाश्रित्य भाष्यकारेणोदाहृतम् । तत्र ह्याश्रिते विकल्प एव भविष्यतीति नैतदिहोपन्यसनीयम् ॥

( उद्योतः ) इजादेश्च ॥ ३६ ॥ भाष्ये—लिण्निमित्ताद्गुरुमत इति । गुरुमति लिण्निमित्तत्वं गुरुद्वारा बोध्यम् ॥ द्विवचनबहुवचनयोरिति । तयोः कित्त्वादिति भावः ॥ तत्र द्विर्वचनापेक्षया नित्यत्वाद्वैकल्पिक आम् । णलि तु परत्वाद्गुणे नित्य आम्प्राप्नोतीति विशेषः ॥ एतेनात्रापि सवर्णदीर्घे गुरुमत्त्वमस्तीति कथमवकाश इत्यपास्तम् ॥ विप्रतिषेध इति । यद्यसंभवे प्रतिषेधः, अस्ति चात्रोभयोः संभवबुद्धिरित्युच्यते, तदापि विकल्पसिद्ध्योवोषेत्यस्य सिद्धिरिति भावः ॥ प्रतिपदेति । अनवकाशत्वाभावेऽपि पूर्वप्रवृत्ताविदं नियामकमिति भावः ॥ उवोखेति कवर्गद्वितीयान्तपाठ इत्यन्ये ॥

( प्रत्याक्षेपभाष्यम् )

**गुरुमद्ग्रहणमिदानीं किमर्थं स्यात् ? ।**

( प्रदीपः ) गुरुमद्ग्रहणमिति । ईषतु रीषुरित्यत्रापि सवर्णदीर्घे गुरुमत्त्वादिजादेः सर्वत्र गुरुमत्त्वादामा भवितव्यमिति गुरुमद्ग्रहणसामर्थ्यादुपदेशावस्थायां गुरुमत इत्याश्रयिष्यत इति भावः ॥

( उद्योतः ) ननु द्विवचनादौ किमिति गुणाभावे आमभावाय गुरुमद्ग्रहणं चरितार्थम्, अत आह—ईषतुरिति । उपदेशेति । एवं च लिण्निमित्तादिति प्रतिषेधोऽनर्थक इति भावः ॥

( १८१० प्रत्याक्षेपबाधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ गुरुमद्ग्रहणं किमर्थमिति चेद् णल्युत्तमे यजादिप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) **गुरुमद्ग्रहणं किमर्थमिति चेण्णलि उत्तमे यजादीनां मा भूदिति । इयज अहम् ॥ उवप अहम् ॥**

( प्रदीपः ) णल्युत्तम इति । एतच्चोपलक्षणं तेन थलपि गृह्यते—इयष्ठ इयजिथेति । लिट्यभ्यासस्य संप्रसारणे कृते यजादय इजादयो भवन्तीति ॥

( उद्योतः ) इयष्ठेति । संयोगपरत्वेन गुरुमत्त्वेऽपि उपजीव्यविरोधान्नाऽऽमिति गुरुमद्ग्रहणस्येदं फलमिति भावः ॥ इयजिथेत्येव वा प्रत्युदाहरणम् ॥ ननु यजादीनां कथमिजादित्वं तत्राह—लिट्यभ्यासस्येति ॥

( १८११ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ उपदेशवचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) **उपदेशे गुरुमत इति वक्तव्यम् ॥**

( प्रदीपः ) उपदेशवचनादिति । वचनं[५] व्याख्यानमभिप्रेतमन्यथा[६] वचनेन वचनान्तरस्य निरासे को गुणः स्यात् । तस्मान्नित्ययोगे[७] मतुप आश्रयणादुपदेशावस्थायां गुरुमत इत्याश्रयिष्यत इत्यर्थः ॥ उपदेशग्रहणशब्देनाप्युपदेशो गृह्यतेऽनेनेति व्युत्पत्त्या व्याख्यानमेवोच्यते ॥

( उद्योतः ) तस्मान्नित्ययोग इति । भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने इत्युक्तेः । प्रकृते लक्ष्यानुसारात्तत्रैव मतुविति भावः ॥ ननु वचनशब्दस्य व्याख्यानपरत्वेऽप्युपदेशग्रहणमित्यसंगतमत आह—उपदेशग्रहणेति ॥

( आक्षेपभाष्यम् )

**यद्युपदेशग्रहणं क्रियते उच्छेराम् वक्तव्यः । व्युच्छांचकारेति ।**

---

१ अपनेयपदे दोषं दत्त्वाऽभीष्टपदलेखनस्य मन्यकर्मण्यनादरसूत्रे उपसर्गादनोत्पर इत्यादिसूत्रेषु भाष्यशैलीदर्शनेन प्रकृतसूत्रे प्रत्ययपदे दूषणादानेन नैव प्रत्ययपदानयनमाचार्यसंमतमिति भावः ॥

२ अत एव भाष्यकृताऽनेकाज्ग्रहणस्य चुलुम्पादिसंग्रह एव प्रयोजनत्वेन दार्शितः नत्वेकाज्व्यावृत्तिः प्रयोजनत्वेन दर्शितेति भावः ॥

३ सत्यभिधाने इत्यनेन एकाचः प्रातिपदिकात् क्विपोऽनभिधानकल्पनमेव वरमिति सूच्यते ॥

४ प्रतिपदोक्तत्वम् । ( र. ना. )

५ वचनं वचनपदार्थः । ( र. ना. )

६ वचनशब्दस्य व्याख्यानपरत्वाभावे वार्तिकपरत्वे चेत्यर्थः । ( र. ना. )

७ नित्ययोग एव । ( र. ना. )

८ अपिशब्दात् वार्तिकपरत्वे । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रदीपः ) उच्छेरिति । उच्छी विवासे इत्युपदेशे गुरोरपाठान्नायं[1] गुरुणा नित्ययुक्तः ॥

( १८१२ आक्षेपबाधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ ऋच्छिप्रतिषेधो ज्ञापक उच्छेराम्भावस्य ॥ * ॥

( भाष्यम् ) यदयम् "अनृच्छः" इति प्रतिषेधं शास्ति तद् ज्ञापयत्याचार्यः—तुङ्निमित्ता यस्य गुरुमत्ता भवति तस्मादाम्" इति ॥

( प्रदीपः ) तुङ्निमित्तेति । तुग्ग्रहणमागममात्रोपलक्षणं[2] तेनेङ्खांचकारेत्यत्रापि[3] भवति ॥

( उद्योतः ) तुग्ग्रहणमिति । सामान्यापेक्षं ज्ञापकमित्यर्थः ॥

( गौरवापत्तिभाष्यम् )

स तर्हि ज्ञापकार्थ ऋच्छिप्रतिषेधो वक्तव्यः ? ॥

( अनन्यासिद्धफलसाधकत्वेन गौरवाङ्गीकारभाष्यम् )

ननु चावश्यं प्राप्त्यर्थोऽपि वक्तव्यः ? ॥

( प्रदीपः ) प्राप्त्यर्थोऽपीति । प्रतिषेधप्राप्त्यर्थ इत्यर्थः ॥

( उद्योतः ) ऋच्छावामोभावादाह—प्रतिषेधेति । तुङ्निमित्तेत्याद्यर्थे ज्ञापिते ततोऽपि प्रत्ययस्य प्रतिषेधार्थं इति भावः ॥

( फलस्यान्यथासिद्ध्या गौरवसाधकभाष्यम् )

नार्थः प्राप्त्यर्थेन । "ऋच्छत्यृताम्" इति ऋच्छेर्लिटि गुणवचनं ज्ञापकम्—नर्च्छेर्लिड्याम् भवति' इति ॥

( प्रदीपः ) ऋच्छेरिति । आमा व्यवधानेऽपि वचनाद्गुणो भविष्यतीति चेद्, एवं सति तस्मिन्निति निर्दिष्टइत्येतद् बाध्येत तस्मादाम एवाभावो गुणविधानेन ज्ञाप्यते ॥

( उद्योतः ) तस्मादाम एवेति । यद्यप्यङ्गभूतपरिभाषाबाधप्रवोचितः । तथापि तस्या वाक्यार्थबोधप्राक्कालोपस्थितिकतया वैयर्थ्यस्य च लक्ष्यसंस्कारवेलायामुपस्थितत्वेनासंजातविरोधन्यायेनाम्बाध एवेति भावः ॥ एवं च तुङ्निमित्तेत्याद्यर्थे ज्ञापितेऽप्यस्य सार्थक्यं दुरुपपादम् । ऋच्छेरामभावस्य प्रकारान्तरेण सिद्धेरिति नैतज्ज्ञापकमिति तात्पर्यम् ॥

( अन्यथासिद्ध्यनुपपत्तिभाष्यम् )

नैतदस्ति ज्ञापकम् । अस्त्यर्थमेतत्स्यात् ॥

( प्रश्नभाष्यम् )

कथं पुनरृच्छेर्लिटि गुण उच्यमानोऽस्त्यर्थः शक्यो विज्ञातुम् ? ।

( समाधानभाष्यम् )

सामर्थ्यात् । ऋच्छिर्लिटि नास्तीति कृत्वा प्रकृत्यर्थो विज्ञास्यते । तद्यथा—"तिष्ठतेरित्" "जिघ्रतेर्वै"ति । चङि तिष्ठतिजिघ्रती न स्त इति कृत्वा प्रकृत्यर्थौ विज्ञायते ॥

( प्रदीपः ) सामर्थ्यादिति । ऋगतिप्रापणयोरित्यस्य शितपि शपि ऋच्छादेशः कृतो, न त्वनादेश ऋच्छिर्निर्दिष्ट इत्यर्थः ॥ ऋच्छिरिति । शिति ऋच्छादेशविधानाल्लिटि तदभावः ॥ तिष्ठतेरिति । अत्रापि स्थः शिति तिष्ठादेशं कृत्वा निर्देशः कृतः । तत्रानेन रूपेण स्थाशब्द एव प्रतीयत इत्यर्थः ॥

( उद्योतः ) ननु स्थानिकार्यस्यादेशे जायमानत्वेऽपि आदेशकार्यस्य कथं सामर्थ्यादपि स्थानिनि प्रवृत्तिः । तत्र स्थानिवद्भावस्येवात्रोपायाभावादत आह—ऋगतीति ॥ शितीति । स्वतन्त्रस्य त्वामा व्यवधानाच्छिद्परत्वाभावो बोध्यः ॥

( अनुयोगभाष्यम् )

किं पुनरर्तेर्लिटि गुणवचने प्रयोजनम् ? ।

( उत्तरभाष्यम् )

आरतुः । आरुः । एतद्रूपं यथा स्यात् ॥

( अनुयोगभाष्यम् )

किं पुनः कारणं न सिध्यति ? ।

( गुणवचनावश्यकताभाष्यम् )

द्विर्वचने कृते [सवर्णदीर्घत्वम् ।][11] सवर्णदीर्घत्वे च [कृते][12] यदि तावद्धातुग्रहणेन ग्रहणम्, ऋकारान्तानां लिटि गुणो भवतीति गुणे कृते रपरत्वे च अरतुः अरुरित्येतद्रूपं प्रसज्येत ॥ अथाभ्यासग्रहणेन ग्रहणम् । उरदत्वे रपरत्वम् हलादिशेषः । अत आदेरिति दीर्घत्वम् तत 'आतो लोप इटि च' इत्याकारलोपे अतुः उरिति वचनमेव[13] श्रूयेत ॥

---

१ अयमुच्छधातुः । ( र. ना. )
२ आगममात्रस्येत्यर्थः । ( र. ना. )
३ उपलक्षणपरतया व्याख्यानस्य फलमाह–इङ्खांचकारेति । अत्र–इखि धातोरिदितो नुम् । ( र. ना. )
४ एतेन स्वांशे चारितार्थ्यं दर्शितम् ॥
५ ननु–आमाव्यधानेऽपिगुणो भवतीत्येवकारार्थः । ( र. ना. )
६ विध्यङ्गेत्यर्थः । ( र. ना. )
७ तस्मिन्निति निर्दिष्टस्येत्यर्थः । ( र. ना. )
८ उक्तपरिभाषायाः । ( र. ना. )
९ 'प्रकृत्यर्थम्' इति क्रियाविशेषणमज्ञात्वा पुंलिङ्गनिर्देशः कृतः काशीमुद्रितपुस्तके । दाधिमथाः । प्रकृत्यर्थ इत्यस्य–ऋच्छिरित्यनेन संबधात् । पुंस्त्व निर्देशो न्याय्य एव । ( र. ना. )
१० काशीमुद्रितः 'प्रकृत्यर्थौ' इति पाठः 'निर्देशः' इति विशेष्यमध्याहृतं मत्वा कृतो भवेदिति दाधिमथाः ॥ अत्रापि प्रकृत्यर्थ इत्यस्य तिष्ठति जिघ्रतिशब्दोपात्तयोः स्थाघ्राधात्वोः प्रत्येकान्वयविवक्षया एकवचनान्तत्वं पुंस्त्वाचेति न्याय्यमेवेति वयम् । ( र. ना. )
११–१२ प्राचीनलिखितपुस्तकेषु नोपलभ्यते ॥
१३ प्रत्यय एव न तु प्रकृतिविशिष्टः प्रत्यय इत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**गुणे[1] पुनः सति गुणे कृते रपरत्वे च द्विर्वचनम् 'हलादिः शेषः' 'अत आदेरिति दीर्घत्वम्' ततः सिद्धं भवति—आरतुरारुरिति। यथा आटतुः आटुरिति॥**

( प्रदीपः ) द्विर्वचन इति । यणादेशात् पूर्वविप्रतिषेधेन द्विर्वचनं क्रियते । तथा हि । सति स्थानिवद्भाववशात्त्रे द्वयोरपि यण्द्विर्वचनयोर्नित्यत्वमिति विप्रतिषेध उपपद्यते ॥ अथवा यथा निन्युरित्यत्र यणादेशेन भवितव्यमिति द्विर्वचनात् पूर्वमेव इयङ् न प्रवर्तते । तथेहापि द्विर्वचने कृते सवर्णदीर्घेण भाव्यमिति यण् न प्रवर्तते । सति वा यणि तस्य स्थानिवद्भावाद् द्विर्वचनम् । तत्र कृते यणादेशात् परत्वात्सवर्णदीर्घत्वम् ॥ यदि तावदिति । अन्तादिवद्भावादुभयादेशस्यान्यतरतो व्यपदेशात् स्थानिवद्भावाद्वेति भावः ॥

( उद्द्योतः ) ननु परत्वाद्यणि द्विर्वचनेऽचीत्यनेन द्वित्वे स्थानिवद्भावाद्द्वित्वे कृते पुनरादेशरूपेणैवोत्तरखण्डस्यावस्थानादभ्यासस्योरति "हलादिः शेषे" अत आदेरिति दीर्घे आरतुरित्यादिसिद्धेरत आह—यणादेशादिति॥ ननु यण् नित्य इति कथं विप्रतिषेधोऽत आह—सतीति । द्विर्वचनेऽचीत्यस्मिन्निति शेषः ॥ द्विर्वचनेऽचीति सूत्रे स्थानिवद्भावपूर्वविप्रतिषेधयोः किं ज्यायः इति भाष्योक्तेः पूर्वविप्रतिषेधारम्भे तदभावस्य लाभादयं पूर्वविप्रतिषेधो नित्यानामपि बाधक इति वक्तुं युक्तम्, इत एवारुचेराह—अथ वेति । सति वा यणीति । रूपातिदेशेन द्वित्वे जाते पश्चाद्यथायथं योग्यशास्त्रप्राप्तिरिति दीर्घ एवेति भावः ॥ अन्तादिवदिति । उत्तरखण्डस्यैव क्रियावाचकत्वेन धातुत्वमिति भावः । समुदायस्य धातुत्वे त्वेतदसङ्गतिः स्पष्टैवेति बोध्यम् । स्थानिवदतिदेशस्यापि संभवादाह—स्थानिवद्भावाद्वेति। स्थान्यलाश्रयत्वाभावाच्चानल्विधाविति प्रतिषेधाभावः । स्थानिवत्त्वप्राप्त्युपपादकमुभयादेशस्येत्यादि ॥

भाष्ये गुणे पुनः सतीति ॥ ननु परत्वात्कृतेऽपि गुणे द्विर्वचनेऽचीति रूपातिदेशादिशब्दस्यैव द्वित्वमिति को विशेष इति चेन्न । यत्रादेशे कृते एकाच्त्वादिव्याघातप्रयुक्ता द्वित्वाप्राप्तिस्तत्रैवातिदेशप्रवृत्तिरित्याशयात् ॥

**( अनुयोगपूर्वकमारतुरित्यादिसिद्धिभाष्यम् )**

**किं पुनः कारणं सवर्णदीर्घत्वं तावद्भवति न पुनरुरत्वम् ॥ परत्वादुरत्वेन भवितव्यम् ॥**

**( गुणविधानावश्यकताभाष्यम् )**

**अन्तरङ्गत्वात्सवर्णदीर्घत्वं प्राप्नोति । अन्तरङ्गं[1] सवर्णदीर्घत्वं बहिरङ्गमुरत्वम् । कान्तरङ्गता । वर्णाचाश्रित्य सवर्णदीर्घत्वमङ्गस्योरत्वम् ॥**

( प्रदीपः ) अन्तरङ्गत्वादिति वार्णादाङ्गं[2] बलीय इत्येतत्तु समानाश्रयाङ्गवार्णविषयम् । यथा कारकश्वयनमिति गुणवृद्धी भवतो यणादेशात् । इह तूरदत्वं लिडाश्रयं वर्णद्वयाश्रयं तु सवर्णदीर्घत्वमिति भिन्नाश्रयत्वमनयोः ॥

(उद्द्योतः) इह तूरदत्वमिति । आसप्तमसमाप्त्यङ्गाधिकारादिति भावः ॥ इदं प्रौढ्या कैयट आहेत्यनुपदमेव स्फुटं भविष्यति ॥

**( गुणानावश्यकताभाष्यम् )**

**उरत्वमप्यन्तरङ्गम् । कथम् ? । वक्ष्यत्येतत्प्राग्भ्यासविकारेभ्योऽङ्गाधिकारः' इति । उभयोरन्तरङ्गयोः परत्वादुरत्वम् । उरत्वे च कृते रपरत्वम् 'हलादिः शेषः' 'अत आदे'रिति दीर्घत्वं परस्य रूपस्य यणादेशः सिद्धं भवति—आरतुः आरुरिति।**

**( गुणस्यान्यथासिद्धिप्रतिपादनभाष्यम् )**

**अथापि कथं चिदर्तेर्लिटि गुणेनार्थः स्यात् । एवमपि न दोषः "ऋच्छत्यृताम्" इति ऋकारोऽप्यत्र निर्दिश्यते । कथम् । प्रश्लिष्टनिर्देशोऽयम्—ऋच्छति ऋऋताम्—ऋच्छत्यृतामिति ॥**

( प्रदीपः ) अथापीति । आसप्तमपरिसमाप्तेरङ्गाधिकारो यत्रश्वेत्यादिसिद्धय आश्रित इति भावः ॥ ऋकारोऽपीति । बहुवचननिर्देशादिति भावः ॥

(उद्द्योतः) यत्रश्वेति । अत्राभ्यासे रेफस्य संप्रसारणे उरदत्वे तस्याङ्गाक्षिप्तपरनिमित्तत्वेन न संप्रसारण इति वस्य तन्निषेधे स्थानिवत्त्वं सिध्यतीत्यर्थः ॥ ऋकारनिर्देशे लिङ्गमप्याह—बहुवचनेति ॥

---

1 'अन्तरङ्गं सवर्णदीर्घत्वम्, बहिरङ्गमुरत्वम् । काऽन्तरङ्गता ? वर्णावाश्रित्य सवर्णदीर्घत्वम् अङ्गस्योरत्वम्' इति ग्रन्थेन सवर्णदीर्घे संज्ञानपेक्षत्वेन तदपेक्षया अङ्गसंज्ञापेक्षत्वेन उरत्वस्यानल्पापेक्षतया बहिरङ्गत्वम्, तदपेक्षया सवर्णदीर्घत्वस्यान्तरङ्गत्वं कथयता भाष्यकृताऽनपेक्षमल्पापेक्षमन्तर्भूतनिमित्तकं चान्तरङ्गम् सापेक्षमधिकापेक्षं संज्ञापेक्षं बहिर्भूतनिमित्तकं च बहिरङ्गम् इति सूचितम् । एकत्वसंख्याया द्वित्वसंख्यान्तर्गतत्वेनान्तरङ्गत्वम् । द्वित्वसंख्याया एकत्वसंख्याबहिर्भूतत्वेन बहिरङ्गत्वमेवेति तद्भावः ॥ गणितविदामपि शून्यस्य सर्वतोऽन्तरङ्गत्वम् । तदपेक्षयैकत्वसंख्याया बहिरङ्गत्वम् । तदपेक्षया द्वित्वसंख्याया इति व्यवहारः स्पष्टमेव । अत एव 'अन्धानां काणो राजा' इति भाष्ये चक्षुःशून्यान्धापेक्षयाप्येकचक्षुषो बह्वपेक्षत्वं 'राजा' इत्यनेन स्पष्टमेवोक्तम् ॥ एतेन—अन्तरङ्गबहिरङ्गशब्दाभ्यामल्पापेक्षत्वबह्वपेक्षत्वयोः शब्दमर्यादया अलाभात् इति "संज्ञापेक्षबहिरङ्गत्वस्य शास्त्रेऽनाश्रयणात्" इति च शेखरकृतोक्तमपास्तम् ॥ "तथा सति 'असिद्धं बह्वपेक्षमल्पापेक्षे' इत्येव वदेत्" इत्यपि परिभाषेन्दौ नागेशेनोक्तमविचारितरमणीयमेव । अन्तरङ्गशब्देन यथाऽल्पापेक्षस्य संग्रहो भवति । न तथाऽल्पापेक्षशब्देन अन्तर्भूतनिमित्तकस्य संग्रहो भवति ॥ एवमेव बहिरङ्गशब्देन तु बह्वपेक्षबहिर्भूतनिमित्तकादीनां संग्रहो भवति न तथा बह्वपेक्षशब्देन बहिर्भूतनिमित्तकस्य संग्रहो भवतीति सर्वसंग्रहायान्तरङ्गबहिरङ्गशब्दावेवोपात्तौ नैवाल्पापेक्षबह्वपेक्षशब्दौ । तदुपादाने पद्व्या मृद्वा स्योन इत्यादीनां सिद्धिर्न स्यादिति सर्वसाधकम् अन्तरङ्गबहिरङ्गशब्दयोरेवोपादानं कृतमिति सर्वरहस्यवेदिनां दाधिमथानामावेदनं मात्सर्यमुत्सार्य विचार्यमार्यैः ॥

२ ननु वार्णादाङ्गमिति परिभाषया एवान्तरङ्गताऽकिंचित्करीत्याशङ्क्य समाधत्ते वार्णादाङ्गमितीति । ( र. ना. )

1 'द्विर्वचनात् प्रसारणात्वघात्वादिविकाररीत्वेत्वोत्वगुणवृद्धिविधयोः' इति "दाश्वान्" सूत्रे वार्तिकात् परविप्रतिषेधेनेति भावः ॥

2 'द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः' इति दाश्वान् सूत्रे वार्तिकादिति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( आक्षेपभाष्यम् )

**इहापि तर्हि प्राप्नोति—चक्रतुश्चक्रुरिति।**

( प्रदीपः ) इहाऽपीति। ऋ इति वर्णग्रहणात्तदन्तविधिसद्भावादिति भावः॥

( समाधानभाष्यम् )

**संयोगादिग्रहणं नियमार्थं भविष्यति—संयोगादेरेवाकेवलस्य नान्यस्याकेवलस्येति॥**

( प्रदीपः ) संयोगादेरिति। अकेवलस्य वर्णान्तरसहितस्येत्यर्थः। ततश्च धातोरेव ग्रहणमवतिष्ठते॥

( उद्द्योतः ) धातोरेवेति। गत्यर्थस्य। न तु तदन्तविधिरित्यर्थः॥

( आक्षेपभाष्यम् )

**तदेतदन्तरेणार्तेर्लिटि गुणवचनं, रूपं सिद्धं भवति। अन्तरेण च ऋच्छिग्रहणम् अर्तेर्लिटि गुणः सिद्धः। स एषोऽनन्यार्थं ऋच्छिप्रतिषेधो वक्तव्यः। उच्छेर्वा आम् वक्तव्यः।**

( प्रदीपः ) स एष इति। आगमनिमित्तगुरुमत्त्वधात्वर्थं इत्यर्थः। अनृच्छ इति पर्युदासाश्रयेण तत्सदृशधातुग्रहणादुच्छे राम्भवति॥ अथवा यद्यपि गुणविधानेन ऋ च्छे राम्न भवतीति ज्ञायते तथाप्यनृच्छ इति प्रतिषेधः प्राप्तिसंभावनया क्रियमाणो ज्ञापको यथोक्तस्यार्थस्य भवति॥

( उद्द्योतः ) भाष्ये तदन्तरेणार्तेरिति। वार्णपरिभाषयैवेति भावः॥ सा समानाश्रयविषयैवेति तु न मानाभावादिति भावः॥ ननु पूर्वमुक्तत्वेऽपि हलादिः शेषे 'अत आदेरिति दीर्घे परखण्डे यणादेशं बाधित्वाऽऽद्गुण इति प्राप्नोतीत्यसिद्धिरत आह—अन्तरेण ऋच्छिग्रहणमिति। ऋकारनिर्देशेनेति भावः॥ अयमेवाथापि कथंचिदिति भाष्यस्याशयः॥ ननु गुणविधिस्थऋच्छिग्रहणेन ज्ञापकेन ऋच्छेरामोऽप्राप्तौ अनृच्छ इत्यस्य ज्ञापितेऽपि चारितार्थ्याभावात्कथं ज्ञापकत्वमत आह—अनृच्छ इतीति। तत्सदृशागमवद्धातुलक्षणार्थैव तदुपादानमिति भावः॥ वाक्यभेदश्च बोध्यः॥ तेनैधादेः सिद्धिः॥ अनन्यार्थं इत्यनेन भाष्ये ध्वनितमेतत्॥ अथ वेति। इदं प्रौढ्या॥

( सिद्धान्तभाष्यम् )

**उभयं न वक्तव्यम्। उपदेशग्रहणं न करिष्यते॥**

( प्रदीपः ) उपदेशग्रहणमिति। गुरुमत इति गुरुमत्तामात्राश्रयो मतुप् यथा पितृमानिति न तु नित्ययोग इति व्याख्यास्यत इत्यर्थः॥

**कस्मान्न भवति-इयेष उवोषेति॥**

( १८१३ वार्तिकम्॥ ४॥ )

**॥ * ॥ उक्तं वा ॥ * ॥**

( भाष्यम् ) **किमुक्तम्?। 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति।**

(प्रदीपः) संनिपातलक्षण इति। लिट्सन्निपातनिमित्तो गुणस्तद्विघातनिमित्तस्यामो निमित्तं न भवति। आमि सति हि लेर्लुका भाव्यमिति लिट्सन्निपातस्य विघातः स्यात्॥

( उद्द्योतः ) लेर्लुकेति। अव्यवधानविघातश्च बोध्यः॥ एवं चानृच्छ इति *लिण्निमित्तादिति च प्रत्याख्यातम्॥ ननूपदेश इति व्याख्याने ईत् ऊत् शब्देभ्य आचारक्विपि आम्न प्राप्नोति। तत्प्रत्याख्याने तु प्राप्नोतीति चेन्न। प्रत्ययान्तत्वेनैव तत्रामृसिद्धिरित्याशयात्॥ हलन्तेभ्य आचारक्विपोऽभावाच्च॥

( १८१४ प्रतिषेधवार्तिकम्॥ ५॥ )

**॥ * ॥ ऊर्णोतेश्चोपसंख्यानम् ॥ * ॥**

( भाष्यम् ) **ऊर्णोतेश्चोपसंख्यानं कर्तव्यम्। प्रोर्णुनाव॥**

( प्रदीपः ) ऊर्णोतेरिति। प्रतिषेध इत्यर्थः॥

( प्रत्याख्यानभाष्यम् )

**न कर्तव्यम्।**

**वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।**

**आमश्च प्रतिषेधार्थमेकाचश्चेड्डुपग्रहात्॥**

**अथ वा उकारोऽप्यत्र निर्दिश्यते। कथम्?। अविभक्तिको निर्देशः—अनृच्छ उ अनृच्छो दयायासश्चेति॥ इजादेश्च॥ ३६॥**

( प्रदीपः ) उकारोपीति। तेनोकारान्तस्योर्णोतेराम्न भवति। संहितया च सूत्रपाठ इति दर्शयति—**अनृच्छो दयायासश्चेति॥ ३६॥**

( उद्द्योतः ) भाष्ये वाच्य ऊर्णोरिति। तत्र यङि भावातिदेशः। आमिटोरभावातिदेश इति बोध्यम्। तेनेजादेरिति अनेकाच इति चाप्नेति बोध्यम्॥ उकारप्रश्लेषेऽपि तत्सामर्थ्याद्भाव्यसामान्यचिन्तया सर्वस्माप्यामः प्रतिषेध इति बोध्यम्॥ तेनोकारान्तस्येति। ऋच्छिसाहचर्यादौपदेशिकस्येत्यर्थः॥ तदाह—ऊर्णोतेरिति॥ ३६॥

---

१ ध्वनितमिदम् 'आमि सर्वनाम्नः' इति सूत्रे 'प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषो 'मिदचोन्त्यात्परस्मे प्रत्ययपरत्वे वा' इति वदता भाष्यकृता। कैयटेन तु 'हलन्तेभ्योऽनभिधानादाचार क्विबभावः' इति स्पष्टमेवोक्तम्॥

२ यङो भावाय भावत्ये णुवद्भावोतिदिश्यते तेनैकाज्झलादित्वेन यङ्सिद्धिरिति भावः॥

३ अभावाय अभावत्ये प्रतिषेधायच णुवद्भावातिदेशः। तेनैकाच्त्वाद् हलादित्वाच नाम् प्राप्नोति इटः प्रतिषेधश्चैकाच्त्वात् सिध्यतीति भावः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ४१० आम्विकरणविधिसूत्रम् ॥ ३।१।३ आ. ९ )

## ६५५ उषविदजागृभ्योन्यतरस्याम् ॥ ३ । १ । ३८ ॥

( १८१५ वार्तिकम् ॥ १ ॥ )

॥ * ॥ विदेराम् कित् ॥ * ॥

( भाष्यम् ) विदेराम किद्वक्तव्यः । विदांचकार ॥

( उद्द्योतः ) उषविद ॥ ३८ ॥ उषि जागृसाहचर्यात्परस्मैपदिन आदादिकस्यैवं विदेर्ग्रहणम् ॥

( वार्तिकवैयर्थ्यभाष्यम् )

न वक्तव्यः । विदिरकारान्तः ॥

( प्रदीपः ) उषविद । विदिरकारान्त इति । सूत्रे अकारान्तत्वं विदेर्निपात्यत इति भावः ॥

( दूषणभाष्यम् )

यद्यकारान्तः, वेत्तीति गुणो न सिध्यति ॥

( प्रदीपः ) इतरो धातुपाठ एवाकारान्तत्वमनेन विदेरुक्तमिति मत्वाह—यदीति । गुणो न सिध्यतीति । ईकारस्योपधत्वाभावादकारलोपाभावाच्च विदतीति स्यादित्यर्थः ॥

( उद्द्योतः ) अकारलोपाभावाच्चेति । गुणासिद्धिर्दोषोपलक्षणमिति भावः ॥

( दूषणपरिहारभाष्यम् )

लिट्सन्नियोगेन ॥

( दूषणभाष्यम् )

एवमपि विवेदेति न सिध्यति ॥

( दूषणपरिहारभाष्यम् )

एवं तर्हि आम् सन्नियोगेन ॥

( प्रदीपः ) आम् सन्नियोगेनेति । आमः प्राधान्येन विधीयमानत्वात्तदनुयायित्वमत्वस्येत्यर्थः ॥ ३८ ॥

( उद्द्योतः ) ननु लिटोप्युपस्थित्या तत्सन्नियोगेनापि विधानं स्यादत आह—आम् इति ॥

भारद्वाजीयाः पठन्ति *विदेराम् कित् ॥*॥*॥ निपातनाद्वा अगुणत्वम् ॥*॥ इति ॥ उषविद ॥ ३८ ॥

( उद्द्योतः ) निपातनाद्वेति भाष्ये सूत्रेऽदन्तत्वनिपातनादित्यर्थः ॥ ३८ ॥

---

( ४११ आम्विकरणविधिसूत्रम् ॥ ३।१।३ आ. १० )

## ६५६ भीह्रीभृहुवां श्लुवच्च ॥ ३।१।३९ ॥

( आक्षेपभाष्यम् )

श्लुवदतिदेशे किं प्रयोजनम् ? ।

( समाधानभाष्यम् )

श्लुवदतिदेशे प्रयोजनं द्वित्वेत्वे बिभरांचकार ॥ भीह्रीभृ ॥ ३९ ॥

( प्रदीपः ) भीह्री ॥ ३९ ॥ द्विर्वचनमेव विधेयं किमतिदेशेनेति पृच्छति—श्लुवदतिदेश इति । न लुमताङ्गस्येति गुणप्रतिषेधो न भवति । प्रत्ययलोप इत्यस्याः प्राप्तेरयं निषेधो न चात्रासौ प्राप्तिरस्ति ॥ ३९ ॥

( उद्द्योतः ) भीह्री ॥ ३९ ॥ न लुमतेति । लुमच्छब्दवति कार्ये सति अङ्गस्य कार्यं नेत्यर्थः, इति मन्यते ॥ प्रत्ययेति । लुमता शब्देन लुप्ते प्रत्ययलक्षणेनाङ्गकार्यं नेति तदर्थं इति भावः॥ ३९॥

---

( ४१२ आम्संनियोगेनानुप्रयोगविधिसूत्रम् ॥ ३।१।३ आ. ११ )

## ६५७ कृञ्चानुप्रयुज्यते लिटि ॥ ३।१।४० ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ।

( प्रदीपः ) कृञ्चानु ॥४०॥ किमर्थमिति । अन्तरेणापि सूत्रारम्भमनुप्रयोगः सिद्धः कालसाधनसंख्याप्रत्यक्त्वादिप्रतिपादनाय लिट्परस्य कृञः । आमन्ताद्धि कालविशेष एवावसीयते, न त्वर्थान्तरम् तत्र समानार्थस्य धातोरनुप्रयोगो न भविष्यति—ओषामुवोषेति । उत्तरेणैव सर्वार्थाभिव्यञ्जनादामन्तस्यानर्थक्यप्रसङ्गात् ॥ नापि भिन्नार्थस्य—ईहां पपाचेति । आमन्तसंबद्धसाधनायसंप्रत्ययात् ॥ कृञ् तु सामान्यवचनः । सामान्यविशेषवाचिनोश्च[1] प्रयोगोऽर्थविशेषप्रतिपादनेनुगुण इति भावः ॥

( उद्द्योतः ) कृञ्चा ॥ ४० ॥ अनुप्रयोगाय अन्यधात्वनुप्रयोगस्य वारणाय च सूत्रमावश्यकमित्यत आह—अन्तरेणापीति । लिट्परस्य कृञ इत्यस्यानुप्रयोगः सिद्ध इत्यनेनान्वयः ॥ आमन्ताद्धि क्रियाविशेष एवेति पाठः । कालविशेष इति पाठे कालेन विशेष्यते यः स क्रियारूप इत्यर्थः ॥ सामान्येति । सामान्यस्यापि विशेषे पर्यवसानात्तदुत्पन्नतिबादिनापि विशेषसंबन्धिसाधनायवगतिरित्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

अनुप्रयोगो यथा स्यात् ।

(प्रदीपः) अनुप्रयोग इति । यद्यप्यामन्तात्सकलार्थाभिव्यक्तिर्न भवति तथापि प्रकरणादिवशाद्भविष्यति तस्मादनुप्रयोगसिद्ध्यर्थमिदं वक्तव्यमिति भावः ।

( आक्षेपसाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । आमन्तमव्यक्तपदार्थकं तेनापरिसमाप्तोर्थ इति कृत्वानुप्रयोगो भविष्यति ॥

( प्रदीपः ) आमन्तमिति । पूर्वोक्तानामर्थानां प्रकरणादिवशादशक्या प्रतिपत्तिरिति तदर्थाभिधानायानुप्रयोगः सिध्यत्येवेति भावः ।

---

१ वेत्तीत्यत्र गुणाभावमुपपादयति—इकारस्येति

[1] यथा नीलो घट इति प्रयोगः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( समाधानवार्तिकशेषभाष्यम् )

अत उत्तरं पठति—

( १८१६ प्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ कृञोऽनुप्रयोगवचनमस्तिभुवोः प्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) कृञोऽनुप्रयोगवचनं क्रियते [ किं प्रयोजनम् ? । अस्तिभुवोः प्रतिषेधार्थम् ] अस्तिभुवोरनुप्रयोगो मा भूदिति ॥

( प्रदीपः ) करोतेरेवानुप्रयोगो यथा स्याद् भ्वस्त्योर्मा भूदिति नियमार्थमेतदिति दर्शयितुमाह—कृञ इति ॥

( उद्योतः ) भ्वस्त्योरिति । तयोरपि सामान्यवाचकत्वादिति भावः ॥

( १८१७ प्रयोजनान्तरवार्तिकम् ॥ २ ॥ )

॥ * ॥ आत्मनेपदविध्यर्थं च ॥ * ॥

( भाष्यम् ) आत्मनेपदविध्यर्थं च कृञोऽनुप्रयोगवचनं क्रियते । आत्मनेपदं यथा स्यात् ॥

( प्रदीपः ) आत्मनेपदेति । सिद्धे कृञोऽनुप्रयोगे पुनर्वचनमतिशयेनानुगुणस्यानुप्रयोगार्थम् । तेनात्मनेपदप्रकृतेरामन्तस्यात्मनेपदान्त एव करोतिरनुप्रयुज्यत इत्याम्प्रत्ययवदिति सूत्रं न कर्तव्यं भवतीत्यर्थः ॥

( २ यप्रयोजनस्य यत्नान्तरसाध्यताभाष्यम् )

उच्यमानेऽप्येतस्मिन्नवश्यमात्मनेपदार्थो यत्नः कर्तव्यः ।

( प्रदीपः ) अवश्यमिति । परस्मैपदेनापि कर्त्रर्थस्यावगमात्तदन्तस्यानुप्रयोगः स्यादिति भावः ॥

( उद्योतः ) भाष्ये दूषयति—उच्यमानेऽपीति ॥ परस्मैपदेनापीति । सूत्रन्यासेन त्वदुक्तातिशयालाभादिति भावः ॥

( प्रथमप्रयोजननिराकरणभाष्यम् )

अस्तिभूप्रतिषेधार्थेन चापि नार्थः ॥

( १८१८ भ्वस्त्यनुप्रयोगे इष्टापत्तिवार्तिकम् ॥ ३ ॥ )

( १८१८ सिद्धान्तिवार्तिकम् )

॥ * ॥ इष्टः सर्वानुप्रयोगः ॥ * ॥

( भाष्यम् ) सर्वेषामेव कृभ्वस्तीनामनुप्रयोग इष्यते ॥

( आक्षेपभाष्यम् )

किमिष्यत एव आहो स्वित्प्राप्नोति[३] ? ॥

( इष्टापत्तिभाष्यम् )

इष्यते च, प्राप्नोति[४] च । कथम् ? । कृञिति नेदं धातुग्रहणम् किं तर्हि ? । प्रत्याहारग्रहणम् ॥ क सन्निविष्टानां प्रत्याहारः ॥

"कृभ्वस्तियोगे" इत्यतः प्रभृत्याकृञो ञकारात् ॥

( प्रदीपः ) प्रत्याहारग्रहणमिति । एतच्चाम्प्रत्ययवदित्यत्र कृञ्ग्रहणाद् भूक्तिनिवृत्त्यर्थाद्विज्ञायते । संपदश्चार्थविरोधान्न भविष्यत्यनुप्रयोगः ॥

( उद्योतः ) संपदश्चेति । चेन संरहितपदधातोरपीत्यर्थः ॥ एतेन संपदो धातुत्वाभावात्कृभ्वाद्यसाजात्येन प्रत्याहारे न संनिवेश इत्यपास्तम् । मध्यवर्तिनः सजातीया एव ग्राह्या इत्यर्थे मानाभावाच्च ॥

( १८१९ प्रत्याख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ सर्वानुप्रयोग इति चेदशिष्यमर्थाभावात् ॥ * ॥

( भाष्यम् ) सर्वानुप्रयोग इति चेदशिष्यं कृञोऽनुप्रयोगवचनम् । किं कारणम् ? । अर्थाभावात् । आमन्तमव्यक्तपदार्थकं तेनापरिसमाप्तोऽर्थ इति कृत्वा अनुप्रयोगो भविष्यति ॥

( प्रदीपः ) अशिष्यमिति । विद्यतिनिवृत्त्यर्थमपि नोपयुज्यते । प्रयुक्तानामन्वाख्यानात्तस्य चानुप्रयोगादर्शनात् ॥

(उद्योतः) विद्यतीति । विदसत्तायामिति स्मरणादिति भावः ॥

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—कृभ्वस्तीनामेवानुप्रयोगो यथा स्यात् पचादीनां मा भूदिति ॥

( प्रत्याख्यानभाष्यम् )

एतदपि नास्ति प्रयोजनम् ।

( १८२० प्रत्याख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अर्थाभावाच्चान्यस्य सिद्धम् ॥ * ॥

( भाष्यम् ) [अर्थाभावाच्चान्यस्य सिद्धमेतत् कुतः] कृभ्वस्तयः क्रियासामान्यवाचिनः, क्रियाविशेषवाचिनः पचादयः । न च सामान्यवाचिनोरेव विशेषवाचिनोरेव वा प्रयोगो भवति । तत्र विशेषवाचिन उत्पत्तिः । सामान्यवाचिनो[५]ऽनुप्रयोक्ष्यन्ते[६] ॥

( प्रदीपः ) न चेति । द्वयोरेकार्थयोः प्रयोगाभावादिति भावः । न्यायप्रदर्शनार्थं च सामान्यवाचिनोरित्युक्तम् । न तु सामान्यवाचिभ्यः कृभ्वस्तिभ्य आम्विधानमस्ति ।

---

१ अयं कोष्ठकान्तर्गतः पाठो न क्वाप्युपलभ्यते । परंतु सार्वत्रिकभाष्यशैलीसिद्धः प्राचीनतरलेखकप्रमादाद्भ्रष्टो भवेदिति मत्वाऽस्माभिः पूरितं इति क्षन्तव्यं क्षमावद्भिः ॥

२ क्रियेष्यतादिः ॥

३—४ 'प्राप्नोत्यपि' ॥

५ प्राचीनपुस्तके नास्ति ॥

६ 'वचनोऽनुप्रयोक्ष्यते' ॥ मा० ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सामान्यवाचिनश्चार्थं द्योतयितुं विशेषवचनो न शक्तः । प्रत्युत विशेषान्तरव्यावृत्त्या तदर्थविरोधी ॥

( उद्द्योतः ) भाष्ये—अर्थाभावाच्चेति । पचामित्यादिना पच्यादेरन्वयायोग्यत्वात् । पचामित्याद्यग्रे स्वस्यानुप्रयोगोऽसंभवी तत्राप्याम: प्राप्तेः । कृभ्वादिभ्यस्तु आम्प्राप्त्यभावादेव न तद्विषये तदनुप्रयोगस्तदाह भाष्ये—न च सामान्येत्यादिना ॥ द्वयोरेकार्थयोरिति । आम्विषययोरित्यर्थः । द्वितीयप्रयोगेऽप्यामः प्राप्तेरिति भावः ॥ न च पाचयामित्युत्तरं पचेरन्तर्भावितण्यर्थस्य समानार्थतया प्रयोगः स्यादिति वाच्यम् । उत्तरेणैव सिद्धे पूर्वस्य वैयर्थ्यापत्तेरिति भावः ॥ ननु निवृत्तप्रेषणकृञो णिच्चि कारयामित्यतः पचेरनुप्रयोगः स्यादिति सामान्यविशेषवाचिनोरित्यपि वक्तुं युक्तमत आह—सामान्यवाचिनश्चेति ॥

( १८२१ प्रयोजनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ लिट् परार्थं वा ॥ * ॥

( भाष्यम् ) लिट्परार्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते । लिट्परस्यैवानुप्रयोगो यथा स्यात् । अन्यपरस्य मा भूदिति ॥

किं परस्य पुनः प्राप्नोति ? । लट्परस्य ॥

( प्रदीपः ) लट्परस्येति । भूतविशेषस्यामन्तेन प्रतिपादनाद् भूतस्यापि भूतपूर्वां वर्तमानतामाश्रित्य लट्प्रयोगः स्यादिति भावः ॥

( उद्द्योतः ) वर्तमानविहितस्य लटः कथं भूते प्रसक्तिरत आह—भूतपूर्वामिति ॥

( प्रत्याख्यानसाधकभाष्यम् )

न लट्परस्यानुप्रयोगेण भूतकालो विशेषितः स्यात् ॥

( प्रदीपः ) न लट्परस्येति । आमन्तार्थाभिव्यक्त्यर्थत्वादनुप्रयोगस्य विरुद्धकालाभिधायिलडनुप्रयोगो न भविष्यति । न च सांप्रतिकवर्तमानतासंभवे भूतपूर्वाश्रयो लट्प्रयोग उपपद्यत इत्यर्थः ॥

( उद्द्योतः ) न च सांप्रतिकेति । वर्तमानसामीप्ये लट्यपि न विवक्षितमुख्यभूतत्वप्रतीतिः स्यादिति भावः ॥

( प्रयोजनभाष्यम् )

निष्ठापरस्य तर्हि मा भूत् ॥

( प्रत्याख्यानभाष्यम् )

न निष्ठापरस्यानुप्रयोगेण पुरुषोपग्रहौ विशेषितौ स्याताम् ॥

( प्रयोजनभाष्यम् )

लुङ्परस्य तर्हि मा भूत् ॥

( प्रत्याख्यानभाष्यम् )

न लुङ्परस्यानुप्रयोगेणानद्यतनभूतकालो विशेषितः स्यात् ॥

( प्रयोजनभाष्यम् )

लङ्परस्य तर्हि मा भूत् ॥

( प्रत्याख्यानभाष्यम् )

न लङ्परस्यानुप्रयोगेणाद्यतनः परोक्षः कालो विशेषितः स्यात् ॥

( प्रयोजनभाष्यम् )

अयं तर्हि भूते परोक्षानद्यतने लङ् विधीयते "हशश्वतोर्लङ्च" इति, तत्—परस्य मा भूदिति ॥

( प्रत्याख्यानभाष्यम् )

एतदपि नास्ति प्रयोजनम् । "एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भविष्यति" । तद्यथा—गोषु स्वामी अश्वेषु चेति । न हि भवति गोषु चाश्वानां च स्वामीति ॥

( प्रदीपः ) एकस्या इति । वेदलोकप्रसिद्धोऽयं न्यायः । यथा हि—खादिरे बध्नाति पालाशे बध्नातीत्यादौ विकल्पितेषु साधनेषु येनैव साधनेनोपक्रान्ता क्रिया तेनैव निर्वाह्यते । तत्र यदि कदा चित्खदिरस्य भ्रेषो भवति तदा तत्सदृशः बुर्बुरैः सादृश्यात्खदिरबुद्ध्या प्रतिनिधीयते न तु पलाशः परिगृह्यते । साधनभेदेन क्रियान्यत्वादुपक्रान्तै क्रियाऽनिर्वाह प्रसङ्गात् । लोकेऽपि यदा स्वस्वामिभावप्रतिपादनाय गवां स्वामीति षष्ठ्युपक्रम्येत तदा अश्वानां चेत्यत्रापि तत्प्रतिपादनाय सैव निर्वाह्यते । अन्यथाऽश्वेषु चेत्युक्तेऽधिकरणप्रतिपत्तिरपि स्यादश्वेषु च तिष्ठतीति । तस्माद्योऽर्थो यथा शब्दाकृत्या प्रतिपादयितुमुपक्रान्तस्तथैवासौ निर्वाह्यो न त्वन्यथा शब्दाकृत्येत्यर्थः । एवं हि प्रतिपत्तिलाघवं भवति ।

( उद्द्योतः ) खादिरे खदिरविकारे यूपे ॥ सादृश्यादिति । एवं च बहुखदिरावयवसामान्ययोगो बर्बुरस्येति तत्र खदिरबुद्ध्युत्पादनेन खादिरारब्धैव क्रिया निर्वाहिता भवति । पालाशे तूपादीयमाने तत्र खदिरबुद्ध्यनुत्पादात् खादिरेणोपक्रान्ता क्रिया न निर्वाहिता स्यात् इति न तदुपादनमिति भावः ॥ अश्वेषु चेति । एवं च तथा प्रयोगेऽसाधुतेति वदन्ति ॥

( १८२२ प्रयोजनवार्तिकम् ॥ ७ ॥ )

॥ * ॥ अर्थसमाप्तेर्वानुप्रयोगो न स्यात् ॥ * ॥

( भाष्यम् ) अर्थसमाप्तेस्तर्ह्यनुप्रयोगो न स्यात् ।

---

१ सामान्यार्थविरोधीत्यर्थः । ( र. ना. )

२ उपग्रहः परस्मैपदात्मनेपदे । ( र. ना. )

३ भ्रेषो भ्रंशः । ( र. ना. )

४ बर्बुर इत्यपि प्रयुज्यते । खदिरबर्बुरावित्यत्र भाष्ये । ( र. ना. )

५ प्रारब्धेत्यर्थः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**आमन्तेन च परिसमाप्तोऽर्थ इति कृत्वा अनुप्रयोगो न स्यात्॥**

( प्रदीपः ) अर्थसमाप्तेर्वेति । आमन्तं पदं यावन्तमर्थमभिधातुं शक्नोति तावानर्थस्तत्रैव परिसमाप्त इत्यनुप्रयोगो न स्यादिति भावः ॥

( प्रत्याख्यानभाष्यम् )

**एतदपि नास्ति प्रयोजनम्। इदानीमेव ह्युक्तमामन्तमव्यक्तपदार्थकं तेनापरिसमाप्तोऽर्थ इति कृत्वानुप्रयोगो भविष्यतीति॥**

( प्रदीपः ) एतद्भाष्यकारो दूषयितुमाह—एतदपीति । अशिष्यमर्थाभावात् इत्युक्तत्वात् ॥

( १८२३ प्रयोजनवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ विपर्यासनिवृत्त्यर्थं वा ॥ * ॥**

( भाष्यम् ) **विपर्यासनिवृत्त्यर्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते । ईहांचक्रे । चक्रे ईहामिति मा भूत्।**

( १८२४ प्रयोजनवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ व्यवहितनिवृत्त्यर्थं च ॥ * ॥**

( भाष्यम् ) **व्यवहितनिवृत्त्यर्थं च कृञोऽनुप्रयोगवचनं क्रियते । अन्वेव च कृञोऽनुप्रयोगो यथा स्यात्—ईहांचक्रे ॥ [ व्यवहितस्य मा भूदिति ] ईहां देवदत्तश्चक्रे इति ॥ कृञ्चानु ॥ ४० ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम्॥**

( प्रदीपः ) विपर्यासनिवृत्त्यर्थं वेति । सिद्धे कृञ्प्रयोगे देशनियमार्थं वचनम् । अनुशब्दस्य पश्चादर्थत्वात् ॥ तेनामन्तस्य पश्चादेव कृञ् प्रयुज्यते न पूर्वम्, नापि व्यवहितमित्यर्थसंपत्तिः ॥ ४० ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमपादे तृतीयमाह्निकम् ॥

( उद्योतः ) वार्तिके वाशब्दो विकल्पार्थकोऽपि पूर्वप्रयोजनानां खण्डितत्वात्तदर्थो भाष्यकृता व्याख्यायते—विपर्यासनिवृत्त्यर्थं तर्हीति ॥ भाष्ये—अन्वेति । पश्चादव्यवधानेनेत्यर्थः ॥४०॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे पादे तृतीयमाह्निकम् ॥

## तृतीयाध्यायस्य प्रथमपादे चतुर्थमाह्निकम् ॥

( ४१३ च्लिविकरणविधिसूत्रम् ॥ ३ । १ । ४ आ. १ )

### ६६० च्लि लुङि ॥ ३ । १ । ४३ ॥

( च्लिग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**काऽयं च्लिः श्रूयते ॥**

( आक्षेपबाधकभाष्यम् )

**न श्रूयते । एतस्य सिजादय आदेशा उच्यन्ते ॥**

( प्रदीपः ) च्लि लुङि ॥ ४३ ॥ आदेशैः सर्वत्र बाधितत्वान्नास्य प्रयोगः प्रयोजनम्, नापि क्विबादीनामिव कार्यार्थता दृश्यते । ततोऽस्यानर्थकं विधानमिति पृच्छति—कायमिति ॥

१ सूत्रारम्भे तु तत्सामर्थ्यादनुप्रयोगो भविष्यतीति सूत्रमारब्धव्यमेवेति शेषः॥

२ प्राचीनपुस्तकेषु नोपलभ्यते ॥

३ अनुशब्दस्य पूर्वदेशकालव्यावर्तकत्वेन पश्चात्पर्यायत्वे लोकप्रसिद्धेऽपि 'कांशीतः पश्चिमे प्रयागः मथुरा पुष्करं द्वारका' इत्यत्र देशे 'चैत्रतः पश्चात् वैशाखः, ज्येष्ठः, श्रावणः' इत्यत्र कालेऽपि व्यवहिताव्यवहितसाधारणत्वस्यैव लोके दृष्टत्वेन व्यवहितनिवृत्तिः प्रायिका वार्तिककारेणाभिप्रेताऽत्र भाष्यकारेण प्रकटीकृता ॥ भाष्यकारस्तु व्यवहितनिवृत्तिमेव नाभिप्रैति । अत एव '*कृञोऽनुप्रयोगवचनमस्तिभुवोः प्रतिषेधार्थम्*' इति वार्तिकार्थे "इष्टः सर्वानुप्रयोगः" इत्यादि भाष्यसंदर्भेणानवहितवचनत्वसूचनवत् *विपर्यासनिवृत्त्यर्थं वा* *व्यवहितनिवृत्त्यर्थं च* इति वार्तिकोक्तार्थेऽत्रानवहितवचनत्वस्यासूचितत्वेऽपि "क्रियासमभिहारे लोट्" इति सूत्रशेषभूते "यथाविध्यनुप्रयोगः पूर्वस्मिन्" "कषादिषु यथाविध्यनुप्रयोगः" इति सूत्रयोरनुप्रयोगग्रहणसत्त्वेपि "करणे हनः" इति सूत्रे 'पाण्युपघातं वेदिं हन्ति' इति प्रयोगे 'क्रियासमभिहारे—' सूत्रे लुनीहि लुनीहीत्येवायं लुनातीति प्रयोगे च "धातोरेकाचो हलादेः" इति सूत्रे 'जागृहि जागृहीत्येवायं जागर्ति' 'ईहस्वईहस्वेत्येवायमीहते' इति प्रयोगे च भाष्यकृता व्यवहितानुप्रयोगस्य दर्शितत्वेनानवहितवचनत्वस्य सूचितत्वात् ॥ अत एव बह्वृचब्राह्मणे—'तान् ह राजामदयामेव चक्रे' इति व्यवहितप्रयोगो दृश्यते । एवं च 'अदीधेत् अदीधयुः' इति प्रयोगदर्शनेन दीधवेवीग्रहणप्रत्याख्यानवत् बह्वृच ब्राह्मणप्रयोगदर्शनेनानयोर्वार्तिकयोरपि प्रत्याख्यानमेव भाष्यकृता ध्वनितमिति पदमञ्जरीरहस्यम् ॥ 'यथाविध्यनुप्रयोगः' इति सूत्रे प्रदीपे 'पूर्वव्यवहितप्रयोगनिवृत्तिरपि नेष्टा' इति स्पष्टमेवोक्तम् । उद्द्योतकारो व्याचख्यौ—नेष्टेति । अत एव 'लुनीहि लुनीहीत्येवायं लुनातीति भाष्ये व्यवहितप्रयोगः संगच्छते । तेनानुप्रयोगशब्दार्थव्यभिचार उक्तः । पूर्वप्रयोगस्तु यदि नेष्टः तर्हि अनभिधानाद्वारणीयः । यद्वेष्ट एव स इत्याहुः इति ॥ 'सोपसर्गं कर्म' इति भाष्यस्य 'सामान्यवाचिनोः' इति भाष्यस्य च समनुसरणेन 'उक्षांप्रचक्रुर्नगरस्य मार्गान्' 'विभयां प्रचकारासौ' इति भट्टिप्रयोगो निराबाध एवेति 'उक्षान् प्रचक्रुर्नगरस्य मार्गान्' 'प्रविभयां चकारासौ' इत्येवं पाठं कल्पयन् जयमङ्गलाकारोऽप्यविकृतबुद्धिरेव 'ईहां देवदत्तश्चक्रे' इति व्यावर्त्यप्रयोगे देवदत्त इति भिन्नार्थसत्त्वप्रधानव्यावृत्तेरेव भाष्यकृता दर्शितत्वात् ॥ एवं च 'तं पातयां प्रथममास पपात पश्चात्' इति 'प्रभ्रंशयां यो नहुषं चकार' इति प्रयोगा अप्युपपन्ना एव । "छन्दोवत् कवयः कुर्वन्ति" इति वदता भाष्यकृता तेषां साधुत्वबोधनात् ॥ "नह्येपेष्टिः" इत्यग्रिमभाष्ये 'पृषोदरादि' सूत्रभाष्यहरिसंमतेः काकुत्स्थानङ्गीकारेण वेददृष्टस्यापि व्यवहितप्रयोगस्यानङ्गीकाराग्रहे तु पातयां–प्रभ्रंशयां शब्दयोर्द्वितीयैकवचनान्ततापातयां–प्रभ्रंशयाम् इत्यनयोर्बोध्येति समध्यापयन्ति प्राचीनखण्डनाग्रहग्रहाविष्टान् प्राचीनापमानभीताः प्रतिभाशालिनो दाधिमथाः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्द्योतः ) च्लि लुङि ॥ ४३ ॥ नन्वश्रवणेऽपि क्विबादिवत्कार्यार्थः स्यादत आह—नापीति ॥

( आक्षेपसाधकभाष्यम् )

यदि न क्वचिच्छ्रूयते, किमर्थं च्लिरुत्सर्गः क्रियते । न सिजुत्सर्ग एव कर्तव्यः । तस्य क्सादयोऽपवादा भविष्यन्ति ॥

(प्रदीपः) च्लिरुत्सर्ग इति । स्थानीत्यर्थः । स ह्यादेशेनापोद्यते[1] । सिजुत्सर्ग इत्यत्र तु सामान्यविधिरुत्सर्गशब्देनोच्यते॥

( उद्द्योतः ) उत्सर्गपदस्यापवादप्रतियोगिन्येव प्रसिद्धेराह—स्थानीत्यर्थ इति ।

( समाधानभाष्यम् )

अत उत्तरं पठति—

( १८२५ प्रथमप्रयोजनवार्तिकम् ॥ १ ॥ )

## ॥*॥ च्ल्युत्सर्गः सामान्यग्रहणार्थः ॥*॥

( भाष्यम् ) च्लिरुत्सर्गः क्रियते । [ किं[2] प्रयोजनम् ? । ] सामान्यग्रहणार्थः ॥ क्व सामान्यग्रहणार्थेनार्थः ? । "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इति । तत्रावै[3]रतस्त्रयाणां ग्रहणं कर्तव्यं स्यात्—चङङोः, सिचश्चेति ॥

( प्रदीपः ) च्ल्युत्सर्ग इति । च्ल्येरुत्सर्गो धातुमात्राद्विधानमित्यर्थः ॥ तत्रावरत इति । त्रयाणां तावदवश्यं कर्तव्यं, जनेस्तु दीपजनेति तशब्दे विहितस्य चिणो मन्त्रे यदि लुग् दृश्यते तदा चतुर्थस्यापि ग्रहणं कर्तव्यमित्यवरत इत्युक्तम् । तत्र धयतेराकारान्तत्वात्तदर्थं चङ्सिज्ग्रहणं कर्तव्यम् घस्लशगम्यर्थमङ्ग्रहणं, धात्वन्तरार्थं तु सिज्ग्रहणमित्यर्थः ॥

( उद्द्योतः ) ननु च्ल्युत्सर्ग इति अनुपपन्नं च्लेरन्यस्योत्सर्गस्याभावात् । कर्मधारये तूत्सर्गशब्दस्य पूर्वनिपातापत्तिरत आह—च्लेरिति ॥ च्लिरुत्सर्ग इति भाष्यं तु फलितार्थपरम् ॥ क्वचित्तु भाष्येऽपि च्लेरित्येव पाठः ॥ मन्त्रे इति सूत्रे त्रयाणामपि चङङ् सिचां लिग्रहणेन लुग् यथा स्यादिति प्रयोजनं च्लिकरणस्य ॥ अन्यथा सिच इत्यनुवर्ततेति चङङोर्दोषः । लित्वं तु तेषां स्थानिवद्भावेन । अन्तरङ्गानपीति न्यायस्तु अत्र नास्ति अनित्यत्वात् । तेन मन्त्रे—अधान् अधुरित्युभयसिद्धिः तद्ध्वनयन्नाह—त्रयाणामिति । चङङोश्चेति कर्तव्यम् । चेन सिचोनुकर्ष इति पदत्रयं कार्यमिति भावः ॥ एतेन चङ्ग्रहणं व्यर्थम् धयतावेव हि तदुपयोगः । तत्र सिचोर्लुकैव सिद्धमित्यपास्तम् । अ[4]धान् इत्यसिद्ध्यापत्तेः ॥ आकारान्तत्वादिति । मन्त्रे घसेति सूत्रप्राप्तिनिमित्तकथनम् ॥

( १८२६ द्वितीयप्रयोजनवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थः ॥ * ॥

( भाष्यम् ) क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थः चिरुत्सर्गः क्रियते 'च्लेरनिटः' इति क्सः सिद्धो भवति ॥

( प्रदीपः ) क्सविधान इति । अनिट इत्येतत् च्लेर्विशेषणं यथा स्यादित्यर्थः । तथा हि—यद्यनिड्ग्रहणेन धातुर्विशेष्यते—'यस्मादन्यत्रेडागमो न दृष्ट' इति विषयान्तरगतमनिट्त्वमाश्रयणीयम् । लुङादेशानां सार्वधातुकत्वादिटः प्राप्त्यभावात् ततश्च गुहादिभ्यः क्सो न स्यात् । तेषां विकल्पितेनेटा सेट्त्वात् ॥ अथापि पाक्षिकेनेडभावेन तेषामनिट्त्वं स्यात् । तथापि नित्यं क्सः स्यात् । च्लौ तु विशेष्यमाणे यदा तस्येण् नास्ति तदा क्सो भवति अघुक्षदिति । यदा त्विड् भवति तदा सिच् अगूहीदिति ॥

( उद्द्योतः ) भाष्ये च्लिसंप्रत्ययार्थ इति । अनिटं प्रति च्लेर्विशेष्यत्वेन यः संप्रत्ययस्तदर्थमित्यर्थः ॥ यस्मादन्यत्रेति । अस्य तर्हीत्यादिः । यस्माद्धातोर्लुङ्भिन्ने प्रत्यये इत्यर्थः ॥ लुङि योऽनिडित्याश्रयितुमशक्यमित्याह—लुङादेशानामिति ॥ ततश्चेति । विषयान्तरगतानिट्त्वाश्रयणाच्चेत्यर्थः ॥ अथाऽपीति । इटोऽभावोऽनिट् तस्मान्मतुपः सौत्रत्वाल्लुगिति भावः ॥ यदात्विडिति । तदा निर्दिश्यमानपरिभाषया इड्रहितस्य सिजित्यर्थः । धातोरित्यस्य विहितविशेषणत्वाश्रयणान्निर्दिश्यमानस्य व्यवहितत्वमिति न शक्यम् ॥ अगूहीदिति । हम्यन्तेति वृद्धिनिषेधे गुणे ऊदुपधाया इत्यूत्वम् ।

( १८२७ प्रयोजनान्तरवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ घस्लृभावे च ॥ * ॥

( भाष्यम् ) घस्लृभावे च च्लावेव कृ[5]ते 'लृदितः' इत्यङ् सिद्धो भवति ॥

( प्रदीपः ) घस्लृभावे चेति । लुङि यदार्धधातुकं तत्रादेर्घस्लृ भावो विधीयते । तत्र च्लौ परतो घस्लृभावे सत्यङ् सिध्यति । अन्यथा सिच्येव घस्लृभावः स्यात् । ततश्च सिचः श्रवणं स्यात् । नहि प्रवृत्तस्योत्सर्गस्यापवादेन बाधः कर्तुं शक्यत इति भावः ॥ तथा मन्त्रे घसेति यदा सिचो लुक् क्रियते तदा आदिः सिचोऽन्यतरस्यामिति स्वरः स्यात् । लुमता लुप्तेपि तस्मिन् प्रत्ययलक्षणेनास्य स्वरस्येष्टत्वात् ॥

( उद्द्योतः ) आर्धधातुके विवक्षिते घस्लादेशविधानादाह—लुङीति । परसप्तमीत्यभिमानेनेदमिति भावः ॥ ननु च्लिर्न कार्यः, चङ्क्सादयश्च सिच एवादेशाः कार्याः । च्लेः इत्यस्य स्थाने सिच

---

1 अपसार्यते । ( र. ना. )
2 क्वापि नोपलभ्यते ॥
3 अन्ततः । ( र. ना. )
4 एतेनेत्यस्येदं व्याख्यानम् । ( र. नां. )
5 'वृत्ते' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति कार्यम् । मन्त्रे इति सूत्रे च च्लेरिति न कार्यम्, सिच इत्यनुवृत्त्यैवेष्टसिद्धेरिति नैते दोषाः इति चेन्न । अपुषन्नित्यादौ जुसापत्तेः । दोषान्तरमप्याह—तथा मन्त्रे इति । ननु*लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानमिति प्रत्ययलक्षणप्रतिषेधात्कथं स्वरप्राप्तिरत आह—लुमतेति । तस्य*सर्वामन्त्रितसिज्लुक्स्वर-वर्जमिति प्रतिषेधादिति भावः ॥

( चकारप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ चित्करणं किमर्थम् ? ।**

( १८२८ प्रयोजनवार्तिकम् ॥ ४ ॥ )

**॥*॥ च्लेः चित्करणं विशेषणार्थम् ॥*॥**

**(भाष्यम्) च्लेश्चित्करणं क्रियते । किमर्थम् ? । विशेषणार्थम् ॥ क्व विशेषणार्थेनार्थः ? । "च्लेः सिच्" इति । 'लेः सिच्' इत्युच्यमाने लिङ्लिटोरपि प्रसज्येत ॥**

( प्रयोजननिराकरणभाष्यम् )

**नैतदस्ति प्रयोजनम् । लुङीत्युच्यते । न च लुङि लिङ्लिटौ स्तः ॥**

( प्रदीपः ) लुङीत्युच्यत इति । लुङीत्यनुवर्तत इत्यर्थः ॥ तदनुबन्धकग्रहण इत्ययमपि परिहारः संभवति । भाष्यकारेण तु प्रकारान्तरेण परिहृतत्वान्नोक्तः ॥

( उद्योतः ) तदनुबन्धकेति । चकाराभावेऽस्यैकानुबन्धकत्वादिति भावः ॥

( इकारप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथेदित्करणं किमर्थम् ॥**

( १८२९ प्रयोजनवार्तिकम् ॥ ५ ॥ )

**॥*॥ इदित्करणं सामान्यग्रहणार्थम् ॥*॥**

**(भाष्यम्) इदित्करणं[1] क्रियते । [किमर्थम् ? ।][2] सामान्यग्रहणार्थम् ॥ क्व सामान्यग्रहणार्थेनार्थः ? । "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इति, "आमः" इति च ।**

( प्रदीपः ) आम इति चेति । तत्र सामान्यग्रहणे सति यथासंभवं कार्यं विज्ञायत इति भावः ॥

( उद्योतः ) तत्रेति । आम इति सूत्रेऽनुवर्तमानेन लेरिति पदेन लिटोऽपि ग्रहणं सिध्यतीत्यर्थः ॥

( चकारप्रयोजनसाधकभाष्यम् )

**इकारे चेदानीं सामान्यग्रहणार्थे क्रियमाणे अवश्यं सामान्यग्रहणाविघातार्थश्चकारः कर्तव्यः ॥ क्व सामान्यग्रहणाविघातार्थेनार्थश्चकारेण ? । अत्रैव ।**

( प्रदीपः ) अत्रैवेति । अन्यथा तदनुबन्धपरिभाषयाऽस्यैव ग्रहणं स्याद् न लिटस्ततश्चास इत्यनेन लिटो लुङ् न स्यादित्यर्थः ॥

( च्ल्युत्सर्गेऽपि प्रथमप्रयोजननिराकरणभाष्यम् )

**यत्तावदुच्यते—*च्लिरुत्सर्गः सामान्यग्रहणार्थ* इति ॥**

**क्रियमाणेऽपि वै च्ल्युत्सर्गे तान्येव त्रीणि ग्रहणानि भवन्ति—'च्लि लुङि' 'च्लेः सिच्' लेरिति ।**

( प्रदीपः ) तान्येवेति । च्लि, च्ले, लेरिति । सिज-लुङीत्येतत्तु—इतरेणापि कर्तव्यम् । मन्त्रे घसेत्यत्र चङोऽङः सिच इति तान्येव त्रीणीत्यर्थः ॥

( च्ल्युत्सर्गे लाघवभाष्यम् )

**यदेतत् 'लेः' इति, तत्परार्थं भविष्यति । कथम् ? । यदेतद् "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति अत्र सिचो ग्रहणम् । एतद् 'लेः' इति वक्ष्यामि ॥**

( प्रदीपः ) च्ल्युत्सर्गवाद्याह—यदेतदिति । लेरिति वक्ष्यामीति । तदेव मन्त्रे घसेत्यत्रानुवर्तिष्यते । ततश्च लाघवं भवतीत्यर्थः ॥

( उद्योतः ) तदेव मन्त्रे इति । गातिस्थेति सूत्रे लिग्रहणे यदि अन्तरङ्गानपीति न्यायेन च्ल्यवस्थायां लुक्, तर्हि अगुरित्यादौ सिजभ्यस्तेति जुस् स्यात् । माहिगातामित्यादौ आदिः सिचोऽन्यतरस्यामिति स्वरश्च न स्यात् । तस्माद्—अन्तरङ्गानपीति न्यायानाश्रयणेनादेशे कृते स्थानिवद्भावेन लित्वाल्लुगेषितव्यः ॥

( दूषणभाष्यम् )

**यदि लेरित्युच्यते धेटश्चातुःशब्द्यं[3] प्राप्नोति—अदधद्[4] अधाद् अधासीद् । 'अदधाद्'इत्येतदपि प्राप्नोति ॥**

( प्रदीपः ) धेट इति । विभाषा घ्राधेडित्यत्र लिग्रहणानुवृत्तौ सत्यां लेरादेशेषु कृतेषु स्थानिवद्भावाल्लिग्रहणेन तेषां ग्रहणाल्लुकि कृते चङ्निमित्तं द्विर्वचनं प्राप्नोतीत्यदधादित्यपि स्यात् ॥ ननु चङ्लोपस्य स्थानिवद्भावादाकारलोपे सत्यधदिति भाव्यं तत्कथमुच्यते अदधादिति प्राप्नोतीति । नैष दोषः । क्विलुगुपधात्वेति लुका लुप्तस्य स्थानिवत्त्वनिषेधाच्च लुमताऽङ्गस्येति प्रत्ययलक्षणनिषेधाच्चाकारलोपाभावात् ।

( उद्योतः ) तत्राह—भाष्ये धेटश्चातुःशब्द्यमिति ॥ तद्ध्वनयन्नाह—लेरादेशेष्विति ॥ आकारलोपे—इति । तिपो हल्ङ्यादिलोपे अपूभावे चेत्यपि बोध्यम् ॥ अधदिति भाव्यमिति पाठः[5] ॥ अदधदिति भाव्यमित्यपपाठः ॥ नैष इति । अङ्गकार्यत्वादत्र[6] न लुमतेति निषेधो, न तु द्वित्वे इत्यभिमानः ॥

---

१ इदिच्छब्दः । ( र. ना. )

२ नान्यत्र क्वाप्युपलभ्यते ॥

३ चत्वारः शब्दा इति विग्रहः चातुर्वर्ण्यमित्यादाविव स्वार्थे ष्यञ् । ( र. ना. )

४ तानेव चतुरः शब्दानाह—अदधदित्यादि । ( र. ना. )

५ प्रदीपस्थोयं पाठः शोध्यते ॥

६ 'आतो लोप इटि च' इत्यत्र ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( दूषणपरिहारभाष्यवार्तिकम् ॥ )

॥ * ॥ न चङो लुकि द्विर्वचनम् ॥ * ॥

( व्याख्याभाष्यम् )

न चङो लुकि द्विर्वचनेन भाव्यम्। किं कारणम्?। "चङि" इत्युच्यते न चात्र चङं पश्यामः ॥

( दूषणसाधकभाष्यम् )

प्रत्ययलक्षणेन।

( दूषणबाधकभाष्यम् )

"न लुमता तस्मिन्" इति प्रत्ययलक्षणप्रतिषेधः॥

( दूषणभाष्यम् )

बहुवचने तर्हि चातुःशब्द्यं प्राप्नोति—अदधत् अधुः अधासिषुः। अधानित्यपि प्राप्नोति॥

( दूषणपरिहारभाष्यम् )

नैष दोषः। "आत" इति जुस्भावो भविष्यति॥

( प्रदीपः ) आत इति। विध्यर्थमेतद्भविष्यति न तु नियमार्थमित्यर्थः॥

( उद्द्योतः ) विध्यर्थमिति। चङो लुकीति शेषः॥

( दूषणसाधकभाष्यम् )

न सिध्यति। सिज्ग्रहणं तत्रानुवर्तते॥

( दूषणपरिहारभाष्यम् )

सिज्ग्रहणं तत्र निवर्तिष्यते॥

( दूषणभाष्यम् )

यदि निवर्तते अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति॥

( उद्द्योतः ) भाष्ये अभूवन्निति। चङ्लुकि विध्यर्थत्वे संभवति नियमार्थत्वं न स्यादिति सिजभ्यस्तेति जुस् स्यादित्यर्थः॥

( दूषणपरिहारभाष्यम् )

एवं तर्हि लुक् सिजपवादो विज्ञास्यते॥

( प्रदीपः ) एवं तर्हीति। अकृतेष्वादेशेषु तदपवादो लेरेव लुग्विधास्यते। तेनाभूवन्निति जुस्न भविष्यति। आत इत्येतच्च विध्यर्थं भविष्यति। अधुरद्धुरपुरित्यादिसिद्ध्यर्थमिति भावः॥

( उद्द्योतः ) प्राप्तेष्वादेशेषु इति। च्ल्यादेशेष्वित्यर्थः। अकृतेष्वादेशेष्विति पाठान्तरम्॥ नन्वेवमगुरित्यत्र जुस् न स्यादत आह—आत इत्येतदिति। नियमस्यासंभवादित्यर्थः। न च च्ल्यभ्यस्तेति कार्यम्। तेन चङ्लुक्यपि जुस् च्लिपदानुवृत्त्या आत इत्यस्य नियमत्वादभूवन्नित्यपि सिद्धमिति वाच्यम्। अधुक्षन् अचोचन्नित्यादौ क्सादिभ्योऽपि परस्य जुसापत्तेः। तस्मान्मन्त्रे इति सूत्रार्थ च्लिर्न कार्यं इति सिद्धम्। आम इत्यत्रापि लेरित्यस्य नोपयोगः। प्रत्ययमात्रस्य तेन लुग्विधानात्॥

( दूषणभाष्यम् )

यदि लुक् सिजपवादो विज्ञायते। मा हि दातामित्यत्र "आदिः सिचोऽन्यतरस्याम्" इत्येष स्वरो न प्राप्नोति। तस्मान्नैतच्छक्यं [वक्तुम्]—'लुक्सिजपवाद' इति।

( प्रदीपः ) तस्मादिति। स्वरसिद्धये सिजादेशे कृते लुक्कर्तव्य इत्यर्थः॥

( सिद्धान्तिभाष्यम् )

न चेदेवमुच्यते अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति। तस्माद् "आतः" इत्यत्र सिज्ग्रहणमनुवर्तते। तस्मिंश्चानुवर्तमाने धेटश्चातुःशब्द्यं प्राप्नोति। तस्माद् "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इत्यत्र सिज्ग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति—'च्लि लुङि' 'च्लेः सिच्' लेरिति॥

( द्वितीयप्रयोजननिराकरणभाष्यम् )

यदप्युच्यते—*क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थ* इति॥ धातुमेवात्रानिट्त्वेन विशेषयिष्यामः—धातोरनिट इति॥

कथं पुनर्धातुर्नामानिट् स्यात्?।

धातुरेवानिट्॥ कथम्?। अनिमित्तं वा इटः अनिट्॥ न वा तस्मादिडस्ति सोऽयमनिट् अनिडिति॥

( प्रदीपः ) कथमिति। आर्धधातुकस्य ह्येड् विधीयते। तदेव तदभावादनिडिति व्यपदिश्यते। मत्वर्थे बहुव्रीहिविज्ञानादिति भावः॥ अनिमित्तमिति। धातोरिटश्च निमित्तनिमित्तिभावोऽस्तीति नानुपपन्नः षष्ठ्यर्थे बहुव्रीहिरिति भावः॥ न वा तस्मादिति। अनिट इति वचनसामर्थ्यात्पञ्चम्यर्थे बहुव्रीहिं राश्रयिष्यत इत्यर्थः॥

( उद्द्योतः ) ननु धातुरपि न विद्यते इट् यस्मादपि व्युत्पत्त्यानिट्पदवाच्योऽत आह—मत्वर्थे इति। अवयवावयविभावादिरूपे षष्ठ्यर्थे इत्यर्थः॥ भाष्ये—अनिमित्तं वा इट इति। नं विद्यते इट् कार्यं यस्येत्यर्थः॥ पञ्चम्यन्तार्थेऽन्यपदार्थे बहुव्रीहिरिति पक्षान्तरमाह—न वाऽस्मादिति। तद्याचष्टे—वचनसामर्थ्यादिति। *मत्वर्थे*इति*कर्मकर्तृवचनेनाप्रथमाया*इति च वार्तिकोक्तेरिति भावः॥

( आक्षेपभाष्यम् )

अथ धातौ विशेष्यमाणे क'योऽनिट्' इति विशेषयिष्यते?। यदि विज्ञायते—'निष्ठायामनिटः'इति। भूयिष्ठेभ्यः प्राप्नोति। भूयिष्ठा हि शलन्ता इगुपधा निष्ठायामनिटः॥

१ अभ्युतमिति पाठो भाति। तत्राङः परस्य जुसापत्तिः क्रियते। (र. ना.)
२ सर्वस्य प्रत्ययस्य। (र. ना.)
३ प्राचीनपुस्तकेषु तु त्रुटितम्॥
४ इतः प्राग् 'किं चातः?।' इत्यप्युपलभ्यते प्राचीनपुस्तके॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**अथ विज्ञायते 'लिटि योऽनिडि'ति। न कुतश्चित्प्राप्नोति। सर्वे हि शलन्ता इगुपधा लिटि सेटः॥**

(प्रदीपः) क्व योऽनिडिति। असति च्लिविधाने विकरणेन क्सेनानिट्त्वाश्रयेण भाव्यम्। तत्रास्मिन् विषये इटः प्राप्त्यभावाद्विषयान्तरमनिट्त्वस्यापेक्षणीयमिति प्रश्नः॥ निष्ठायामिति। यद्यार्धधातुकमात्रं परिगृह्यते ततो गुहादिभ्य ऊदिद्भ्यो न स्यादिति निष्ठाश्रयणम्। तदाश्रये च गुहादिभ्यो नित्यं क्सः प्रसज्येत, विकल्पितश्चेष्यते॥ इषुरिपुरुषुश्रिषुमुष्वादीनां च निष्ठायामनिट्त्वात् क्सः प्राप्नोति॥

(उद्योतः) अस्मिन्विषये लुङ्रूपे विषये। तत्रानिट्त्वस्याव्यभिचारात्॥ विषयान्तरं प्रत्ययान्तररूपम्॥ ऊदिद्भ्यो नेति। आर्धधातुकतासादिविषये पक्षे सेट्त्वादिति भावः॥ नित्यः क्स इति। यस्य विभाषेति निष्ठायामनिट्त्वादिति भावः। इष्यते इति। अनेनैषोऽपि तत्र पक्षे दोष इति सूचितम्। निष्ठाग्रहणपक्षे भूयिष्ठेभ्य इति सूचितं दोषमाह—इष्विति।

(समाधानभाष्यम्)

**किं पुनः कारणं धातौ विशेष्यमाण एतयोर्विशेषयोर्विशेषयिष्यते। न पुनर्यत्र सामान्येनेटो विधिप्रतिषेधौ?॥ क्व सामान्येन?। वलाद्यार्धधातुके॥**

(प्रदीपः) न पुनर्यत्रेति। गुहादयो विकल्पितेट इटो भावाभावाभ्यां भिद्यन्ते तत्र ये सेटस्तेभ्यः सिज् भविष्यति अनिड्भ्यस्तु क्स इति न कश्चिद्दोषः।

(उद्योतः) भाष्ये वलाद्यार्धधातुके इति। अयं भावः—अनिटो धातोरित्युक्ते क्वेति विषयविशेषाकाङ्क्षायां लुङ्परवलाद्यार्धधातुके यदा योऽनिडिति कालविशेषावच्छिन्नो विषयविशेषो ग्रहीष्यते लक्ष्यानुरोधादिति॥ तदाह—गुहादय इति॥

(तृतीयप्रयोजनप्रत्याख्यानभाष्यम्)

**यदप्युच्यते॰ घस्लृभावे चेति। आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु। तत्रार्धधातुकसामान्ये घस्लृभावे कृते लृदित इति अङ् भविष्यति॥ च्लिलुङि॥ ४३॥**

(प्रदीपः) आर्धधातुकसामान्य इति। अङ्प्रत्ययगतमार्धधातुकसामान्यं लुङ्विशेषितमाश्रयिष्यत इत्यर्थः। यदि तर्हि च्लिः प्रत्याख्यायते तदा मन्त्रे घसेति सिचो लुक्यादिः सिच इति स्वरः प्राप्नोति। नैष दोषः। तत्र हि छन्दसि क्वचिदडाटोरुदात्तत्वेन भाव्यं क्वचित्तिङ्निघातेन। यत्र त्वडाटोः तिङ्निघातस्य च निषेधः प्रत्ययस्वरश्चेष्यते स विषयश्छन्दसि नास्ति। एतच्च भाष्यकारेण च्लेः प्रत्याख्यानाद्विज्ञायते। मा हि लावीदित्यादौ तु सिच एव चित्त्वे नानन्यार्थेन चागमानुदात्तत्वं बाधिष्यत इति तदर्थोऽप्यनुबन्धासङ्गार्थं च्लिर्न कर्तव्यः॥ ४३॥

(उद्योतः) सामान्यमिति। आर्धधातुक इति विषयसप्तमीति भावः॥ यत्त्वविति। माहिदातामित्यादौ॥ सिच एव चित्त्वेनेति। एतच्चोत्तरसूत्रे स्फुटम्॥ ४३॥

(४१४ च्लेः सिजादेशविधिसूत्रम्॥ ३।१।४ आ. २)

## ६६१ च्लेः सिच्॥ ३।१।४४॥

(चकारप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**किमर्थश्चकारः?।**

(प्रयोजनभाष्यम्)

**विशेषणार्थः। क्व विशेषणार्थेनार्थः?। "सिचि वृद्धिः परस्मैपदेषु" इति। "सौ वृद्धिः" इतीयत्युच्यमाने अग्निर्वायुरित्यत्रापि प्रसज्येत॥**

(प्रदीपः) च्लेः सिच्॥ ४४॥ अग्निरिति। सौ च परस्मैपदेषु चेति समुच्चयो विज्ञायेत। तथा चात्रापि स्यात्। साविति च सिसुशब्दयोः साधारणो निर्देशः स्यात्। आगन्तुना चेकारेण सकारो निर्दिश्येतेति भावः॥

(उद्योतः) च्लेः सिच् इति॥ ४४॥ साधारण इति॥ तन्त्रेणेति भावः॥ पक्षान्तरमाह—आगन्तुना चेति। तथा च सकारमात्रे तात्पर्यमिति भावः॥

(प्रयोजननिराकरणभाष्यम्)

**नैतदस्ति प्रयोजनम्। परस्मैपदेष्वित्युच्यते। न चात्र परस्मैपदं पश्यामः॥**

(प्रदीपः) न चात्रेति। पृथग्विभक्तिनिर्देशादङ्गाङ्गिभावोत्र, न तु समुच्चय इति भावः॥

(उद्योतः) पृथगिति। अन्यथा 'सिपरस्मैपदयोः' इत्येव वदेत्। सिति वर्णमात्रम्। स च परस्मैपदसाहचर्यादङ्गाधिकाराच्च प्रत्यय एव ग्रहीष्यते॥

(प्रयोजनभाष्यम्)

**स्वरार्थस्तर्हि। 'चितोऽन्त उदात्तो भवतीति' अन्तोदात्तत्वं यथा स्यात्॥**

(प्रदीपः) स्वरार्थ इति। सिचोऽनच्कत्वेऽपि चित्स्सप्रकृतेरिति वचनाद् 'मा हि कार्ष्टामित्यादौ धातोरुदात्तार्थ इत्यर्थः।

(उद्योतः) धातोरुदात्तार्थ इति। लादेशनिमित्तनिघाते जाते पुनरुदात्तार्थ इत्यर्थः॥

(प्रयोजननिराकरणभाष्यम्)

**एतदपि नास्ति प्रयोजनम्। अनच्कोऽयम् तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन।**

(प्रदीपः) अनच्कोयमिति। मा हि कार्ष्टामित्यादावादिस्सिचोन्यतरस्यामिति पाक्षिकेणोदात्तत्वेन भाव्यमिति चित्स्वरस्यायमविषय इति भावः॥

१ एतावति। (र. ना.)

२ वार्तिकात्। (र. ना.)

३ इकारानुबन्धकः सिच्। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रयोजनसाधकभाष्यम् )

इति कृते[1] साच्को भविष्यति ॥

( प्रयोजनबाधकभाष्यम् )

तत्र प्रत्ययाद्युदात्तत्वेनेट उदात्तत्वं भविष्यति ॥

( उद्द्योतः ) भाष्ये तत्र प्रत्ययाद्युदात्तत्वेनेति । सिज्विधावुपस्थिताद्युदात्त इति शास्त्रस्यानच्कत्वात्तत्र वैयर्थ्येन तदुत्तरकालमिटि स्वरविधायकतेत्यर्थः ।

( प्रयोजनसाधकभाष्यम् )

न सिध्यति । "आगमा अनुदात्ता भवन्तीति" अनुदात्तत्वं प्राप्नोति ।

( उद्द्योतः ) अनच्कविषये बाधेन लाघवात्तदसंबन्ध एवेति धातोरित्याद्येकवाक्यतापन्नशेषनिघातो भविष्यतीत्युत्तरयति—आगमा इति । एवं च तद्बाधेनोदात्तत्वाय ञित्त्वं सार्थकमिति भावः ॥

( समाधानभाष्यम् )

अत उत्तरं पठति—

( १८३० प्रयोजनबाधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ सिचश्चित्करणानर्थक्यं स्थानिवत्त्वात् ॥ * ॥

( भाष्यम् ) सिचश्चित्करणमनर्थकम् । किं कारणम् ? । स्थानिवत्त्वात् । ञितोऽयमादेशः स्थानिवत्त्वाञ्चिद्भविष्यति ॥

( १८३१ प्रयोजनसाधकवार्तिकप्रथमखण्डम् ॥ २ ॥ )

॥ * ॥ अर्थवत्तु चित्करणसामर्थ्याद्धीट उदात्तत्वम् ॥ * ॥

( भाष्यम् ) नैष दोषः । अर्थवत्तु सिचश्चित्करणम् । कोऽर्थः ? । सिचः चित्करणसामर्थ्याद्धि इट उदात्तत्वं भविष्यति ॥ [ नाप्राप्ते[3] प्रत्ययस्वरे आगमानुदात्तत्वमारभ्यते तद्यथैव प्रत्ययस्वरं बाधते एवं स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेत ॥ ]

( १८३१ वार्तिकद्वितीयखण्डम् ॥ )

॥ * ॥ तस्माच्चित्करणम् ॥ * ॥

( भाष्यम् ) तस्माच्चकारः कर्तव्यः ॥

( प्रदीपः ) अर्थवत्त्विति । च्लेश्चित्करणस्य सामान्यग्रहणाविघातार्थत्वान्मा हि लावीदित्यादौ स्थानिवद्भावप्राप्तं स्वरमागमानुदात्तत्वं बाधेत । तस्मादन्तोदात्तार्थं सिचश्चित्त्वमित्यर्थः । नैष दोष इति । सिचश्चित्करणानर्थक्यमिति य उक्तस्स नास्तीत्यर्थः ॥ अत्र केचिदाहुः—प्रत्ययस्वरस्य द्वावपवादौ आगमानुदात्तत्वं यासुडित्यत्र ज्ञापितं[4] तद्देशम्, चित्स्वरश्च षाष्ठिकः तत्रापवादविप्रतिषेधाच्च चित्स्वर एव भविष्यति नार्थः सिचश्चित्त्वेनेति ॥ नैतदस्ति । नहि प्रत्ययस्वरस्यैतावपवादौ प्रकृत्यागमानामाम्नुगादीनां तदप्रसङ्गात् । कुण्डिनजादीनां च ञिताम् । स्थानिवदित्ययं च कार्यातिदेश इति, परत्वमपि चित्स्वरस्य नास्ति ॥ आगमानुदात्तत्वेन चाविशेषात् सर्वः स्वरो बाध्यः । तस्मात्तद्बाधनार्थं सिचश्चित्त्वं कर्तव्यमिति स्थितम् ॥

( उद्द्योतः ) स्थानिवद्भावप्राप्तमिति । स्थानिनि दृष्टस्यैवातिदेश इत्यत्र न मानम्, किं तु तत्र संभावितस्यापीति भावः । कार्यातिदेशेऽतिदेशेनैव कार्यविधानात्परत्वेन धातोरित्येकवाक्यतापन्नशेपनिघातवल्लभ्येनागमानुदात्तत्वेन बाध्येतेति तात्पर्यम् । न च च्लेश्चित्त्वसामर्थ्यादेव तद्बाधः । मन्त्रे इति सूत्र लेरिति सामान्यग्रहणार्थत्वात् । अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यान्न लिटः । ततश्चाम इति सूत्रेऽस्यासंबन्धः स्यात् । ततश्च परत्वान्तरङ्गत्वाभ्यां तिवादिषु सत्सु प्रत्ययलक्षणेन तिङन्तत्वाद्देवदत्तः कारयाञ्चकारेत्यत्रामन्तस्य निघातः । ततः[5] परस्य चानिघातः स्यादिति । आम इत्यत्र लेरित्यनुवर्तनीयमित्यभिमानः । यदि तु अन्तरङ्गानपीति न्यायेन तिवादिभ्यः पूर्वमेव लुक् तदा न च्लौ चस्य प्रयोजनमिति तत्सामर्थ्यादेवान्तोदात्तत्वं सिद्धम् । तस्मात्पूर्वाचार्यानुसारेण सिचि च्लौ वा चकारोच्चारणमिति सूत्राशयः ॥ अपवादविप्रतिषेधादिति । स्थानिवद्भावेन हि ञित्त्वमात्रमतिदिश्यते[6] स्वरस्तु स्वशास्त्रेणैवेति भावः ॥ न हि प्रत्ययस्वरस्यैताविति । एवं च ना प्राप्ते प्रत्ययस्वर इत्यारभ्य स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेतेत्यन्तग्रन्थो भाष्यपुस्तकेषु प्रायेण दृश्यमानोऽपि अग्रन्थ इति भावः ॥ आगमानुदात्तत्वेनेति । बाध्यसामान्यचिन्तयेति भावः । वस्तुतस्तु लवितव्यमित्यादौ प्रत्ययसंनियोगेनाद्युदात्तत्वे कृते पश्चादिड् जायमानोऽस्वरकः स्यादिति सामान्यतः स्वराप्राप्तिविषये तस्य चारितार्थ्याद्बाधकत्वोक्तिश्चिन्त्या । सुतरां सर्वस्वरस्य ॥ यदि शेषनिघातेन तत्रानुदात्तत्वसिद्धिरित्युच्यते तदा तद्वचनमेव व्यर्थं नास्ति चेत्याद्युदात्तश्चेति भाष्ये ध्वनितम् । ञित्त्वं तु धातुस्वरेण प्रत्ययस्वरेण वैकवाक्यतापन्नशेषनिघातेन प्रत्ययानुदात्तत्वबाधनार्थं कार्यमेव ॥

( सिच इकारोच्चारणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

अथेदित्करणं किमर्थम् ? ।

( १८३२ प्रयोजनवार्तिकम् ॥ ३ ॥ )

॥*॥ इदित्करणं नकारलोपाभावार्थम् ॥*॥

( भाष्यम् ) इदित्करणं क्रियते । नकारलोपो मा

१ 'कृते तेन साच्को' ॥
२ आगमाअनुदात्ता इत्येतद्बाधनेन । ( र. ना. )
३ केषुचित्पुस्तकेषु नोपलभ्यत इत्युद्द्योततः प्रतीयते ॥
४ तृतीयाध्यायचतुर्थपाददेशस्थम् ॥
५ आमन्तात् । ( र. ना. )
६ स्वं चित्वम् । ( र. ना. )

1 उद्द्योतत इति दाधिमथैः कोष्ठान्तर्गतीकृतस्य भाष्यस्य प्रदीपे सुगमत्वात् व्याख्यानविरहः उद्द्योतव्याख्यानमवलम्ब्यानुपलब्धिकल्पनमनुचितं तदुद्द्यो-तस्य प्रौढिवादत्वादिति वयम् । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भूदिति। अमंस्त अमंस्थाः "अनिदितां हल उपधायाः क्ङिति" इति।

( १८३३ प्रयोजननिराकरणवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा हन्तेः सिचः कित्करणं ज्ञापकं नकारलोपाभावस्य ॥ * ॥**

(भाष्यम्) न चैतत्प्रयोजनमस्ति। किं कारणम्?। यदयं "हनः सिच्" इति हन्तेः सिचः कित्त्वं शास्ति तज् ज्ञापयत्याचार्यः 'न सिजन्तस्य नकारलोपो भवति' इति ॥

(प्रयोजनसाधकभाष्यम्)

नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ किम्?। सिच्येव नकारलोपो यथा स्यात्, परस्मिन्निमित्ते माभूदिति।

( प्रदीपः ) परस्मिन्निति । सिचः परं यत्सार्वधातुकं तस्मिन्नित्यर्थः ॥

( उद्योतः ) ननु सिचि जायमानोऽपि परस्मिन्निमित्त एव जायतेऽत आह—सिचः परमिति ॥

( विशेषप्रश्नभाष्यम् )

कः पुनरत्र विशेषः। सिचि वा नलोपे सति परस्मिन्निमित्ते वा।

( विशेषप्रदर्शकोत्तरभाष्यम् )

अयमस्ति विशेषः—सिचि नलोपे सति नलोपस्यासिद्धत्वादकारलोपो न भवति। परस्मिन्पुनर्निमित्ते सति नकारलोपे कृते अकारलोपः प्रसज्येत ॥ समानाश्रयमसिद्धम्। व्याश्रयं तु सिद्धमेव। व्याश्रयं चेदम् ॥

( उद्योतः ) भाष्ये नलोपस्यासिद्धत्वादिति । असिद्धवदत्राभावादित्यनेनेत्यर्थः ॥

( विशेषाभावसाधकभाष्यम् )

ननु च परस्मिन्नपि निमित्ते नकारलोपे सति अकारलोपो न भवति। कथम्?। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति ॥

( प्रदीपः ) असिद्धमिति । वाह्यसार्वधातुकाश्रयस्य नलोपस्य बहिरङ्गत्वादसिद्धत्वमित्यर्थः । आर्धधातुकोपदेशे यदकारान्तं तस्य लोप इत्येवं वा हन्तेरतो लोपो नैव भविष्यति। तथा चोच्यते—अवयवलोपिनामतो लोपो नास्तीति ॥

( उद्योतः ) बहिरङ्गत्वादिति । ननु तशब्दनिमित्तलोपे तस्य बहिरङ्गतयासिद्धत्वादाहतेत्यादौ ह्रस्वादङ्गादिति न स्यात्। सिज्निमित्तत्वे तु असिद्धत्वाभावात्सेत्स्यतीति चेन्न। त्रैपादिकेन्तरङ्गे बहिरङ्गपरिभाषाऽप्रवृत्तेः ॥

( प्रागुक्तप्रयोजननिराकरणदार्ढ्यभाष्यम् )

तदेतद्धन्तेः सिचः कित्करणं ज्ञापकमेव 'न सिजन्तस्य नकारलोपो भवति' इति ॥

( १८३४ उपायान्तरवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ इदिद्वा स्थानिवत्त्वात् ॥ * ॥**

(भाष्यम्) अथाऽप्यनेनेदिताऽर्थः स्यात्। इदितोऽयमादेशः स्थानिवद्भावादिदिद्भविष्यति ॥

( उद्योतः ) भाष्ये—अथाप्येनेनेति । एकदेश्युक्तिः ॥

( १८३५ सिज्विधिवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ स्पृशमृशकृषतृपदृपां सिज्वा ॥ * ॥**

(भाष्यम्) स्पृशमृशकृषतृपदृपां सिज् वेति वक्तव्यम्। स्पृश—अस्पृक्षद् अस्प्राक्षीत्। मृश—अमृक्षद् अम्राक्षीत्। कृष—अकृक्षद् अक्राक्षीत्। तृप—अतृपद् अत्राप्सीत् दृप—अदृपद् अद्राप्सीत् ॥ किं प्रयोजनम्। सिच् यथा स्यात् ॥

( प्रदीपः ) स्पृशेति । त्रिभ्यः क्से प्राप्ते, द्वाभ्यां पुषादित्वादङि पक्षे सिज्विधीयते ॥

( अनुयोगभाष्यम् )

अथ क्सः सिद्धः ॥

( उत्तरभाष्यम् )

कथम्?। "शल इगुपधादनिटः क्सः" इत्येव ॥

( वार्तिकवैयर्थ्यभाष्यम् )

सिजपि सिद्धः ॥ कथम्? । च्लेः चित्करणं प्रत्याख्यायते। तत्र च्लावेव झलक्षणेऽमागमे कृते विहतनिमित्तत्वात् क्सो न भविष्यति ॥

( प्रदीपः ) च्लेश्चित्करणमिति । ततश्च प्रयोजनाभावाच्चकारेत्संज्ञा नास्तीति च्लौ झलादौ पक्षेऽमागमे कृते सिच् । अमभावपक्षे तु क्स इति त्रयाणां ग्रहणं न कार्यमित्यर्थः ॥

---

१ 'आ हन् स् त' इत्यवस्थायां सिज्निमित्तके नकारलोपे जाते आर्धधातुके सिचि परे 'अतो लोपः' प्राप्तः 'असिद्धवदत्राभात्' इति द्वयोरपि समाननिमित्तकत्वेन नकारलोपस्यासिद्धत्वाददन्तत्वव्याघातान्नैव भवति ॥ आत्मनेपदनिमित्तके नकारलोपे स्वीकृते तु नलोपस्यात्मनेपदनिमित्तकत्वेन अकारलोपस्य सिज्निमित्तकत्वेन द्वयोर्नकारलोपाकारलोपयोर्भिन्ननिमित्तत्वेन नकारलोपस्यासिद्धत्वाभावेनादन्तत्वव्याघाताभावेन 'अतो लोपः' स्यादेवेति विशेषप्रदर्शक भाष्यग्रन्थरहस्यम् ॥

२ 'एतेन अदन्तस्याङ्गस्यार्धधातुके परे लोपः' इत्येवमेव 'अतो लोपः' इत्यर्थो न तु आर्धधातुकोपदेशे' इति 'इति विशेषप्रदर्शकभाष्यकाराभिप्रेतः' इति सूचितम् ॥

३ त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तिस्तु बहुलक्ष्यसंस्काराय बहूनां वार्तिकानामारम्भे पाणिनेर्न्यूनता गौरवापत्त्या एकदेशिभाष्यकारस्य प्रौढिवादेनैव। बहिरङ्गपरिभाषाया अन्तरङ्गादर्शनेपि अन्तरङ्गविधिस्तु स्वकार्यसाधिकां परिभाषां नेच्छत्येवं स्वदेशम् अन्धां पत्नीं चक्षुष्मान् पतिरिवेति सार्वत्रिकभाष्यसिद्धान्तः ॥ आहतेत्यादौ तु नैव दोषः 'ह्रस्वादङ्गात्' इत्यत्रापि 'झलो झलि' इत्यतः 'झलि' इत्येतत्संबन्धस्यावश्यकत्वेन द्वयोरपि तशब्द झलनिमित्तकत्वेन बहिरङ्गान्तरङ्गत्वयोरभावात् ॥ नागेश एव शङ्काशयं प्रष्टव्य इति दाधिमथानां प्रार्थना ॥

४ 'दृपः' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(उद्द्योतः) एकदेश्येवाह—कथं च्लेरिति ॥ ततश्चेति । स्वरस्य सिचश्चित्त्वेनैव सिद्धिरिति भावः ॥ भाष्ये चित्करणं प्रत्याख्यायते इत्यस्य इत्संज्ञा प्रत्याख्यायते इत्येव तात्पर्यम् ॥

(दूषणभाष्यम्)

यद्येवम् अन्त्यस्य सिजादयः प्राप्नुवन्ति ॥

(प्रदीपः) अन्त्यस्येति । अन्त्यग्रहणमुपलक्षणं । चङादयो ह्यादेः परस्य प्राप्नुवन्ति ॥

(उद्द्योतः) चङादय इति । णिश्रिद्रुस्रुभ्य इत्यादि पञ्चमीनिर्देशेन विधानादित्यर्थः ॥ णिश्रिद्रुस्रुभ्य इति विहितविशेषणमिति भाष्याशय इत्यन्ये ॥

(१८३६ दूषणपरिहारवार्तिकम् ॥ ७ ॥)

॥ * ॥ सिद्धं तु सिचो यादित्वात् ॥ * ॥

(भाष्यम्) सिद्धमेतत् । कथम्? यादित्वात् ॥ यादिः सिच् करिष्यते । सः "अनेकाल् शित्सर्वस्य" इति सर्वादेशो भविष्यति ॥ किं पुनर्न श्रूयते यकारः?। लुप्तनिर्दिष्टो यकारः॥

(आक्षेपभाष्यम्)

चङ्ङोः कथम् ।

(१८३७ समाधानभाष्यम् ॥ ८ ॥)

॥*॥ चङ्ङोः प्रश्लिष्टनिर्देशात्सिद्धम् ॥*॥

(भाष्यम्) चङ्ङोरपि [सिद्धम् । कथम्? । प्रश्लिष्टनिर्देशात् ।] प्रश्लिष्टनिर्देशोऽयम्—च अङ् चङ् । अ अङ् अङ् । सः 'अनेकाल् शित्सर्वस्य' इति सर्वादेशो भविष्यति ॥

(उद्द्योतः) भाष्ये च अङिति ॥ च्चिण्न्यायेनात्रापि चस्येत्त्वाभावेऽनेकाल्त्वात्सिद्धमित्यत्र प्रश्लेषे फलं चिन्त्यम् ॥ उपायान्तरपरमेतदभ्युपेत्यापीत्संज्ञालोपयोः पूर्वंप्रवृत्तिं, प्रवृत्तमिति बोध्यम् ॥

(अनुयोगभाष्यम्)

च्चिणः कथम् ।

(१८३८ समाधानवार्तिकम् ॥ ९ ॥)

॥ * ॥ च्चिणोऽनित्त्वात् ॥ * ॥

(भाष्यम्) च्चिणः चकारस्य अनित्त्वात्सिद्धम् ॥ किमिदमनित्त्वादिति ?। अन्त्यस्यायं स्थाने भवन्नप्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न । असत्यामित्संज्ञायां लोपो न । असति लोपे अनेकाल् । यदाऽनेकाल् तदा सर्वादेशः । यदा सर्वादेशस्तदा प्रत्ययः । यदा प्रत्ययः तदेत्संज्ञा । यदेत्संज्ञा तदा लोपः ॥

(प्रदीपः) च्चिणोऽनित्त्वादिति । च्चिण् भावकर्मणोरित्यत्र धातुग्रहणं नापेक्ष्यत इति आदेः परस्येति न भविष्यति पदेर्दीपादिभ्यश्चादेः परस्येति प्राप्नोति । तस्माद्विहितविशेषणाश्रयेण परिहर्तव्यम् ॥

(उद्द्योतः) नन्वन्त्यस्यायं स्थाने भवन्निति भाष्यमनुपपन्नम् । आदेः परस्येत्यस्य प्राप्तेः । प्रत्ययादित्वेनेत्त्वसिद्धेरत आह—च्चिण्भावेति । विहितेति । पदादिभ्यो विहितस्य च्लेरित्यर्थे परशब्देन विधानाभावादादेः परस्येत्यस्याः प्रवृत्तिरिति भावः ॥ भाष्ये—अप्रत्ययः स्यादिति । प्रत्ययाधिकारे पाठेऽपि अन्वर्थसंज्ञालभ्यार्थाभावात् । न हि प्रत्ययावयवस्तदर्थवानिति भावः ॥

(वार्तिकसिद्धान्तभाष्यम्)

एष च तत्र वार्तिककारस्य निर्णयः सप्रयोजनं चित्करणमिति ॥

(प्रदीपः) सप्रयोजनमिति । सामान्यग्रहणाविघातार्थत्वस्योक्तत्वात् । सति च प्रयोजने चकारस्येत्संज्ञया भाव्यं लकारश्च झल् न भवतीत्यमोऽभावात् क्स एव प्रसज्येतेत्यर्थः ॥

(उद्द्योतः) ननु धात्वन्तः पातिनोऽपि श्नमोऽर्थवत्त्वमिवान्यावयवस्याप्यर्थवत्त्वमस्तु समुच्चित्य चावयवसमुदाययोर्द्योतकता तद्वदेव चार्थाधिकारात्प्रत्ययत्वेऽपि न बाधकमिति चेन्न । एकदेश्युक्तित्वेनादोषात् । तद्ध्वनयन्नाह—एष चेति । एतेन 'नानुबन्धकृतमनेकाल्त्वम्' इति सर्वादेशत्वं दुर्लभमित्यपास्तम् ॥ वार्तिककारस्येत्युक्त्या स्वोक्तरीत्या चकारस्य च्लेरेव वा प्रत्याख्यानमिति सूचितम् ॥

(चकारस्यानित्त्वे दूषणान्तरभाष्यम्)

अपि च त्रैशब्द्यं न प्रकल्प्यते । अस्पृक्षत् अस्प्राक्षीत् अस्पार्क्षीदिति । सिचि पुनः सति विभाषा सिच् सिच्यपि झल्लक्षणोऽमागमो विभाषा ॥

(उद्द्योतः) च्लावेव झलादिलक्षणेऽमि अस्पार्क्षीदित्यस्यासिद्धिरूपं दूषणान्तरमाह—अपि चेति ॥

(सिजविधेरावश्यकताभाष्यम्)

यस्य खल्वपि अमा अङो निमित्तं न विहन्यते स स्यादेव ॥ तस्मात् सुष्ठूच्यते स्पृशमृशकृषतृपदृपां सिज्वेति ॥ च्लेः सिच् ॥ ४४ ॥

(प्रदीपः) यस्य खल्वपीति । पुषादयङः । सहि कृतेऽप्यमागमे प्रवर्तते ॥ ४४ ॥

(उद्द्योतः) तृपदृपांशे फलं दर्शयति भाष्ये—यस्य खल्वपीति ॥ ४४ ॥

---

१ 'चङ्ङोरिति'

२ कोष्ठकान्तर्गतः पाठो नैव क्वापि दृश्यते ॥

३ पूर्वप्रवृत्तिमित्येतत् अभ्युपेत्येत्यनेनान्वेति । (र. ना.)

४ अस्य भाष्यस्यैकदेश्युक्तित्वेन । (र. ना.)

५ त्रीन् शब्दानेवाह—अस्पृक्षदित्यादिना । (र. ना.)

६ यस्येत्येतत् समानाधिकरणेनाङ्ग इत्यनेनान्वेति । (र. ना.)

७ यस्य खल्वपीत्यस्य व्याख्यानं पुषादयङ् इति । (र. ना.)

८ पुषाद्यङ् हि । (र. ना.)



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ४१५ च्लेः क्सादेशविधिसूत्रम् ॥ ३ । १ । ४ आ. ३ )

## ६६२ शल इगुपधादनिटः क्सः ॥ ३ । १ । ४५ ॥

( १८३९ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ क्सविधान इगुपधाभावः च्लेर्गुणनिमित्तत्वात् ॥ * ॥**

( भाष्यम् ) क्सविधाने इगुपधत्वस्याभावः । किं कारणम् ? । च्लेर्गुणनिमित्तत्वात् । च्लिर्गुणस्य निमित्तम् । तत्र च्लावेव गुणे कृते "इगुपधात्-" इति क्सो न प्राप्नोति ॥

( प्रदीपः ) शलइगु ॥ ४५ ॥ क्सविधान इति । विशेषणासंभवाल्लक्षणदोषमुद्भावयति । भूतपूर्वगत्याश्रये विहित-विशेषणाश्रये वा लक्ष्यासिद्धिः । कित्करणं तु क्सस्या-चीति विशेषणार्थं वत्सा इत्यादौ लोपनिवृत्तये स्यात् ॥

( उद्योतः ) शलइगु ॥४५॥ लक्षणदोषमिति । असंभ-वरूपमित्यर्थः । भूतपूर्वेति । विशेषणसामर्थ्याद्धि तैदाश्रयणम् ॥ लक्ष्यासिद्धिरिति । सर्वत्र गुणश्रवणापत्तिरित्यर्थः ॥ ननु क्सस्य कित्त्वसामर्थ्यात्पूर्वमपि गुणो न भविष्यतीत्यत आह—कित्करणं त्विति । वत्से वदेः स औणादिकः ॥

( १८४० समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा क्सस्याऽनवकाशत्वाद-पवादो गुणस्य ॥ * ॥**

( भाष्यम् ) न वा एष दोषः । किं कारणम् ? । क्सस्यानवकाशत्वात् । अनवकाशः क्सो गुणं बाधिष्यते ॥

( प्रदीपः ) न वा क्सस्येति । भूतपूर्वगत्याश्रये कित्त्व-मनर्थकं स्यादिति सानुबन्धकं रूपमनवकाशमित्यपवादत्वाद् गुणस्य बाधकमित्यर्थः ॥ न च क्सस्याचीति विशेषणार्थं कित्त्वम् । प्रत्ययत्वादर्थवत्त्वाच्चास्यैव क्सस्य तत्र ग्रहणस्य सिद्धत्वादुणादीनामव्युत्पन्नत्वाद्वत्सा इत्यादौ प्रसङ्गाभावात् ॥

( उद्योतः ) क्सस्य गुणापवादत्वे हेतुमाह—भूतेति । ननु मासावित्यादावपि लोपापत्तिरत आह—प्रत्ययत्वादिति ॥ वत्सा इत्यादौ दोषवारणायाह—उणादीनामिति । तृणंसावित्यादौ दोषस्तु लुग्वा दुहेत्यत्रेतः सपदानुवृत्तेरर्थाधिकारानुरोधेन दुहादिषु यस्य सम्भवस्तस्यैव पूर्वसूत्रेऽपि ग्रहणाद्वारणीयः । अत एव दृशेः क्से तादृक्षावित्यादौ न दोष इति कित्त्वसामर्थ्याद्गुणो नेति बोध्यम् ॥ दुधुक्षतीत्यादौ सनः सानुबन्धकत्वान्न दोषः ॥ एतल्लोपविषये तृणस-तादृक्षादेरनभिधानमिति कश्चित् ॥

( १८४१ आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अनिड्वचनमविशेषणं च्लेर्नित्या-दिष्टत्वात् ॥ * ॥**

( भाष्यम् ) अनिड्वचनमविशेषणम् । किं कार-णम् । च्लेर्नित्यादिष्टत्वात् । नित्यादिष्टः च्लिः न क्वचित् श्रूयते । तत्र च्लेरनिट इति क्सो न प्राप्नोति ।

( प्रदीपः ) अनिड्वचनमिति । अनिट इत्येतत् च्लेः विशेषणं यथा स्यादिति च्लिरुत्सर्गः कृत इत्युक्तम्, तत्रास्य सिचा नित्यं भाव्यमितीडभावोपलक्षितमस्य रूपं न क्वचिद्दि-यत इति च्लेरनिट इति विशेषणस्याप्रसिद्धिरित्यर्थः ॥

( उद्योतः ) सिचा नित्यमिति । आदेशान्तराभावे तस्या-वश्यं भावादित्यर्थः ॥

( १८४२ दूषणपरिहारवार्तिकप्रथमखण्डम् ॥ ४ ॥ )

**॥ * ॥ न वा क्सस्य सिजपवादत्वात् तस्य चानिडाश्रयत्वादनिटि प्रसिद्धे क्सविधिः ॥ * ॥**

( भाष्यम् ) न वैष दोषः । किं कारणम् ? । क्सस्य सिजपवादत्वात् । सिजपवादः क्सः । स चानिडा-श्रयः । न चापवादविषयमुत्सर्गोऽभिनिविशते । "पूर्वं ह्यपवादाः प्रवर्तन्ते पश्चादुत्सर्गाः" "प्रकल्प्य वाप-वादविषयमुत्सर्गोभिनिविशते" । तत्र तावदत्र कदाचित् सिज् भवति क्समपवादं प्रतीक्षते । क्सस्य सिजपवादत्वात् ॥ तस्य चानिडाश्रयत्वाद् अनिट् प्रसिद्धः । अनिटि प्रसिद्धे क्सविधिः * । अनिटि प्रसिद्धे क्सो भविष्यति ॥

सिजिदानीं क्व भविष्यति ? ।

( १८४२ वार्तिकद्वितीयखण्डम् ॥ ५ ॥ )

**॥ * ॥ शेषे सिज्विधानम् ॥ * ॥**

( भाष्यम् ) शेषे सिज्विधानं भविष्यति अकोषीद् अमोषीद् इति ॥ शल इगुपधा ॥ ४५ ॥

( प्रदीपः ) न वा क्सस्येति । अयं भावः—लिह् लि तू इति स्थिते सिचा न भाव्यं क्सस्यायं विषय इति । क्सेनापि न तावद्भाव्यं यावदस्यानिट्त्वं न ज्ञातम् । तत्र लकारस्यैवेटः प्राप्तौ तन्निषेधादनिट्त्वमस्तीति क्सः सिद्धः अलि-क्षदिति । यत्र त्विटः प्रतिषेधो नास्ति तत्र सिजेव भवत्यको-षीदिति ॥ ४५ ॥

( उद्योतः ) सिजेव भवतीति । निर्दिश्यमानपरिभाषया लेरेव सः । धातोरिति च विहितविशेषणमिति निर्दिश्यमानस्य न व्यवहितत्वमिति भावः ॥ ४५ ॥

———

१ तदिति भूतपूर्वगतीत्यर्थः । ( र. ना. )

२ 'तृणान्यस्मिन् देशे सन्तीति तृणसः इत्यत्र "वुञ् छण्" इत्यनेन तृणा-दिभ्यः सः' इति पदमञ्जरी ॥

३ नित्यं सदा—आदिष्टः—आदेशेनापहृत इत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ४१६ च्लेः क्सादेशनियमसूत्रम् ॥ ३ । १ । ४ आ. ४ )

## ६६३ श्लिष आलिङ्गने ॥ ३।१।४६ ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ? ।

( प्रदीपः ) श्लिष आ ॥ ४६ ॥ किमर्थमिति । किं पुषादिपाठादङि प्राप्ते तद्बाधनाय विध्यर्थमिदम्, अथ पूर्वेण क्से सिद्धे नियमार्थमिति प्रश्नः ॥

( आक्षेपपरिहारभाष्यम् )

नियमार्थम् । नियमार्थोऽयमारम्भः—श्लिष आलिङ्गन एव क्सो यथा स्यात् । इह मा भूत्—उपा[2]श्लिषद् जतु च काष्ठं च, [1]समाश्लिषद् ब्राह्मणकुलमिति ॥

( प्रदीपः ) इतरो वक्ष्यमाणयोगविभागं मनसि कृत्वाह—नियमार्थमिति । उपाश्लिषदिति । प्रत्यासत्तावत्र श्लिषिर्वर्तते, नालिङ्गने ॥

( उद्द्योतः ) श्लिष आ ॥ ४६ ॥ विधित्वसंभवे नियमार्थत्वं कथमित्यत आह—इतर इति । प्रत्यासत्तिः संबन्धमात्रम् । प्राणिकर्तृकतद्विशेषश्चालिङ्गनमिति बोध्यम् ॥

अत[3] उत्तरं पठति—

( १८४३ नियमानुपपत्तिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावात् ॥ * ॥

( भाष्यम् ) श्लिष आलिङ्गन इति नियमस्यानुपपत्तिः ॥ किं कारणम् ? । विधेयभावात् ॥

कैमर्थक्यान्नियमो भवति । विधेयं नास्तीति कृत्वा ॥

इह चास्ति विधेयम् । किम् ? । पुषादिपाठादङ् प्राप्तः तद्बाधनार्थः क्सो विधेयः ॥

तत्रापूर्वो विधिरस्तु नियमो वेति ।

अपूर्व एव विधिः स्यान्न नियमः ॥

(प्रदीपः) अङ् प्राप्त इति । श्लिषेर्नाप्राप्ते अङि क्सस्यारम्भाद् बाधकत्वमित्यर्थः ॥

( उद्द्योतः ) श्लिषेर्नाप्राप्ते इति । परस्मैपदविषये विधित्वं स्यादित्यर्थः ॥

( दूषणप्रश्नभाष्यम् )

किं च स्याद्, यदायं नियमो न स्यात् ? ।

( दूषणभाष्यम् )

आत्मनेपदेष्वालिङ्गनेऽनालिङ्गने च क्सः प्रसज्येत ॥

( उद्द्योतः ) भाष्ये आलिङ्गनेऽनालिङ्गने चेति । कर्मणि कर्मव्यतीहारे चार्[4]तां प्रभृतिष्वित्यर्थः । तत्रालिङ्गने इष्टमेव अन्यत्रापत्तिरेव दोषः ॥

( दूषणान्तरभाष्यम् )

यथैव क्सोऽङं बाधते, एवं चिणमपि बाधेत—उपाश्लेषि कन्या देवदत्तेनेति ॥

( प्रदीपः ) यथैवेति । विध्यर्थत्वे दोषान्तरोद्भावनम् ॥

( उद्द्योतः ) दोषान्तरमिति । बाध्यसामान्यचिन्तया पदद्वयविषयको विधिः स्यादिति भावः ॥

(१८४४ दूषणपरिहारिन्यासान्तरवार्तिकप्रथमखण्डम् ॥२॥)

### ॥ * ॥ सिद्धं तु श्लिष आलिङ्गनेऽचिण्विषये ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? । श्लिष आलिङ्गने अचिण्विषये क्सो भवतीति वक्तव्यम् ॥

( १८४५ न्यासान्तरवार्तिकद्वितीयखण्डम् ॥ ३ ॥ )

### ॥*॥ अङ्विधाने च श्लिषोऽनालिङ्गने ॥*॥

( भाष्यम् ) अङ्विधाने च श्लिषोऽनालिङ्गने इति वक्तव्यम् ॥

( प्रदीपः ) सिद्धं त्विति । पूर्वेण क्से सिद्धे नियमार्थमेतद्वचनं कर्तव्यम् ॥ अचिण्विषय इति । अनेन नियमार्थत्वं समर्थ्यते । अन्यथा चिण्बाधनाय तद्विषये विध्यर्थमेतत् स्याद् न तु नियमार्थम् ॥

अङ्विधान इति । ततश्चालिङ्गनेऽङ्प्रतिषेधात् 'श्लिष आलिङ्गनेऽचिण्विषये' इति नियमार्थं भवति । अन्यथा विध्यर्थमेतत् स्यात् ॥

( उद्द्योतः ) नियमार्थमिति । अचिण्विषये श्लिष आलिङ्गन एवेत्यर्थः । अचिण्विषयशब्देन भावकर्मार्थकतशब्दभिन्नमात्मनेपदमुच्यते ॥ अन्यथा विध्यर्थमिति । अचिण्विषय इत्यनेन तद्भिन्नतिङामेव ग्रहणं स्यादित्यर्थः । तत्तु चिण्विषये विधिव्यावृत्त्यर्थं स्यादिति भावः ॥

( आक्षेपभाष्यम् )

सिध्यति । सूत्रं तर्हि भिद्यते ।

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ॥

( दूषणस्मारणभाष्यम् )

ननु चोक्तम् * श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावात्* इति ।

---

१ 'समाश्लिषत्' ॥ २ 'उपांश्लिषत्' ॥

३ अयं पाठः केनचिद्विद्वद्वरेण प्राचीनतरपुस्तक एव वर्धितो भवेदिति दाधिमथानां विचारः ॥ इयं टिप्पणी—असङ्गता । ( र. ना. )

४ तिसृसिति सूत्रीयातामित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( सिद्धान्तिभाष्यम् )

नैष दोषः ।

( १८४५ सिद्धान्तिवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ योगविभागात्सिद्धम् ॥ * ॥

( भाष्यम् ) योगविभागः करिष्यते । "श्लिषः" । श्लिषः क्सो भवति ॥ किमर्थमिदम् ? । पुषादिपाठादङ् प्राप्नोति तद्बाधनार्थम् ॥

ततः "आलिङ्गने" । आलिङ्गने च श्लिषः क्सो भवति ॥ इदमिदानीं किमर्थं स्यात् ? । नियमार्थम् । 'श्लिष आलिङ्गने एव ॥' क मा भूत् ? । उपाश्लिषज्जतु च काष्ठं च, समाश्लिषद् ब्राह्मणकुलमिति ।

( प्रदीपः ) श्लिषः क्स इति । श्लिष इत्यत्रानिट इत्यनुवर्तनाद्दाहार्थस्य सेटो ग्रहणाभावः । साऽनुबन्धकत्वाद्वा । तत्र पुषादित्वादनुमितोऽङ् प्रत्यक्षशिष्टेन क्सेन बाध्यते ॥

( उद्द्योतः ) दाहार्थस्येति । अन्यथा तत्र चारितार्थ्यादङो बाधो न स्यादिति भावः ॥ सानुबन्धकत्वाद्वेति । श्लिषु दाह इति पाठात् ॥ अनुमित इति । न च क्सोऽचरितार्थः । तत्रादिपदस्यैतत्सामर्थ्योनेतरपुषादिमात्रपरत्वमित्यभिमानः ॥ पुषादि पाठोऽपि श्यन्नर्थः । न चान्यत्रैव पाठ्यः, अशोकवनिकान्यायात् ॥ वस्तुतः पुषादिपाठसामर्थ्यादादिपदेन तत्र ग्रहणसामर्थ्याच्चाङ्क्सयोः परस्मैपदे आलिङ्गनानालिङ्गनविषये सर्वत्र विकल्पे प्राप्ते आत्मनेपदे चालिङ्गनानालिङ्गनयोरविशेषेण क्से प्राप्ते द्वितीयेन नियमः— आलिङ्गन एवेति ॥ एवं चार्थान्तरे सावकाशोऽङ् आलिङ्गने क्सेन बाध्यते । तस्यैव बाधस्यानुवादो भाष्ये तद्बाधनार्थमिति । न चालिङ्गने क्स एवेति विपरीतनियमापत्तिः । लक्ष्यानुरोधात्प्रत्ययनियमस्यैवाङ्गीकारादित्यूह्यम् । योगविभागसामर्थ्याच्च नियमेन सर्वाङ्प्राप्तिबाधः[1] ॥ ४६ ॥

( दूषणान्तरपरिहारभाष्यम् )

यदप्युच्यते—यथैव च क्सोऽङं बाधते, एवं चिणमपि बाधेतेति । 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्' इत्येवं क्सोऽङं बाधिष्यते न चिणम् ॥ अथवा तत्र वक्ष्यति—चिणित्यनुवर्तमाने पुनश्चिण्ग्रहणस्य प्रयोजनम् चिणेव यथा स्याद् यदन्यत्प्राप्नोति तन्मा भूदिति ॥ श्लिष आलिङ्गने ॥ ४६ ॥

( प्रदीपः ) अथ वेति । समुदायापेक्षायां पुरस्तादपवादा इति परिभाषा नास्तीति परिहारान्तरोपन्यासः ॥४६॥



( ४१७ च्लेश्चङादेशविधिसूत्रम् ॥ ३।१।४ आ. ५ )

## ६६५ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ३ । १ । ४८ ॥

( १८४६ शेषपूर्तिवार्तिकम् ॥ १ ॥ )

## ॥*॥ णिश्रिद्रुस्रुषु कमेरुपसंख्यानम् ॥*॥

( भाष्यम् ) णिश्रिद्रुस्रुषु कमेरुपसंख्यानं कर्तव्यम् ॥

नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः[2] ॥

( प्रदीपः ) णिश्रिद्रु ॥ ४८ ॥ कमेरिति । आर्धधातुके विकल्पेन णिङो विधानादणिङ्पक्षे सिचि प्राप्ते वचनम् । तत्राचकमतेति भवति । णिङ्पक्षे तु सन्वद्भावादचीकमतेति ॥ सन्वल्लघुनि चङीति वक्तव्ये परग्रहणसामर्थ्यादन्यपदार्थो णिराश्रीयते अन्यस्यासंभवात् । तेन चङ्परे णौ यल्लघुधात्वक्षरं तत्र परतोऽभ्यासस्य सनीव कार्यं भवतीत्यर्थः ॥

नाकमिष्टसुखमिति । नाकं स्वर्गमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैर्यैः कमेर्लुङि किं रूपं भवतीति पृष्टैः 'अचकमत' इत्युक्तम् । यैस्तु 'अचीकमत' इत्युक्तं ते पत्काषिणो यान्ति लक्षणास्मरणान्निन्दार्थवादोयं लक्षणस्मरणादरार्थः ॥ अन्ये त्वाहुः—अकमिष्टेति यैरुक्तं त एवोपचारादकमिष्टशब्देनानुकरणशब्देनोच्यन्ते । अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वाद्विभक्तिर्नकृता । ते सुयुक्तैरपि वडवारथैर्गच्छन्तः सुखं न प्राप्नुवन्ति अपशब्दोच्चारणात् । ये त्वचीकमतभाषिणस्ते पत्काषिणोपि सुखं यान्तीति ॥

( उद्द्योतः ) णिश्रिद्रु ॥ ४८ ॥ ननु णिङभावपक्षेऽपि सन्वत्त्वं दुर्वारम्, तत्र णावित्यनुक्तेरत आह—सन्वल्लघुनीति ॥ अन्ये त्वाहुरिति । अत्रारुचिस्तु भाष्याननुगुणत्वम् । वार्तिकोक्तं पाठेन तत्स्तुत्यर्थत्वस्य स्वरसतः प्रतीतेः । पूर्वव्याख्यायां विशेषलक्षणस्मरणप्रयुक्ताऽधिकसुखप्राप्तिः । कमेर्लुङि कीदृशं रूपमिति प्रश्ने, स्वरसतः कम् प्रकृतिके लुङीत्यर्थके तस्य साधुत्वेऽप्यसमञ्जसोत्तरत्वान्न्यूनसुखप्राप्तिः ॥ एवं च सामान्यशास्त्रानुगतलक्ष्यप्रयोगापेक्षया विशेषलक्षणानुगतशब्दप्रयोगे धर्माधिक्यमित्यस्य भाष्यस्य तात्पर्यम् ॥

( १८४७ न्यूनतापूर्तिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ कर्मकर्तरि च ॥ * ॥

( भाष्यम् ) कर्मकर्तरि चोपसंख्यानं कर्तव्यम् । कारयति कटं देवदत्तः 'अचीकरत कटः स्वयमेव' । उच्छ्रयति कटं देवदत्तः 'उदशिश्रियत कटः स्वयमेवे'ति ॥

---

[1] 'सर्वक्सप्राप्ति' ॥

[2] अचीकमतभाषिण इति अचकमतेति प्रयोक्तव्ये अचीकमतेति प्रयुञ्जाना इत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रदीपः) कर्मकर्तरि चेति। कर्तर्युच्यमानश्चङ् कर्मकर्तरि न प्राप्नोतीति[1] वचनम्॥

(उद्द्योतः) कर्मकर्तरीति। कर्मवद्भावबाधिना बाधः स्यादित्यभिमानः॥

(१८४८ न्यूनताखण्डनवार्तिकम्॥ ३॥)

॥ * ॥ न वा कर्मण्यविधानात्कर्तृत्वाच्च कर्मकर्तुः सिद्धम्॥ * ॥

(भाष्यम्) न वा कर्तव्यम्। किं कारणम्?। कर्मण्यविधानात्। नहि कश्चित्कर्मणि विधीयते यश्चङं बाधेत॥ कर्तृत्वाच्च कर्मकर्तुः सिद्धम्॥ अस्ति च कर्मकर्तरि कर्तृत्वमिति कृत्वा चङ् भविष्यति॥

(उद्द्योतः) भाष्ये कर्मणि विधीयते य इति। कर्मवद्भाव प्राप्त इति भावः॥

(खण्डनयुक्तिबाधकभाष्यम्)

ननु चायं कर्मणि विधीयते "चिण् भावकर्मणोः" इति॥

(खण्डनयुक्तिसाधकभाष्यम्)

प्रतिषिध्येते तत्र यक्चिणौ—यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम् इति॥

(प्रतिषेधायोग्यस्थलदर्शकभाष्यम्)

यस्तर्हि न हेतुमण्णिच् 'उदपुपुच्छत गौः स्वयमेवेति॥

(प्रदीपः) उदपुपुच्छतेति। पुच्छमुदस्यति उत्पुच्छयते गौः, तत्र यदान्तर्भावितण्यर्थत्वादस्य गवा सकर्मकत्वं भवति तदा 'उत्पुच्छयते गाम्' इति भवति। पुनर्गौरेव यदा सौकर्यातिशयेन कर्तृत्वं विवक्ष्यते भूतकालश्च तदैतदुदाहरणम्॥ ४८॥

(उद्द्योतः) उत्पुच्छयते गामिति। कर्तुरीप्सिततममिति कर्मत्वं बोध्यम्॥ ४८॥

(समाधानभाष्यम्)

अत्रापि यथा भारद्वाजीयाः पठन्ति, तथा भवितव्यं प्रतिषेधेन—"*यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानं कर्तव्यम्*" इति॥ णिश्रिद्रुस्रुभ्यः॥ ४८॥

(४१८ च्लेरङादेशविधिसूत्रम्॥ ३।१।४ आ. ६)

## ६६९ अस्यतिवक्तिख्यातिभ्योऽङ्॥ ३।१।५२॥

(आक्षेपभाष्यम्)

अस्यतिग्रहणं किमर्थम्?।

(१८४९ सिद्धान्तिसमाधानवार्तिकम्॥ १॥)

॥ * ॥ अस्यतिग्रहणमात्मनेपदार्थं पुषादित्वात्॥ * ॥

(भाष्यम्) अस्यतिग्रहणमात्मनेपदार्थं द्रष्टव्यम्॥ किमुच्यते आत्मनेपदार्थमिति, न पुनः परस्मैपदार्थमपि स्यात्?।

पुषादित्वात्*। पुषादिपाठात् परस्मैपदेष्वङ् भविष्यति॥

(प्रदीपः) अस्यति॥ ५२॥ पुषादय आगणान्ताद्। अन्तराले वृत्करणं रधादिसमाप्त्यर्थम्, न तु पुषादिपरिसमाप्त्यर्थमिति प्रतिपादनाय सुहृद्भूत आचार्य आह—अस्यतिग्रहणमिति॥

(उद्द्योतः) अस्यति॥५२॥ ननु परस्मैपदेऽप्यङ्दर्शनादात्मने पदार्थमित्ययुक्तम्, अत आह—पुषादय आगणान्तादिति॥

(१८५० न्यूनतापूर्तिवार्तिकम्॥ २॥)

॥ * ॥ कर्मकर्तरि च॥ * ॥

(भाष्यम्) कर्मकर्तरि चोपसंख्यानं कर्तव्यम्। पर्यास्थेतां कुण्डले स्वयमेव॥

(न्यूनतापरिहारभाष्यम्)

अत्रापि।

(१८५१ न्यूनतापरिहारवार्तिकम्॥ ३)

॥ * ॥ न वा कर्मण्यविधानात् कर्तृत्वाच्च कर्मकर्तुः सिद्धम्॥ * ॥

(भाष्यम्) इत्येव॥ अस्यतिवक्ति॥ ५२॥

(प्रदीपः) अत्रापीति। आतिदेशिकस्य कर्मकार्यस्य कस्यचिदत्राविधानात् स्वाश्रयं कार्यं प्रतिबन्धकाभावात् प्रवर्तत एवेति भावः॥ ५२॥

(उद्द्योतः) आतिदेशिकस्येति। यकश्शपा बाधात्। द्विवचने चिणोऽप्राप्तेः॥ आत्मनेपदमपि उपसर्गादस्यत्यूह्योरिति वार्तिकेन सिद्धमित्यर्थः॥ ५२॥

(४१९ च्लेरङादेशविधिसूत्रम्॥ ३।१।४ आ. ७)

## ६७५ जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च॥ ३।१।५८॥

(सूत्रपाठविचारभाष्यम्)

इदं ग्लुचिग्रहणं ग्लुञ्चिग्रहणं च क्रियते। अन्यतरच्छक्यमकर्तुम्। यदि तावद् ग्लुचिग्रहणं क्रियते। ग्लुञ्चिग्रहणं न करिष्यते। तेनैव सिद्धं न्यग्लुचद् न्यग्लोचीत्। इदमिदानीं ग्लुञ्चेरूपं न्यग्लुञ्चीत्॥

[1] एतेन न 'केवलं पाणिनीयलक्षणमेव मान्यम्' इति नियमः। किं तु व्याकरणान्तरलक्षणमपि 'मान्यमेव' इति सूच्यते॥

[2] अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्य लोकसिद्धस्यासंभावादिति भावः॥ (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अथ ग्लुञ्चिग्रहणं क्रियते ग्लुचिग्रहणं न करिष्यते तेनैव सिद्धं न्यग्लुचद् न्यग्लुञ्चीत् । इदमिदानीं ग्लुचेरूपं न्यग्लोचीदिति ॥ जृस्तम्भु० ॥ ५८ ॥

( प्रदीपः ) जृस्तम्भु, ॥ ५८ ॥ अन्यतरदिति । अनेकार्थत्वाद्धातूनामत्र विषयेऽर्थभेदो न प्रयोजक उभयोपादानस्येति भावः ॥ यत्तूभयोपादानसामर्थ्याद् ग्लुञ्चेरङि नलोपो न भवति न्यग्लुञ्चदिति कैश्चिदभ्यधायि । तद्भाष्यविरोधादनादरणीयम् ॥ ५८ ॥

( उद्द्योतः ) जृस्तुम्भु ॥ ५८ ॥ ग्लुचेः स्तेयकरणार्थत्वात्कथं सिद्धिरत आह—अनेकार्थत्वादिति ॥ ५८ ॥

( ४२० च्लेश्चिणादेशविधिसूत्रम् ॥ ३ । १ । ४ आ. ८ )

## ६७७ चिण्ते पदः ॥ ३ । १ । ६० ॥

( तप्रत्ययनिर्णयाधिकरणम् )

( अनुयोगभाष्यम् )

अयं तशब्दोऽस्त्येवात्मनेपदम्[1], अस्ति परस्मैपदम्, अस्त्येवैकवचनम्, अस्ति बहुवचनम् । कस्येदं ग्रहणम् ? ।

( उत्तरभाष्यम् )

यः पदेरस्ति ॥ कश्च पदेरस्ति ? । पदिरयमात्मनेपदी[2] ॥ चिण् ते ॥ ६० ॥

( ४२१ च्लेश्चिणादेशविधिसूत्रम् ॥ ३ । १ । ४ आ. ९ )

## ६८३ चिण् भावकर्मणोः ॥ ३।१।६६ ॥

( चिण्ग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

चिणिति वर्तमाने पुनश्चिण्ग्रहणं किमर्थम् ? ।

( समाधानभाष्यम् )

नेत्येवं तदभूद् विध्यर्थमिदम् ॥

( प्रदीपः ) चिण्भाव ॥ ६६ ॥ नेत्येवमिति । प्रतिषेधसंबद्धं तदभूदित्यर्थः ॥

( भाष्यम् ) अथ वा वेत्येवं तदभूद् नित्यार्थमिदम् ॥

( प्रदीपः ) नन्वत्र प्राप्त्यभावान्नेति नापेक्षिष्यत इत्याह—अथ वेति ॥

( भाष्यम् ) अथ वा चिणिति वर्तमाने पुनश्चिण्ग्रहणस्यैतत्प्रयोजनम् चिणेव यथा स्याद् यदन्यत्प्राप्नोति तन्माभूत् ॥ चिण् भाव० ॥ ६६ ॥

(प्रदीपः) विकल्पोपि पूर्वमेव निषेधेन निवर्तितत्वाचापेक्षिष्यत इत्याह—अथ वेति । तेनोपाश्लेषीति क्सो न भवति ॥ ६६ ॥

( ४२२ यग्विकरणविधिसूत्रम् ॥ ३ । १ । ४ आ. १० )

## ६८४ सार्वधातुके यक् ॥ ३ । १ । ६७ ॥

( भावकर्मणोर्वचनव्यवस्थाधिकरणम् )

( आक्षेपभाष्यम् )

इह पश्यामः 'कर्मणि द्विवचनबहुवचनान्युदाह्रियन्ते पच्येते ओदनौ' पच्यन्ते ओदना इति । भावे पुनः एकवचनमेव—आस्यते भवता, आस्यते भवद्भ्याम्, आस्यते भवद्भिरिति ।' केनैतदेवं भवति ? ।

( प्रदीपः ) सार्वधा ॥ ६७ ॥ इह पश्याम इति । वक्ष्यमाणस्य वाक्यार्थस्य दृशिक्रियायां कर्मत्वं यथा पश्य मृगो धावतीति मृगकर्तृकायाः सरणक्रियायाः ॥ केनैतदिति । इह क्रियाप्रधानमाख्यातम् । सा च क्रिया साध्यरूपत्वान्निवृत्तभेदा । तदुक्तम्—

'निवृत्तभेदा सर्वैव क्रियाऽऽख्यातेऽभिधीयते ।
श्रुतेरशक्याभेदानां प्रविभागप्रकल्पनेति ॥

तत्र यथा साधनभेदात्कर्तृकर्माभिधायिनि लकारे द्विवचनबहुवचने भवतस्तथा भावाभिधायिन्यपि प्रसजतः ॥ अथैकपदवाच्यसाधनसंख्याश्रये द्विवचनबहुवचने भवत इति पक्षस्तदा पाकौ पाका इत्यत्र न प्राप्नुतः साधनस्य घञा अनभिधानादिति प्रश्नः ॥

( उद्द्योतः ) सार्वधातुके ॥ ६७ ॥ दृशेः कर्मणि नियताकाङ्क्षत्वात्तद्दर्शयति—वक्ष्यमाणस्येति । वाक्यार्थः क्रिया ॥ सा चेह केनैतदेवं भवतीत्येतद्रूपा ॥ सरणं धावनम् । अध्याहृतधावनादिपदोपस्थाप्यस्य कर्मत्वमित्यन्यत्रोक्तम् ॥ ननु भावस्य क्रियारूपस्य संख्ययाऽयोगान्न द्विवचनादिकं भविष्यति । कर्मणि तु

---

१ आत्मनेपदमित्यादि आत्मनेपदे प्रथमादेशरूपम् एकवचनम् परस्मैपदे थादेशरूपम् बहुवचनश्चेति बोध्यम् । ( र. ना. )

२ आत्मनेपदीति तेनात्मनेपदप्रथमादेशरूपं बोध्यम् । ( र. ना. )

३ "न रुधः" इति सूत्रे इति भावः ॥

४ 'दीपजन—' इति सूत्रोक्त इति भावः ॥

५ श्लिप इति सूत्रप्राप्त इत्यर्थः । ( र. ना. )

६ पच्येते—ओदनावित्यादौ द्वित्वादिविशिष्टौदनादिकर्मकपाकस्य । ( र. ना. )

७ निवृत्तभेदा । अविज्ञायमानलिङ्गादिविशेषेत्यर्थः । ( र. ना. )

८ आख्याते तिङन्ते धातुनाभिधीयते, इत्यर्थः । ( र. ना. )

९ अर्थाध्याहारवादेनेदम् । ( र. ना. )

१० 'पश्य मृगो धावति' इत्यत्र धावतीति पदस्योपात्तत्वेनाध्याहारस्य वैयर्थ्याद् 'अध्याहृतधावनादिपदोपस्थाप्यस्य' इति लेखस्यासंगतिरिति 'समभिव्याहृतधावतीति पदोपस्थाप्यस्य' इति पाठो भवेत् ॥ इति दाधिमथाः ॥ यद्वात्राध्याहृतपदम् 'अध्याहृतसमभिव्याहृतोभयपरं सत् 'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः' इत्यत्राध्याहृतक्रियाया अपि यदि कर्मत्वं तदा समभिव्याहृतस्थले का कथा इति सूचनायैव । अन्यत्र कैयटेन पश्यमृगो धावतीत्यादौ शब्दाध्याहार एव उक्त इत्याह—अध्याहृतेत्यादि—अध्याहृतं यत् धावनादिपदं तदुपस्थाप्यस्येत्यर्थः । अयं भावः । धावतीति पदात् प्रथममसत्त्वभूतं धावनं प्रतीयते ततो मनसा द्वितीयान्तधावनपदस्य सरणपदस्य वा ज्ञाने सरणादिपदेन सत्त्वभूतस्य सरणस्यामादिपदेन कर्मत्वस्योपस्थितिः । पश्य मृगो धावतीत्यादिकायाः काकथेत्यन्ताया दाधिमथटिप्पण्या युक्तायुक्तत्वे सुधीभिरूह्ये । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शक्तिशक्तिमतोरभेदोपचाराच्छक्तिमतश्च संख्यायोगाद् द्विवचनादिकं सेत्स्यतीत्यत आह—इहेति ॥

श्रुतेरिति । साधनादिभेदाद्भिन्नत्वेऽपि श्रुतेराख्यातशब्दात् प्रविभागकल्पना भेदावगमरूपाऽशक्येत्यर्थः ॥

कथं तर्हि द्विवचनादिकम् । तत्राह—तत्रेति । साधनभेदादिति । साधनभेदकृतभेदारोपादित्यर्थः ॥ अथैकेति । शब्दशक्तिस्वभावादिति भावः ॥ तदा पाकाविति । क्रियारूपस्य स्वतः सङ्ख्यासंबन्धाभावादिति तात्पर्यम् ॥

( समाधानभाष्यम् )

**कर्माऽनेकम्, तस्याऽनेकत्वाद् द्विवचनबहुवचनानि भवन्ति । भावः पुनरेक एव ॥**

( प्रदीपः ) **कर्मानेकमिति** । कर्मशक्त्याधारो द्रव्यमनेकम् । शक्तिशक्तिमतोश्च शब्देन भेदो न प्रतिपाद्यत इति शक्त्यभिधायिनाप्याख्यातेनौदनः पच्यत इति शक्तिमद्द्रव्यवाचिन ओदनशब्दस्य सामानाधिकरण्यं भवति ॥ **भावः पुनरिति** । भेदाभावलक्षणमभेदैकत्वं भावस्य । नत्वेकसंख्याऽऽख्यातवाच्यस्य भावस्यास्ति । तस्याद्रव्यधर्मत्वादसत्त्वभूतत्वाच्चाख्यातवाच्यस्य भावस्य ॥

( उद्योतः ) ननु कर्मपदस्य शक्त्यभिधायित्वाच्छक्तेश्च विभक्तिवाच्याया असत्त्वभूतत्वात्सङ्ख्यायोगाभावेनानेकमित्यनुपपन्नमत आह—कर्मशक्तीति ॥ शब्देनेति । नं हि घटस्य शुक्ल इति वद् घटस्य कर्मेति प्रयोगोऽस्ति[2] इति भावः । तदेवाह—सामानाधिकरण्यमिति ॥ कर्मादिपदैः शक्तिमदभेदमापन्नैव शक्तिरुच्यते । अत एव कर्मत्वमिति भावप्रत्ययेन शक्तिरुच्यते, प्रवृत्तिनिमित्तेन व्यक्तेस्तादात्म्यसंबन्धस्याङ्गीकारादिति तत्त्वम् । एवं च कर्मणि विधीयमानाख्यातेनापि तथैव शक्तिरुच्यते इति सामानाधिकरण्योपपत्तिरिति भावः ॥ ननु भावस्यैकत्वयोगे द्वित्वादियोगोऽपि स्यादत आह—भेदाभावेति । परे त्वस्यैवैकत्वसंख्या क्रियायामसत्त्वं त्वनारोपितद्व्यादिसंबन्धाभावमात्रेण । तदेवैकएवेत्येवकारेण भाष्ये ध्वनितमित्याहुः ॥

( आक्षेपभाष्यम् )

**कथं तर्हि इह द्विवचनबहुवचनानि भवन्ति पाकौ पाका इति ? ।**

( समाधानभाष्यम् )

**आश्रयभेदात् । यदसौ द्रव्यं श्रितो भवति भावस्तस्य भेदाद् द्विवचनबहुवचनानि भवन्ति ॥**

( प्रदीपः ) **आश्रयभेदादिति** । गुडतिलोदनादीनामाश्रयाणां भेदादाश्रितोऽपि पाको भिद्यते । घञादिभिश्च सत्त्वरूपोऽर्थोऽभिधीयत इति द्रव्यधर्मसंख्याभेदाश्रयो वचनभेदो न विरुध्यत इति भावः ॥

( उद्योतः ) आधारद्रव्याणां भेदेऽपि कुतः पाकादेर्भेदोऽत आह—गुडतिलेति ॥ आश्रितः पाकोऽपीत्यन्वयः ॥ आश्रयभेदात्तत्रापि भेदाध्यवसाय इति भावः ॥ नन्वेवं तिङ्यपि द्विवचनादि स्यात्, न स्याद्वा कृत्यपीत्यत आह—घञादिभिरिति । तिङ्वाच्यस्तु न सत्त्वभूत इति भावः ॥

( दूषणभाष्यम् )

**इहापि तर्हि यावन्तस्ते तां क्रियां कुर्वन्ति, सर्वे ते तस्या आश्रयभूता भवन्ति, तद्भेदाद् द्विवचनबहुवचनानि प्राप्नुवन्ति ॥**

( प्रदीपः ) **इहापीति** । आख्यातवाच्यस्यापि भावस्याश्रयभेदाद्भेदोऽस्तु । ततश्च वचनभेदप्रसङ्ग इत्यर्थः ॥

( उद्योतः ) उक्तार्थाज्ञानवतश्चोद्यमित्याह—आख्यातेति ॥ वस्तुतः पूर्वभाष्येण कृत्यपि तदनुपस्थाप्यसाधनगताया अपि सङ्ख्याया आरोपेण द्विवचनादीत्युक्तम् । तत्र शङ्का समञ्जसैव ॥

( दूषणोद्धारभाष्यम् )

**एवं तर्हि इदं तावदयं प्रष्टव्यः-'किमभिसमीक्ष्यैतत् प्रयुज्यते-पाकौ पाका इति ।**

**यदि तावत्पाकविशेषानभिसमीक्ष्य 'यश्चौदनस्य पाकः, यश्च गुडस्य, यश्च तिलानां' बहवस्ते शब्दाः सरूपाश्च । तत्र युक्तं बहुवचनमेकशेषश्च ॥ तिङभिहिते चापि तथा । भावे बहुवचनं श्रूयते । तद्यथा—उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्त इति ॥**

**अथ कालविशेषानभिसमीक्ष्य 'यश्चाद्यतनः पाकः, यश्च ह्यस्तनः, यश्च श्वस्तन'स्तेऽपि बहवः शब्दाः सरूपाश्च । तत्र युक्तं बहुवचनमेकशेषश्च ॥ तिङभिहिते चापि तथा भावेऽसारूप्यादेकशेषो न भवति—आसि आस्यते आसिष्यते इति ॥**

( प्रदीपः ) **पाकविशेषानिति** । केचित्पाकशब्दं कर्मसाधनं व्याचक्षते । पक्तव्यविशेषान् गुडादीनित्यर्थः ॥ तत्त्वयुक्तम् । असंज्ञायां कर्मणि घञो दुर्लभत्वात् । तस्मादाश्रयप्रकारादिभेदभिन्नान् पाकविशेषानित्यत्रायमर्थः ॥ अथवा संज्ञाग्रहणस्य प्रत्याख्यातत्वादसंज्ञायामपि कर्मणि घञ् भवति ॥ **उष्ट्रासिका आस्यन्ते इति** । अत्राश्रयाणामुष्ट्राणां भेदादनेकप्रकारयुक्तान्यासनानि भिन्नानि तत्सामानाधिकरण्याच्चाख्यातवाच्यभावभेदादास्यन्त इति बहुवचनमित्यर्थः । इवशब्दप्रयोगमन्तरेणापि चेवार्थगतिर्भवति । तदयमर्थः—यादृशान्युष्ट्राणामनेकप्रकाराण्यासनानि तादृशानि देवदत्तादिभिः क्रियन्त इति ॥ भवद्भिरास्यत इत्यत्राश्रयभेदादाश्रितभेदस्य प्रतिपन्नत्वात् प्रयोजनाभावाद्भावो भेदं नोपादत्त इत्येकवचनमेव भवति ।

---

१ एकत्वसंख्यायाः । ( र. ना. )

२ किन्तु घटः कर्मेति शेषः । ( र. ना. )

३ द्रव्यस्य । ( र. ना. )

४ "संज्ञाग्रहणमनर्थकं च सर्वत्र, सर्वत्र घञो दर्शनात् ॥*॥ इति वार्तिकात्, 'असंज्ञायामपि घञादयो दृश्यन्ते—'को भवता लाभो लब्धः, को भवता दायो दत्तः' इति" इति भाष्यात् ॥

५ 'तत्साम्याच्च' इत्युद्योतव्याख्यातपाठः ॥

६ 'भेदस्याप्रतिपन्नत्वा' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

यथा 'ताम्रः पलाशेषु बभूव राग' इति। न च सर्वत्राश्रयभेदादाश्रितभेदस्य प्रतीतिः घटान् पचतीत्यादौ पाकस्याभिन्नस्यैवावगमात्॥ केचित्तूष्ट्रासिका आस्यन्त इति कर्मणि लकारमिच्छन्ति,—उष्ट्रासिकालक्षणस्य भावस्य कर्मत्वात्। यथा 'गोदोहः सुप्यते' इति॥ एवं तु विवक्षान्तरे भवत्येवेति भाष्यकारेण भावेऽपि लविधाने बहुवचनमुपपादितम्॥

तेऽपि बहव इति। भिन्नकालत्वादेवेति भावः॥ तत्र युक्तमिति। शास्त्रेणैकशेषे सत्येकस्यानेकार्थाभिधायित्वाद् अन्तरेण वैकशेषारम्भं सरूपाणामेकस्यैव स्वभावतो[1]ऽनेकार्थत्वादिति भावः॥ तिङभिहित इति। नह्येकं तिङन्तमनेककालभावप्रत्यायने समर्थं किंचिदस्तीति भिन्नकालासनक्रियाप्रत्यासनाय भिन्ना एव शब्दाः प्रयुज्यन्त इति भावः॥

(उद्द्योतः) घञोदुर्लभत्वादिति। यो गुडस्येत्यादिवक्ष्यमाणभाष्यविरोधादित्यपि बोध्यम्। एतेनाथवेत्यपि न समञ्जसम्॥ एवं चाश्रयप्रकाराऽदिकृतभेदानां पाकशब्दादवगतिसंभवेन युक्तं बहुवचनम्। न तु तिङन्ते तत्कृतभेदानवगमके इति भावः॥ यत्र त्वस्ति तत्कृतभेदावगमस्तत्र भवत्येव बहुवचनमित्याह—भाष्ये तिङभिहिते चापीति॥ ननूष्ट्रासिका इत्यादावाख्यातवाच्ये भावे कथं भेदावगमोऽत आह—अत्राश्रयाणामिति॥ तत्साम्याच्चेति। न ह्येकासने तावत्साम्यसंभवस्तत्प्रतिपादने फलं चेत्यर्थः। तत्सामानाधिकरण्याच्चेति पाठेऽपि अयमेवार्थः। उपमानोपमेययोः सामानाधिकरण्यादित्यर्थः॥ ननु साम्यवाचके वाचभावात्कथं तत्प्रतीतिरत आह—इवेति॥ 'परत्र परशब्दः प्रयुक्तः' इति न्यायादिति भावः॥ प्रयोजनाभावादिति। प्रकृते तु साम्यप्रतीत्युपपादनमेव प्रयोजनमिति भावः॥ यथेति। पलाशरूपाश्रयानेकत्वेऽपि राग इत्येकवचनमेवेति भावः॥ वस्तुतस्तत्रै[2]कजातीयरागप्रतिपादनायैकवचनमिति बोध्यम्। किं चाश्रयभेदादाश्रितभेदप्रतीतेरसार्वत्रिकत्वादपि न सा भावाख्याते द्विवचनादिनियामिकेत्याह—न चेति॥ एवं चासिका इत्यादि क्रियाविशेषणं प्रथमान्तम्। क्विन्नधिकारस्थण्वुलः स्त्रीत्वस्य सत्त्वेन सामान्ये नपुंसकमित्यस्याप्रवृत्त्या न क्लीबत्वम्। उपमानोष्ट्रासनाभिन्नान्यासनानीति बोधः। बहुत्वावधारणाच्च नैकवचनमिति बोध्यम्॥ कर्मणीति। अत्र पक्षे आख्यातावयवासादेः परिच्छेदकत्वनिरूपके आसनादौ वृत्तिः। परिच्छेदकत्वरूपफलाश्रयत्वात्कर्मत्वम्। दृष्टान्ते व्यास्याश्रयत्वादिपरिच्छेदकत्वं च सादृश्येन॥ नायं भाष्यार्थ इत्याह—एवं त्विति। विवक्षान्तरे॥ आसेः परिच्छेदकत्वार्थरूपविवक्षाविशेषे॥ भावेऽपि लविधाने यदुपपादितं बहुवचनं भाष्यकारेण, 'तन्नोपपादितं स्यादिति शेषः॥ एवं च 'यथा पाकप्रकारानभिसमीक्ष्य पाकावित्यादिद्विवचनादि। एवमासनप्रकारानभिसमीक्ष्यास्यन्त इत्यादि भावे बहुवचनमिति भाष्यार्थः॥ आख्यातवाच्येऽसत्त्वं लिङ्गकारका नन्वयित्वमेव बोध्यम्॥ भिन्नकालत्वादिति। भिन्नकालार्थवाचकत्वादित्यर्थः॥ नन्वेकशेषमात्रेणाविद्यमानानेकार्थाभिधानशक्तिः कथमत आह—अन्तरेण चेति॥ तिङभिहिते चापीत्यादि भाष्ये। तिङन्तार्थे भावे तथात्वेऽपि कालभेदेन भेदेऽपि असारूप्यादेकशेषभावेन न बहुवचनादीत्यर्थः॥ तदेवोपपादयति—न ह्येकमिति॥

**अस्ति खल्वपि विशेषः तिङभिहितस्य भावस्य कृदभिहितस्य च। कृदभिहितो भावो द्रव्यवद्भवति॥ किमिदं द्रव्यवदिति?। द्रव्यं क्रियया समवायं गच्छति॥ कं समवायं गच्छति?। द्रव्यं क्रियाभिनिर्वृत्तौ साधनत्वमुपैति॥ त[3]द्वच्चास्य भावस्य कृदभिहितस्य भवति 'पाको वर्तते' इति॥ क्रियावन्न भवति॥ किमिदं क्रियावदिति?। क्रिया क्रियया समवायं न गच्छति—'पचति पठती'ति॥ तद्वच्चास्य कृदभिहितस्य न भवति[4]—'पाको वर्तत इति॥**

(प्रदीपः) द्रव्यवदिति। द्रव्यत्वेन प्रसिद्धो यो घटादिस्तद्वदयं भावो भवति। लिङ्गसंख्यासाधनसंबन्धप्रतिपत्त्या। तत्र वस्तू[5]पलक्षणं यत्रेति द्रव्यलक्षणयोगेऽपि प्रसिद्धाप्रसिद्धापेक्ष उपमानोपमेयभावः॥ क्रिया क्रिययेति॥ ननु 'भवति पचति' 'पश्य मृगो धावती'ति कर्तृकर्मभावेन क्रिया क्रियया संबध्यत एव। एवं तर्हि करणादिरूपेण समवायं न गच्छतीति विवक्षितम्॥ ननु साध्यत्वात् क्रियायाः कथं क्रियान्तरं प्रति कर्मकर्तृभावः। विषयभेदादेकस्याप्यर्थस्य साध्यसाधनभावसंबन्धसंभवाददोषः॥ तदुक्तं हरिणा—

**तत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया।**
**सिद्धा तु यस्मिन् साध्यत्वं न तमेव पुनः प्रति॥**
**मृगो धावति पश्येति साध्यसाधनरूपता।**
**तथा विषयभेदेन सरणस्योपपद्यत॥** इति

तत्र कर्तृकर्मत्वमाख्यातवाच्यस्य भावस्य न विरुद्धम्। तथा हि—भवतिक्रियापेक्षमेव तस्य कर्तृत्वम्। सर्वेश्वार्थः स्वेन रूपेण भवतीति भवने कर्तृत्वमुपपन्नम्। एवं कर्मापि क्रियाफलत्वात् प्रधानमिति कर्मत्वमपि तस्योपपद्यते। करणत्वादीनि तु सर्वात्मना गुणभावमन्तरेण नोपपद्यन्त इति प्राधान्येनात्यन्तविरोधात्तस्य नोपपद्यन्ते॥

(उद्द्योतः) इतः परं 'भिन्नपदवाच्यसाधनादिकृतभेदेन भेदावगमः कृदन्तेऽस्ति, न तिङन्ते' इत्यत्र बीजभूतं तयोर्वैषम्यमाह—अस्तिखल्वपीति भाष्ये॥ ननु लिङ्गसंख्याद्यन्वयित्वमेव द्रव्यत्वमिति वतिरनुपपन्नोऽत आह—तत्रेति। भाष्ये क्रियया समवाय-

१ एकं तिङन्तं किंचिदित्यन्वयः। (र. ना.)

२ 'वेदाः प्रमाणम्' इत्यत्र यथैकजातीयप्रामाण्यप्रतिपादनायैकवचनम्, तथेति केचित्॥

३ द्रव्यवदित्यर्थः॥

४ 'किंतु भवत्येव यथा' इति शेषः॥

५ 'वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः'॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मिति । क्रियानिरूपितकर्मादिसंज्ञासमानाधिकरणशक्तिभिः संबन्धं गच्छतीत्यर्थः ॥ द्रव्यं क्रियाभिनिर्वृत्तौ साधनत्वमित्यस्य कारकशक्तिमत्त्वमित्यर्थः ॥ करणादिरूपेणेति । कृदन्ते 'पाकेन वैरं कृतमि'त्यादौ तथान्वयादिति भावः ॥ ननु साध्यत्वादिति । असिद्धस्य जनकत्वाऽसंभवादिति भावः ॥

सिद्धावितिति । यन्निरूपितं सिद्धत्वं तमेव प्रति पुनः साध्यत्वं नेत्यन्वयः ॥ एवं चान्यनिरूपितसिद्धत्वेप्यन्यनिरूपितं साध्यत्वं संभवत्येवेति भावः ॥ तथा विषयेति । तथा सति विषयभेदेनेत्यर्थः ॥

क्रियाफलत्वादिति । अर्थभावना तद्धत्त्वादित्यर्थः ॥ तस्य । आख्यातवाच्यभावस्य ॥ अन्वयस्त्वीदृशे विपयेऽन्यतराऽकाङ्क्षयैव ज्योतिष्टोमेन यजेतेत्यादौ करणत्वेनान्वयसत्त्वेपि स्वघटितपदवाच्यक्रियायां तत्त्वाभाव एवेति बोध्यम् ॥ गुणभावमिति । इदं चिन्त्यम् । कर्मणः क्रियाफलाश्रयत्वादिव कर्तुः क्रियाश्रयत्वादिव च प्राधान्यवत् करणस्यापि स्वव्यापाराव्यवधानेन फलोत्पादकतयाऽन्यकारकापेक्षया प्राधान्यमस्त्येव । न हि कर्तृकर्मणोः प्राधान्यमेवाश्रयणीयं नेतरस्येदृशमित्यत्र मानमिति तस्मात्स्वभावत एव तदन्वयाभाव इति बोध्यम् ॥ एवं च करणत्वोद्देश्यत्वावधित्वैरन्वयित्वेन कृदभिहितो भावो द्रव्यधर्मैव, तिङभिहितस्तु तद्विरुद्ध एवेति बोध्यम् ॥

( विशेषान्तरभाष्यम् )

**अस्ति खल्वपि विशेषः कृदभिहितस्य भावस्य, तिङभिहितस्य च—तिङभिहितेन भावेन कालपुरुषोपग्रहा व्यज्यन्ते, कृदभिहितेन पुनर्न व्यज्यन्ते ॥**

( प्रदीपः ) कालेति । पुरुषशब्देन तदर्थः प्रत्यक्पराग् भावश्चोच्यते । उपग्रहोऽनेकप्रकारः स्वार्थपरार्थत्वादिकः ॥

( उद्द्योतः ) अस्यैवार्थस्य साधकं वैषम्यान्तरं दर्शयति—कालपुरुषेत्यादि । असत्त्वभूताया एवैतत्संभव इति भावः ॥ प्रत्यक्त्वमुत्तमे, पराक्त्वं मध्यमे, प्रत्यक्त्वं स्वगतत्वम् पराक्त्वं संबोध्यगतत्वम् । युष्मदस्मद्व्यतिरेकेणापि मध्यमोत्तमाभ्यां तद्बोधः । स्वार्थत्वपरार्थत्वादिकमपि बोधविषय इति भावः ॥

( विशेषान्तरभाष्यम् )

**अस्ति खल्वपि विशेषः—तिङभिहितस्य भावस्य, कृदभिहितस्य च—तिङभिहितो भावः कर्त्रा संप्रयुज्यते, कृदभिहितः पुनर्न संप्रयुज्यते ॥**

**यावता किंचिच्च सामान्यं कश्चिच्च विशेषः ॥**

**युक्तं यदयमपि विशेषः स्याद्—लिङ्गकृतः संख्याकृतश्च ॥**

( प्रदीपः ) कृदभिहित इति । ननु कृदभिहितस्यापि भावस्य भवति कर्त्रा योगः । यथा 'ब्राह्मणानां प्रादुर्भाव' इति ॥ तत्राहुः—एकपदवाच्येन[1] कर्त्रा न युज्यते यथा पचतीति कर्ता वाच्यो, नैवं पाक इति । शुद्धस्यैव भावस्य प्रत्यायनात् । अथ वा घञादिभिः सिद्धरूपता भावस्याभिधीयत इति तेन रूपेण कर्त्रा योगाभावो धातुरूपप्रतिपाद्यया तु साध्यतया कर्त्रा योगो भवति ॥ अथवोपलक्षणभावेन भावः कर्त्रा युज्यते कृत्सु पाक इति । तिङ्क्षु तु पचतीतिसाध्यमानतया प्राधान्येन । तत्र कृत्सु प्राधान्येन कर्त्रा योगो नास्तीत्ययमत्रार्थः ॥

( उद्द्योतः ) भाष्ये कर्त्रा संप्रयुज्यत इति । तिङन्तवाच्यो भावो नियमेन कर्त्राकाङ्क्षः, कृदुपपत्तिस्तु न तथा । न हि पाको राग इत्युक्ते कस्येति नियमेन कर्त्राकाङ्क्षा दृश्यते । नापि तस्य नियमेन प्रयोगो दृश्यते । इदमेव ध्वनयितुं संप्रेत्युपसर्गद्वयोपादानमित्यर्थो मम भाति ॥ यतश्च क्रियात्वं सामान्यमुभयत्रापि । साध्यत्वसिद्धत्वकृतश्च पूर्वोक्तो विशेषो दृश्यते ॥ तथायमपि, यत्तिङर्थस्य भावस्य लिङ्गवाह्यसाधनकृतसङ्ख्यान्वययोग्यता, कृदर्थस्य तु तद्योग्यतेति भाष्यार्थः ॥ ब्राह्मणानामिति कर्तरि षष्ठी ॥ एकपदेति । इयं व्याख्या भाष्यानुगुणा ॥ पाचक इति कृदन्ते तस्यापि सत्त्वात् । न च तत्र न कृदभिहितो भावः । पचतीत्यत्रापि न तिङभिहितो भाव इति तुल्यम् ॥ उपलक्षणभावेनेति । विशेषणत्वेनेत्यर्थः[2] । अत्रापि पक्षे भाष्यस्वरसश्चिन्त्य एव पाकादिशब्दोपक्रमेणैव भाष्यस्य प्रवृत्तेः ॥

( आक्षेपभाष्यम् )

**इदं विचार्यते—भावकर्मकर्तारः सार्वधातुकार्था वा स्युः, विकरणार्था वेति ॥ कथं च सार्वधातुकार्थाः स्युः कथं वा विकरणार्थाः ? । भावकर्मवाचिनि सार्वधातुके यक् भवति, कर्तृवाचिनि सार्वधातुके शब् भवतीति सार्वधातुकार्थाः । भावकर्मणोर्यक् भवति सार्वधातुके, कर्तरि शब् भवति सार्वधातुक इति विकरणार्थाः ॥**

( प्रदीपः ) इदं विचार्यत इति । विचरति नानागच्छति यद्वस्तु तद्विचार्यते नानात्वं नीयत इत्यर्थः । इहान्वयव्यतिरेकाश्रया शास्त्रीया पदावयवानामावापोद्धारिकयर्थवत्ता । तौ चान्वयव्यतिरेकावेकतरस्यापि न व्यवतिष्ठेते । सार्वधातुकमन्तरेणापि कर्त्राद्यवगमात् । यथा गच्छ ग्रामम्, अशायि भवता, अकारि कट इति । तथा विकरणाभावेऽपि कर्त्राद्यवगतिरस्ति—लविषीष्ट क्षेत्रमिति । उभयाभावेप्यस्ति—अजागर्भवानिति ॥ क्वचित्तूभयसंनिधौ कर्त्राद्यवगतिः पचति पच्यत इति । तत्र निश्चयाभावाद्विचारः क्रियते—कः पक्ष आश्रीयमाणः शास्त्रं न विरुणद्धीति ॥

( उद्द्योतः ) भाष्ये सार्वधातुकार्था इत्यत्र सार्वधातुकपदं तिङुपलक्षकम् । नानापक्षोत्थितौ बीजमाह—इहेति । शास्त्रीयार्थवत्ता पदावयवानामावापोद्धारिकी अन्वयव्यतिरेकाश्रयेत्यन्वयः । आवापः, प्रक्षेपः, अपनय उद्धारस्तत्कृता । अत एव भाष्यकारः

१ एकपदवाच्यत्वस्यापि । ( र. ना. )

२ इदं चिन्त्यं पाचकमानय पश्यतीत्यादि व्यवहारदर्शनेनोपलक्षणपदमविद्यमानत्वेऽपि व्यावर्तकपरं न तु विशेषणपरम् । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शास्त्रमेव पक्षद्वयसाधकत्वेनोपन्यसिष्यति ॥ सार्वधातुकमिति । इदं च तिङ्परम् ॥ अत एवाग्रे गच्छेत्युदाहरणं संगच्छते ॥

( अनुयोगभाष्यम् )

कश्चात्र विशेषः ? ।

( १८५२ सार्वधातुकार्थपक्षे दूषणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ भावकर्मकर्तारः सार्वधातुकार्था-श्चेदेकद्विबहुषु नियमानुपपत्तिर-तदर्थत्वात् ॥ * ॥**

( भाष्यम् ) **भावकर्मकर्तारः सार्वधातुकार्थाश्चेद् एकद्विबहुषु नियमस्यानुपपत्तिः ॥ किं कारणम् ? । अतदर्थत्वात् । न हीदानीमेकत्वादय एव विभक्त्यर्थाः ॥ किं तर्हि ? । भावकर्मकर्तारोऽपि ॥**

( प्रदीपः ) **एकद्विबहुष्विति** । एकत्र एवैकवचनं नार्थान्तर इति यो नियमः स नोपपद्यते कर्त्रादीनामपि तदर्थत्वादित्यर्थः ॥ **अतदर्थत्वादिति** । सामर्थ्यादत्रावधारणमाश्रीयते न तान्येवैकत्वादीन्यर्थः । अपि तु कर्त्रादयोऽपीत्यर्थः ॥

( उद्द्योतः ) एकद्वीति । द्व्येकयोरित्यादिसूत्रेष्वित्यर्थः ॥ नन्वतदर्थत्वादित्यस्य तदर्थत्वाभावादित्यर्थो न युक्तः । एकत्वाद्यर्थत्वस्य सत्त्वादित्यत आह—सामर्थ्यादिति ॥ न तान्येवेति । 'न तान्येवार्थो यस्येति' विग्रह इत्यर्थः ॥ तत्पदार्थमाह—एकत्वादीनीति । तन्मात्रार्थत्वाभावादित्यर्थ इति तात्पर्यम् ।

( विकरणार्थपक्षाङ्गीकारभाष्यम् )

**सन्तु तर्हि विकरणार्थाः ।**

( १८५३ विकरणार्थत्वपक्षदूषणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ विकरणार्था इति चेत् कृताभिहिते विकरणाभावः ॥ * ॥**

( भाष्यम् ) **विकरणार्था इति चेत् कृताभिहिते विकरणो न प्राप्नोति—धारयः पारयः इति ।**

(प्रदीपः) **कृताभिहित इति** । क्वचिदेव कृति विकरणो विधीयते न सर्वत्रेति कृत एव कर्तरि कृदिति कर्तार्थो निर्दिश्यते । तेनैव च कर्तुरुक्तत्वात्तदभिधायी विकरणो न प्राप्नोति । ततश्च धारय इत्यादावसति शपि गुणो न स्यात् ॥

( उद्द्योतः ) ननु विकरणानां तदर्थत्वे कृताभिहित इत्यनुपपन्नमत आह—क्वचिदेवेति । एवं च सर्वत्र विकरणाभावात्कृतां तेषु शक्तिकल्पनाऽऽवश्यकीति भावः ॥

( सार्वधातुकार्थवादिभाष्यम् )

**किमुच्यते—'कृताभिहिते इति',—न लेनाप्यभिधानं भवति ? ।**

(प्रदीपः) **न लेनापीति** । लः कर्मणि चेति वचनाल्लादेशैरपि कर्त्रादेरभिधानमिति तत्रापि विकरणाप्राप्तिः किं न चोद्यत इत्यर्थः । ततो लः कर्मणीति वचनात् कर्त्रादीनां विकरणार्थत्वं नैव संभवतीत्यर्थः ॥

( उद्द्योतः ) विकरणार्थत्वपक्षे शङ्कते,—भाष्ये किमुच्यते कृतेत्यादिना ॥

( विकरणार्थवादिभाष्यम् )

**न शक्यं लेनाभिधानमाश्रयितुम् । पक्षान्तरमिदमास्थितम्—भावकर्मकर्तारः सार्वधातुकार्था वा स्युर्विकरणार्था वेति । यदि च लेनाप्यभिधानं स्याद् नेदं पक्षान्तरं स्यात् ॥**

(उद्द्योतः) इतर आह न शक्यमिति ॥ तत्र तदुक्तदूषणे 'कृता' इत्ययुक्तम्, 'अभिहिते' इत्येव युक्तमित्याह—पक्षान्तरमिति । यदि चेति यदि लेनाभिधानं स्यात्तर्हीदं पक्षान्तरं स्यात् इत्यर्थः ॥

( सार्वधातुकार्थवादिभाष्यम् )

**कथमशक्यम् । यदा भवानेवाह "लः कर्मणि च भावे चाकर्मकेभ्य" इति ? ।**

( प्रदीपः ) ततो **लः कर्मणी**ति वचनात्कर्त्रादीनां विकरणार्थत्वं नैव संभवतीत्युक्तं भवति ।

( उद्द्योतः ) कथमिति । पक्षान्तरत्वासंभवेऽपि लेनाभिधानमाश्रयितुं कथमशक्यमित्यर्थः ॥ तदाश्रयणस्य शक्यत्वमुपपादयति—यदा भवानेवेति ॥ तद्व्याचष्टे—ततो ल इति । अत एव लिडादिषु कर्त्राद्यर्थावगतिरिति बोध्यम् ॥

( विकरणार्थवादिभाष्यम् )

**एवं वक्ष्यामि लः कर्मणो भावाच्चाकर्मकेभ्य इति ॥**

( प्रदीपः ) **एवं वक्ष्यामीति** । व्याख्यास्यामीत्यर्थः । लः **कर्मणि** इति कर्मणि वर्तमानाद्विकरणादिति व्याख्यास्यत इत्यर्थः ॥ तत्र कर्माभिधायी विकरणः कर्मशब्देन भाष्य उक्तः ॥ ननु सार्वधातुकनिमित्तो विकरणो न तु विकरणनिमित्तो लकारः, तत्कथमेवं व्याख्यायते । एवं तर्हि कृते लकारे सार्वधातुक इति विषयसप्तम्याश्रयणात् कृते विकरणे **लः कर्मणि चे**त्यनेन भावकर्मकर्त्रभिधायिनो विकरणात्परो लः साधुर्भवतीति व्याख्यानाददोषः ॥

( उद्द्योतः ) इतरोऽशक्यत्वमुपपादयति—एवं वक्ष्यामीत्यादिना ॥ लः कर्मण इति न्यासे गौरवं सूत्रभेदश्च स्यादत आह—व्याख्यास्यामीति ॥ उक्तेर्थे भाष्यं योजयति—तत्र कर्मेति । कृते लकारे इति । वर्तमाने लडित्यादिभिः परत्वादिति भावः ॥ यथा न्यासेऽपि वर्तमाने लडित्यादिभिः सिद्धलकारानुवादेन कर्त्राद्यर्थसंबन्धेन साधुत्वविधायकमेवेदम् ॥ लस्य साधुत्वं चादेशद्वारा बोध्यम् ॥

( सार्वधातुकार्थवादिभाष्यम् )

**यस्मिंस्तर्हि ले विकरणा न श्रूयन्ते, कस्तत्र भावकर्मकर्तॄनभिधास्यति ? क्व च न श्रूयन्ते' । य एते लुग्विकरणाः श्लुविकरणाश्च ॥**

( विकरणार्थवादिभाष्यम् )

**अत्राप्युक्ते कर्तृत्वे लुग्भविष्यति ॥**

(प्रदीपः) **अत्राप्युक्त इति** । विकरणलोपद्वारेण प्रकृतिरेव तत्र कर्त्राद्यभिधायिनीति प्रतिज्ञातं भवतीत्यर्थः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्द्योतः ) ननु लुकि तदभावात् कोऽभिदध्याद् अत आह—लोपद्वारेणेति ॥ कर्त्रैभीति पाठः । कर्त्राद्यभीति पाठे आदिशब्दार्थश्चिन्त्यः ॥

( सार्वधातुकार्थसाधकभाष्यम् )

**यस्मिंस्तर्हि ले विकरणा नैवोत्पद्यन्ते कस्तत्र भावकर्मकर्तॄनभिधास्यति । क्व च नैवोत्पद्यन्ते ? । लिङ्लिटोः ॥ तस्मान्नैवं शक्यं वक्तुं 'न लेनाप्यभिधानं भवतीति । भवति चेदभिहिते विकरणाभाव इत्येव ॥**

( प्रदीपः ) **यस्मिंस्तर्हीति** । ततश्च विकरणानुत्पादाल्लादेशस्यासाधुत्वप्रसङ्गो विधानसामर्थ्याद्वा साधुत्वे भावाद्यर्थावगतिर्न स्यात् **कर्तरि कृदिति** वचनात्कर्तर्येव लकारः स्यादित्यर्थः ॥ **भवति चेदिति** । ततश्च विकरणार्थपक्षोऽनुपपन्न एवेति भावः ॥

( उद्द्योतः ) **लादेशस्येति** । लस्य क्वापि प्रयोगाभावादेवमुक्तम् ॥ **विधानेति** । लिङ्लिटोर्विधानसामर्थ्यादित्यर्थः ॥ भाष्ये तस्मान्नैवमिति । लः कर्मण इत्येतदित्यर्थः ॥ तस्मान्नैतदिति पाठान्तरम् ॥ ततः किं तत्राह—**शक्यं नेति** । यदुक्तं न लेनाप्यभिधानं भवतीति तद्वक्तुं शक्यमित्यर्थः ॥ **भवति चेदिति** । लेनाभिधानं भवति चेद्विकरणार्थत्वपक्षे अभिहिते विकरणानामनापत्तौ तच्छास्त्रवैयर्थ्यं स्यादित्यर्थः ॥ तदाह—**ततश्चेति** ॥

( विकरणार्थसाधकभाष्यम् )

**एवं तर्हीदं स्यात्—यदा भावकर्मणोर्लः, तदा कर्तरि विकरणाः । यदा कर्तरि लः, तदा भावकर्मणोर्विकरणाः ॥**

(प्रदीपः) **एवं तर्हीति** । प्रकारान्तरेण विकरणार्थत्वपक्षं समर्थयते । यथा ग्रामं गच्छतीति गमिक्रियायाः कर्तृकर्मणी साधने । तत्र कर्तरि लकारः कर्मणि द्वितीया । तथात्राप्येकस्मिन्नर्थे सार्वधातुकमपरस्मिन्विकरणो भविष्यतीति भावः ॥

( सार्वधातुकार्थवादिभादिभाष्यम् )

**इदमस्य यद्येव स्वाभाविकम्, अथापि वाचनिकम् "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इति । न चास्ति संभवो यदेकस्याः प्रकृतेर्द्वयोर्नानार्थयोर्युगपत्सहायीभावः[1] स्यात् । एवं च कृत्वा एकपक्षीभूतमेवेदं भवति सार्वधातुकार्था एवेति ॥**

( प्रदीपः ) **इदमस्येति** । अयमर्थः—यत्र पदद्वयवाच्ये कर्तृकर्मणी साधने तत्र विरोधाभावात्तन्निबन्धनः कार्यभेदो युक्तः । एकस्मिंस्तु पदे विरुद्धार्थयोर्विकरणसार्वधातुकयोर्विशिष्टार्थप्रतिपादने साहायकाभावात्परस्परानुपकारादप्रयोग एव स्यात् । तथा हि पचतीति क्रियाविशिष्टः कर्ताभिधीयते । पच्यते इति क्रियाविशिष्टं कर्म । न त्वेकेन साधनद्वयं क्रियाविशिष्टं प्रतिपादयितुं शक्यते ॥ **एकपक्षीभूतमिति** । एक एव पक्षः सार्वधातुकार्थाः कर्मादय इत्यर्थः । पूर्वभेदापेक्षश्च च्विप्रत्ययनिर्देशः ॥

( उद्द्योतः ) भाष्ये एवं तर्हीत्यादिनोक्तं विकरणार्थत्वं दूषयति—**इदमस्येति** । इदं प्रकृतीत्यादि ॥ अस्य आचार्यस्य ॥ स्वाभाविकं लोकव्युत्पत्तिसिद्धम् ॥ वाचनिकं व्याकरणान्तर[2] इव ॥ **प्रत्ययार्थं सहेति** । प्रतीयमानार्थं सह ॥ ब्रूतः एकोपस्थितिविषयी कुरुतः । लोके तथैव व्युत्पत्तेरिति भावः ॥ नानार्थयोर्भिन्नार्थयोः ॥ सहायीभावः सहायत्वम् ॥ अयं भावः—पचन्नित्यादौ "प्रत्ययार्थः प्रधानमि"त्युत्सर्गरीत्या द्वयोरपि प्रत्ययार्थयोः प्राधान्ये एकत्र विशेषणतयान्वितप्रकृतेरपरत्र तथा संबन्धो व्युत्पत्तिविरुद्धः तदर्थानालिङ्गितप्रत्ययार्थभानमप्युक्तव्युत्पत्तिविरुद्धमित्ययं पक्षोऽसंगत इति भावः ॥ **विशिष्टार्थप्रतिपादने साहायकाभावादिति** । प्रकृतेरिति शेषः ॥ **परस्परेति** । प्रकृतिप्रत्यययोरित्यर्थः ॥ **पचतीति** । आख्याते कारकविशिष्टक्रियाप्राधान्यादिदं चिन्त्यम्[3] । भाष्यं तु पचन् पचमान इत्याद्यभिप्रायकतया नेयम् ॥ कैयटे पचतीत्याद्यपि पचन्नित्यादेरुपलक्षणं वा । सहायीभाव इत्यत्र च्विस्तु उभयत्र तस्यासहायत्वादुपपन्नः ॥ केचित्तु **क्रियाविशिष्ट** इत्यस्य क्रियासहित इत्यर्थः । कर्तृविशेषणिका कर्मविशेषणिका चेति यावत् ॥ एकेन चोभयविशेषणिका क्रिया न प्रतिपादयितुं शक्येति भाष्यार्थमाहुः । तच्चिन्त्यम् ॥ **न त्वेकेनेति** । धातुनेत्यर्थः ॥ अत्र केचित् । सुपामिव तिङामपि कर्त्रादिद्योतकत्वमेव । भाष्यमत्रापि सुयोजमेवेत्याहुः । निरूपितं चैतद्विस्तरेण मञ्जूषायामाख्यातवादे ॥

( सार्वधातुकार्थपक्षदूषणस्मारणभाष्यम् )

**ननु चोक्तम्* भावकर्मकर्तारः सार्वधातुकार्था इति चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वाद्* इति ॥**

( दूषणपरिहारभाष्यम् )

**नैष दोषः ।**

( १८५४ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ॥ * ॥**

( भाष्यम् ) **सुपां तिङां च संख्या चैवार्थः कर्मादयश्च ॥**

( १८५५ वार्तिकम् ॥ ४ ॥ )

**॥ * ॥ प्रसिद्धो नियमस्तत्र ॥ * ॥**

( भाष्यम् ) **प्रसिद्धस्तत्र नियमः ॥**

---

१ 'युगपदनुसहायीभावः' ॥

२ व्याकरणान्तरवृत्तीत्यर्थः । ( र. ना. )

३ 'क्रिया विशिष्टा येनेति बहुव्रीहिणा क्रियाप्राधान्यस्यानुपपत्त्यभावेन सर्वं समञ्जसमिति तु दाधिमथानां सिद्धान्तः । क्रियेत्यादि—द्राविडप्राणायामवति दाधिमथ इति बालानामपि स्पष्टम् । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( १८५६ वार्तिकम् ॥ ५ ॥ )

॥ * ॥ नियमः प्रकृतेषु वा ॥ * ॥

( भाष्यम् ) अथ वा प्रकृतानर्थानपेक्ष्य नियमः ॥ के च प्रकृताः ? । एकत्वादयः । एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु । द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु । बहुष्वेव बहुवचनं नैकस्मिन्न द्वयोरिति ॥

( प्रदीपः ) प्रसिद्धो नियम इति । अर्थनियम इत्यर्थः । कर्माद्यर्थान्तरनिर्देशात्तु न प्रत्ययनियमः प्रमाणसिद्धः । तत्रैकत्व एकवचनमेवेत्येवमेकत्वादिरर्थो नियम्यते । न तु प्रत्यय इति तस्यार्थान्तरमपि कर्मादि न विरुध्यते ॥

अथ वेति । कर्माद्यर्थविधानसामर्थ्यात्तुल्यजातीयसंख्यापेक्ष एव नियम इत्यर्थः ॥

( उद्द्योतः ) भाष्ये प्रसिद्धो नियमस्तत्रेति । तत्र अर्थविषये ॥ यतः सुपां तिङां चार्थद्वयं दृश्यतेऽतः प्रत्ययनियमासंभवादिति भावः ॥ नियम इत्यर्थ इति । प्रत्ययनियम इत्यर्थः ॥

( १८५७ यग्विधिवार्तिकम् ॥ ६ ॥ )

॥ * ॥ भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानं कर्तव्यम् । पच्यते ओदनः स्वयमेव । पठ्यते विद्या स्वयमेव ॥

किं पुनः कारणं न सिध्यति ? ।

( १८५८ शपोबलीयस्त्वप्रतिपादकं वार्तिकम् ॥ ७ ॥ )

॥ * ॥ विप्रतिषेधाद्धि शपो बलीयस्त्वम् ॥ * ॥

( भाष्यम् ) विप्रतिषेधाद्धि शपो बलीयस्त्वं प्राप्नोति । शपोवकाशः—पचति पठति । यकोवकाशः—पच्यते ओदनो देवदत्तेन, पठ्यते विद्या देवदत्तेनेति । इहोभयं प्राप्नोति—पच्यते ओदनः स्वयमेव, पठ्यते विद्या स्वयमेवेति । परत्वात् शप् प्राप्नोति ॥

( प्रदीपः ) कर्मकर्तरीति । कर्मवदित्यतिदेशेन स्वाश्रयस्य कार्यस्याबाधनात्कर्त्राश्रयविकरणप्राप्तौ वचनम् ॥ विप्रतिषेधादिति । यदा शास्त्रातिदेशपक्षस्तदा शपो बलीयस्त्वम् । कार्यातिदेशे तु यक एव बलीयस्त्वम् ॥

( उद्द्योतः ) ननु कर्मवद्भावादेव यक् सिद्धोऽत आह—कर्मवदिति ॥ स्वाश्रयस्य कार्यस्येति । परत्वेन बलवत इत्यर्थः । अतिदेशस्यात्मनेपदादिविधानेन चरितार्थं इति भावः ॥ बलीयस्त्वमिति । कर्मवदिति सूत्रस्य परत्वादिति शेषः ॥ वस्तुतः कार्यातिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति प्रत्ययलक्षणसूत्रोक्तरीत्या भाष्यं समञ्जसमेव ॥

( १८५९ कर्मकर्तरियग्विधिवार्तिकवैयर्थ्यवार्तिकम् ॥ ८ ॥ )

॥ * ॥ योगविभागात् सिद्धम् ॥ * ॥

( भाष्यम् ) योगविभागः करिष्यते—"चिण्भावकर्मणोः" । ततः "सार्वधातुके यक् भावकर्मणोः" । ततः "कर्तरि" । कर्तरि च यक् भवति, भावकर्मणोः ।

( योगविभागदूषणभाष्यम् )

यथैव तर्हि कर्मणि कर्तरि यक् भवति । एवं भावेऽपि कर्तरि यग् प्राप्नोति—

"एति जीवन्तमानन्दो नरं वर्षशतादपि" ।

"नास्य किं चिद्रुजति रोग" इति ॥

( दूषणोद्धारभाष्यम् )

द्वितीयो योगविभागः करिष्यते—"चिण् भावे" । ततः "कर्मणि" कर्मणि च चिण् भवतीति । ततः "सार्वधातुके यक्" । सार्वधातुके यक् भवति भावे कर्मणि च । ततः "कर्तरि" कर्तरि च यग्भवति । कर्मणीत्यनुवर्तते । भाव इति निवृत्तम् ॥ ततः "शप्" । शप् च भवति कर्तरीत्येव । कर्मणीति निवृत्तम् ॥

( यगुपसंख्यानवादिभाष्यम् )

एवमप्युपसंख्यानं कर्तव्यम् ।

( १८६० उपसंख्यानहेतुवार्तिकम् ॥ ९ ॥ )

॥ * ॥ विप्रतिषेधाद्धि श्यनो बलीयस्त्वम् ॥ * ॥

( भाष्यम् ) विप्रतिषेधाद्धि श्यनो बलीयस्त्वं प्राप्नोति । श्यनोवकाशः—दीव्यति सीव्यतीति । यकोवकाशः—पच्यते ओदनो देवदत्तेन, पठ्यते विद्या देवदत्तेनेति । इहोभयं प्राप्नोति—दीव्यते स्वयमेव सीव्यते स्वयमेवेति । परत्वात् श्यन् प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—एवमप्युपसंख्यानं कर्तव्यमिति । कर्मकर्तर्युपसंख्यानमित्यर्थः ॥ परत्वात् श्यन्निति । श्यन्यकोः स्वरे विशेषः ।

( उपसंख्यानवैयर्थ्यभाष्यम् )

ननु चैतदपि योगविभागेनैव सिद्धम् ।

( प्रदीपः ) ननु चैतदिति । सर्वा प्राप्तिर्योगविभागेन बाधिष्यत इति भावः ॥

( उद्द्योतः ) सर्वा प्राप्तिरिति । बाध्यसामान्यचिन्तयेति भावः ॥

( उपसंख्यानसार्थक्यभाष्यम् )

न सिध्यति । अनन्तरा या प्राप्तिः सा योगविभागेन शक्या निवारयितुम् ॥ कुत एतत् ? । "अ-

१ भावस्य कर्मणश्च कर्तृत्वे यग् भवतीत्यर्थं इत्यभिमानः ॥

२ 'कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।' इति चास्य शेषो रामायणे ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति । परा प्राप्तिरप्रतिषिद्धा तया श्यन् प्राप्नोति ॥

( प्रदीपः ) परा प्राप्तिरिति । परत्वाद् बलीयस्त्वादित्यर्थः ॥

( उद्द्योतः ) भाष्येऽप्रतिषिद्धेति । अबाधितेऽत्यर्थः ॥

( उपसंख्यानवैयर्थ्यभाष्यम् )

ननु चेयं प्राप्तिः परां प्राप्तिं बाधेत ॥

( प्रदीपः ) ननु चेयमिति । योगविभागप्राप्तिः पूर्वविप्रतिषेधेन बाधिका भविष्यतीत्यर्थः ॥

( उपसंख्यानसार्थक्यभाष्यम् )

नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥

( प्रदीपः ) नोत्सहत इति । न्याय्यविप्रतिषेधाश्रयणस्य युक्तत्वाद् दुर्बलो योगविभागप्राप्तिक इत्यर्थः ॥

( उद्द्योतः ) नोत्सहते प्रतिषिद्धेति । अनन्तरस्येति न्यायेन तद्विषयाद्दीना कृता सती तां बाधितुं नोत्सहत इत्यर्थः । तद्व्युत्पादयति—न्यायेति । परविप्रतिषेधेत्यर्थः । पूर्वविप्रतिषेधकल्पनेन मानमिति भावः ॥

( उपसंख्यानवैयर्थ्यभाष्यम् )

एवं तर्हि शबादेशाः श्यन्नादयः करिष्यन्ते । शप् च यका बाध्यते । तत्र दिवादिभ्यो यग्विषये शबेव नास्ति कुतः श्यन्नादयः ॥

( प्रत्याक्षेपभाष्यम् )

तत्तर्हि शपो ग्रहणं कर्तव्यम् ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् । "कर्तरि शबि"ति ॥

( आदेशत्वानुपपत्तिभाष्यम् )

तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ॥

( आदेशत्वोपपादकभाष्यम् )

दिवादिभ्यः इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति ॥

( आदेशत्वानुपपत्तिभाष्यम् )

प्रत्ययविधिरयम् । न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥

( आदेशत्वोपपादकभाष्यम् )

नायं प्रत्ययविधिः, विहितः प्रत्ययः प्रकृतश्चानुवर्तते ॥

( उपसंख्यानवैयर्थ्यभाष्यम् )

अथ वा भावकर्मणोरित्यनुवृत्त्यैव सिद्धे सत्यनुवृत्तिर्यको भावाय । इह "सार्वधातुके यगि"ति अन्तरेण भावकर्मणोरित्यनुवृत्तिं सिद्धम् । सोयमेवं सिद्धे सति यद्भावकर्मग्रहणमनुवर्तयति तस्यैतत्प्रयोजनं कर्मकर्तर्यपि यग् यथा स्यादिति ॥

( प्रदीपः ) इहेति । सार्वधातुके यग् भवतीति सामान्योक्तावपि कर्तरि शबाद्यपवादविधानाद्भावकर्मणोरेव यग् भविष्यतीति भावकर्मानुवृत्तिरधिको यत्न इति कर्मकर्तर्यपि यग् भविष्यतीत्यर्थः ॥

( उद्द्योतः ) ननु कर्तर्यपि यक् प्राप्तेः कथं सिद्धमत आह—सार्वधात्विति ॥ कर्मकर्तर्यपीति । पच्यते स्वयमेवेत्यादौ शबादीन्बाधित्वेति भावः ॥

( १८६१ योगविभागान्तरवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ कर्तरीति च योगविभागः श्यनः पूर्वविप्रतिषेधावचनाय ॥ * ॥

( भाष्यम् ) कर्तरीति च योगविभागः कर्तव्यः । श्यनः पूर्वविप्रतिषेधं मा वोचमिति ।

( प्रदीपः ) अत्रापि व्याख्याने योगविभागः कर्तव्य एवेत्याह—कर्तरीति चेति । अन्यथा भावकर्मानुवृत्तियत्नाच्छप एवानन्तरस्य बाधः स्याद् न तु श्यन्नादीनाम् । योगविभागेन तु तेपि बाध्यन्ते ॥

( उद्द्योतः ) भाष्ये पूर्वविप्रतिषेधं मा वोचमिति । अनेन पूर्वविप्रतिषेधोऽपूर्ववचनसाध्य इति सूचयति ॥

( उपसंख्यानवैयर्थ्ययुक्त्यन्तरभाष्यम् )

अथ वा कर्मवद्भाववचनसामर्थ्याद्यक् भविष्यति ॥

( युक्त्यनुपपत्तिभाष्यम् )

अस्त्यन्यत् कर्मवद्भाववचने प्रयोजनम् । किम्? । आत्मनेपदं यथा स्यात् ॥

( युक्त्युपपत्तिभाष्यम् )

वचनादात्मनेपदं भविष्यति ॥

( प्रदीपः ) वचनादिति । कर्तरिकर्मव्यतिहार इत्यत्र कर्तरीति योगविभागात् । तत्र च कर्मग्रहणानुवर्तनादन्तरेणाप्यतिदेशमात्मनेपदं भविष्यतीत्यर्थः ॥

( युक्त्यनुपपत्तिभाष्यम् )

चिण् तर्हि यथा स्यात् ॥

( सामर्थ्योपपत्तिभाष्यम् )

चिणपि वचनाद्भविष्यति ॥

(प्रदीपः) चिणपीति । चिण्ग्रहणेऽनुवर्तमाने पुनश्चिण्ग्रहणमधिकविधानार्थमिति कर्मकर्तर्यपि चिण् भविष्यतीत्यर्थः ॥

( सामर्थ्यानुपपत्तिभाष्यम् )

चिण्वद्भावस्तर्हि यथा स्यात् ॥

( सामर्थ्योपपत्तिभाष्यम् )

नैकं प्रयोजनं योगारम्भं प्रयोजयति ॥ तत्र कर्मवद्भाववचनसामर्थ्याद् यक् भविष्यति ॥

१ 'दुर्बलो योगविभागप्राप्तिरिति' ॥

२ 'रित्यनुवृत्त्या विना सिद्धे सति सानुवृत्ति' इति प्राचीनपुस्तकेषूपलभ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

(प्रदीपः) नैकमिति । अन्यथा स्यसिच्सीयुडित्यत्रैव कर्मणा तुल्यक्रिये कर्तरीति वाच्यं स्यादित्यर्थः ॥ ६७ ॥

(उद्द्योतः) भाष्ये कर्मवद्भाववचनसामर्थ्यादिति । तत्सामर्थ्यादनन्तरस्येति न्यायो नाश्रीयते किंतु बाध्यसामान्यचिन्तै[1]वेति भावः ॥ ७० ॥

(उपसंख्यानवैयर्थ्ययुक्त्यन्तरभाष्यम्)

अथ वा आचार्यप्रवृत्तिर्ज्ञापयति 'कर्मकर्तरि यग् भवति' इति । यदयं "न दुहस्नुनमां यक्चिणौ" इति यक्चिणोः प्रतिषेधं शास्ति ॥ सार्वधातुके ॥ ६७ ॥

(४२३ श्यन्विकल्पविधिसूत्रम् ॥ ३ । १ । ४ आ. ११)

## ६९८ यसोऽनुपसर्गात् ॥ ३।१।७१ ॥

(आक्षेपभाष्यम्)

अनुपसर्गादिति किमर्थम् ? ।

(समाधानभाष्यम्)

आयस्यति प्रयस्यति ॥

(प्रत्याख्यानभाष्यम्)

अनुपसर्गादिति शक्यमकर्तुम् ॥

कथमायस्यति प्रयस्यतीति ? ॥

"संयसश्च" इत्येतन्नियमार्थं भविष्यति—"संपूर्वादेव यसः, नान्यपूर्वात्" इति ॥ यसोऽनुपसर्गात् ॥ ७१ ॥

(उद्द्योतः) यसोऽनुप ॥ ७१ ॥ इदं विकल्पेन श्यन्विधायकम् ॥ संपूर्वादेव यस इति । सोपसर्गविषयो नियम इति भावः ॥ एतेनैवं नियमे केवलान्न स्यादित्यपास्तम् तदाह—नान्यपूर्वादिति ॥ ७१ ॥

(४२४ श्नम्विधिसूत्रम् ॥ ३ । १ । ४ आ. १२)

## ६९५ रुधादिभ्यः श्नम् ॥ ३ । १ । ७८ ॥

(शित्त्वप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

किमर्थः शकारः ? ।

(प्रयोजनभाष्यम्)

सार्वधातुकार्थः । 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञा । 'सार्वधातुकमपित्' इति ङित्त्वम् । ङितीति गुणप्रतिषेधो यथा स्याद्—भिनत्ति छिनत्तीति ॥

(प्रदीपः) रुधादि ॥ ७८ ॥ भिनत्तीति । भिशब्दस्याङ्गसंज्ञानिबन्धनो गुणो मा भूदिति शित्त्वं कृतमित्यर्थः ॥

(प्रयोजननिरासभाष्यम्)

नैतदस्ति प्रयोजनम् । सार्वधातुकार्धधातुकयोरङ्गस्य गुण उच्यते । यस्माच्च प्रत्ययविधिस्तदादिप्रत्यये परतोऽङ्गसंज्ञं भवति । यस्माच्च प्रत्ययविधिः न तत् प्रत्यये परतः । यच्च प्रत्यये परतो न तस्मात्प्रत्ययविधिः ॥

(प्रदीपः) यस्माच्चेति । भिदृशब्दादित्यर्थः । तस्यैव रुधादित्वात् न तु तदवयवाद् भिशब्दात् प्रत्ययविधानम् ॥

(प्रयोजनान्तरभाष्यम्)

इदं तर्हि प्रयोजनम्—आर्धधातुकसंज्ञा मा भूदिति । किं च स्यात् ? । वलादिलक्षण इट् प्रसज्येत ॥

(प्रयोजनान्तरनिरासभाष्यम्)

एतदपि नास्ति प्रयोजनम् । वलादेरार्धधातुकस्याङ्गस्येड्उच्यते । यस्माच्च प्रत्ययविधिः तदादिप्रत्यये परतोऽङ्गसंज्ञं भवति । यस्माच्चात्र प्रत्ययविधिः न तत् प्रत्यये परतः । यच्च प्रत्यये परतो न तस्मात् प्रत्ययविधिः ।

(उद्द्योतः) रुधादिभ्यः ॥ ७८ ॥ भाष्ये आर्धधातुकस्याङ्गस्येति अङ्गसंज्ञानिमित्तस्यार्धधातुकस्येत्यर्थः ॥

(उत्तरभाष्यम्)

अत उत्तरं पठति—

(१८६२ समाधानवार्तिकम् ॥ १ ॥)

॥*॥ श्नमि शित्करणं प्वादिह्रस्वार्थम् ॥*॥

(भाष्यम्) श्नमि शित्करणं क्रियते । प्वादिह्रस्वार्थम् । प्वादीनां शिति ह्रस्वत्वं यथा स्यात्—पृणत्ति मृणतीति ॥

(प्रदीपः) पृणतीति । पॄ मॄ इति क्र्यादिषु पठितौ ताभ्यां व्यत्ययेन श्नम्प्रत्ययः ॥

(उद्द्योतः) पॄम्रोः क्र्यादित्वात्तयोः श्नम् दुर्लभोऽत आह—व्यत्ययेनेति ॥

(१८६३ समाधाननिरासवार्तिकम् ॥ २ ॥)

॥ * ॥ न वा धात्वन्यत्वात् ॥ * ॥

(भाष्यम्) न वा कर्तव्यम् । किं कारणम् । धात्वन्यत्वात् । धात्वन्तरे[3] पृणिमृणी ॥

(प्रदीपः) धात्वन्तरमिति । तौदादिकावित्यर्थः ॥

(आक्षेपभाष्यम्)

यत्तर्हि न धात्वन्तरं, 'यत्र भूम्यां वृणसे' ॥

(प्रदीपः) वृणस इति । वृ वरणे इति क्र्यादिस्तस्माद्व्यत्ययेन श्नम्थासौ ॥

(उद्द्योतः) इति क्र्यादिरिति । क्रैय्यादिक इति वा पाठः[4] ॥

---

[1] एवकारेण बाध्यविशेषचिन्ता निवर्त्यते । ( र. ना. )

[2] नियमस्य विशेषविषयत्वेन । ( र. ना. )

[3] क्र्यादिभिन्नौ धातू इत्यर्थः । ( र. ना. )

[4] क्र्यादिशब्दस्य लक्षणया क्रैयादिकपरत्वसम्भवे पाठान्तरकल्पनमनुचितमिति वयम् । ( र. ना. )

Digitized by Arya Samaj Foundation Chennai and eGangotri



( आक्षेपबाधकभाष्यम् )

नैष श्नम् । श्नं एवैतद्ध्रस्वत्वम् ॥

( प्रदीपः ) श्न इति । छान्दसमिति भावः ॥

( आक्षेपसाधकभाष्यम् )

यदि श्नो ह्रस्वत्वम्, स्वरो न सिध्यति—वृणसे= 'अदुपदेशाल्लसार्वधातुकमनुदात्तं भवतीति' एष स्वरो न प्राप्नोति । तस्माच्छ्नमेषः ॥

( आक्षेपबाधकभाष्यम् )

यदि श्नम् "श्नसोरल्लोपः" प्रसज्येत ॥

( आक्षेपसाधकभाष्यम् )

उपधाया इति वर्तते । अनुपधात्वान्न भविष्यति ॥

( आक्षेपबाधकभाष्यम् )

न शक्यमुपधाया इति विज्ञातुम् । इह हि दोषः स्यात् । अङ्क्तः अञ्जन्तीति । तस्माच्छ्न एवैतद् ह्रस्वत्वम् ॥

( प्रदीपः ) अङ्क्त इति । श्नान्नलोप इत्यस्यासिद्धवदत्राभादित्यसिद्धत्वादकारस्योपधात्वाभावः ॥

( उद्द्योतः ) ननु श्नान्नलोप उपधात्वं सुलभमत आह—असिद्धत्वादिति ॥

( स्वरानुपपत्तिभाष्यम् )

यद्येवम् । स्वरः कथम् ।

( प्रदीपः ) प्रमिणीमीति । मीञो मीनातेर्निगम इति ह्रस्वः । सिपोऽपित्त्वेन ङित्त्वे सतीत्वम् ॥

( उद्द्योतः ) भाष्ये पित्त्वं वक्तव्यमिति । एवं च तेनानुदात्तत्वं सिद्धमित्यर्थः ॥

( १८६४ स्वरोपपादकवार्तिकम् ॥ ३ ॥ )

॥*॥ बहुलं पित्सार्वधातुकं छन्दसि ॥*॥

(भाष्यम्) सार्वधातुकस्य छन्दसि बहुलं पित्त्वं वक्तव्यम् । पितश्चैवापित्त्वं दृश्यते । अपितश्च पित्त्वम् । पितस्तावदपित्त्वम्—"मातरं प्रमिणीमि जनित्रीम्" । अपितश्च पित्त्वम्—"शृणोत ग्रावाणः" ।

( गौरवभाष्यम् )

तर्हि श्नो ह्रस्वत्वं वक्तव्यम् ।

( इष्टापत्तिभाष्यम् )

अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम् । उपगायन्तु मां पत्नयो गर्भिणयो युवतय इत्येवमर्थम् ।

( प्रयोजनान्तरभाष्यम् )

विशेषणार्थं तर्हि ॥ क्व विशेषणार्थेनार्थः ॥ "श्नान्नलोप" इति । 'नान्नलोप' इतीयत्युच्यमाने यज्ञानां यत्नानामित्यत्रापि प्रसज्येत ॥

( प्रयोजनान्तरबाधकभाष्यम् )

दीर्घत्वे कृते न भविष्यति ॥

( प्रयोजनान्तरसाधकभाष्यम् )

इदमिह संप्रधार्यं दीर्घत्वं क्रियतां नान्नलोप इति । किमत्र कर्तव्यम्? परत्वान्नलोपः स्यात् । तस्माच् शकारः कर्तव्यः ॥

( प्रदीपः ) परत्वादिति । यत्तु सुपि चेति दीर्घत्वम्, तत् सन्निपातलक्षणपरिभाषावशान्न प्रवर्तते । यत्त्वन्यत्रोक्तं नामि दीर्घोत्परत्वात् सुपि चेति भवितव्यमिति तत्सन्निपातपरिभाषाया अनित्यत्वाश्रयेणेति न विरोधः ॥

( उद्द्योतः ) अनित्यत्वाश्रयणेनेति । ननु तत्सूत्रविषये तत्परिभाषायाः कष्टायेत्यादिनिर्देशैरनित्यत्वावश्यकत्वेन नाम्विषयेऽपि तत्त्वमाश्रित्य शः प्रत्याख्येय इति चेन्न । नलोपविधायकेऽङ्गावयवश्नः परस्य नस लोप इत्यर्थेऽनैमित्तिकतयान्तरङ्गत्वेन सुपिचेत्यस्य परनिमित्तकतया बहिरङ्गत्वेन तस्यासिद्धतया नलोपप्राप्तेरित्याशयात्॥ भाष्ये परत्वादित्यन्तरङ्गत्वस्याप्युपलक्षणम् । किं च सुपि चेत्यतो नामीति नित्यं विशेषाभावेपि शास्त्रप्राप्तेः सत्त्वात् ॥ ध्वनितं चेदमायादय इति सूत्रे । इको झलित्यत्र च भाष्ये इति वदन्ति ॥७८॥

( आक्षेपभाष्यम् )

अथ क्रियमाणेऽपि शकारे इह कस्मान्न भवति? विश्नानां प्रश्नानामिति ।

( समाधानभाष्यम् )

लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥ रुधादिभ्यः ॥ ७८ ॥

( प्रदीपः ) लक्षणेति । लाक्षणिकस्यानुमीयमानरूपत्वात् प्रतिपदोक्तस्य तु प्रत्यक्षत्वादिति भावः ॥ ७८ ॥

(४२५ तनादिगणे उविकरणविधिसूत्रम् ॥३।१।४ आ. १३)

## ६९६ तनादिकृञ्भ्य उः ॥ ३।१।७९ ॥

( कृञ्ग्रहणप्रत्याख्यानाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं करोतेः पृथग्ग्रहणं क्रियते, न 'तनादिभ्य' इत्येवोच्येत ? ।

( समाधानभाष्यम् )

अन्यानि तनोत्यादिकार्याणि मा भूवन्निति । कानि ? । अनुनासिकलोपादीनि ॥

---

१ श्नप्रत्ययस्येत्यर्थः । ( र. ना. )

२ "नामि" इति दीर्घत्वे कृते 'नात्' इति व्यपदेशाभावान्न भविष्यति" इति पदमञ्जरी ॥

३ 'अतोऽम्' इति सूत्रभाष्यप्रमाणेन 'कष्टाय' इत्यस्य सामान्यापेक्षया 'सुपि च' इति दीर्घविषय एव संनिपातपरिभाषाया अनित्यत्वाश्रयणेन पूर्वं दीर्घमप्राप्तावपि तस्य पूर्वस्याद्धियौ स्थानिवत्त्वान्न शब्द एवायमिति नलोपः स्यादेवेति पदमञ्जरी ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( समाधानबाधकभाष्यम् )

दैवरक्ताः किंशुकाः । अनुनासिकाभावादेवानुनासिकलोपो न भविष्यति ॥

( प्रयोजनान्तरभाष्यम् )

इदं तर्हि तनादिकार्यं मा भूत् "तनादिभ्यस्तथासोः" इति ॥

( प्रयोजनान्तरनिरासभाष्यम् )

ननु च भवत्येवात्र "ह्रस्वादङ्गादि"ति ॥

( प्रयोजनान्तरसाधकभाष्यम् )

तेनैव यथा स्याद्, अनेन मा भूदिति ॥

(उद्योतः) तनादिकृ ॥ ७९ ॥ भाष्ये अनेन माभूदिति । अन्यथा तस्यासिद्धत्वादनेनैव स्यादिति भावः ॥

( प्रयोजनान्तरबाधकभाष्यम् )

कः पुनरत्र विशेषः-तेन वा सति, अनेन वा ? ।

( प्रयोजनान्तरसाधकभाष्यम् )

तेन सति सिज्लोपस्यासिद्धत्वाच्चिण्वद्भावः सिद्धो भवति । अनेन पुनः सति चिण्वद्भावो न स्यात् ॥

( प्रयोजनान्तरबाधकभाष्यम् )

अनेनापि सति सिद्धश्चिण्वद्भावः । कथम् ? । विभाषा लुक् । यदा न लुक्, तदा सिज्लोपः । तत्र सिज्लोपस्यासिद्धत्वाच्चिण्वद्भावो वा भविष्यति ॥

( प्रदीपः ) तनादि ॥ ७९ ॥ विभाषालुगिति । ननु येन नाप्राप्तिन्यायेन लुका ह्रस्वादङ्गादिति लोपो बाध्यत इति कथं लुगभावपक्षे लोपः स्यात् । नैष दोषः । यत्र पक्षे लुक् प्रवर्तते तत्रासौ लोपस्य बाधकः । न त्वप्रवर्तमानः ॥ ७९ ॥

( उद्योतः ) ननु येननेति । न च ह्रस्वादङ्गादित्यस्यासिद्धत्वात्कथं तेन येननाप्राप्तिन्यायः । तनादिपाठस्तु विकरणार्थः स्यात् विकल्पोऽपि तनादौ चरितार्थं इति वाच्यम् । असिद्धत्वेपि यैदिदं न स्यात्तदा स्यादेव ह्रस्वादङ्गादित्यस्य प्राप्तिरित्याशयात् ॥ यदुत्सर्गप्रवृत्तौ विकल्पवैयर्थ्यम्, स उत्सर्गोऽपवादाभावेऽपि न प्रवर्ततेऽन्यस्तु प्रवर्तत एवेत्युत्तराशयः ॥

तनादित्वात्कृञः सिद्धं, सिज्लोपे च न दुष्यति । चिण्वद्भावे न दोषः स्यात्, सोपि प्रोक्तो विभाषया ॥ तनादिकृञ्भ्यः ॥ ७९ ॥

(उद्योतः) भाष्ये सोपि प्रोक्त इति । लुक् चिण्वद्भावश्चेत्यर्थः ॥ एवं च सूत्रे कृञ्ग्रहणं प्रत्याख्यातम् । एतेन कृञ्ग्रहणं गणकार्यानित्यत्वज्ञापनार्थम् । तेन न विश्वसेदित्यादि सिद्धिरित्यपास्तम् ॥ नविश्वसेदित्याद्यसाध्वेव ॥ ७९ ॥

( ४२६ उविकरणविधिसूत्रम् ॥ ३ । १ । ४ आ. १४ )

# ७९७ धिन्विकृण्व्योरच ॥ ३।१।८० ॥

( अत्वविधिप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

क्वायमकारः श्रूयते ? ।

( उत्तरभाष्यम् )

न क्वचिच्छ्रूयते । लोपोस्य भविष्यति="अतो लोप आर्धधातुके" इति ॥

( आक्षेपभाष्यम् )

यदि न क्वचिच्छ्रूयते किमर्थमयमुच्यते । न 'लोपः' इत्येवोच्येत ॥

( आक्षेपबाधकभाष्यम् )

नैवं शक्यम् । लोपे सति गुणः प्रसज्येत । अत्वे पुनः सति अकारलोपस्य स्थानिवद्भावाद् गुणो न भविष्यति ॥

( आक्षेपसाधकभाष्यम् )

ननु च लोपेऽपि सति "न धातुलोप आर्धधातुके" इति प्रतिषेधो भविष्यति ॥

( उद्योतः ) धिन्विकृण्व्योः ॥ ८० ॥ भाष्ये ननु च लोपे सति न धात्विति । समुच्चयविषये एकसमभिव्याहृतस्यापरसमभिव्याहृतार्थाधीनत्वप्रतीतेरनुभवसिद्धतया द्विर्वचनेऽचीतिवत्तद्भावभावितामात्रेणार्धधातुकनिमित्तो लोपस्तद्भावभाविता च समकालोत्पत्तावपि अन्वयव्यतिरेकाभ्यां संनियोगशिष्टानां सहप्रवृत्तेर्निवृत्तेश्चेति भावः ॥

( आक्षेपबाधकभाष्यम् )

आर्धधातुकनिमित्ते लोपे स प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः ॥ अपि च प्रत्याख्यायते खल्वपि स योगः । तस्मिन्प्रत्याख्याते गुणः स्यादेव । तस्मादत्वं वक्तव्यम् ।

( प्रदीपः ) धिन्वि ॥ ८० ॥ आर्धधातुकनिमित्त इति । धातुलोप इति बहुव्रीह्याश्रयणादिति भावः ॥ न चैष इति । सन्नियोगशिष्टत्वान्निमित्तनिमित्तिभावाऽप्रसङ्गः ॥

( उद्योतः ) सन्नियोगेति । ननु तादृशविषये परनिमित्तत्वाभावेऽपि केवलनिमित्तत्वाभावे मानाभावः । जीरदानोरुदाहरणत्वमिति वदतो वाक्यकारस्य तद्भावभावितामात्रेणैव निमित्तत्वनिवेशस्येष्टत्वाच्चेति चेन्न । पूर्वकालवर्तिबुद्ध्या विषयीकृतस्यैव निमित्तत्वमित्याशयात् ॥ भाष्ये अपि च प्रत्याख्यायत इति । अनेन सूत्रमतापेक्षया प्रत्याख्यानवादिमतं प्रबलमिति ध्वनितम् ॥ एतन्मूलकमेव पठ्यते यथोत्तरं मुनीनां प्रामाण्यमिति ॥ ८० ॥

१ दैवरक्ता इति । किंशुकेषु रक्तत्वं न मनुष्ययत्नसाध्यम् । किंतु दैवकृतमेव स्वारसिकमेव यथा तथैव कृञि अनुनासिकश्रवणाभावस्य स्वतः सिद्धत्वेनैव न लोपापेक्षाऽनुनासिकश्रवणाभावायेति भावः ॥

२ 'ह्रस्वादङ्गात्' इत्यस्य ॥

३ 'तनादिभ्यस्तथासोः' इत्यनेनेत्यर्थः ॥

४ 'तनादिभ्यस्तथासोः' इति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( नकारोच्चारणप्रत्याख्यानाधिकरणम् )

( आक्षेपभाष्यम् )

अथ किमर्थं नुमनुषक्तयोर्धिन्विकृण्व्योर्ग्रहणं क्रियते, न 'धिविकृव्योः' इत्येवोच्येत ॥

( आक्षेपबाधकभाष्यम् )

'धिविकृव्योः' इतीयत्युच्यमाने अत्वे कृते अनिष्टे देशे नुम् प्रसज्येत ॥

(प्रदीपः) अत्वे कृत इति । अकारात्परः स्यादित्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

इदमिह संप्रधार्यम्—नुम् क्रियताम्, अत्वमिति। किमत्र कर्तव्यम्? । परत्वान्नुमागमः ॥

( आक्षेपबाधकभाष्यम् )

अन्तरङ्गमत्वम् । कान्तरङ्गता? । प्रत्ययोत्पत्तिसंनियोगेनात्वमुच्यते । उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्य नुमागमः ॥

( प्रदीपः ) उत्पन्ने प्रत्यय इति । नुम्विधावङ्गाधिकारादिति भावः ॥ ८० ॥

( आक्षेपसाधकभाष्यम् )

नुमप्यन्तरङ्गः । कथम्? । वक्ष्यत्येतत् *नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थम्* इति । उभयोरन्तरङ्गयोः परत्वान्नुमागमः । तस्माद् 'धिविकृव्योरिति' वक्तव्यम् ॥ धिन्विकृण्व्योः ॥ ८० ॥

(४२७ श्नाविकरणस्थं शानजादेशविधिसूत्रम्॥३।१।४आ.१५)

## ७०० हलः श्नः शानज्झौ ॥ ३।१।८३ ॥

( शानचि शकारप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थः शकारः? ।

( आक्षेपबाधकभाष्यम् )

'शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञा, "सार्वधातुकमपित्" इति ङित्त्वम् 'क्क्ङिति' इति गुणप्रतिषेधो यथा स्यात्—कुषाण पुषाणेति ॥

( सिद्धान्तिसमाधानभाष्यम् )

अत उत्तरं पठति—

( १८६५ शानचि शकारवैयर्थ्यवार्तिकम् ॥ १ ॥ )

**॥ * ॥ श्नाविकारस्य शित्करणानर्थक्यं स्थानिवत्त्वात् ॥ * ॥**

( भाष्यम् ) श्नाविकारस्य शित्करणमनर्थकम् । किं कारणम् । स्थानिवत्त्वात् । शितोयमादेशः स्थानिवद्भावात् शिद्भविष्यति ॥

( १८६६ शानचि शकारस्य प्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अर्थवत्तु ज्ञापकं सार्वधातुकादेशे अनुबन्धास्थानिवत्त्वस्य ॥ * ॥**

( भाष्यम् ) अर्थवत्तु श्नाविकारस्य शित्करणम् । कोर्थः? । ज्ञापनार्थः । किं ज्ञाप्यते? । एतज्ज्ञापयत्याचार्यः—'सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्ति' इति ॥

( उद्योतः ) हलः श्नः शा ॥८३॥ भाष्ये ज्ञापनार्थ इति । ज्ञापनरूपोर्थः प्रयोजनमित्यर्थः ॥

( प्रयोजनप्रश्नभाष्यम् ॥ )

किमेतस्य ज्ञापने प्रयोजनम्? ।

( १८६७ प्रयोजनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ प्रयोजनं हि तातङोरपित्त्वम् ॥ * ॥**

( भाष्यम् ) हेः पित्त्वं न प्रतिषेध्यम् । पितोयमादेशः स्थानिवद्भावात्पित्स्यात् । 'सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्तीति नायं पिद्भविष्यति ॥

तातङि च ङकारो नोच्चार्यो भवति । पितोयमादेशः स्थानिवद्भावात्पित् स्यात् । 'सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्तीति नायं पिद्भविष्यति' ॥

( उद्योतः ) हेः पित्त्वं नेति । अपिद्ग्रहणं न कार्यमित्यर्थः । शङ्कते—पितोऽयमिति ॥ उत्तरयति—सार्वधातुकादेश इति ।

( १८६८ प्रयोजनवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ तबादिषु चाङित्त्वम् ॥ * ॥**

( भाष्यम् ) तबादिषु च ङित्त्वं न प्रतिषेध्यम् । शृणोत ग्रावाणः । ङित इमे आदेशा स्थानिवद्भावान्ङितः स्युः । सार्वधातुकादेशेनुबन्धा न स्थानिवद्भवन्तीति नेमे ङितो भविष्यन्ति ॥

( प्रदीपः ) हलः श्नः शा ॥ ८३ ॥ तबादिष्विति ।

---

१ एतद्भाष्याक्षरस्वारस्येन 'बह्वपेक्षे संज्ञापेक्षे च बहिरङ्गत्वं स्फुटमेव लभ्यते इति 'संज्ञाकृतबहिरङ्गत्वस्य शास्त्रेऽनाश्रयणात्' इति नागेशोक्तिर्यादृक् तादृक् सुधीभिर्विचार्या ॥

२ काशीस्थपण्डितैस्तु 'ज्ञापकार्थम्' इति मुद्रितम् ॥

३ आशङ्कायां लिङ् अत एवेदं भाष्यं शङ्कापरत्वेनोत्थापितं नागेशेन।(र.ना.)

४ 'ज्ञापनफलं प्रदर्शयन् ज्ञापितवचनाभावे मात्रामापत्तिं दर्शयति—' इत्येवोचितम् ॥ इति दाधिमथाः ॥

५ 'ज्ञापितेन वचनेन तामापत्तिं परिहरति—' इत्येवोचितम् ॥ इति तु दाधिमथाः ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तप्तनप्तनथनाश्चेति शृणोतेत्येवमादौ ये तिङां ङितामादेशा विधीयन्ते ते तबादयः।

( उद्योतः ) तबादिषु च ङित्त्वं न प्रतिषेध्यमिति भाष्ये ङित्त्वप्रतिषेधाय पित्त्वं न कार्यमिति भावः॥ तबादिष्विति निर्धारणे सप्तमी॥ न च स्थानिवत्त्वप्रयुक्तङित्त्ववारणेऽपि स्थानिवद्भावेन सार्वधातुकत्वात्सार्वधातुकमपिदिति ङित्त्वप्रतिषेधाय पित्त्वमावश्यकमिति वाच्यम्। एतदाशयेनैव क्रियन्ते न्यास एवेति वक्ष्यत इत्यदोषात्। हेरपित्त्वमनुदात्तसेः स्थान आन्तरतम्यात्प्राप्तस्यानुदात्तहेर्वारणार्थमावश्यकमिति तातङोऽपि ङित्त्वमन्त्यादेशार्थमावश्यकमिति तद्भावः॥

( १८६९ ज्ञापनदूषणवार्तिकम्॥ ५॥ )

## ॥ * ॥ तस्य दोषो मिप आदेशे पिद्भावः ॥ * ॥

( भाष्यम् ) तस्यैतस्य लक्षणस्य दोषो मिप आदेशे पितोऽभावः। अचिनवमकरवम्। पितोयमादेशः स्थानिवद्भावात् पिद्भवति। 'सार्वधातुकादेशे अनुबन्धा न स्थानिवद्भवन्तीति नायं पित्स्यात्॥ अत्यल्पमिदमुच्यते-'मिप आदेशः' इति। 'तिप्सिम्मिपामादेशा इति वक्तव्यम्'। वेद वेत्थ॥

( १८७० दूषणवार्तिकम्॥ ६॥ )

## ॥ * ॥ विदेर्वसोः शित्त्वम् ॥ * ॥

( भाष्यम् ) विदेरुत्तरस्य वसोः शित्त्वं वक्तव्यम्। शितोयमादेशः स्थानिवद्भावाच्छिद्भवति। 'सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नायं शित्स्यात्॥

( १८७१ दूषणपरिहारवार्तिकम्॥ ७॥ )

## ॥ * ॥ कित्करणाद्वा सिद्धम् ॥ * ॥

( भाष्यम् ) अथ वा अवश्यमत्र सामान्यग्रहणाविघातार्थः ककारोनुबन्धः कर्तव्यः। क सामान्यग्रहणाविघातार्थेनार्थः? । "वसोः संप्रसारणम्" इति। तेनैव यत्नेन गुणो न भविष्यति॥ अस्य ज्ञापकस्य सन्ति दोषाः, सन्ति च प्रयोजनानि॥ समा दोषा भूयांसो वा। तस्मान्नार्थोनेन ज्ञापकेन।

( उद्योतः ) अवश्यमत्रेति। उकार इत्संज्ञकत्वेपि सामान्यग्रहणार्थो वा तदनुबन्धकपरिभाषाप्रवृत्त्यर्थो वेति सन्देहः स्यादिति॥ तस्मान्नार्थोऽनेनेति। न च वक्ष्यमाणेति ङीबापत्तिर्लङादेशत्वेन टित्वादिति वाच्यम्। सत्यभिधाने तत्राजादिपाठाट्टाप्सिद्धेः॥ एतेनेदं शित्त्वं क्वचित्स्थानिवत्त्वेनानुबन्धकार्याभावस्य ज्ञापकमित्यपास्तम्॥

( आक्षेपभाष्यम् )

कथं यानि प्रयोजनानि।

( समाधानभाष्यम् )

तानि क्रियन्ते न्यास एव॥

( आक्षेपभाष्यम् )

एवमपि भवेत् पित्करणसामर्थ्यात् पित्कृतं स्यात् ङित्करणसामर्थ्याद् ङित्कृतम्। यत्तु खलु पिति ङित्कृतं प्राप्नोति ङिति च पित्कृतम्। केन तन्न स्यात्। तस्माद्वक्तव्यं पिन्न ङिद्भवति ङिच्च पिन्न भवतीति।

( प्रदीपः ) एवमपीति। पित्त्वनिमित्तमनुदात्तत्वं भवतु ब्रूताद्भवानितीडागमश्च ङित्त्वनिमित्तश्च गुणवृद्धिप्रतिषेध इत्यर्थः।

( उद्योतः ) भाष्य एवमपीत्यस्य केन तन्न स्यादित्यनेनान्वयः॥ पिति ङित्कृतमिति। अवेदित्यादौ लङस्तिपः पित्त्वादनुदात्तत्वमस्तु। स्थानिवद्भावेन ङित्त्वाद्गुणनिषेधश्च प्राप्नोतीत्यर्थः॥ आदेशविधौ विशिष्टस्याननुवादात् ङित्त्वाद्यतिदेशेऽनल्विधाविति निषेधाप्रवृत्तेः। ङिति पित्कृतमित्यस्योदाहरणमाह—ब्रूतादिति। अत्रानुदात्तत्वं ब्रुव ईडिति ईडागमश्चापाद्यौ॥ ८३॥

( समाधानभाष्यम् )

न वक्तव्यम्। एवं वक्ष्यामि—'सार्वधातुकं ङिद्भवति, पिन्न' एवं तावत्पितो ङित्त्वं प्रतिषिद्धम्। ततः—'असंयोगाल्लिट् किद्भवति ङिच्च पिन्न भवती'ति। एवं ङितः पित्त्वं प्रतिषिद्धम्॥ हलः श्नः॥ ८३॥

( प्रदीपः ) पिन्नेति। अपिदिति प्रसज्यप्रतिषेध आश्रीयते। पिद्भवन् ङिन्न भवतीत्यर्थः। योगविभागाच्च यावती सार्वधातुकस्य ङित्त्वप्राप्तिः सर्वासौ निषिध्यते॥ असंयोगादिति। अत्र ङिदपिदिति वर्तते। तेन ङिद्भवन् पिन्न भवतीति तातङः स्थानिवद्भावप्राप्तं पित्त्वं निषिध्यते॥ ८३॥

---

(४२८ श्नाविकरणस्य शायजादेशविधिसूत्रम्॥ ३।१।४ आ. १६)

# ७०१ छन्दसि शायजपि ॥ ३।१।८४ ॥

( १८७२ अहौशायज्विधिवार्तिकम्॥ १॥ )

## ॥ * ॥ शायच् छन्दसि सर्वत्र ॥ * ॥

( भाष्यम् ) शायच् छन्दसि सर्वत्रेति वक्तव्यम्॥ क सर्वत्र? । हौ चाहौ च किं प्रयोजनम्? । महीरस्कभायद्, यो अस्कभायद् उद्गृभायत उन्मथायतेत्येवमर्थम्॥ छन्दसि शायजपि॥ ८४॥

( प्रदीपः ) छन्दसि॥ ८४॥ अस्कभायदिति। स्कन्भुः सौत्रो धातुः, लङि तिप्, श्नः शायच्, अडागमः॥ ८४॥

( उद्योतः ) छन्दसि शाय॥ ८४॥ अडागम इति। लुङ्लङ्लृङ्क्ष्विति॥ ८४॥

---

१ आनस्येति भावः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ४२९ छन्दसि व्यत्ययविधिसूत्रम् ॥ ३।१।४ आ. १७ )

## ७०२ व्यत्ययो बहुलम् ॥ ३।१।८५ ॥

( १८७३ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ योगविभागः ॥ * ॥

( भाष्यम् ) योगविभागः कर्तव्यः—"व्यत्ययः" । व्यत्ययो भवति स्यादीनामिति । आण्डा शुष्णस्य भेदति । भिनत्तीत्येवं प्राप्ते । स च न मरति । न म्रियत इति प्राप्ते ॥ ततो "बहुलम्" । बहुलं छन्दसि विषये सर्वे विधयो भवन्तीति । सुपां व्यत्ययः, तिङां व्यत्ययः, वर्णव्यत्ययः, लिङ्गव्यत्ययः, पुरुषव्यत्ययः, कालव्यत्ययः, आत्मनेपदव्यत्ययः, परस्मैपदव्यत्यय इति ॥ सुपां व्यत्ययः—युक्ता मातासीद्धुरि दक्षिणायाः । दक्षिणायामिति प्राप्ते ॥ तिङां व्यत्ययः—चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते ॥ वर्णव्यत्ययः—त्रिष्टुभौजः शुभितमुग्रवीरम् । शुधितमिति प्राप्ते ॥ लिङ्गव्यत्ययः—मधोस्तृप्ता इवासते । मधुन इति प्राप्ते ॥ पुरुषव्यत्ययः—अधा स वीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते ॥ कालव्यत्ययः—श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन । आधातायष्टेति प्राप्ते ॥ आत्मनेपदव्यत्ययः—ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते ॥ परस्मैपदव्यत्ययः—प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत इति प्राप्ते ॥

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।

व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन ॥ व्यत्ययो ॥ ८५ ॥

( उद्द्योतः ) व्यत्ययो ॥ ८५ ॥ भाष्ये स्यादीनामिति । स्यतासिप्रभृतीनामित्यर्थः ॥ मधुन इति प्राप्ते इति । अमृतक्षीरान्यतरवाचि नित्यनपुंसकाभिप्रायमिदम् ॥ उपग्रहः । लादेशव्यङ्ग्यं स्वार्थत्वादि । इह तत्प्रतीतिनिमित्ते परस्मैपदात्मनेपदे उपग्रहशब्देन लक्षणयोच्येते ॥ ८५ ॥

---

( ४३० अङ्विधिसूत्रम् ॥ ३ । १ । ४ आ. १८ )

## ७०३ लिङ्याशिष्यङ्[2] ॥ ३।१।८६ ॥

( आक्षेपभाष्यम् )

अयमाशिषि अङ् विधीयते । तस्य किं प्रयोजनम् ? ।

( १८७४ प्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आशिष्यङः प्रयोजनं स्थागागमिवचिविदयः ॥ * ॥

( भाष्यम् ) स्था—उपस्थेयं वृषभं तुग्रियाणाम् । स्था ॥ गा—अञ्जसा सत्यमुपगेयम् । गा ॥ गमि—यज्ञेन प्रतिष्ठां गमेयम् । गमि ॥ वचि—मन्त्रं वोचेमाग्नये । वचि ॥ विदि—विदेयमेनां मनसि प्रविष्टाम् । विदि ॥

( उद्द्योतः ) लिङ्याशि ॥ ८६ ॥ गास्थोरङभावे अतो येय इति न स्यात् ॥

( १८७५ अङ्विधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ शकिरुहोश्च ॥ * ॥

( भाष्यम् ) शकिरुहोश्चेति वक्तव्यम् । शकेम त्वा समिधं [ साधया धियः ] । अस्रवन्ती मारुहेमा स्वस्तये ।

( १८७६ अग्विधिवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ दृशेरक् पितरं च दृशेयं मातरं च दृशेयम् ॥ * ॥

( भाष्यम् ) दृशेरग्वक्तव्यः । पितरं च दृशेयं मातरं च दृशेयमित्येवमर्थम् ॥

( प्रदीपः ) लिङ्याशि ॥ ८६ ॥ दृशेरगिति । अङि गुणः स्यात् ॥

(उद्द्योतः) अङिगुण इति । ऋदृशोऽङीत्यनेनेति भावः ॥

( आडागमविध्याक्षेपभाष्यम् )

इह उपस्थेयामेत्यत्र आडपि वक्तव्यः । न ह्यङैव सिध्यति ॥

( प्रदीपः ) उपस्थेयामेति । स्था लिङ् मस् यासुट् अङ् आकारलोपः सलोपश्च । अतो येय इति इय् । मस्याडागमः कार्योऽन्यथा यलोपे सति उपस्थेमेति स्यात् ॥ ८६ ॥

इति श्रीमदुपाध्यायजैयटपुत्रकैयटविरचितेभाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमपादे चतुर्थमाह्निकम् ॥

( उद्द्योतः ) भाष्ये आडपीति । मसेति शेषः ॥ आकारलोप इति । अङमाश्रित्यातो लोप इटि चेत्याल्लोपः ॥

( समाधानभाष्यम् )

न वक्तव्यः । सार्वधातुकत्वात् सलोपः, आर्ध-

---

१ एतदादिर्ग्रन्थः "षष्ठीयुक्तश्छन्दसि वा" ( १।४।९ ) सूत्रभाष्येपि समुपलभ्यते । तस्मात् तत्रत्य प्रदीपोद्द्योतौ द्रष्टव्यौ ॥

२ यद्यपि 'कर्मवत्' इत्यग्रिमसूत्रे भाष्यकृता 'क्रियते न्यास एव "लिङ्याशिष्यङ्" इति "द्विलकारको निर्देशः" इति वक्ष्यमाणत्वेन ल्कारद्वयवानेव पाठः सिद्धान्तिसंमतः । तथापि पूर्वपक्षोत्थानाय पूर्वपक्षिसंमतैकल्कारपाठं निर्दिशति ॥

३ लिखितपुस्तकेषु नोपलभ्यते ।

४ 'लिङः सलोपोऽनन्त्यस्य' इत्यनेनेति शेषः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

धातुकत्वादेत्वम् । तत्रोभयलिङ्गत्वात् सिद्धम् ॥ लिङ्याशिष्यङ् ॥ ८६ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

( उद्द्योतः ) भाष्ये आर्धधातुकत्वादेत्वमिति । वान्यस्य संयोगादेरित्यनेन ॥ अङभावोऽपि छान्दसत्वादिति बोध्यम् ॥ उभयलिङ्गत्वादिति । छन्दस्युभयथेत्यनेनोभयसंज्ञकत्वादित्यर्थः ॥८६॥

इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते तृतीयाध्यायस्य प्रथमपादे चतुर्थमाह्निकम् ॥

( ४३१ कर्मवद्भावसूत्रम् ॥ ३ । १ । ५ आ. १ सू. )

## ७०४ कर्मवत्कर्मणा तुल्यक्रियः ॥ ३ । १ । ८७ ॥

( आक्षेपभाष्यम् )

**वत्करणं किमर्थम् ?।**

(प्रदीपः) कर्मवत्कर्मणा ॥ ८७ ॥ वत्करणमिति । विनापि वतिना परार्थे शब्दप्रयोगात्तदर्थलाभ इति भावः ॥

( उद्द्योतः ) कर्मवत् ॥ ८७ ॥ तेन तुल्यमिति वतिः । उपमेये प्रथमादर्शनात् ॥ कर्मणेति परिभाषिकस्य कर्मणो ग्रहणं कृत्रिमत्वात्सामर्थ्याच्च ॥ तुल्यक्रिय इत्येतावतैव क्रियया तुल्यत्वस्य लाभात् ॥ हि अक्रियया क्रियातुल्या भवति ॥

( समाधानभाष्यम् )

**स्वाश्रयमपि यथा स्याद् भिद्यते कुसूलेनेति । अकर्मकाणां भावे लो यथा स्यात् ॥**

( प्रदीपः ) स्वाश्रयमपीति । असति वत्करणे कर्तुः कर्मसंज्ञा विज्ञायेत । ततश्चाकर्मकव्यपदेशाभावाद्भावे लो न स्यात् । वत्करणे तु सति कर्मकार्याणि कर्तुरतिदिश्यन्ते न तु स्वाश्रयं कार्यं निवार्यत इति भावे लः सिद्धो भवतीति लादेशेन कर्तुरनभिधानात् तृतीया भवति भिद्यते कुसूलेनेति । न चासत्यपि वत्करणे लान्तस्य कर्तेति वक्ष्यमाणेन भावे लः सिध्यति । यस्माद्भावे लविधिर्लान्तस्य कार्यमिति स्वाश्रयनिवारणं स्यादेव ॥

( उद्द्योतः ) ननु वत्यर्थलाभे स्वाश्रयमपि भविष्यतीत्यत आह—असतीति । तदभावे तल्लाभ एव न भवतीति भावः ॥ संज्ञेति । अधिशीङिति वदिति भावः ॥ अकर्मकव्यपदेशाभावादिति । एतच्छास्त्रीयकर्मसंज्ञकान्वयित्वमेव सकर्मकत्वमिति भावः ॥ ननु भावे ले कर्तरि वा ले को विशेषोऽत आह—लादेशेनेति ॥ तृतीया भवतीति । कर्तरि लादेशे तु सा दुर्लभेति भावः॥ न चासत्यपीति । लान्तवाच्यः कर्ता कर्मेत्यर्थं मत्वा शङ्का । ततश्च यावत्कर्तरि न लस्तावत्कर्मसंज्ञाऽभावादकर्मकत्वेन भावे लेऽपि सिध्यतीत्यर्थः ॥ लान्तस्य कार्ये कर्तव्ये कर्ता कर्मेत्यर्थं मत्वोत्तरयति—यस्मादिति । ततश्च भावे लेऽपि कर्तव्ये कर्तुः कर्मत्वं स्यात् । ततश्चाकर्मकत्वाभावात्तु भावे लो न स्यादिति भावः ॥ लः कर्मणीति विधेर्यैर्विध्युक्तरीत्या साधुत्वान्वाख्यापकत्वाल्लान्तकार्यत्वं बोध्यम् ॥ वस्तुतो लवाच्यस्यैव कर्तुः कर्मवत्त्वेन नेदं वतेः प्रयोजनम् । नमते दण्ड इत्यादौ शप्सिद्धिस्तु मुख्यं प्रयोजनं वक्ष्यति ॥

( आक्षेपभाष्यम् )

**कर्मणेति किमर्थम् ?।**

( प्रदीपः ) कर्मणेति किमिति । धातुवाच्या क्रिया कर्तृकर्मणोरेव समवेता तत्र कर्तृस्थया क्रियया तुल्यक्रियः कर्ता न संभवतीति कर्मस्थैव क्रियाऽऽश्रयिष्यत इति भावः ॥

( उद्द्योतः ) धातुवाच्येति । प्रत्यासत्त्या धातुवाच्यक्रियापेक्षयैव तुल्यक्रियत्वस्य ग्रहणमिति भावः ॥

( भाष्यम् )

**करणाधिकरणाभ्यां तुल्यक्रियः कर्ता यः स कर्मवन्मा भूत् । साध्वसिश्छिनत्ति, साधु स्थाली पचतीति ॥**

( प्रदीपः ) साध्वसिश्छिनत्तीति । ननु करणादिव्यापारो धातुना नाभिधीयते, यदा त्वभिधीयते तदा तेषां कर्तृत्वमेव न तु करणादिरूपता । न च कर्तृकर्मव्यतिरेकेण कारकान्तराश्रयणं क्रियाया उपपद्यते । नैष दोषः । यद्यपि करणादिव्यापारो धातुवाच्यो न भवति तथापि स्वव्यापारं कुर्वन्ति करणादीनि प्रधानक्रियां साधयन्ति । तत्रावश्यं तुल्यक्रियत्वं कर्तुराश्रयितुमवस्थान्तरमपेक्षणीयम् । अवस्थान्तरयुक्तक्रियया तुल्यक्रियः कर्तेति । ततश्च कर्मावस्थावत्करणाद्यवस्था अप्याश्रीयेरन् प्रधानव्यापारश्च कर्तृकर्मणोरेव स्थितो न त्ववान्तरव्यापारोऽपि, तस्य सर्वत्रैव कारके व्यवस्थानात् । यद्यपि स्वव्यापारे कर्तृत्वं तस्य, तथापि प्रधानक्रियापेक्षलब्धकरणादिव्यपदेशवस्तुव्यवस्थितक्रियातुल्यत्वग्रहणनिवारणाय कर्मणेति कर्तव्यमेव । यद्यपि करणादिव्यापारस्य धातुवाच्यत्वं नास्ति तथापीह सूत्रे धातुवाच्यत्वस्य शब्देनानाश्रयणाद्वस्तुसद्भावाश्रयेण प्रसङ्गः स्यादेव ॥ **साधु स्थाली पचतीति ।** स्थाल्या अधिकरणत्वे यादृशी धारणसंभवनादिरूपा क्रिया तादृश्येव कर्तृत्वेपीति स्यात्कर्मवत्त्वम्[1] ॥

( उद्द्योतः ) प्रत्यासत्तिमाश्रित्य शङ्कते—नन्विति ॥ कारकान्तराश्रयणमिति । कारकान्तरस्याश्रयत्वेनाश्रयणमित्यर्थः ॥ व्याप्तिन्यायाश्रयेणोत्तरयति—नैषदोष इति ॥ स्वव्यापारमिति । स्वव्यापारावेशं विना क्रियासाधकत्वायोगादिति भावः ॥ तत्रावश्यमिति । एकावस्थायां भेदनिबन्धनतुल्यत्वासंभवादिति भावः ॥ करणाद्यवस्था अपीति । व्याप्तिन्यायादिति भावः ॥ प्रधानव्यापारः धात्वर्थव्यापारः ॥ कर्तृत्वमिति । आश्रयतामात्रमित्यर्थः । तन्निरूपितकरणत्वाभावप्रतिपादनपरं चैतत् । प्रधानक्रियापेक्षो लब्धः करणादिव्यपदेशो येन वस्तुना तत्र व्यवस्थिता या क्रिया

1 'कर्मवद्भावः' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्तुल्यत्वग्रहणनिवारणायेत्यर्थः । यदि तु लक्ष्यानुरोधात्प्रत्यासत्त्या धातुवाच्यक्रिययैव तुल्यक्रियत्वं विवक्ष्यते ॥ प्रत्यासत्तिस्तु यस्य धातोर्यत्कर्म तत्रत्यक्रियया तस्यैव धातोः कर्ता यदि तुल्यक्रिय इति वक्ष्यमाणार्थलाभार्थमावश्यकी, तदा नेदं प्रयोजनम् । अतो यत्र कर्मणि क्रियाकृतविशेषस्तदर्थमिति प्रयोजनान्तरं वक्ष्यति ॥

( आक्षेपभाष्यम् )

**तुल्यक्रिय इति किमर्थम् ? ।**

**( प्रदीपः ) तुल्यक्रिय इति किमर्थमिति ।** कर्मणेति तृतीया तुल्यशब्दाध्याहारेण व्याख्यास्यते । तुल्यक्रियत्वाच्च कर्तुस्तुल्यत्वमिति प्रश्नः । अथवा क्रियमाणेपि तुल्यक्रियग्रहणेऽतिप्रसङ्ग इति प्रश्नः ॥

**( उद्योतः )** ननु कर्मकर्त्रोः साधनयोरत्यन्तभेदात्कथं तुल्यत्वमत आह—तुल्यक्रियत्वाच्चेति ॥ अतिप्रसङ्ग इति प्रश्न इति । इति व्युत्पादयितुं प्रश्न इत्यर्थः ॥

( समाधानभाष्यम् )

**पचत्योदनं देवदत्तः ॥**

**( प्रदीपः ) पचत्योदनमिति ।** सहार्थेपि तृतीया विज्ञायेत । तेन कर्मणा सह यः कर्ता प्रतिपाद्यत इति भावः । अकर्मकनिवृत्त्यर्था कर्मश्रुतिः स्यादास्ते शेत इति ॥

( आक्षेपभाष्यम् )

**तुल्यक्रिय इत्यप्युच्यमानेत्र प्राप्नोति । अत्रापि हि कर्मणा तुल्यक्रियः कर्ता ।**

**( प्रदीपः ) अत्रापीति ।** तुल्यशब्दस्य साधारणवचनत्वात् कर्तृकर्मसाध्यत्वाच्चात्र क्रियाया इति भावः ।

**(उद्योतः)** साधारणेति । यथा एतौ तुल्यधनावित्यत्रेत्यर्थः ॥ कर्तृकर्मसाध्यत्वाच्चेति । जन्यत्वेनोभयोः साधारणी क्रियेत्यर्थः ॥

( समाधानभाष्यम् )

**न तुल्यक्रियग्रहणेन समानक्रियत्वमभिधीयते । किं तर्हि । यस्मिन्कर्मणि कर्तृभूतेपि तद्वत्क्रिया लक्ष्यते यथा कर्मणि । स कर्मणा तुल्यक्रियः कर्ता कर्मवद्भवतीति ।**

**( प्रदीपः ) समानक्रियत्वमिति ।** साधारणक्रियत्वमित्यर्थः । एतच्च तुल्यक्रियग्रहणादेव लभ्यते । अन्यथा कर्मवत्कर्मणेत्येव ब्रूयात् ॥ **यस्मिन्निति ।** सादृश्यवाची तुल्यशब्द आश्रीयत इत्यर्थः ॥ **कर्तृभूत इति ।** च्वेर्विकल्पेन विधानादत्राभावः । कर्तरि संपन्न इत्यर्थः । अथ वा भूप्राप्तावित्यस्माधृषाद्वेति णिचो विकल्पनाद्रूपमेतत् । तेन कर्तृत्वं प्राप्त इत्यर्थः । वृत्तिविषये कर्तृशब्दः कर्तृत्वे वर्तते । कर्तृकर्मावस्थाभेदाच्च एकस्या अपि क्रियाया भेदाश्रयं सादृश्यमुपपद्यते ॥ **कर्मणेति ।** कर्मस्थया क्रिययेत्यर्थः । साध्यसाधनयोरत्यन्तभेदात् तुल्यत्वासंभवात् कर्मस्था क्रिया कर्मशब्देनोच्यते । भवति हि तात्स्थ्यात्ताच्छब्द्यं यथा मञ्चाः क्रोशन्तीति । तत्र पचत्योदनमित्यत्र कर्तृकर्मव्यापारयोरत्यन्तभेदात्सादृश्याभावात्कर्मवद्भावाभावः । लूयते केदारः स्वयमेवेत्यत्र तु केदारस्य द्विधाभवनलक्षणा कर्मावस्थायां यादृशी क्रिया तादृश्येव कर्त्रवस्थायामपीति भवति कर्मवद्भावः ॥

**(उद्योतः)** समानशब्दे सदृशवाचकत्वस्यापि सत्त्वादाह—साधारणेति ॥ एतच्चेति । किंतर्हीत्यादि चेत्यर्थः । सादृश्यवचनतुल्यशब्दस्य प्रसिद्धतरत्वाच्चेत्यपि बोध्यम् ॥ इत्येवेति । सहार्थयुक्ततृतीयया एकक्रियाजनकत्वरूपसाहित्यलाभेन त्वदुक्तार्थलाभादिति भावः ॥ च्विप्रत्यये कर्तृशब्दे रीङ् स्यादत आह—च्वेरिति । ननु च्वेरभावे 'अकर्तरि कर्तरि भूते' इत्येवोचितं प्रकृतिविकृतिभावप्रतीतये अत आह—अथ वेति ॥ भाष्ये यथा कर्मणीति पूर्वान्वयि ॥ ननु विक्लित्ति द्विधाभवनरूपायाः क्रियाया एकत्वात्कथं भेदनिबन्धनसादृश्योपपत्तिरत आह—कर्तृकर्मेति । तत्तत्संज्ञालाभरूपावस्थाभेदादाश्रयस्य भेदावसाये तन्मूलकः क्रियाया भेदावसाय इति सादृश्योपपत्तिरिति भावः ॥ लक्षणायां हेतुमाह—साध्येति । साध्या क्रिया, साधनं कारकम् ॥ व्यापारयोरिति । व्यापारशब्देन धात्वर्थ उच्यते । तद्धात्वर्थत्वरूपं सादृश्यं न विवक्षितं किं तु सामर्थ्यादवान्तरसादृश्यमेव विवक्षितमिति तात्पर्यम् ॥ भाष्ये कर्ता कर्मवदिति । कर्तरि शबित्यतोऽनुवृत्तस्य कर्तरीत्यस्य प्रथमया विपरिणाम इति भावः ॥

( १८७७ परिसंख्यावार्तिकम् ॥ १ ॥ )

## ॥ * ॥ कर्मवदकर्मकस्य कर्ता ॥ * ॥

**(भाष्यम्) अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यम् । किं प्रयोजनम् ? । सकर्मकस्य कर्ता कर्मवन्मा भूत् । भिद्यमानः कुसूलः पात्राणि भिनत्तीति ।**

**( प्रदीपः ) भिद्यमान इति ।** पात्राणामपि द्विधा भवनं कुसूलस्यापीति प्राप्नोति कर्मवद्भावः ॥

**( उद्योतः ) पात्राणामपीति ।** एवं च भिदेः कर्मसु पात्रेषु या क्रिया सा तत्कर्तरि कुसूलेपीति भावः ॥

( १८७८ परिसंख्यावार्तिकम् ॥ २ ॥ )

## ॥*॥ तथा कर्मदृष्टश्चेत्समानधातौ ॥*॥

**( भाष्यम् ) तथा कर्मदृष्टश्चेत्समानधाताविति वक्तव्यम् । इह मा भूत्—पचत्योदनं देवदत्तः । राध्यत्योदनः स्वयमेवेति ॥**

**( प्रदीपः ) कर्मदृष्ट इति ।** समान एकस्मिन् धातौ कर्ता कर्मत्वेन यदि दृष्टो भवति तदा कर्मवद्भावः, यदा त्वन्यस्मिन् धातौ कर्मान्यस्मिंश्च कर्ता तदा मा भूत् कर्मवद्भाव इत्यर्थः ॥ **पचत्योदनमिति ।** ओदनस्य कर्मत्वे यादृशी क्रिया विक्लित्तिलक्षणा तादृश्येव कर्तृत्वेपि राध्यतेर्विक्लित्तिवचनत्वात् । न चास्य वाक्यद्वयस्य युगपत्प्रयोगः । कर्मस्थक्रियातुल्यत्वप्रतिपादनाय तु वाक्यद्वयोपन्यासः । अन्यथा समानधाताविपि व्याख्यातृभिः कथं तुल्यक्रियत्वं प्रदर्श्यते ? । यद्येवं लुनातौ केदारस्य कर्मत्वमिति लावयते केदारः स्वयमेवेति कर्मवद्भावो न स्यात् ॥ अत्र केचिदाहुः—लुनातिरेव णिचि लाविः संपन्न इति अस्ति समानधातुत्वम् ॥ अन्ये त्वाहुः—लावयतावेव केदारस्य कर्तृत्वं कर्मत्वं चेति दोषाभावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( उद्द्योतः ) समानशब्दः साधारणपर्याय एकस्मिन्नित्यर्थे पर्यवस्यतीत्याह—एकस्मिन्निति ॥ ननु युगपत्स्वातन्त्र्यपारतन्त्र्ययोर्विरुद्धत्वात्कथं भाष्येऽनयोर्वाक्यार्थयोर्युगपत्प्रयोगोऽत आह—न चास्येति ॥ प्रतिपादनायेति । तत्प्रयोगे या कर्मस्था सा च प्रयोगे कर्तृस्थेति प्रदर्शनायेत्यर्थः ॥ लुनाताविति । लुनाति केदारं देवदत्त इति प्रयोग इत्यर्थः ॥ लावयते केदार इति । णिश्रन्थीति यक्चिणोः प्रतिषेधः । कर्मवद्भावफलं स्वात्मनेपदमेव । णिचश्चेत्यनेन तु न सिद्धिः । क्रियोद्देश्यफलस्य कर्तृगामित्वाभावात् । आहुरिति । अत्रारुचिस्तु ण्यन्तस्य धात्वन्तरत्वम् ॥ लावयताविति । निवृत्तप्रेषणपक्षे इति भावः ॥

( १८७९ परिसंख्यावार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ तथा कर्मस्थभावकानां कर्मस्थक्रियाणां च ॥ * ॥

( भाष्यम् ) तथा कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवतीति वक्तव्यम् । कर्तृस्थभावकानां कर्तृस्थक्रियाणां च कर्ता कर्मवन्मा भूदिति ॥ कर्मस्थभावकानाम्—आसयति देवदत्तम्, शाययति देवदत्तम्, स्थापयति देवदत्तम् ॥ कर्मस्थक्रियाणाम्—गामवरुणद्धि, करोति कटम् ॥ कर्तृस्थभावकानाम्—चिन्तयति, मन्त्रयते ॥ कर्तृस्थक्रियाणाम्—गच्छति, धावति, हसति ॥

( प्रदीपः ) कर्मस्थभावकानामिति । अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः । सपरिस्पन्दनसाधनसाध्यस्तु क्रिया । यत्र च क्रियाकृतविशेषदर्शनं तत्स्था क्रियोच्यते । ततश्च पश्यति राजा स्वयमेव, आरोहति हस्ती स्वयमेवेति कर्मवद्भावाभावः ॥

( उद्द्योतः ) अन्यत्र भावक्रिययोरभेदेन व्यवहारादाह—अपरिस्पन्दनेति । इदं च प्रकृताभिप्रायेण ॥ भावे घञित्यादौ तु सिद्धावस्थापन्नो धात्वर्थो भाव इति बोध्यम् ॥ यत्र चेति । यथा लूभिदादौ कर्मणि क्रियाकृतविशेपदर्शनात्तत्स्था सा, पश्यत्यादौ राजादिदर्शनकर्तर्येव हर्षादिलक्षणविशेपदर्शनात्तत्स्थैवेति भावः ॥ न चैवं पच्यादिकर्तर्यपि श्रमादिरूपविशेपस्य दर्शनादिदमयुक्तम् । किं च पश्यत्यादीनां कर्तृस्थभावकत्वानापत्तिः कर्तरि क्रियाकृतविशेपाभावादिति वाच्यम् । येन धातुना कर्तृकर्मसाधारणं फलं शब्देन प्रतिपाद्यते स कर्तृस्थभावकः । यथा पश्यति गच्छतीत्यादौ । तत्र विषयता-समवायाभ्यां ज्ञानमुभयनिष्ठं संयोगश्चोभयनिष्ठः । एवं हासोपि ॥ यत्र तु कर्त्रवृत्तिधर्मरूपं फलं स कर्मस्थ भावकादिः । यथा भिदादिरित्यत्र तात्पर्यात् ।

( प्रथमपरिसंख्यावार्तिकवैयर्थ्यभाष्यम् )

यत्तावदुच्यते—'अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यम्' इति ॥ न वक्तव्यम् । वक्ष्यत्येतत्—*सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत इति* ॥

(प्रदीपः) सकर्मकाणामिति । अन्योन्यमाश्लिष्यत इत्युदाहरणमात्रमेतत् । न तु व्यतिहारविशिष्टक्रियाविषयकर्मवद्भावप्रतिषेधप्रतिपादनार्थमित्यर्थः ॥

( उद्द्योतः ) भाष्ये वक्ष्यत्येतत्सकर्मकाणामिति । अयं भावः—कालादिभिन्नकर्माभाववतामन्यत्राकर्मकग्रहणेन ग्रहणदर्शनादत्रापि तथात्वापत्तौ 'मासं पचत्योदनः स्वयमेवे'त्यादौ कर्मवदकर्मकस्येति वचने कर्मवत्त्वं प्राप्नोतीति ॥ सकर्मकाणां प्रतिषेध इत्यावश्यकमिति ॥ अन्यथा वचनेन वचनप्रत्याख्याने लाघवं न स्यात् ॥ नन्विति । उदाहरणबलात्तादृशे विषय एव प्रतिषेध इति न भ्रमितव्यमिति भावः ॥ अन्ये तु इदमुदाहरणं चिन्त्यम् । आश्लेषः संयोगविशेषानुकूलव्यापारः । तत्र संयोगाश्रयत्वेन तयोः कर्मत्वम्, व्यापाराश्रयत्वेन कर्तृत्वम्, तत्र संयोगानुकूलक्रियायाः कर्तृत्वोऽपयोगित्वेपि व्यक्तिभेदोवश्यमङ्गीकार्यः । अन्यथोभयोरपि कर्तृत्वमेव स्यात् 'इमावाश्लिष्यत' इति यथा । भेदे त्वन्यनिष्ठां प्रत्यन्यस्य कर्मत्वमुपपद्यते । एवं च कर्मत्वोपयोगिक्रियया तुल्यक्रियस्य तदीयकर्तुरभावात्कर्मवत्त्वाप्राप्तेरित्याहुः ॥ तन्नेत्यग्रे वक्ष्यते ॥

( द्वितीयपरिसंख्यावार्तिकवैयर्थ्यभाष्यम् )

यदप्युच्यते—*कर्मदृष्टश्चेत् समानधाताविति वक्तव्यमिति* ॥ न वक्तव्यम् । धातोरिति वर्तते । धातोः कर्मणः कर्तुरयं कर्मवद्भाव उच्यते । तत्र संबन्धादेतद् अगंतव्यम्—यस्य धातोर्यत् कर्म तस्य चेत् कर्ता स्यादिति । तद्यथा—धातोः कर्मण्यण् भवतीति, तत्र सम्बन्धादेतद् गम्यते यस्य धातोर्यत्कर्मेति । इह मा भूत्–आहर कुम्भं करोति कटमिति ।

( प्रदीपः ) धातोः कर्मण इति । कर्मणः सतः कर्तुरित्यर्थः । कर्मणेति चोपादानादयमर्थो लभ्यते—यस्य धातोर्यत्कर्म तत्स्थया क्रियया तुल्यक्रियः कर्ता तस्यैव धातोर्यदि भवति ततः कर्मवद्भवति ॥ आहरकुम्भमिति । समर्थपरिभाषोपस्थानमन्तरेणापि भवत्येवेष्टसिद्धिरिति प्रदर्शनायोपन्यासः ॥

( उद्द्योतः ) ननु कर्मणः कर्तुरिति युगपद्विरुद्धमत आह—सत इति ॥ कर्मणेति चोपादानादिति । प्रत्यासत्त्येति भावः ॥ समर्थपरिभाषयैवेदं सिद्धमत आह—समर्थेति ॥ एवं च दृष्टान्त एकदेशयुक्तिरिति ध्वनितम् ॥

( तृतीयपरिसंख्यावार्तिकवैयर्थ्यभाष्यम् )

यदप्युच्यते—*कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवतीति वक्तव्यम् । कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्ता कर्मवन्मा भूदिति ॥ न वक्तव्यम् । कर्मस्थया क्रियया यं कर्तारमु-

---

१ 'अयम्' इति स्फुटाकारपाठः प्राचीनपुस्तकेषु ॥ तदा अयम्=आचार्य इति बोध्यम् ॥ अकाररहितपाठे तु 'यं कर्तारमुपमिमीते स कर्ता' इत्येवमेव युक्तं प्रतिभातीति केचित् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पमिमीते । न च कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्मणि क्रियायाः प्रवृत्तिरस्ति ॥

( प्रदीपः ) कर्तारमिति । कर्तृस्थां क्रियामित्यर्थः ॥

( उद्द्योतः ) क्रियया कर्तुरुपमाऽसंभवात् आह—कर्तृस्थामिति । भाष्ये न च कर्तृस्थेति । तेषां धातूनां वाच्यायाः फलरूपक्रियायाः कर्ममात्रे प्रवृत्तिर्नास्तीत्यर्थः । करणादितुल्यक्रियेऽतिव्याप्तिवारणस्य प्रत्यासत्त्यैव सिद्ध्या कर्मणेत्युपादानसामर्थ्यात्कर्ममात्रनिष्ठफलरूपकर्मस्थक्रिया लक्ष्यत इति भावः ॥ यथाश्रुतप्रागुक्तकैयटरीत्या व्याख्याने तु जानात्यादिकर्तर्यपि क्रियाकृतविशेषानुपलम्भेन चिन्तयतीत्याद्युपक्रमेणैतदुक्तयसंगतिः ॥ एतेन क्रियायाः क्रियाकृतविशेषाणामित्यर्थं इत्यपास्तम् ॥ तदुक्तं हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥ इति ॥

अन्येषां मत इति शेषः । इदमेव मतं युक्तम् । उक्तयुक्तेः ॥

( कर्मवद्भावफलविचाराधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनः कर्मकर्तरि कर्माश्रयमेव भवति, आहोस्वित् कर्त्राश्रयमपि ? ॥ किं चातः ? ।**

**यदि कर्माश्रयमेव, चङ्शप्कुद्विधयो न सिध्यन्ति । चङ्—अचीकरत कटः स्वयमेव । चङ् ॥ शप्—नमते दण्डः स्वयमेव । शप् ॥ कुद्विधिः—भिदुरं काष्ठं स्वयमेव ॥**

**अथ कर्त्राश्रयमपि, सिद्धमेतद् भवति ॥ [ किं[2] तर्हीति ] ।**

( प्रदीपः ) किं पुनरिति । किमतिदेशेन स्वाश्रयं निवर्त्यते, आहोस्विन्नेति प्रश्नः ॥ यद्यपि स्वाश्रयमपि यथा स्यादित्यत्र निर्णयः कृतः तथापि दोषान्तरोद्भावनाय पुनर्विचार्यते ॥ अचीकरतेति । यक्चिणोः प्रतिषेधेपि स्वाश्रयौ चङ्शपौ न प्राप्नुतः ॥ भिदुरमिति । कर्तरि कुरच् न प्राप्नोति । लान्तस्य कर्ता कर्मवदिति न तावत् स्थापितमिति कुद्विधेरसिद्धिरुक्ता ॥

( उद्द्योतः ) दोषान्तरेति । तदुद्भावनपूर्वकं मुख्यफलप्रदर्शनायेत्यर्थः ॥ प्रतिषेधेपीति । न दुहेति णिश्रीति च शपाविति नमति विषयकमिदम् ॥

( १८८० कर्त्राश्रयत्वे दूषणवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ आत्मनेपदशबादिविधिप्रतिषेधः ॥ * ॥

**( भाष्यम् ) आत्मनेपदं विधेयं शवादीनां च प्रतिषेधो वक्तव्यः ॥**

( दूषणपरिहारभाष्यम् )

**उभयं क्रियते न्यास एव ॥**

( प्रदीपः ) उभयमिति । कर्तैव यः कर्ता तत्र परस्मैपदमिति परस्मैपदाभावादात्मनेपदं भवति । कर्तरि शबित्यत्र कर्तरीति योगविभागेन शबादीनां यका बाधनं भवति ॥ कार्यातिदेशो वायमाश्रीयते । यच्चाविरुद्धमतिदेशेन स्वाश्रयं तद्भवति, न तु विरुद्धमिति शबादिपरस्मैपदाभावः ॥

(उद्द्योतः) कर्तैवेति । शेषादिति सूत्रे कर्तरि कर्मव्यतिहार इत्यतः कर्तरीति पदानुवृत्त्याऽयमर्थो लब्ध इति भावः ॥ योगविभागेनेति । इदं च यग्विधायके निरूपितम् ॥ कार्यातिदेशो वायमिति । एवं च परत्वादात्मनेपदविधिः शब्बाधश्च सिद्ध इत्यर्थः ॥ नन्वेवं स्वाश्रयनिवृत्तिरेव पर्यवसन्नेत्यत आह—यच्चेति ॥ अतिदेशेन तदाश्रयकार्येण । एवं च 'नमते दण्डः' 'अचकरते'त्यादौ यक्चिणोरभावे चङ्शपौ भवतः । अन्यत्र च न भवत इति भावः ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ? ।**

( उद्द्योतः ) भाष्ये किमर्थं पुनरिदमुच्यते इति । कर्मणः कर्तृत्वासंभवात्सूत्रं व्यर्थमिति प्रश्नः ॥

( १८८१ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात् ॥ * ॥

**( भाष्यम् ) कर्मकर्तरि कर्तृत्वमस्ति । कुतः ? । स्वातन्त्र्येणैवात्र कर्ता विवक्षितः ॥**

( प्रदीपः ) स्वातन्त्र्यस्येति । पच्यते ओदनः स्वयमेवेति विक्लित्तिमात्रवाची पचिस्तत्र चौदनस्य कर्तृत्वमेव लूयते केदार इति द्विधाभवनवाची लुनातिस्तथा च केदारस्य कर्तृत्वम् ॥

( उद्द्योतः ) तत्संभवं दर्शयति भाष्ये—कर्मकर्तरीति ॥ स्वातन्त्र्यं च प्रधानधात्वर्थाश्रयत्वम् ॥ तच्च कर्मव्यापारमात्रस्य धात्वर्थत्वे संभवतीत्याह—पच्यत इति ॥

( आक्षेपभाष्यम् )

**किं पुनः सतः स्वातन्त्र्यस्य विवक्षा, आहोस्विद्विवक्षामात्रम् ? ।**

( समाधानभाष्यम् )

**सत इत्याह । कथं ज्ञायते ॥ इह 'भिद्यते कुसूलेने'ति । न चान्यः कर्ता दृश्यते, क्रिया चोपलभ्यते ॥**

( प्रदीपः ) क्रिया चेति । विशरणक्रियेत्यर्थः ।

---

१ नहि क्रियाकर्त्रोरुपमानोपमेयभावो भाष्यकर्तुरभिप्रेतः, योऽसंभवो भवदुक्तः स्यात् । किंतु कर्मकर्त्रोरुपमानोपमेयभावः क्रियायाश्च साधारणधर्मत्वमेवाभिप्रेतमिति न काप्यनुपपत्तिरिति दाधिमथाः ॥

२ इतः प्राक् 'अस्ति प्रयोजनमेतत् ।' इति पाठो भवेत् । अन्यत्र स्थल इव ॥ अन्यथाऽस्य संगतिर्दुर्ज्ञेया स्यात् ॥ वयं तु ब्रूमः, अथ शब्दो यद्यर्थे । यदि कर्त्राश्रयमपि तदा एतत् सिद्धं भवतीति काका प्रश्नः । किं तर्हीत्युत्तरम् । (र.ना.)

३ तदुक्तं हरिणा—

'वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥' इति ॥

स्पष्टं चेदं कारक इति प्रकरणे भाष्ये ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(उद्द्योतः) कुसूले क्रियाऽदर्शनादाह—विशरणेति ।

(आक्षेपभाष्यम्)

**किं च भो विग्रहवतैव क्रियायाः कर्त्रा भवितव्यम्, न पुनर्वातातपकाला अपि कर्तारः स्युः ॥**

(प्रदीपः) किञ्च भो इति । कारणाभावे विशरणाख्यकार्याभावादवश्यं केनचिद्वातादिना कारणेन भाव्यमिति भावः ॥

(उद्द्योतः) भाष्ये विग्रहवतैवेति । सशरीरेण चेतनेनेत्यर्थः ॥

(समाधानभाष्यम्)

**भवेत्सिद्धं यदि वातातपकालानामन्यतमः कर्ता स्यात् । यस्तु खलु निवाते निरभिवर्षे अचिरकालकृतः कुसूलः स्वयमेव भिद्यते तस्य नान्यः कर्ता भवति अन्यदतः कुसूलात् ॥**

(प्रदीपः) अन्यदत इति । कुसूलस्यैव विशरणक्रियायां कारणत्वोपपत्तावदृश्यमानकारणान्तरकल्पनाया अयुक्तत्वादिति भावः ॥

(उद्द्योतः) निरभिवर्षे इति । अनातपे इत्यर्थः ॥

(आक्षेपभाष्यम्)

**यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रान्यः कर्ता नास्ति । इह तु कथं स्याल्लूयते केदारः स्वयमेवेति । यत्रासौ देवदत्तो दात्रहस्तः समन्ततो विपरिपतन्दृश्यते ।**

(समाधानभाष्यम्)

**अत्रापि याऽसौ सुकरता नाम तस्या नान्यः कर्ता भवति अन्यदतः केदारात् ॥**

(प्रदीपः) सुकरतेति । द्विधाभवनलक्षणक्रियेत्यर्थः । अन्यथा पर्वतमपि देवदत्तो लुनीयादिति भावः ॥

(उद्द्योतः) ननु सुकरता यदि प्रयोजकव्यापारः, तर्हि तस्य देवदत्तः कर्तेति नान्य इति भाष्यमनुपपन्नं स्यादत आह—द्विधेति ॥ सुकरताविषयक्रिया सुकरताशब्देनोच्यत इत्यर्थः ॥ कर्मगतसौकर्यं निरीक्ष्यैव देवदत्तादेः कर्तृत्वं नान्यथेत्याह—अन्यथेति ॥ एवं च सौकर्यातिशयविवक्षया विद्यमानोपि कर्तृव्यापारो न विवक्ष्यते, किं तु अनेकार्थत्वाद्धातूनां कर्मनिष्ठव्यापारमात्रपरता, तदा कर्मणः कर्तृत्वे कर्मणा तुल्यक्रिय इत्यत्रावस्थान्तरीयकर्मणा तुल्यक्रियत्वमित्येवार्थो विवक्षित इति दिक् ॥

**(भाष्यम्) अस्ति प्रयोजनमेतत्? । किं तर्हीति ।**

(१८८२ कर्मवद्भावविषयपरिसंख्यावार्त्तिकम् ॥ ६ ॥)

## ॥ * ॥ तत्र लान्तस्य कर्मवदनुदेशः ॥ * ॥

**(भाष्यम्) लान्तस्य कर्मवदनुदेशः कर्तव्यः । लान्तस्य कर्ता कर्मवद्भवतीति वक्तव्यम् ।**

(१८८३ परिसंख्यापरिहेयदर्शकवार्त्तिकम् ॥ ७ ॥)

## ॥ * ॥ अन्यथा हि कृत्यक्तखलर्थेषु प्रतिषेधः ॥ * ॥

**(भाष्यम्) अक्रियमाणे हि लग्रहणे कृत्यक्तखलर्थेषु प्रतिषेधो वक्तव्यः स्यात् । कृत्य—भेत्तव्यः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितस्तदास्य कर्मवद्भावः स्यात्, तस्य प्रतिषेधो वक्तव्यः तस्मिन् प्रतिषिद्धे 'अकर्मकाणां भावे कृत्यो भवतीति' भावे कृत्यो यथा स्याद् भेत्तव्यं कुसूलस्य, भेत्तव्यं कुसूलेनेति । कृत्य ॥ क्त—भिन्नः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितो भवति, तदास्य कर्मवद्भावः स्यात्, तस्य प्रतिषेधो वक्तव्यः । तस्मिन् प्रतिषिद्धे 'अकर्मकाणां भावे क्तो भवतीति भावे क्तो यथा स्याद् भिन्नं कुसूलेनेति । क्त ॥ खलर्थे—ईषद्भेदः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितो भवति तदाऽस्य कर्मवद्भावः स्यात् । तस्य प्रतिषेधो वक्तव्यः । तस्मिन्प्रतिषिद्धे 'अकर्मकाणां भावे खल्भवती'ति भावे खल् यथा स्यात् । ईषद्भेदं कुसूलेनेति । खलर्थे ॥**

(प्रदीपः) लान्तस्य कर्तेति । लान्तवाच्यो यः कर्ता स लान्तकार्ये एव कर्मवद्भवतीत्यर्थः । तेन कर्मणि विधीयमानाः कृत्यादयोतिदेशात्कर्मकर्तरि न भवन्तीति भाव एवोत्पद्यन्ते । तत'श्चैतैः' कर्तुरनभिहितत्वात्कर्तृविभक्ती षष्ठीतृतीये भवतः—भेत्तव्यं कुसूलस्य, भेत्तव्यं कुसूलेनेति । भिद्यते कुसूल इत्यत्र च द्वितीया न भवति ॥ क्तग्रहणस्यात्र प्रयोजनं न दृश्यते । गवा दुग्धं पय इत्यत्र दृश्यत इत्याहुः ॥ तथाह्यकर्मकत्वाद् गत्यर्थाकर्मकेति वचनात् कर्तरि भवितव्यमेव क्तेन 'भिन्नः कुसूलः स्वयमेवे'ति । तथा च 'सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यमिति' सिनो ग्रासः स्वयमेवेति क्तः कर्तर्युदाहरिष्यते ॥

(उद्द्योतः) लान्तस्येति षष्ठी वाच्यवाचकसंबन्धे निमित्तनिमित्तिभावे वेत्याह—लान्तेति । लान्तवाच्य इत्यर्थस्य फलमाह—तेनेति ॥ षष्ठीतृतीये इति । कृत्यानां कर्तरि वेति वचनादिति भावः ॥ यद्यपि स्वाश्रयानिवृत्तेर्भावे सिध्यन्त्येव तव्यादयस्तथापि 'भेत्तव्यः कुसूलः स्वयमेवे'त्यपि स्यादिति दोषः ॥ भाष्यस्यापि 'भेत्तव्यं कुसूलेनेति'भावे एव कृत्यो यथा स्यादित्यर्थो बोध्यः ॥ लान्तकार्ये एवेत्यस्य फलमाह—भिद्यते कुसूल इति । कर्तरि लेऽपि कर्मवद्भावेन द्वितीया स्यादिति भावः ॥ ननु व्यङ्गविकलमेतत् कर्मत्वेन, अनभिहितत्वेन च । तत्रातिदेशेन कर्मत्वेऽपि अभिहितत्वात्कथं द्वितीयेति चेन्न । कार्यातिदेशेऽनेनैव द्वितीया विधीयते । तत्र चानभिहिताहिताधिकाराभाव इत्यभिमानात् ॥ वस्तुतः कर्मवदित्युक्तेः कर्मणि यत्कार्यं येनोपाधिना यथा भवति तथा कर्तर्यपीत्यर्थादभिहितत्वेन द्वितीयावारणस्य सुकरत्वाल्लान्तस्य कार्ये

---

१ अभिवर्षपदेनातपस्याप्युपलक्षणादिति भावः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति चिन्त्यफलम् ॥ अत्र भित्तं कुसूलेनेत्यत्र ॥ अत्र कर्मवत्त्वाभावेऽपि अकर्मकत्वनिबन्धनकर्तृत्वमादाय भिन्नः कुसूल इत्यस्य दुर्वारत्वेन तत्प्रवृत्त्यप्रवृत्त्योर्न फलमिति भावः ॥ तद्वक्ष्यति—तथा हीत्यादिना ॥ गवादुग्धमिति । अत्र गोः कर्मवत्त्वे 'अप्रधाने दुहादीनामिति वचनात्तस्मिन्नेव कर्मणि क्तः स्यात् । तदभावे तु कर्मान्तराभावात्पयस्येव कर्मणि क्ते गवा दुग्धं पय इति भवतीत्यर्थः ॥ वस्तुतस्तु कर्मवद्भावेन कर्मणि क्ते परशुभिन्नः कुसूल इत्यादौ 'तृतीयान्तं पूर्वपदं कर्मवाचकक्तान्त उत्तरपदे प्रकृतिस्वर'मित्यर्थकतृतीया कर्मणीत्यनेन पूर्वपदप्रकृतिस्वरः प्राप्नोति । कर्तरि तु नेति फले विशेषस्य स्पष्टतया चिन्त्योऽयं कैयटः ॥

( आक्षेपभाष्यम् )

**तर्त्तर्हि लग्रहणं कर्तव्यम् ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**न कर्तव्यम् । क्रियते न्यास एव—"व्यत्ययो बहुलम्लिङ्व्याशिष्यङ्"इति द्विलकारको निर्देशः ॥**

( १८८४ सूत्रवैयर्थ्यवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ सिद्धं तु प्राकृतकर्मत्वात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् । कथम् ? । प्राकृतकर्मत्वात् । प्राकृतमेवैतत् कर्म । यथा कटं करोति, शकटं करोतीति ॥**

( आक्षेपभाष्यम् )

**कथं पुनर्ज्ञायते प्राकृतमेवैतत्कर्मेति ॥**

( १८८५ वैयर्थ्यहेतुवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ आत्मसंयोगेऽकर्मकर्तुः कर्मदर्शनात् ॥ * ॥

**( भाष्यम् ) आत्मसंयोगेऽकर्मकर्तुः कर्म दृश्यते । क ? । हन्त्यात्मानम् । आत्मना हन्यत इति ।**

**( प्रदीपः ) सिद्धं त्विति ।** प्राकृतं स्वाभाविकमेवैतत्कर्म, न त्वातिदेशिकमित्यर्थः ॥

**आत्मसंयोग इति ।** एकस्यैव वस्तुनो भेदेनात्मा कर्मत्वेन कर्तृत्वेन च विवक्ष्यत इत्यर्थः । तदुक्तम्—

**एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते ।**
**कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते । इति ॥**

**कर्म दृश्यत इति ।** कर्मत्वं दृश्यत इत्यर्थः ॥

**( उद्द्योतः )** कर्मणि प्रत्ययेनैव प्रयोगाणां सिद्धेः सूत्रं व्यर्थमित्याशङ्क्ते भाष्ये सिद्धं त्विति ॥

आत्मसंयोग इति । आत्मवाचकपदसमभिव्याहारे इत्यर्थः ॥ अकर्मकर्तुरिति । कर्मभिन्नस्य कर्तुरात्मनः सत्त्वेऽपि कर्म दृश्यत इत्यर्थः । तथा भिद्यते कुसूल इत्यादावपि आत्मनः कर्तृत्वात्कर्मण्येव लकारेण सिद्धम् । अत एवात्मनेत्यर्थकं स्वयमेवेति कर्मकर्त्रुदाहरणेषु प्रयुज्यत इति तात्पर्यम् ॥

( वैषम्यविघटकसूत्रसार्थक्यभाष्यम् )

**विषम उपन्यासः । हन्त्यात्मानमिति कर्म दृश्यते, कर्ता न दृश्यते । आत्मना हन्यत इति च कर्ता दृश्यते, न कर्म दृश्यते ॥**

( १८८६ वैषम्योपपादकवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ पदलोपश्च ॥ * ॥

**( भाष्यम् ) पदलोपश्चात्र द्रष्टव्यः । हन्त्यात्मानमात्मा । आत्मना हन्यत आत्मेति ॥**

**( प्रदीपः ) विषम उपन्यास इति ।** अयं भावः—दृष्टान्ते आत्मभेदस्य शब्देन प्रतिपादितत्वाद्युक्तं कर्मत्वम् । इह तु 'लूयते केदारः पच्यते ओदन' इत्यादौ यदा स्वयमिति शब्दो न प्रयुज्यते तदात्मभेदाविवक्षायां कर्मत्वाभावात्कर्तृत्वमेव द्विधाभवनादौ केदारादीनामिति कर्मवदतिदेशः कर्तव्य एव । 'नमते दण्ड' इत्यादौ च प्राकृतकर्मत्वे यक्चिणोः प्रतिषेधे शप्चणौ न स्याताम् । भिद्यते कुसूलेनेति च सकर्मकत्वाद्धातोर्भावे लो न स्यात् ॥ **कर्म दृश्यत इति ।** आत्मानमिति द्वितीयान्तवाच्यं कर्म ॥ **कर्ता न दृश्यत इति ।** हन्तीति कर्तरि लकारोत्पत्तावपि कर्तृविशेषानुपादानादिति भावः ॥ **कर्ता दृश्यत इति ।** तमन्तरेण क्रियाया अभावादात्मनेत्येतद्वाच्य इति भावः ॥ **कर्म न दृश्यत इति ।** कर्तृव्यतिरेकेणान्यस्यात्र कर्मणो दुरुपपादत्वादिति भावः ॥

**पदलोपश्चेति ।** गम्यमानार्थत्वादप्रयोगः पदस्येत्यर्थः । यत्तु 'लूयते केदारः स्वयमेवेति वृत्तिकारैरुदाहियते, तत्र कर्त्रन्तराभावप्रतिपादनेन केदारस्यैव कर्तृत्वप्रतिपादनाय स्वयंशब्दः प्रयुज्यते । न त्वेतत्कर्मवद्भावस्योदाहरणम् । स्वयंशब्दस्यात्मनेति तृतीयान्तार्थे वर्तनात् । आत्मनः कर्तृत्वे केदारस्य प्राकृतकर्मत्वसद्भावात् ॥

**( उद्द्योतः )** समाधत्ते—विषम इति ॥ तत्र हेतुं वैषम्यं दर्शयति—दृष्टान्त इति ॥ भावे ल इति । इदमुपलक्षणं तन्वादीनाम् ॥ एतेन 'भिद्यते कुसूलेनात्मेति कर्मण्येवायं प्रयोग' इत्यपास्तम् ॥ भेत्तव्यम् ईषद्भेदमित्याद्यसिद्ध्यापत्तेः ॥ न च तत्रापि कर्मणि; नियमेन नपुंसकप्रयोगानापत्तेः ॥ हेत्वसुक्तं वैषम्यं विघटयति—भाष्ये—हन्त्यात्मानमित्यादिना । एवं चात्र शब्देन प्रतिपादनाभावेऽपि यथा कर्मत्वं तथा प्रकृतेऽपि भविष्यतीति भावः ॥ वैषम्यमुपपादयति—पदलोपश्चेति । तद्व्याचष्टे—गम्यमानेति । एवं च झटिति अध्याहारसंभवाद्वाक्यैकदेशन्यायेन बोधसंभवाद्वा

१ कर्मवद् भावेऽपीति पाठः शोभनो भाति । ( र. ना. )
२ कर्मवत्त्वप्रवृत्त्यप्रवृत्त्योरित्यर्थः । ( र. ना. )
३ ततश्च कर्मकर्तुरुक्तत्वात्तृतीया न स्यादिति भावः । ( र. ना. )
४ एकस्यैव वस्तुनो बुद्धिभेदप्रयुक्तेऽवस्थाभेदप्रयुक्ते वा भेदे परिकल्पिते सतीत्यर्थः । ( र. ना. )
५ आत्मेतिशब्देन, आत्मानमिति शब्देन चेत्यर्थः । ( र. ना. )
६ 'कर्तृविशेषव्यतिरेकेण' ॥
७ 'वर्तमाना' इति तु कैश्चित् पण्डितमकाण्डैः शोधितमेव ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तत्रात्मभेदस्य शब्देन प्रतिपादनमिति वैषम्यमस्त्येवेति भावः ॥ ननु कर्मवद्भावविषयेऽपि स्वयमित्यस्य प्रयोग उदाहरणेषु दृश्यत इति तत्राप्यस्त्येव भेदस्य शब्देन प्रतिपादनमत आह—यस्त्विति ॥ न त्वेतदिति । आत्मनेत्यर्थकस्वयंपदघटितं विवक्षितात्मकर्तृकमित्यर्थः ॥

( शङ्काभाष्यम् )

**कः पुनरात्मानं हन्ति, को वात्मना हन्यते ? ।**

( उद्द्योतः ) नन्वेकस्यैव वस्तुनः कथं शब्दभेदमात्रेण भिन्नधर्मतेति शङ्कते—भाष्ये—कः पुनरिति । आत्मानं हन्ति यः आत्मा, स क इत्यर्थः ॥

( उत्तरभाष्यम् )

**द्वावात्मानौ—शरीरात्मा, अन्तरात्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति । शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवति ॥**

( प्रदीपः ) द्वावात्मानाविति । णेरणाविस्यत्र व्याख्यातमिति तत एवावधार्यम् ॥

( उद्द्योतः ) औपाधिकभेदेन भेदमारोप्य भिन्नधर्मतेत्युत्तराशयः ॥

( १८८७ आक्षेपवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत इति ॥ * ॥

**( भाष्यम् ) सकर्मकाणां प्रतिषेधो वक्तव्यः । किं प्रयोजनम् ? । अन्योन्यमाश्लिष्यतः अन्योन्यं संस्पृशतः अन्योन्यं संगृह्णीत इति ॥**

( प्रदीपः ) आश्लिष्यत इति । क्रियाफलस्य संयोगस्य कर्मणि दर्शनात्कर्मस्थक्रियत्वमत्र द्रष्टव्यम् ॥

( उद्द्योतः ) संयोगस्य कर्मणीति । अन्योन्यसंयोगकृतहर्षादिलक्षणस्येत्यर्थः ॥ ननु संयोगस्य तत्कृतहर्षादेश्च कर्तर्यपि सत्त्वेनोक्तरीत्या कथं कर्मस्थत्वमिति चेन्न । हर्षरूपविशेषस्य धात्वर्थकर्मकृतत्वेन[1] कर्मस्थत्वमेवेत्याशयात् ॥ यद्यप्युक्तरीत्या नेदमुदाहरणम् ॥ तथाप्ययमत्र भाष्यार्थः । कर्मपदेन[2] तत्स्था क्रिया लक्ष्यते मञ्चाः क्रोशन्तीतिवत् । अन्यतरक्रियां प्रति कर्मण्यन्यतरस्मिन्या संयोगानुकूलक्रिया तादृश्येनापरस्मिन्कर्तरीति स्यादेव प्रसङ्गः ॥ यद्यपि देवदत्तादयः पचन्तीत्यादाविव धातुना भेदस्याप्रतीतिः[3] । तथापि आश्रयभेदकृतं वास्तवं भेदमादाय तुल्यत्वाक्षतिः । कर्मत्वोपयोगिकर्मस्थक्रियया कर्तृत्वोपयोगिक्रिया तुल्या यस्य कर्तुरित्यर्थे तु न मानमिति बोध्यम् ॥

( १८८८ सकर्मकप्रतिषेधाय नियमवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ तपेर्वा सकर्मकस्य वचनं नियमार्थम् ॥ * ॥

**( भाष्यम् ) तपेर्वा पुनः सकर्मकस्य वचनं नियमार्थं भविष्यति—तपेरेव सकर्मकस्य नान्यस्य सकर्मकस्येति ।**

( आक्षेपभाष्यम् )

**तस्य तर्ह्यन्यकर्मकस्यापि प्राप्नोति । उत्तपति सुवर्णं सुवर्णकारः । उत्तप्यमानं सुवर्णं सुवर्णकारमुत्तपति ॥**

( १८८९ समाधानवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ तस्य च तपःकर्मकस्यैव ॥ * ॥

**( भाष्यम् ) तस्य च तपःकर्मकस्यैव कर्ता कर्मवद्भवति नान्यकर्मकस्य ॥**

( प्रदीपः ) तपेर्वेति । तप इति योगविभागेन नियमः क्रियत इति भावः ॥ ननु तप्यते तपस्तापस इत्यत्र कर्मस्थक्रियया तुल्यक्रियत्वं कर्तुर्नास्ति । उपवासादेस्तपसः कर्तृत्वे तपेर्दुःखार्थत्वात्, तापसस्य कर्तृत्वेऽर्जनार्थत्वात् ॥ नैष दोषः—शरीरसंतापलक्षणायाः क्रियायास्तुल्यत्वादवस्थाद्वयेपि[4] शरीरसंतापलक्षणमेवार्जनं तापसस्य यतो व्यापारः ॥

( उद्द्योतः ) एकयोगे नियमद्वयालाभादाह—योगविभागेनेति । दुःखार्थत्वादिति । तापसं तपस्तपतीत्यतस्तं दुःखयतीत्यर्थावगमात् ॥ अर्जनार्थत्वादिति । तापसस्तपस्तप्यत इत्यतोऽर्जयतीत्यर्थावगमादिति भावः ॥ शरीरेति । शरीरसंतापलक्षणायाः क्रियाया अर्थस्याद्वयेऽपि तुल्यत्वात् । यतः 'शरीरसंतापलक्षणमर्जनमेव तापसस्य व्यापारो, नान्य इत्यन्वयः ॥ अयं भावः—तपति तापसं तप इत्यस्य 'संतापविशेषस्तापसं तपतीत्यर्थः' । तपतिरत्रान्तर्भावितण्यर्थः । तापसवृत्तिशरीरसंतापसामान्यानुकूलव्यापारानुकूलव्यापारः संतापविशेषवृत्तिरिति बोधः ॥ तदनुकूलो व्यापारश्च संतापविशेषे स्वरूपावस्थानरूप एव तापसे शरीरसंतापसामान्यानुकूलव्यापारश्च संतापविशेषस्वीकार एव । ण्यर्थत्यागे तापसस्य कर्तृत्वं तापसस्तपः संतप्यत इत्यत्र 'संतापविशेषाभिन्नशरीरसंतापानुकूलव्यापारस्तापसकर्तृकः' इति बोधः ॥ कैयटे शरीरसंतापपदेन स व्यापार एव, तदेव वार्जनमिति बोध्यम् । तत्र क्रियाविशेषणत्वात्स्तोकमेधत इत्यादाविव तपसः कर्मत्वमिति ॥

( आक्षेपभाष्यम् )

**किमिदं तप इति ? ।**

( उत्तरभाष्यम् )

**तपेरयमौणादिकोऽस्कारो भावसाधनः ॥**

---

१ धात्वर्थरूपा या क्रिया तत्कृतत्वेनेत्यर्थः । ( र. ना. )
२ कर्मणा तुल्यक्रिय इत्यत्रत्येनेति भावः । ( र. ना. )
३ क्रियाभेदस्येत्यर्थः । ( र. ना. )
४ तपसः कर्तृत्वावस्थायां तापसस्य कर्तृत्वावस्थायां चेत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( आक्षेपभाष्यम् )

**कः प्रकृत्यर्थः, कः प्रत्ययार्थः ? ।**

( समाधानभाष्यम् )

**स एव संतापः ॥**

**कथं पुनः स एव नाम प्रकृत्यर्थः स्यात् स एव च प्रत्ययार्थः ? ।**

( उद्द्योतः ) [ भाष्ये[2]—किमिदं तप इति । सूत्रे तपः कर्मकस्येत्यत्र तपःपदेन किमुच्यत इति प्रश्नः ॥

धात्वर्थः संताप इत्युत्तरम् ॥ ]

भाष्ये तपेरयमौणादिकोऽस्कारो भावसाधन इति । इदमुणादीनां व्युत्पन्नत्वमिति मते उक्तम् ॥ अव्युत्पन्नत्वमिति पाणिनिसंमते पक्षे तु तपःशब्दस्य संतापोर्थं इति बोध्यम् ॥ एतदेव परसंमताव्याख्यानेन दर्शितम् ॥

**( भाष्यम् ) सामान्यतपेरवयवतपिः कर्म भवति । तद्यथा—'स एतान् पोषानपुषत् गोपोषमश्वपोषं रैपोषमिति सामान्यपुषेरवयवपुषिः कर्म भवति । एवमिहापि सामान्यतपेरवयवतपिः कर्म भवति ॥**

( प्रदीपः ) कः प्रत्ययार्थं इति । तापसेन तपस्तप्यत इति कर्मणि लकारोत्पत्तौ प्रकृत्यर्थस्यैव क्रियारूपस्य प्रत्ययार्थत्वं दृश्यते । क्रियाकर्मणोश्च साध्यसाधनभावाद्भेदेन भाष्यम् । इह तु भेदाभावात् प्रकृतिप्रत्ययार्थानुपपत्तिः । अथ वा तपःकर्मकस्येति वचनात् प्रकृत्यर्थस्यैव कर्मत्वमाश्रितं तच्च विरुद्धमिति भावः ॥

**अवयवतपिरिति** । विशेषतपिर्ज्ञानलक्षणं तप इत्यर्थः ॥

( उद्द्योतः ) ननु प्रकृति प्रत्यययोरप्रकृतत्वात्प्रश्नानुपपत्तिरत आह—तापसेनेति ॥ प्रकृत्यर्थस्यैवेति । संतापस्येत्यर्थः । तस्यैव तपःपदार्थत्वादिति भावः ॥ प्रत्ययार्थत्वम् । तिङ्प्रत्ययार्थकर्मरूपत्वम् । यद्यपि क्रियाविशेषणरूपे कर्मणि लकारो न, कर्तृसाहचर्येण धात्वर्थे भेदेनान्वयिकर्मण एव तत्र ग्रहणात् तथापि भाष्यप्रामाण्यात्सामान्यविशेषभावेनान्वयिनि क्रियाविशेषणे कर्मणि लकारो भवत्येव ॥ अत एव स्तोकमित्यादेः क्रियाविशेषणस्यैकत्वनपुंसकत्वेऽपि एतान्पोपानपुषदित्यादौ पुंस्त्वबहुवचन इति बोध्यम् ॥ ज्ञानलक्षणं तप इति । ज्ञानजनकोपवासादिकरूपमित्यर्थः ॥ स एव संताप इति भाष्यस्य स एव संतापविशेष इत्यर्थः । विशेषेपि सामान्यसत्त्वात्स एवेत्यस्य नानुपपत्तिः ॥ भाष्ये—एतान्पोषानित्यस्य विशेषसमर्पकाणि गोपोपमित्यादीनि घञन्तानि बोध्यानि ॥

( १८९० कर्मवद्भावविकल्पवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ दुहिपच्योर्बहुलं सकर्मकयोः ॥ * ॥

**( भाष्यम् ) दुहिपच्योः सकर्मकयोः कर्ता कर्मवद्बहुलं भवतीति वक्तव्यम् । दुग्धे गौः पयः स्वयमेव । तस्मादुदुम्बरः सलोहितं फलं पच्यते ॥**

**बहुलवचनं किमर्थम् ? ।**

**परस्मैपदार्थम् ।**

**यद्येवं नार्थो बहुलवचनेन । न हि परस्मैपदमिष्यते ॥**

( प्रदीपः ) दुग्धे गौरिति । गौर्मुञ्चति पय इत्यर्थः ॥ दुहेर्द्विकर्मकत्वात्कर्मस्थक्रियातुल्यक्रियत्वेपि सकर्मकत्वादप्राप्ते वचनम् । फलं पच्यत इत्यत्र वृक्षस्य कर्तृत्वविवक्षायामत्यन्तमप्राप्ते वचनम् ॥ अन्ये त्वाहुः—पचिरत्र विषये द्विकर्मको वृक्षस्य पाकमन्तरेण फलपाकासंभवाद् वृक्षोऽकथितं कर्म । तस्यैव च यदा कर्तृत्वविवक्षा तदायं कर्मवद्भावः । एवंविध एव च विषये कर्मवद्भाव इष्यते, न पुनरोदनं पचतीत्यादौ ॥

( उद्द्योतः ) अत्यन्तमप्राप्त इति । तुल्यक्रियत्वस्याप्यभावादिति भावः ॥ सकर्मकाणां प्रतिषेधोत्तरमस्योक्तत्वेन दुहिसाहचर्येण च सकर्मकत्वप्रयुक्ताप्राप्तावेवैतस्य विध्यर्थतोचितेति ध्वनयन्नाह—अन्ये त्वाहुरिति । वृक्षस्य पाकमिति । वृक्षनिष्ठपाकानुकूलव्यापारं विनेत्यर्थः । तदा च कालस्य कर्तृत्वं बोध्यम् । एवं च पचेः फलपाकानुकूलव्यापारानुकूलव्यापारोर्थः । तत्र फलपाकानुकूलव्यापाराश्रयत्वात्कर्तुरीप्सिततममिति वृक्षः कर्म । तस्य कर्तृत्वविवक्षायां भाष्योदाहरणसाम्राज्यात्[3]॥ अकथितं कर्मेत्यत्राकथितपदमविवक्षितपरम् । कर्मत्वेनाविवक्षितमित्यर्थः ॥ किंत्वेन तर्हि विवक्षेत्यत्राह—तस्यैव चेति । न तु तत्सूत्रविषयता, अस्य दुहादिषु भाष्येऽगणनात् । गौर्दुग्धे इत्यपि कर्तुरीप्सिततममिति कर्मत्वे एवोदाहरणं बोध्यम् ॥ विभागानुकूलव्यापारार्थकत्वे एव दुहेस्तदुदाहरणमिति तु न युक्तम् । तत्रार्थे कर्मस्थक्रियया तुल्यक्रियत्वानुपपादनादित्याहुः ॥ यद्यपि कालस्याकर्तृत्वविवक्षायां कर्मणि लकारेपीदं सिध्यति तथापि उदुम्बरस्य कर्तृत्वविवक्षायामुदुम्बरः फलं पचतीत्येतद्व्यावृत्तये इदम् ॥ न पुनरोदनमिति । कर्मस्थक्रियया तुल्यक्रियत्वाभावादिति भावः ॥

( १८९१ श्यन्विधिवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ सृजियुज्योः श्यंस्तु ॥ * ॥

**( भाष्यम् ) सृजियुज्योः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम् । श्यंस्तु भवति ॥**

**सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावो वाच्यः चिणात्मनेपदार्थः । सृज्यते मालाम्, असर्जि मालामिति ॥**

**युजेस्तु न्याय्ये कर्मकर्तरि यकोऽभावाय । युज्यते ब्रह्मचारी योगम् ॥**

( प्रदीपः ) श्रद्धोपपन्न इति । श्रद्धायुक्ते कर्तरीत्यर्थः ॥ चिणात्मनेपदार्थ इति । श्यना यगेव बाध्यते[4], न तु चि-

---

१ तापसेन तपस्तप्यते इत्यत्रेति भावः । ( र. ना. )

२ अयं कोष्ठकान्तर्गतः पाठः प्राचीनतरलेखकप्रमादात् 'योगविभागेनेति' 'दुःखार्थत्वादिति' इत्यनयोर्मध्ये पतितः सर्वेषु पुस्तकेषूपलब्धोपि संदर्भसंगतये-ऽस्माभिरत्र योग्यस्थाने स्थापित इति क्षन्तव्यं क्षमावत्तैरिति दाधिमथाः ॥

३ सामञ्जस्यादिति पाठः, फलितार्थो वा । ( र. ना. )

४ स्वविषये नित्यप्राप्तत्वादिति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



णिलर्थः । श्यनि तु प्रकृतेराद्युदात्तत्वं भवति, यकि तु लसार्वधातुकानुदात्तत्वे यक एवोदात्तत्वमिति श्यन्यकोरत्र स्वरे विशेषः ॥ **सृज्यते मालामिति** । श्रद्धया मालां निष्पादयतीत्यर्थः ॥ **असर्जि मालामिति** । मालां निष्पादितवानित्यर्थः ॥ **यकोऽभावायेति** । अकारप्रश्लेषाद् यग्बाधनायेत्यर्थः ॥ **युज्यत इति** । योगो ब्रह्मचारिणं युनक्ति संबध्नातीत्यर्थः । ततो ब्रह्मचारिणः कर्तृत्वविवक्षायां युज्यते ब्रह्मचारी योगमिति भवति ॥

( उद्द्योतः ) श्रद्धायुक्ते कर्तरीति । मुख्ये कर्तरीत्यर्थः ॥ श्रद्धा आदरः, तेन युक्तो मुख्य एव, तस्यैव क्रियायामादरादिति बोध्यम् । तेनात्यन्ताप्राप्तौ विध्यर्थोऽयमंशः ॥ श्यन्यकोर्विशेषमाह—श्यनि त्विति ॥ मुख्यकर्तृत्वं निदर्शयति—श्रद्धयेति । तत्र सृजेः कर्तरि श्यन् सिद्धः, चिणात्मनेपदे एव कर्मवद्भावप्रयोजने । श्यनस्तु कर्मवद्भावलभ्ययका बाधो मा भूदिति प्रतिप्रसवमात्रम् । दैवादिकः सृजिरकर्मक एवेति त्वश्रद्धेयमेवेति केचित् ॥

भाष्ये—न्याय्ये इति । न्याय उत्सर्गसूत्रम् कर्मवत्कर्मणेति तदनपेते तत्प्राप्तियोग्ये इति यावत् । सकर्मकत्वात्तदप्राप्तौ विधिः । श्यंस्तु अप्राप्त एव विधीयते यक् (ग्) बाधनायेति विशेषः॥ यकोऽभावायेत्यस्य श्यंस्त्विति आदिः ॥ योगो ब्रह्मचारिणमिति । पूर्वकक्षेयम् ॥ संबध्नातीत्यस्य संबन्धानुकूलव्यापारवान् भवतीत्यर्थः ॥ तत इति । प्रतियोगित्वावच्छिन्नः संबन्धो युजेरर्थः । प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वम् ॥ यत्तु—योगमिति प्रतियोगे द्वितीया । एवं चाकर्मकत्वात्कर्मवद्भावे सिद्धे यग्बाधनाय श्यन्मात्रविधानार्थमिदमिति ॥ तन्न । सृजियुज्योरिति वार्तिके सकर्मकयोरिति भाष्यविरोधापत्तेः ॥

( १८९२ कर्मवद्भावविधिवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ करणेन तुल्यक्रियः कर्ता बहुलम् ॥ * ॥

( भाष्यम् ) करणेन तुल्यक्रियः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम् । परिवारयति कण्टकैर्वृक्षः, परिवारयन्ते कण्टका वृक्षम् ॥

( प्रदीपः ) **करणेनेति** । बहुलग्रहणात्साध्वसिश्छिनत्तीत्यादौ न भवति ॥

( उद्द्योतः ) भाष्ये—परिवारयन्ते कण्टका इति । न च णिचश्चेत्यनेनैवात्मनेपदं सिद्धम् । यक्चिणौ तु *णिश्रिग्रन्थीति प्रतिषिद्धावेवेति व्यर्थमिदमिति वाच्यम् । कर्तृगामित्वाभावेऽपि आत्मनेपदार्थं चिण्वद्भावार्थं च वार्तिकस्यावश्यकत्वात् ॥

( १८९३ प्रतिषेधवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ स्रवत्यादीनां प्रतिषेधः ॥ * ॥

( भाष्यम् ) स्रवत्यादीनां प्रतिषेधो वक्तव्यः । स्रवति कुण्डिका उदकम् स्रवति कुण्डिकाया उदकम् । स्रवन्ति वलीकान्युदकम् स्रवति वलीकेभ्य उदकम् ॥

( प्रदीपः ) **स्रवति कुण्डिकेति** । निष्क्रामदुदकं निष्क्रामयतीत्यस्मिन्नर्थे तुल्यक्रियत्वात् प्राप्तः कर्मवद्भावो निषिध्यते ॥

( उद्द्योतः ) स्रवति कुण्डिका उदकमित्यस्य निष्क्रामयतीत्यर्थः ॥ स्रवति कुण्डिकाया इत्यस्य निष्क्रामतीत्यर्थः ॥ तदाह—निष्क्रामदिति ॥

( आक्षेपभाष्यम् )

स तर्हि प्रतिषेधो वक्तव्यः ? ।

( समाधानभाष्यम् )

न वक्तव्यः । तुल्यक्रिय इत्युच्यते । क्रियान्तरं चात्र गम्यते । इह तावत्स्रवति कुण्डिका उदकमिति विसृजतीति गम्यते । स्रवति कुण्डिकाया उदकमिति निष्क्रामतीति गम्यते ॥ स्रवन्ति वलीकान्युदकमिति विसृजन्तीति गम्यते । स्रवति वलीकेभ्य उदकमिति पततीति गम्यते ॥

( प्रदीपः ) **विसृजतीति गम्यते इति** । तथा च लोके कथ्यते—कृपणोऽसौ न किंचित् स्रवतीति । विसर्गश्च दानमुच्यते इति तुल्यक्रियत्वाभावः ॥

( उद्द्योतः ) ननु विसर्गोऽपि विभागानुकूलव्यापारो निष्क्रामणादनतिरिक्तोऽत आह—विसर्गश्च दानमिति । मुख्यदानपदार्थस्यात्रारोप इति भावः ॥

( १८९४ यक्चिण्प्रतिषेधवार्तिकम् ॥ १८ ॥ )

## ॥ * ॥ भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात् ॥ * ॥

( भाष्यम् ) भूषाकर्मकिरादिसनन्तानां चान्यत्रात्मनेपदात् प्रतिषेधो वक्तव्यः । भूषयते कन्या स्वयमेव । अबुभूषत कन्या स्वयमेव । मण्डयते कन्या स्वयमेव । अममण्डत कन्या स्वयमेव ॥ किरादि—अवकिरते हस्ती स्वयमेव । अवाकीर्ष्ट हस्ती स्वयमेव । [ गिरते ग्रासः स्वयमेव । अगीर्ष्ट ग्रासः स्वयमेव ] । सन्—चिकीर्षते कटः स्वयमेव । अचिकीर्षिष्ट कटः स्वयमेव ॥ कर्मवद् ॥ ८७ ॥

( प्रदीपः ) **भूषाकर्मेति** । कर्मशब्दः क्रियावाची । भूषाफलं च शोभाख्यं कर्मणि दृश्यते इति कर्मस्था भूषा ॥ अण्यन्तार्थं च भूषाग्रहणम् ण्यन्तानां च वक्ष्यमाणेन यक्चिणोः प्रतिषेधस्य सिद्धत्वात् । तेनालंकुरुते स्वयमेव कन्या, अलमकृत कन्येति भवति ॥ **अवकिरत इति** । हस्तिनं कश्चित्पांस्वादिनावकिरति । तत्र सौकर्यात्कर्तृत्वेन हस्ती विवक्ष्यते ॥

---

१ प्रत्ययाद्युदात्तत्वमित्यर्थः । ( र. ना. )

२ कर्मस्थक्रियया तुल्यक्रियत्वाभावादिति भावः । ( र. ना. )

३ कर्मवद्भावाप्राप्तावित्यर्थः । ( र. ना. )

४-५-६ 'किरति' इत्येकस्मिन् पुस्तके ॥

७ नोपलभ्यते लिखितपुस्तकेषु ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चिकीर्षत इति । करोतिक्रियापेक्षमत्र कर्मस्थक्रियत्वम् । इच्छा तु कर्तृस्थैव । अर्थाच्च करोतेः प्राधान्यं तदर्थत्वादिच्छायाः ॥ ८७ ॥

( उद्द्योतः ) सिद्धत्वादिति । वक्ष्यमाणेन यक्चिणोः प्रतिषेधे सिद्धेऽपि स्यतासिविषये चिण्वद्भावाभावाय ण्यन्तेऽपि एतत्प्रवृत्तिरावश्यकी । अन्यत्रात्मनेपदादित्यनेन तस्याप्यत्र निषेधात् ॥ णिश्रन्थीत्यनेन तु न सिद्धिः । न हि चिणिनषेधेन चिण्वद्भावनिषेधो लभ्यते इति चिन्त्यमेतत् ॥ कर्तृत्वेन हस्तीति । अवकिरते व्याप्तो भवतीत्यर्थं इति भावः ॥ आद्यकक्षायां विक्षेपणेन प्राप्तं करोतीत्यर्थः ॥ भाष्येऽवाकीर्ष्टेति । अन्यत्रात्मनेपदादिरयुक्तेश्चिण्वद्भावोऽपि नेति भावः ॥ अत[१] एवेदं वार्तिकं न दुहेत्यत्र न पठितम् । चिकीर्षेरिच्छावाचकत्वात्कर्मस्थक्रियत्वाभावमाशङ्क्याह—करोति क्रियापेक्षमिति ॥ ननु यतः परत्ववाच्यस्य कर्मवद्भावस्तत्प्रधानार्थस्य न कर्मस्थत्वमित्यत आह—अर्थाच्चेति ॥८७॥



( ४३२ यक्चिणप्रतिषेधसूत्रम् ॥ ३।१।५ आ. २ )

## ७०६ न दुहस्नुनमां यक्चिणौ ॥ ३ । १ । ८९ ॥

( १८९५ यक्चिण्प्रतिषेधवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम् ॥ * ॥

( भाष्यम् ) यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानं कर्तव्यम् ॥ णि—कारयते कटः स्वयमेव । अचीकरत कटः स्वयमेव । णि ॥ श्रि—उच्छ्रयते दण्डः स्वयमेव । उदशिश्रियत दण्डः स्वयमेव । श्रि ॥ ब्रूञ्—ब्रूते कथा स्वयमेव । अवोचत कथा स्वयमेव ॥

भारद्वाजीयाः पठन्ति—

( १८९६ भारद्वाजीयवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ यक्चिणोः प्रतिषेधे ॥ * ॥

( भाष्यम् ) णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम् * इति ॥ न दुहस्नु ॥ ८९ ॥

( प्रदीपः ) न दु ॥ ८९ ॥ यक्चिणोरिति । आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थाः सकर्मका भवन्ति तदा कर्मवद्भावात् प्राप्तौ यक्चिणौ प्रतिषिध्येते । यथा विकुर्वते सैन्धवा वल्गन्तीत्यर्थः । तान् यदा अन्यो वल्गयति तदा तेषां कर्मत्वम् । पुनः सौकर्यातिशयात्कर्तृत्वविवक्षायां विकुर्वते सैन्धवाः स्वयमेव व्यकृषत सैन्धवाः स्वयमेवेति यक्चिणौ न भवतः । उत्पुच्छयते गौरित्यत्राप्यन्तर्भावितण्यर्थत्वात्कर्मवद्भावाद्यक्चिणोः प्राप्तिः ॥ ब्रूते कथेति । वचनं शब्दप्रकाशनफलत्वात्कर्मस्थम् ॥ ८९ ॥

( उद्द्योतः ) न दुहस्नुनमाम् ॥८९॥ अकर्मकाणां कर्मस्थक्रियया तुल्यक्रियकर्त्रभावात्कर्मवत्त्वाप्राप्तौ निषेधो व्यर्थोऽत आह—आत्मनेपदेति ॥ सकर्मका भवन्तीति । ततो व्यापारनिवृत्तौ यदा कर्मकर्तृत्वमिति शेषः ॥ व्यकृषतेति । अत्र चिण्वद्भावोपि नेति कैयटाशयमाहुः केचित् ॥ कृञ इत्यनुवर्तमाने वेः शब्दकर्मणः अकर्मकाच्चेत्यत्रा[३]यं निर्दिष्टः ॥ परे तु पक्षे चिण्वद्भावे व्यकारिषतेत्यपि बोध्यम् । यदि चिण्प्रतिषेधे चिण्वद्भावप्रतिषेधोऽपीष्टः स्यात्, तर्हि भूषाकर्मेति पूर्ववार्तिकमप्यत्रैव कुर्यात् एतद्वा तत्रैव कुर्यात् । विभेदेन करणाच्च चिण्वद्भावस्य प्रतिषेधोऽनेन नेति ध्वनयति । चिण उदाहरणं एकवचने बोध्यमित्याहुः ॥

भारद्वाजीयानां हेतुमत्पदत्यागे बीजमाह—उत्पुच्छयत इति । अत्र यगादिकं न ॥ ब्रूते कथेति । अत्रे[४]ति शेषः । प्रकाशनफलकं वचनं ब्रूञोऽर्थः । प्रकाशनस्य कर्ममात्रनिष्ठत्वाच्छब्दे प्रकाशनकृतविशेषदर्शनाच्च कर्मस्थत्वं बोध्यम् ॥ ८९ ॥



(४३३ कर्मवद्भावे श्यन्परस्मैपदविधिसूत्रम् ॥३।१।५ आ.३)

## ७०७ कुषिरजोः प्राचां श्यन् परस्मैपदं च ॥ ३ । १ । ९० ॥

( १८९७ श्यन्विषयपरिसंख्यावार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कुषिरजोः श्यन्विधाने सार्वधातुकवचनम् ॥ * ॥

( भाष्यम् ) कुषिरजोः श्यन्विधाने सार्वधातुकग्रहणं कर्तव्यम् ॥

( प्रदीपः ) कुषिरजोः ॥ ९० ॥ यकि प्राप्ते श्यन्विधीयते । तेन श्यनि ञ्नित्यादिरित्याद्युदात्तं पदं भवति । शप्श्यनोर्नित्यमिति नित्यश्च नुमागमः कुष्यन्ती जङ्घेति ॥ सार्वधातुकवचनमिति । सार्वधातुके विषयभूते श्यन् परस्मैपदे भवत इत्यर्थः ॥

( उद्द्योतः ) कुषिरजोः ॥ ९० ॥ यक्श्यनोर्विशेषं दर्शयति—ञ्नित्यादिरित्यादिना ॥ परस्मैपदस्य सार्वधातुके विधानासंभवादाह—विषयेति ॥

---

१ 'णिश्रन्थि—' इति वार्तिकेन ॥

२ आत्मनेपदातिरिक्तस्य सर्वस्य निषेधेन चिण्वद्भावस्यापि निषेधादेवेत्यर्थः । ( र. ना. )

३ व्यकृषतेतिप्रयोगो निर्दिष्ट इत्यर्थः । ( र. ना. )

४ कैयटस्थस्य 'वचन'मित्यस्यादाविति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( १८९८ अन्यथानुपपत्तिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अवचने हि लिङ्लिटोः प्रतिषेधः ॥ * ॥

( भाष्यम् ) अक्रियमाणे हि सार्वधातुकग्रहणे लिङ्लिटोः प्रतिषेधो वक्तव्यः स्यात् । चुकुषे पादः स्वयमेव । ररञ्जे वस्त्रं स्वयमेव । कोषिषीष्ट पादः स्वयमेव । रङ्क्षीष्ट वस्त्रं स्वयमेव ॥

( उद्योतः ) भाष्ये—लिङ्लिटोः प्रतिषेध इति । तत्र नित्यात्मनेपदस्यैवेष्टत्वादिति भावः ॥

( आक्षेपभाष्यम् )

क्रियमाणे चापि सार्वधातुकग्रहणे कतीह कुष्णानाः पादा इति अत्रापि प्राप्नोति ॥ श्यना च स्यादीनां बाधनं प्राप्नोति । कोषिष्यते पादः स्वयमेव । अकोषि पादः स्वयमेव । रङ्क्ष्यते वस्त्रं स्वयमेव । अरञ्जि वस्त्रं स्वयमेव ॥

( प्रदीपः ) कुष्णाना इति । ताच्छील्यवयोवचनेति चानश् । तत्र श्यन् प्राप्नोति परस्मैपदं चान्वाचयशिष्टं मन्यते ॥ श्यना चेति । विशेषविहितत्वादिति भावः ॥

( उद्योतः ) ननु कुष्णाना इत्यत्र परस्मैपदाप्राप्तेस्तत्सहचरितः श्यन्नपि नेत्यत आह—परस्मैपदं चेति ॥ विशेषविहितत्वादिति । लृड्लृङ्व्यतिरिक्ते श्यनश्चारितार्थ्यादिदं चिन्त्यम् । परत्वाद्बाध इति उचितमिति कश्चित् ॥

( परिसंख्यावार्तिकवैयर्थ्यभाष्यम् )

यत्तावदुच्यते—सार्वधातुकग्रहणं कर्तव्यमिति । न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? । "सार्वधातुके यगि"ति ।

( अनुवर्तनेऽन्वयविचारभाष्यम् )

यदि तदनुवर्तते पूर्वस्मिन्योगे किं समुच्चयः—ले च, सार्वधातुके चेति । आहो स्वित्—लग्रहणं सार्वधातुकविशेषणम् ॥ किं चातः ? ।

यदि समुच्चयः, कतीह भिन्दानाः कुसूला इत्यत्रापि प्राप्नोति ॥

अथ लग्रहणं सार्वधातुकविशेषणम् । लिङ्लिटोर्न सिध्यति—बिभिदे कुसूलः स्वयमेव, भित्सीष्ट कुसूलः स्वयमेवेति ॥

( उद्योतः ) भाष्ये पूर्वस्मिन्योग इति । कर्मवत्कर्मणेत्यत्र ॥ ले च सार्वधातुके चेति । लसार्वधातुकयोर्वाच्यत्वेन स्थितः कर्मवदित्यर्थः ॥ भिन्दाना इति । चानश् ॥

( सार्वधातुकविशेषणत्वस्वीकारभाष्यम् )

अस्तु लग्रहणं सार्वधातुकविशेषणम् ॥

( दूषणस्मारकभाष्यम् )

ननु चोक्तं लिङ्लिटोर्न सिध्यतीति ॥

( दूषणपरिहारभाष्यम् )

लिङ्लिड्ग्रहणमपि प्रकृतमनुवर्तते । क्व प्रकृतम् । "कास्प्रत्ययादाममन्त्रे लिटि" "लिङ्याशिष्यङि"ति च ॥

एवं च कृत्वा सोऽप्यदोषो भवति—यदुक्तं 'कतीह कुष्णानाः पादा' इत्यत्रापि प्राप्नोतीति । इहापि लविशिष्टं सार्वधातुकग्रहणमनुवर्तते ॥

( उद्योतः ) भाष्य इहापि लेति । कुषिरजोरित्यत्रापि लादेशसार्वधातुकविषये इत्यर्थ इति भावः ॥

( दूषणान्तरनिराकरणभाष्यम् )

यदप्युच्यते—श्यना च स्यादीनां बाधनं प्राप्नोतीति ॥ यक्प्रतिषेधसंबन्धेन श्यनं वक्ष्यामि—"न दुहस्नुनमां यक्चिणौ" । ततः—"कुषिरजोः प्राचाम्" । कुषिरजोः प्राचां यक्चिणौ न भवतः । ततः—"श्यन् परस्मैपदं चे"ति ॥

( प्रदीपः ) यक्प्रतिषेधसंबन्धेनेति । तेन यत्र यकः प्राप्तस्य प्रतिषेधस्तत्र श्यन्परस्मैपदे भवतो नान्यत्रेति स्यादिविषये न भवतः ॥

( आक्षेपभाष्यम् )

यथैव तर्हि यको विषये श्यन् भवति, एवं चिणोपि विषये प्राप्नोति—अकोषि पादः स्वयमेव । अरञ्जि वस्त्रं स्वयमेव ॥

( समाधानभाष्यम् )

एवं तर्हि द्वितीयो योगविभागः करिष्यते—"न दुहस्नुनमां चिण्" भवति । ततो "यक्" यक् च न भवति दुहस्नुनमाम् । ततः "कुषिरजोः प्राचां" यक् न भवति । ततः "श्यन् परस्मैपदं चे"ति ॥

अथ वा—अनुवृत्तिः करिष्यते—"स्यतासी लृलुटोः" "च्लिलुङि" "च्लेः सिच्"भवतीति । 'कर्तरि शप्' 'स्यतासी लृलुटोः' "च्लि लुङि" "च्लेः सिच्" भवतीति । "दिवादिभ्यः श्यन्" 'स्यतासी लृलुटोः' "च्लि लुङि" "च्लेः सिच्" भवतीति । "कुषिरजोः प्राचां श्यन्परस्मैपदं च" "स्यतासी लृलुटोः" "च्लि लुङि" "च्लेः सिच्" भवतीति ॥

अथ वान्तरङ्गाः स्यादयः ॥ कान्तरङ्गता ? । लावस्थायामेव स्यादयः । सार्वधातुके श्यन् ॥ कुषिरजोः प्राचाम् ॥ ९० ॥

( प्रदीपः ) लावस्थायामेवेति । अकृतेष्वेव लादेशेषु विशेषविहिताः स्यादयो भवन्ति पूर्वं, तैश्च श्यनो विरोधाद्बाधितत्वात् संनियोगशिष्टं परस्मैपदमपि न भवति ॥ ९० ॥

( उद्योतः ) अकृतेष्वेव लादेशेष्विति । निरवकाशत्वा-

१–२ वार्तिके भाष्ये च 'लिङ्लिटोः' इत्येवमेव पाठो भवेत्, अग्र उदाहरणक्रमोपलम्भात् । सूत्रपाठक्रमत्यागे मानाभावाच्च ॥ अक्षरसमाम्नायक्रमस्य मुख्यत्वेऽष्टाध्याय्यामपि तदङ्गीकारस्यैवापत्तेः ॥

३ एतत्सूत्रद्वयनिर्देशक्रमेणापि 'लिङलिटोः' इत्येवमेव पाठो वार्तिकभाष्ययोर्भवेद्' इति प्रतीयते ॥

४ भिन्दाना इतिवत् 'कुष्णानाः' इत्यत्रापि चानशेवेति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

भावेऽपि विशेषविहितत्वस्य पूर्वप्रवृत्तिप्रयोजकतेति भावः ॥ परे तु स्यतासी इति सूत्रे "आयादय" इत्यत आर्द्धधातुक इत्यनुवर्त्य तत्त्वावस्थायामेव स्यतासी। अतोऽकृतेष्वेवादेशेषु तत्प्रवृत्तिः ॥ इदमेवाभिप्रेत्य भाष्ये लावस्थायामित्युक्तमित्याहुः ॥ इयनो विरोधादिति। उभयोः परत्वासंभवरूपो विरोधः ॥ ९० ॥

( ४३४ अधिकारसूत्रम् ॥ ३ । १ । ५ आ. ४ )

## ७०८ धातोः ॥ ३ । १ । ९१ ॥

( अधिकारावधिनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**आकुतोयं धात्वधिकारः। किं प्राग्लादेशात्। आहोस्विद् आ तृतीयाध्यायपरिसमाप्तेः?।**

( प्रदीपः ) धातोः ॥ ९१ ॥ स्वरितत्वप्रतिज्ञानादधिकारत्वमस्य ज्ञायते न त्ववधिविशेषः। अथापि स्वरिते सति नाधिकारो भवतीति व्याख्यानम्। तथापि दुर्लक्ष्यत्वाच्च ज्ञायते क्व स्वरितत्वं धात्वधिकारनिवृत्त्यर्थं प्रतिज्ञातमिति पृच्छति—आकुत इति ॥

( उद्द्योतः ) धातोः ॥ ९१ ॥ तथापीति। धात्वधिकारनिवृत्त्यर्थं प्रतिज्ञातं यत्स्वरितं तत्क्वेति न ज्ञायते इति योजना ॥

( १८९९ वार्तिकम् ॥ १ ॥ )

**॥ * ॥ धात्वधिकारः प्राग्लादेशात् ॥ * ॥**

( भाष्यम् ) प्राग्लादेशाद्धात्वधिकारः ॥

( १९०० हेतुवार्तिकम् ॥ २ ॥ )

**॥ * ॥ लादेशे हि व्यवहितत्वादप्रसिद्धिः ॥ * ॥**

( भाष्यम् ) अनुवर्तमाने हि लादेशे धात्वधिकारे व्यवहितत्वादप्रसिद्धिः स्यात् ॥ किं च स्यात्?।

( १९०१ दोषदर्शकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ आद्ये योगे न व्यवाये तिङः स्युः ॥ * ॥**

( भाष्यम् ) आद्ये योगे विकरणैर्व्यवहितत्वात्तिङो न स्युः। पचति पठति ॥

इदमिह संप्रधार्यम्। विकरणाः क्रियन्ताम्, आदेशा इति। किमत्र कर्तव्यम्?।

परत्वादादेशाः ॥

नित्या विकरणाः। कृतेष्वप्यादेशेषु प्राप्नुवन्ति अकृतेष्वपि प्राप्नुवन्ति। नित्यत्वाद्विकरणेषु कृतेषु विकरणैर्व्यवहितत्वादादेशा न प्राप्नुवन्ति ॥

अनवकाशास्तर्ह्यादेशाः ॥

१ धात्वधिकारे लादेशेऽनुवर्तमाने हि विकरणैर्व्यवहितत्वाल्लादेशस्यासिद्धिरित्यर्थः। ( र. ना. )

सावकाशा आदेशाः। कोऽवकाशः। य एते लुग्विकरणाः श्लुविकरणाः लिङ्लिटौ च ॥

( प्रदीपः ) आद्ये योग इति। तिप्तस्झीत्यत्र ॥ विकरणैरिति। स्यादयोत्र विकरणा अभिप्रेता न शबादयस्तेषां सार्वधातुकाश्रयत्वादकृते लादेशे प्राप्त्यभावात्। यदा तु सार्वधातुक इति विषयसप्तमीपक्षस्तदाऽकृतेति लादेशे शबादीनां प्राप्तिरस्ति ॥

(उद्द्योतः) अनुदात्तङित इत्यादिभिर्लादेशविधानात्तत्र धात्वधिकाराभावात् भाष्ये उक्तमाद्ये योग इति ॥ सर्वेषामेतन्नियामकत्वात्तिप्तस्झीत्यस्याद्यत्वमिति भावः ॥ आद्ये योगे धातोरित्यस्य संबन्धे व्यवधाने तिङो न स्युरिति संबन्धः ॥ पचति पठति इति भाष्योदाहरणासंगतिं मत्वाह—यदा त्विति। इदमेवाभिप्रेत्य विकरणानामादेशापेक्षया नित्यत्वं वक्ष्यति ॥

( १९०२ दूषणान्तरवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न स्यादेत्वं टेष्टितां यद्विधत्ते ॥ * ॥**

( भाष्यम् ) यच्च टित्संज्ञकानां टेरेत्वं विधत्ते, तच्च विकरणैर्व्यवहितत्वादादेशानां न स्यात् ॥

( उद्द्योतः ) भाष्ये टित्संज्ञानामिति। इत्संज्ञकटकारवतामित्यर्थः ॥

( १९०३ दूषणान्तरवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ एशः शित्वम् ॥ * ॥**

( भाष्यम् ) एकारश्च शित्कर्तव्यः। किं प्रयोजनम्?। 'सित्सर्वस्ये'ति सर्वस्यादेशो यथा स्यात्। अक्रियमाणे हि शकारे "तस्मादित्युत्तरस्यादेः परस्य" इति तकारस्यैत्वे कृते द्वयोरेकारयोः श्रवणं प्रसज्येत। निवृत्ते पुनर्लादेशे धात्वधिकारे "अलोन्त्यस्य" विधयो भवन्तीत्येकारस्य एकारवचने प्रयोजनं नास्तीति कृत्वा अन्तरेणापि शकारं सर्वादेशो भविष्यति ॥

( प्रदीपः ) द्वयोरेकारयोरिति। यद्यप्येकस्यायादेशस्तथाप्यादेशश्रवणद्वारेण तस्यापि श्रवणप्रसङ्ग इति भावः ॥

( उद्द्योतः ) भाष्ये एकारस्यैकारवचने इति। यद्यपि विशेषविहितत्वात् 'टित्' इति बाधित्वा लिटस्तझयोरिति प्राप्नोति तथापि एकारस्य सिद्धावेकारवचने प्रयोजनं नास्तीति व्याख्येयम् ॥ सर्वादेशो भविष्यतीति। निर्दिश्यमानपरिभाषयेति भावः ॥

( १९०४ दूषणान्तरवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ यच्च लोटो विधत्ते ॥ * ॥**

( भाष्यम् ) यच्च लोटो विधीयते। तच्च विकरणैर्व्यवहितत्वान्न स्यात्। किं पुनस्तत्?। "लोटो लङ्वत्"। "एरुः"। "सेर्ह्यपिच्च"। "वा छन्दसी"ति।

Digitized by Arya Samaj Foundation Chennai and eGangotri

( १९०५ दूषणान्तरवार्तिकम् ॥ ७ ॥ )

॥ * ॥ यच्चाप्युक्तं लङ्लिङोस्तच्च न स्यात् ॥ * ॥

( भाष्यम् ) [ यच्चाप्युक्तं लङ्लिङोः, तच्च न स्यात् । ] किं पुनस्तत् ? । "नित्यं ङितः" । "इतश्च" । "तस्थस्थमिपां तांतंतामः" । "लिङः सीयुट्" । "यासुट् परस्मैपदेषूदात्तो ङिच्चे"ति ॥ तस्मात्प्राग्लादेशाद्धात्वधिकारः ॥

( प्राग्लादेशाद्धात्वधिकारपक्षे दूषणोपक्रमभाष्यम् )

यदि प्राग्लादेशाद्धात्वधिकारः ॥

( १९०६ प्राग्लादेशाद्धात्वधिकारे दूषणवार्तिकम् ॥ ८ ॥ )

॥ * ॥ अकारः ॥ * ॥

( भाष्यम् ) अकारः शित्कर्तव्यः । किं प्रयोजनम् ? । शित्सर्वस्येति सर्वादेशो यथा स्यात् । अनुवर्तमाने पुनर्लादेशे धात्वधिकारे "तस्मादित्युत्तरस्य" "आदेः परस्ये"ति थकारस्यात्वे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात्—पेच यूयं चक्र यूयमिति ॥

( प्रदीपः ) अकार इति । यस्थस्य स्थाने विधीयते ॥ थकारस्यात्व इति । ननु पच् थ इति स्थिते परत्वादिट् प्राप्नोति । नैष दोषः । अकारो नित्यः कृतेऽपीटि प्राप्नोति, अकृतेऽपि । इट् तु कृते अकारे वलादित्वाभावान्न प्राप्नोतीत्यनित्यः । यद्यपि शब्दान्तरस्य प्राप्त्या अकारस्यानित्यत्वम् । तथापि कृताकृतप्रसङ्गित्वान्नित्यत्वमस्त्येव । न च शब्दान्तरप्राप्तिकृतमनित्यत्वमिह सर्वत्र शास्त्र आश्रीयते ॥

( उद्योतः ) यस्थस्येति । परस्मैपदानामित्यनेन ॥

( दूषणोद्धारभाष्यम् )

ननु च निवृत्तेपि लादेशे धात्वधिकारे अलोन्त्यस्य विधयो भवन्तीत्यकारस्याकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति ॥

( दूषणस्थापकभाष्यम् )

अस्त्यन्यदकारस्याकारवचने प्रयोजनम् । किम् ? । वक्ष्यत्येतत्—* अकारस्याकारवचनं समसंख्यार्थमिति ॥

( १९०७ प्राग्लादेशाद् धात्वधिकारे दूषणान्तरवार्तिकम् ॥ ९ ॥ )

[ ॥ * ॥ आर्धधातुकसंज्ञायां धातुग्रहणम् ॥ * ॥ ]

( भाष्यम् ) आर्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम् । धातोः परस्यार्धधातुकसंज्ञा यथा स्यात् । इह मा भूद् वृक्षत्वं वृक्षतेति ॥ तस्माल्लादेशे धात्वधिकारोनुवर्त्यः ॥

( प्रथमदूषणस्मारणभाष्यम् )

ननु चोक्तम्—*आद्ये योगे न व्यवाये तिङः स्युरिति ॥

( दूषणोद्धारभाष्यम् )

नैष दोषः ।

( १९०८ दूषणोद्धारवार्तिकम् ॥ १० ॥ )

[ ॥ * ॥ आनुपूर्व्यात् सिद्धम् ॥ * ॥ ]

( भाष्यम् ) आनुपूर्व्यात्सिद्धमेतत् । नात्राकृतेष्वादेशेषु विकरणाः प्राप्नुवन्ति । किं कारणम् ? । सार्वधातुके विकरणा उच्यन्ते । न चाकृतेष्वादेशेषु सार्वधातुकत्वं भवति ॥

( उद्योतः ) भाष्ये सार्वधातुके विकरणा इति ॥ विषयसप्तम्यां तु परिभाषाबाधः स्यादिति भावः ॥

( दूषणसाधकभाष्यम् )

ये तर्हि नैतस्मिन्विशेषे विधीयन्ते । के पुनस्ते ? । स्यादयः ॥

( दूषणपरिहारभाष्यम् )

अत्रापि धातुग्रहणं विहितविशेषणम्—धातोर्विहितस्य लस्येति ॥

( उद्योतः ) भाष्ये अत्रापीति । सिद्धमिति शेषः । कथम् ? तत्राह—धातुग्रहणमिति । टेरत्वसिद्धये विषयसप्तमी वादिनोपि विहितविशेषणमावश्यकमिति भावः ॥

( दूषणभाष्यम् )

यद्येवं विन्दतीति णलादयः प्राप्नुवन्ति ॥

( दूषणपरिहारभाष्यम् )

धातुनात्र विहितं विशेषयिष्यामः । विदिना आनन्तर्यं, धातोर्विहितस्य लस्य विदेरनन्तरस्येति ॥

( दूषणभाष्यम् )

इह तर्हि अजक्षिष्यन् अजागरिष्यन् इति अभ्यस्ताद् झेर्जुस् भवतीति जुस्भावः प्राप्नोति ॥

( दूषणपरिहारभाष्यम् )

अत्रापि धातुना विहितं विशेषयिष्यामः । अभ्यस्तेनानन्तर्यम् । धातोर्विहितस्याभ्यस्तादनन्तरस्येति ॥

( आक्षेपभाष्यम् )

आत इत्यत्र कथं विशेषयिष्यसि ? ॥

यदि तावद्धातुग्रहणं विहितविशेषणम् । आकारग्रहणमानन्तर्यविशेषणम् । अलुनन् अपुनन् इत्यत्रापि प्राप्नोति ॥

१–२ अस्य वार्तिकस्य भाष्यमेवोपलभ्यतेऽतः कोष्ठकमध्ये स्थापितम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(भाष्यम्) अथाकारग्रहणं विहितविशेषणं धातुग्रहणमानन्तर्यविशेषणम् । अपिबन् अजिघ्रन् इत्यत्रापि प्राप्नोति ॥

(उद्द्योतः) अपिबन्निति । शत्रादेशस्य परादिवद्भावेन ग्रहणादिति भावः । लङः शाकटायनस्येति जुस्प्राप्तः ।

(भाष्यम्) अस्तु तर्हि धातुग्रहणं विहितविशेषणमाकारग्रहणमानन्तर्यविशेषणम् ॥

(उद्द्योतः) वस्तुतः क्वचिद्विहितविशेषणमिति सर्वत्र तदेवाश्रयणीयमिति न नियम इति न दोषः । भाष्यकारस्तु तथाश्रयणेपि अभ्युपेत्यवादेन दोषाभावं प्रतिपादयति ॥

(दूषणस्मारणभाष्यम्)

ननु चोक्तमलुनन्नपुनन्नित्यत्रापि प्राप्नोतीति ॥

(दूषणपरिहारभाष्यम्)

नैष दोषः । लोपे कृते न भविष्यति ॥

(दूषणसाधकभाष्यम्)

नात्र लोपः प्राप्नोति । किं कारणम् । ईत्वेन बाध्यते ॥

(दूषणबाधकभाष्यम्)

नात्रेत्वं प्राप्नोति । किं कारणम् । अन्तिभावेन बाध्यते ॥

(दूषणसाधकभाष्यम्)

नात्रान्तिभावः प्राप्नोति । किं कारणम् । जुस्भावेन बाध्यते ॥

(दूषणबाधकभाष्यम्)

नात्र जुस्भावः प्राप्नोति । किं कारणम् । लोपेन बाध्यते ॥

(दूषणसाधकभाष्यम्)

लोप ईत्वेन । ईत्वमन्तिभावेन । अन्तिभावो जुस्भावेन । जुस्भावो लोपेनेति चक्रकमव्यवस्था प्रसज्येत ॥

(उद्द्योतः) चक्रकमव्यवस्थेति भाष्ये चक्ररूपाऽव्यवस्थेत्यर्थः ॥

(दूषणबाधकभाष्यम्)

नास्ति चक्रकप्रसङ्गः । न चाव्यवस्थाकारिणा शास्त्रेण भाव्यम् । शास्त्रेण नाम व्यवस्थाकारिणा भवितव्यम् । न चात्र हलादिना मुहूर्तमपि शक्यमवस्थातुम् । तावत्येवात्रान्तिभावेन भवितव्यम् । अन्तिभावे कृते लोपः । लोपेन व्यवस्था भविष्यति ।

(प्रदीपः) तावत्येवेति । कृत एव झशब्देऽकृत एव विकरण इत्यर्थः । आयन्नादिषूपदेशिवद्वचनादुपदेशकाल एव झस्यान्तादेशेन भाव्यमिति भावः ॥

(उद्द्योतः) आयन्नादिष्विति । आदिना झोऽन्त इत्यस्यापि ग्रहादिति भावः ॥ उपदेशकाल एवेति । उपदेशोत्तरकाले कार्यान्तरात्पूर्वमेवेत्यर्थः ॥ भाष्येऽन्तभावे कृते लोप इति । न चान्तरङ्गत्वात्पूर्वं कृतेऽप्यन्तौ लोपात्पूर्वं स्थानिवद्भावेन लित्वात् जुस्प्राप्नोति अनाङ्गत्वेनान्तरङ्गत्वादिति वाच्यम् । च्लेर्जुसित्यत्रेकारस्योच्चारणार्थत्वेनाल्विधित्वेन स्थानिवत्त्वाभाव इत्याशयात् ॥ वस्तुत आत इत्यत्र जुस्ग्रहणानुवृत्तेस्तत्सूत्रस्थभाष्ये च्लि लुङीति सूत्रस्थभाष्ये चोक्तत्वेन न कापि दोषप्रसङ्ग इति ध्येयम् ॥ प्रकृतसूत्रस्थभाष्यं त्वेकदेश्युक्तिः ॥

(तृतीयदूषणोद्धारभाष्यम्)

यदप्युच्यते—*पशः शित्त्वमिति । क्रियते न्यास एव ॥

(सूत्रप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

कानि पुनरस्य योगस्य प्रयोजनानि ।

(१९०९ प्रयोजनवार्तिकम् ॥ ११ ॥)

॥*॥ प्रयोजनं प्रातिपदिकप्रतिषेधः ॥*॥

(भाष्यम्) प्रातिपदिकप्रतिषेधः प्रयोजनम् । धातोस्तव्यदादयो यथा स्युः प्रातिपदिकान्माभूवन्निति ॥

(प्रदीपः) प्रातिपदिकान्मा भूवन्निति । द्वितीयादिवदिति भावः ॥

(उद्द्योतः) द्वितीयादीति । सा हि यथा शब्दान्तरवाच्यक्रियापेक्षे स्वप्रकृत्यर्थस्य कर्मत्वे विधीयन्ते तथा तव्यादयोपि स्युरित्यर्थः ॥

(प्रयोजननिराकरणभाष्यम्)

नैतदस्ति प्रयोजनम् । साधने तव्यदादयो विधीयन्ते । साधनं च क्रियायाः । क्रियाऽभावात् साधनाऽभावादसत्यपि धात्वधिकारे प्रातिपदिकात्तव्यदादयो न भविष्यन्ति ॥

(प्रदीपः) साधन इति । प्रकृतिवाच्यान्तरङ्गक्रियासाधनसंभवे शब्दान्तरवाच्यबहिरङ्गक्रियासाधने तव्यादयो न भविष्यन्ति । द्वितीयादयस्तु प्रातिपदिकादेव विधीयमानाः शब्दान्तरवाच्यक्रियापेक्ष एव साधने वचनसामर्थ्याद्भवन्तीति भावः ॥

(उद्द्योतः) द्वितीयादिभ्यो वैषम्यमुपपादयति—प्रकृतीति ॥

(१९१० प्रयोजनवार्तिकम् ॥ १२ ॥)

॥ * ॥ स्वपादिषु ॥ * ॥

(भाष्यम्) स्वपादिषु तर्हि प्रयोजनम् । स्वपिति । सुपितीति मा भूत् ॥

(प्रदीपः) स्वपादिष्विति । येऽपभ्रंशरूपाः क्रियावचना आणवयत्यादितुल्यास्तेभ्यस्तव्यादयो मा भूवन् । न हि ते धातवः । पाठेन धातुसंज्ञायास्तेषां निरस्तत्वात् । ततः स्व-

१ 'न स्यादेत्वं टेऽहितां यद्विधत्ते ॥*॥' इति द्वितीयदूषणमपि प्रथमदूषणोद्धारतरीत्यैवोद्धृतमिति तृतीयदूषणोपन्यासः कृतः ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

पितीति प्रयोक्तव्ये सुपितीति प्रयोगोऽपभ्रंशः ततः प्रत्ययोत्पत्तिर्मा भूदित्यर्थः ॥

( उद्द्योतः ) येऽपभ्रंशेति । स्वप्यपभ्रंशत्वात्क्रियावाचकत्वमेषामस्तीति भावः ॥ ततः प्रत्ययोत्पत्तिरिति । सुपितीत्येतद्घटकात्सुपेरित्यर्थः ॥

( १९११ प्रयोजनवार्तिकम् ॥ १३ ॥ )

॥ * ॥ अङ्गसंज्ञा च ॥ * ॥

( भाष्यम् ) अङ्गसंज्ञा च प्रयोजनम् । "यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" इति धातोरङ्गसंज्ञा सिद्धा भवति ॥

( प्रदीपः ) अङ्गसंज्ञेति । असति धात्वधिकारे धातूपसर्गसमुदायस्य क्रियाविशेषवाचित्वात्ततः प्रत्ययविधाने तस्यैवाङ्गसंज्ञायां सत्यामडादिप्रसङ्गः प्रास्थितेत्यादावित्यर्थः ॥

( १९१२ प्रयोजनवार्तिकम् ॥ १४ ॥ )

॥ * ॥ कृत्संज्ञा च ॥ * ॥

( भाष्यम् ) कृत्संज्ञा च प्रयोजनम् । धातोर्विहितः प्रत्ययः कृत्संज्ञो भवतीति कृत्संज्ञा सिद्धा भवति ॥

( उद्द्योतः ) भाष्ये कृत्संज्ञा च प्रयोजनमिति । एतद्धात्वधिकारे धातोर्विहितस्य कृत्संज्ञकत्वम् । अन्यथा स्वादीनामपि तत्त्वं स्यादिति भावः ॥ एवं च्लि लुङीत्यादेः 'लुङन्ते उपपदे' इत्यादिक्रमेणार्थः स्यादिति बोध्यम् ॥

( १९१३ प्रयोजनवार्तिकम् ॥ १५ ॥ )

॥ * ॥ उपपदसंज्ञा च ॥ * ॥

( भाष्यम् ) उपपदसंज्ञा च प्रयोजनम् । तत्रैतस्मिन् धात्वधिकारे यत्सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवतीति उपपदसंज्ञा सिद्धा भवति ॥

( प्रदीपः ) तत्रैतस्मिन्निति । सत्यस्मिन्धात्वधिकारे तत्रोपपदमित्यत्र तच्छब्देन परामर्श उपपद्यते नान्यथा ॥

( प्रयोजननिराकरणभाष्यम् )

कृदुपपदसंज्ञे तावन्न प्रयोजयतः । अधिकारादप्येते सिद्धे ॥

( उद्द्योतः ) अधिकारादप्येते इति ॥ "कृदतिङ्" "तत्रोपपद"मित्यनयोरधिकारत्वादित्यर्थः ॥

( अनिराकृतप्रयोजनभाष्यम् )

स्वपादिषु तर्हि अङ्गसंज्ञा च प्रयोजनम् ।

( ११९४ सूत्रवैयर्थ्यवार्तिकम् ॥ १६ ॥ )

॥ * ॥ धातुग्रहणमनर्थकं यङ्विधौ धात्वधिकारात् ॥ * ॥

( भाष्यम् ) धातुग्रहणमनर्थकम् ॥ किं कारणम्? यङ्विधौ धात्वधिकारात् । यङ्विधौ धातुग्रहणं प्रकृतमनुवर्तते । तच्चावश्यमनुवर्त्यम् ॥

१ एतद्धात्वधिकारसत्त्वे तु लुङन्तस्य धातुनिरूपितपरत्वासंभवान्न तथाऽर्थः । ( र. ना. )

( १९१५ अधिकारत्वहेतुवार्तिकम् ॥ १७ ॥ )

॥ * ॥ अनधिकारे ह्यङ्गसंज्ञाभावः ॥ * ॥

( भाष्यम् ) अनधिकारे हि सति अङ्गसंज्ञाया अभावः स्यात्—करिष्यति हरिष्यति ॥

( दूषणभाष्यम् )

यदि तदनुवर्तते । चूर्णचुरादिभ्यो णिज् भवति धातोश्चेति धातुमात्राण्णिच् प्राप्नोति ॥

( १९१६ दूषणपरिहारवार्तिकम् ॥ १८ ॥ )

॥ * ॥ हेतुमद्वचनं तु ज्ञापकमन्यत्राभावस्य ॥ * ॥

( भाष्यम् ) यदयं "हेतुमति चे"त्याह, तज्ज्ञापयत्याचार्यो न धातुमात्राण्णिज्भवती"ति ॥

( प्रदीपः ) यदयमिति । यद्यविशेषेण धातुमात्राण्णिच् स्यात् तदा करणे करोत्यर्थे विधीयमानो हेतुमत्यपि करणे सिद्ध इति पुनस्तत्र णिचं न विदध्यादित्यर्थः । चुरादिग्रहणं तु प्रातिपदिकाद्धात्वर्थे इत्याद्यर्थं स्यादित्यज्ञापकम् ॥

( उद्द्योतः ) ननु चुरादिभ्य इत्यनेन स्वार्थे णिच्विधानात्प्रयोजकव्यापारे णिजर्थे हेतुमति चेत्यावश्यकमत आह—यद्यविशेषेणेति ॥ हेतुमत्यपीति । अपिना स्वार्थरूपकरणसंग्रहः । नन्वेवं चुरादिग्रहणमेव ज्ञापकं किमिति नोक्तमत आह—चुरादीति ॥ 'प्रातिपदिकाद्धात्वर्थे' 'संग्रामयुद्धे' इत्यादि तद्गणपठितेभ्यो णिजर्थमित्यर्थः ॥ परे तु चुरादिग्रहणं स्वार्थरूपकरणे विध्यर्थम् । अन्यथाऽन्यधातुभ्य इव तेभ्योऽपि प्रयोजकव्यापाररूपे करणे एव स्यात् । एवं च प्रातिपदिकाद्धात्वर्थे इत्यस्यानार्षत्वेऽपि न दोष इत्याहुः ॥

( आक्षेपभाष्यम् )

इह तर्हि कण्ड्वादिभ्यो यग् भवतीति धातोश्चेति धातुमात्राद्यक् प्राप्नोति ।

( १९१७ समाधानवार्तिकम् ॥ १९ ॥ )

॥ * ॥ कण्ड्वादिषु च व्यपदेशिवद्वचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) यदयं कण्ड्वादिभ्यो यग्भवतीत्याह, तज्ज्ञापयत्याचार्यो "न धातुमात्राद्यग्भवती"ति ॥

अथ वा कण्ड्वादीनेव धातुग्रहणेन संभन्त्स्यामः—कण्ड्वादिभ्यो धातुभ्यो यगिति ॥ धातोः ॥ ९१ ॥

( प्रदीपः ) व्यपदेशिवद्वचनादिति । धातुव्यपदेशो विद्यते येषां ते पचादयो धातुपाठपठिता व्यपदेशिनस्तैस्तुल्यं कण्ड्वादयो वर्तन्ते । यकः कित्त्वेन तेषां धातुत्वानुमानात् । तदयमर्थः—यदि धातुमात्राद्यक् प्रत्ययः स्यात् ततः कण्ड्वादिग्रहणमनर्थकं स्यात् । तेषामपि क्रियावाचित्वाद्धातुमात्राद्यकः सिद्धत्वात् ॥ अथ वेति । सामानाधिकरण्येन संबन्धे संभ-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वति समुच्चयाश्रयणस्यायुक्तत्वादिति भावः ॥ आर्धधातुकसंज्ञार्थोप्ययं धात्वधिकारो नोपयुज्यते । यद्विधावेवोपात्तस्यानुवृत्तस्य विहितविशेषणार्थत्वाज्जुगुप्सते लूभ्यामित्यादावार्धधातुकसंज्ञानिवृत्तेस्सिद्धत्वात् ॥ शमिधातोरित्यतो द्वितीयधातुग्रहणानुवर्तनाद्वा ॥ ९१ ॥

( उद्योतः ) विहितविशेषणेति । स्वरितत्वद्वयं प्रतिज्ञाय तत्सामर्थ्याद् 'धातोः' इत्येवं विहित इत्यर्थः कार्यं इति भावः ॥ तदाह—जुगुप्सत इत्यादि । नन्वेकेन धातुग्रहणेन कथमेपोर्थो लभ्येतात आह—शमिधातोरिति । वाऽसरूप इत्यप्यधिकार एवेत्येतदभावे क्सादिभिः सिचः समावेशः स्यादिति न शङ्क्यम् ॥ ९१ ॥

( ४३५ उपपदसंज्ञाधिकारसूत्रम् ॥ ३ । १ । ५ आ. ५ )

## ७०९ तत्रोपपदं सप्तमीस्थम् ॥३।१।९२॥

( स्थग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**स्थग्रहणं किमर्थम् ।**

( प्रदीपः ) **तत्रोपपदम्**॥९२॥ **स्थग्रहणमिति** । सप्तमीशब्देन साहचर्यात्सूत्रेषु सप्तमीनिर्दिष्टा प्रहीष्यन्त इति प्रश्नः ॥

( उद्योतः ) तत्रोपपदम् ॥ ९२ ॥ ननु स्थग्रहणाभावे सप्तम्या एव संज्ञा स्यादत आह—सप्तमीशब्देनेति ॥ सूत्रस्थसप्तम्यन्तपदनिर्दिष्टं सप्तमीपदेन लक्ष्यत इत्यर्थः ॥

( समाधानभाष्यम् )

**"तत्रोपपदं सप्तमी" इतीयत्युच्यमाने यत्रैव सप्तमी श्रूयते तत्रैव स्यात्—स्तम्बेरमः । कर्णेजपः । यत्र वैतेन शब्देन निर्देशः क्रियते "सप्तम्यां जनेर्डः" इति । इह न स्यात्—कुम्भकारो नगरकारः ॥ स्थग्रहणे पुनः क्रियमाणे यत्र सप्तमी श्रूयते, यत्र [ च सप्तमी ] न श्रूयते यत्र वैतेन शब्देन निर्देशः क्रियते, यत्र वान्येन शब्देन, सप्तमीस्थमात्रे सिद्धं भवति ॥**

( प्रदीपः ) **यत्रैव सप्तमीति** । मुख्यार्थसंभवे गौणग्रहणस्यान्याय्यत्वात्सप्तम्या एवोपपदसंज्ञा स्यात् । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः प्रतिषेधात् । समासस्तु समर्थपरिभाषोपस्थानात्तदन्तस्यैव स्यात् ॥ **यत्रैवेति** । **सप्तमीति** यदा रूपग्रहणम् तथा सति **सप्तम्यां जनेर्ड** इत्यादावेव स्यात् उपसरजादिसिद्ध्यर्थं, कुम्भकारादिषु तु नैव स्यादित्यर्थः ॥ **स्थग्रहण इति** । स्थग्रहणे तु सति सौत्रसप्तम्युपलक्षितस्य संज्ञाविधानात्सर्वत्र सिध्यतीत्यर्थः ॥

( उद्योतः ) ननु प्रत्ययग्रहणे तदन्तग्रहणात्कथं सप्तम्या एव संज्ञेत्यत आह—संज्ञेति ॥ नन्वेवमुपपदसमासोऽपि सप्तमीमात्रस्य स्यादत आह—समासस्त्विति । सूत्रे सप्तमीपदं विभक्तिपरं स्वरूपपरं वा । आद्ये सप्तम्या एव संज्ञा । अन्त्ये तु यत्र सप्तमीपदं तत्रैव स्यादित्याह—यदेति । तथा सति[३] ॥ तदेत्यर्थः ॥ इत्यादावित्यादिना सप्तम्यां चोपपीडेति संग्रहः ॥ ननु स्थग्रहणेऽपि कुम्भादीनां सप्तमीस्थत्वाभावात्कथमुपपदत्वम् । तदाह—स्थग्रहणे त्विति । अयं भावः—सप्तमीपदं तदन्तपरम् संज्ञाविधौ प्रत्ययांशे तदन्तविधिप्रतिषेधस्तूद्देश्यप्रत्ययांश एव । तत्स्थत्वं च तद्वाच्यत्वमिति ॥ तदाह—सौत्रसप्तम्युपलक्षितस्येति । सौत्रसप्तम्यन्तपदबोध्यस्येत्यर्थः ॥

( तन्त्रग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ तन्त्रग्रहणं किमर्थम् ।**

( प्रदीपः ) **अथ तन्त्रग्रहणमिति** । धातोरित्यनुवर्तनादस्मिन्नेव धात्वधिकारे उपपदसंज्ञा भविष्यतीति प्रश्नः ।

( उद्योतः ) धातोरित्यनुवर्तनादिति । धातोरित्यधिकारविहितप्रत्ययविधौ सप्तमीस्थमित्यर्थादिति भावः ॥

( १९१८ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ तन्त्रग्रहणं विषयार्थम् ॥ * ॥

( भाष्यम् ) **[ तन्त्रग्रहणं क्रियते । किमर्थम् ? । विषयार्थम् । ] विषयः प्रतिनिर्दिश्यते । तत्रैतस्मिन्धात्वधिकारे सप्तमीनिर्दिष्टमुपपदसंज्ञं भवतीत्युपपदसंज्ञा सिद्धा भवति ॥**

( प्रदीपः ) **तत्रैतस्मिन्निति** । तन्त्रग्रहणेनाधिकारपरामर्शे स्पष्टा प्रतिपत्तिर्भवतीति भावः ॥

अथ वोपपदसंज्ञोत्तरत्राधिकारादत्रैव धात्वधिकारे भविष्यतीति प्रश्नः । प्रतिसूत्रमधिकार आश्रीयमाणे गौरवं स्यात् । तन्त्रग्रहणे तु क्रियमाणे अनेनैव वाक्येन परिपूर्णत्वात्संज्ञा विधीयत इति प्रतिपत्तिलाघवं भविष्यतीत्युत्तरम् ॥

( उद्योतः ) धातोरित्यनुवृत्तावपीदृशार्थालाभादाह—अथवेति । अत्रैवेति । न तु च्लि लुङीत्यादाविति भावः ॥ उपपदसंज्ञा सिद्धा भवतीति भाष्यस्यापीष्टविषये स्फुटतया सिद्धा भवतीत्यर्थः[४] ॥

( सामर्थ्यविचाराधिकरणम् )

( १९१९ समर्थग्रहणवार्तिकम् ॥ २ ॥ )

### ॥*॥ उपपदसंज्ञायां समर्थवचनम् ॥*॥

( भाष्यम् ) **उपपदसंज्ञायां समर्थग्रहणं कर्तव्यम् । समर्थमुपपदं प्रत्ययस्येति वक्तव्यम् । इह मा भूत्—'आहर कुम्भम्, करोति कटम्' इति ॥**

( प्रदीपः ) **समर्थवचनमिति** । इह यदा त्रिकः प्रातिपदिकार्थः स्वार्थद्रव्यलिङ्गलक्षणस्तदा विभक्तिमन्तरेण कर्माऽधिकरणाद्युपपदं न भविष्यतीत्यवश्योपात्तव्यं विभक्त्या । ततश्च पदविधित्वात्समर्थपरिभाषाया उपस्थानं भवत्येव । चतुष्कपक्षे पञ्चकपक्षे वा प्रातिपदिकस्यैव कर्मादिवाचित्वात्पदविधित्वाभावात्समर्थपरिभाषानुपस्थानात्समर्थवचनं कर्तव्यमिति भावः ॥

१ समुच्चयाश्रयणे वाक्यभेदादिति भावः । ( र. ना. )

२ क्वचिन्नोपलभ्यते ॥

३ अयं पाठस्त्रुटितो भवेत् ॥

४ उपपदसंज्ञाधिकारादित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आहर कुम्भमिति । कुम्भशब्द उपपदे करोतेरण् प्रत्ययः स्यात् । उपपदसमासस्तु सामर्थ्याभावान्न स्यात् ॥

( उद्द्योतः ) विभक्तिमन्तरेणेति । तामन्तरेण कर्मत्वाद्यभावादित्यर्थः ॥ शब्दस्य कर्मत्वादि हि तद्विशिष्टार्थवाचकत्वमेवेति भावः ॥ चतुष्कपक्ष इति । संख्यातिरिक्तं चतुष्कं प्रातिपदिकार्थ इति पक्षे इत्यर्थः ॥ प्रातिपदिकस्यैवेति । चिन्त्यमिदम् । पञ्चकपक्षेऽपि द्योतकसमभिव्याहारं विना प्रातिपदिकमात्रस्य तद्बोधकत्वाभावात् । प्रं विना जयतेः प्रकृष्टजयबोधकत्ववत् । एवं च तत्पक्षेऽपि पदविधित्वं दुर्वारमेव । तस्मादयमत्र भाष्यार्थः । सुबन्तत्वेन पदत्वेन वा यत्र निमित्तता तत्रैव तत्परिभाषाप्रवृत्तिरिति प्रकृते तदभावात्परिभाषानुपस्थित्या समर्थग्रहणं कर्तव्यमिति युक्तमाभाति ॥ भाष्ये समर्थमुपपदमिति । सामर्थ्यं च प्रत्यासत्त्या प्रत्ययान्तेनैवेति बोध्यम् । प्रत्ययस्योत्पत्तौ निमित्तं यत्समर्थं सप्तम्यन्तपदवाच्यं तदेवोपपदसंज्ञकमिति वक्तव्यमित्यर्थः ॥

( आक्षेपभाष्यम् )

अथ क्रियमाणे चापि समर्थग्रहणे महान्तं कुम्भं करोतीत्यत्रापि प्राप्नोति ॥

( काक्वा प्रत्याक्षेपभाष्यम् )

न वा भवितव्यं महाकुम्भकार इति ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

भवितव्यं यदैतद्वाक्यं भवति—महान्कुम्भो महाकुम्भः महाकुम्भं करोतीति महाकुम्भकारः । यदा त्वेतद्वाक्यं भवति—महान्तं कुम्भं करोतीति तदा न भवितव्यम् । यदा च प्राप्नोति तदा मा भूदिति ॥

( प्रदीपः ) महान्तं कुम्भमिति । महत्त्वयुक्तस्य कुम्भस्य करोतिना सामर्थ्यमस्तीति भावः । यदि चात्र प्रत्ययः स्यात् तदा कुम्भशब्दस्य कारशब्देन समासे कृते कारार्थ एकार्थीभावान्महच्छब्देन समासो न स्यात् । सुबन्तसमुदायस्याप्यसुबन्तत्वादुपपदसमासे तृतीयान्तस्य सुब्ग्रहणस्य निवृत्तावपि प्रथमान्तस्यानुवर्तनात्समासाभावः ॥

( उद्द्योतः ) ननु महान्तं कुम्भमिति सविशेषणे कथं सामर्थ्यमत आह—महत्त्वयुक्तस्येति । विशिष्टस्यैव कर्मत्वेन विशिष्टेन सामर्थ्यमस्तीति भावः ॥ तदा न भवितव्यमिति भाष्ये अणेति शेषः ॥ तदा च प्राप्नोतीत्यस्यापि 'अण्' इत्येव शेषः । न तु महाकुम्भकार इति । तद्ध्वनयन्नाह—महच्छब्देन समासो न स्यादिति । कारार्थविशेषणतयोपस्थितस्येतरविशेष्यत्वासंभवेन महच्छब्देन कुम्भशब्दस्य कर्मधारयो न स्यादिति भावः ॥ बहुलवचनेनोत्तरपदे विशेषणं विशेष्येणेत्यस्य तत्प्रपञ्चभूतानां पूर्वनिपातनियमार्थानां च निवृत्तेः समर्थसूत्रे भाष्ये ध्वनितत्वादिति निरूपितं समर्थसूत्रे भाष्ये ॥ न च पूर्वं कर्मधारयः, उपपदसमासस्य परत्वादिति बोध्यम् ॥ ननु समुदायेनैव उपपदसमासो भविष्यतीत्यत आह—

सुबन्तसमुदायस्येति । वस्तुतः प्रथमान्तनिवृत्तावपि समुदायेन समासेऽपि कुम्भशब्दस्योत्तरपदत्वाभावादात्त्वाभावे महत्कुम्भ इत्यनिष्टस्यापत्तिरिति भाष्याशयः ॥ यदुक्तम्—कुम्भशब्दस्य कारशब्देन समास इति ॥ तदपि चिन्त्यम्, कुम्भशब्दस्य केवलस्य विशेषणत्वेनासमर्थत्वात् । समासविधौ समर्थपरिभाषोपस्थानेन समासाप्राप्तेः । भाष्यं तु सर्वथा समासाभावेऽप्यणापत्तिपरतया योजयितुं शक्यमेवेति दिक् ॥

( समर्थग्रहणवैयर्थ्यभाष्यम् )

यत्तावदुच्यते—समर्थग्रहणं कर्तव्यमिति ॥ न कर्तव्यम् । धातोरिति वर्तते । धातोः कर्मण्यण् भवति । तत्र संबन्धादेतद्गन्तव्यं यस्य धातोर्यत्कर्मेति ॥

( आक्षेपवारणभाष्यम् )

यदप्युच्यते—क्रियमाणे चापि समर्थग्रहणे महान्तं कुम्भं करोतीत्यत्रापि प्राप्नोतीति उपपदमिति महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत्? । लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत 'उपोच्चारितं पदमुपपदमि'ति । यच्चात्रोपोच्चारितं न तत्पदम्, यच्च पदं न तदुपोच्चारितम् ॥

( प्रदीपः ) न तत्पदमिति । पदसमुदायत्वादिति भावः। यच्च पदमिति । महान्तमित्येतत् ॥

( भाष्यम् ) यावता चेदानीं पदगन्धोऽस्ति पदविधिरयं भवति । पदविधिश्च समर्थानां भवति। तत्रासामर्थ्यान्न भविष्यति ॥

( प्रदीपः ) कुम्भमित्येतच्च यद्यपि पदं भवति उपोच्चारितं च तथापि सापेक्षत्वादसामर्थ्यात्प्रत्ययोत्पत्तिनिमित्तं न भवति । अन्वर्थसंज्ञाकरणादेव सप्तमीनिर्दिष्टत्वेपि प्रकृत्यर्थविशेषणानां प्रत्ययार्थानां सद्विशेषाणां चोपोच्चारितत्वाभावादुपपदसंज्ञा न भवति ॥

पदविधिरिति । पदनिमित्तत्वात्प्रत्ययविधेरिति भावः ॥

( उद्द्योतः ) यावता चेदानीमिति । भाष्यमवतारयति—कुम्भमित्येतच्च यद्यपीति ॥ समाधानाशयमाह—तथापीति ॥ भाष्ये गन्धशब्दः संबन्धवाची । स च महासंज्ञाबलात्प्रत्ययविधौ पदत्वेन निमित्तत्वात्स्पष्ट एव ॥ असामर्थ्यात्प्रत्ययाभावे चोपपदसंज्ञापि फलाभावान्नेति उपपदसंज्ञायां समर्थवचनमनर्थकमिति भावः ॥ एवं च सुबन्तस्यैवोपपदत्वम्[3] ॥ स्तम्बकर्णयोरित्यादौ तु तत्प्रकृतिके लक्षणा । इदमेवाभिप्रेत्योपपदमतिङिति सूत्रे प्रथमान्तमुपपदस्यापि निर्वृत्तिर्भगवतोक्तेति[4] दिक् ॥

१ 'तच्च' ॥

२ गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोरित्यमरः ।

३ न तु केवलस्य नापि सुबन्तसमुदायस्येति भावः । ( र. ना. )

४ महासंज्ञयैव सुबन्तत्वस्य लाभादिति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( च्व्यन्तोपपदे प्रत्ययोत्पत्तिविचाराधिकरणम् )

( आक्षेपभाष्यम् )

**अथ च्व्यन्त उपपदे किमणा भवितव्यम् अकुम्भं कुम्भं करोति कुम्भीकरोति मृदमिति ॥**

( प्रदीपः ) अथ च्व्यन्त इति । इह क्वचित्सापेक्षत्वे प्रत्ययो न भवति महान्तं पुत्रमिच्छतीति । क्वचित्तु भवति माणवकं मुण्डयतीति तत्र संदेहात्प्रश्नः ॥ च्व्यन्तस्य चाव्ययत्वेपि कर्मत्वं मन्यते । सत्त्वभूतत्वस्यानिवर्तनात् ॥

( उद्द्योतः ) कर्मत्वं मन्यत इति । स्वरादिवदिति शेषः ॥ तत्र हेतुमाह—सत्त्वेति ॥ च्विप्रत्ययेऽपि स्वाश्रयसत्त्वभावस्य निवृत्तौ मानाभावादिति भावः ॥ सत्त्वभूतस्येति पाठेऽपि भावे क्तः ॥

( समाधानभाष्यम् )

**न भवितव्यम् । किं कारणम् ? । प्रकृतिविवक्षितत्वात् । प्रकृतिविवक्षायां च्विर्विधीयते । तत्सापेक्षम् । सापेक्षं चासमर्थं भवति ॥**

( प्रदीपः ) प्रकृतिविवक्षायामिति । प्रकृतिविकारयोरभेदविवक्षायां च्विर्विधीयते । तत्रावश्यं विकारेण प्रकृतिविशेषोऽपेक्षणीयः । तदनपेक्षायां च्व्येरभावात् । ततश्च यथा महान्तं कुम्भं करोतीत्यत्राण् न भवति एवं मृदं कुम्भीकरोतीत्यादावपीत्यर्थः ।

( उद्द्योतः ) प्रकृतिविवक्षायामिति भाष्यस्य प्रकृतेर्विकृत्यभिन्नत्वेन विवक्षायां विकृतिवाचकाच्विरित्यर्थः ॥ तत्फलितमाह—प्रकृतीति । तत्रावश्यमिति ॥ नन्वेवं नित्यसापेक्षत्वेनासामर्थ्याभावादण् दुर्वारः । तदनपेक्षायां च्व्येरभावेन च्व्यन्तस्य नित्यसापेक्षताया उपपादितत्वादिति चेदत्र महद्भिर्यत्तनीयम् ॥ मम तु प्रतिभाति—न नित्यसापेक्षत्वं वृत्तौ प्रयोजकम्, किं तु गमकत्वम् । एवं च नित्यसापेक्षत्वेप्यगमकत्वान्न वृत्तिः ॥ काशकटीकारमित्यत्र तु गमकत्वाद्भवत्येवेति ॥ स्पष्टं चेदं समर्थसूत्रे सुप आत्मन इति सूत्रे च भाष्ये सूक्ष्मदृशाम् ॥

( प्रश्नभाष्यम् )

**न तर्हि इदानीमिदं भवति—'इच्छाम्यहं काशकटीकारमिति ॥**

( समाधानभाष्यम् )

**इष्टमेवैतद्गोनर्दीयस्य ॥**

( प्रदीपः ) काशान् कटीकरोतीत्यत्र च्विध्याण्प्रत्ययो भवति । तस्मिंश्चुत्पन्ने काशशब्दात् कृद्योगे षष्ठी । तस्याः षष्ठीति समासः समासरूपस्यैव चेष्टत्वेनोपात्तत्वात् 'काशानां कटीकार' इति वाक्यं न भवतीत्याहुः ॥

१ #च्व्यन्तोपपदे न प्रकृतिविवक्षितत्वात् ॥ # ॥ इति १९२० शं वार्तिकम् । तद्भाष्ये 'च्व्यन्त उपपदे' इति त्रुटितं भवेद् । अत एव नोपलभ्यते क्वापि ।

२ वृत्तेर्गमकत्वं चेष्टार्थावबोधकत्वम् । ( र. ना. )

( १९२१ वार्तिकम् ॥ ३ ॥ )

**॥ # ॥ निमित्तोपादानं च ॥ # ॥**

( भाष्यम् ) **निमित्तोपादानं च कर्तव्यम् । निमित्तमुपपदं प्रत्ययस्येति वक्तव्यम् ॥**

( १९२२ हेतुवार्तिकम् ॥ ४ ॥ )

**॥ # ॥ अनुपादाने ह्यनुपपदे प्रत्ययप्रसङ्गः ॥ # ॥**

( भाष्यम् ) **अक्रियमाणे हि निमित्तोपादाने अनुपपदेऽपि प्रत्ययः प्रसज्यते ॥**

( आक्षेपभाष्यम् )

**निर्देश इदानीं किमर्थः स्यात् ? ।**

( प्रदीपः ) निर्देश इति । कर्मणीति सत्सप्तमीविज्ञानात्सत्येव कर्मणि प्रत्ययो भविष्यतीति भावः ॥

( १९२३ वार्तिकम् ॥ ५ ॥ )

**॥ # ॥ निर्देशः संज्ञाकरणार्थः ॥ # ॥**

( भाष्यम् ) **[ 'कर्मणि'इत्यादीनां निर्देशः क्रियते । किमर्थः ? संज्ञाकरणार्थः । प्रत्ययसंनियोगेन संज्ञा यथा क्रियेत-] यदा उपपदे प्रत्ययस्तदोपपदसंज्ञां वक्ष्यामीति ॥**

( प्रदीपः ) निर्देशः संज्ञाकरणार्थ इति । यथेत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञायते तथार्थनिरपेक्षा कर्मणीत्यादिसप्तम्युपपदसंज्ञालिङ्गं सौत्रीति भावः ॥ अर्थापेक्षायां तु सप्तम्यामणप्रत्ययस्याभिधेयं कर्म स्याद् यथा धः कर्मणि ष्ट्रन्निति । तथा च उपपदत्वं न प्रतीयेत । अर्थानपेक्षत्वे च सप्तम्या 'धातोरण् भवति कर्म चोपपदसंज्ञम्' इत्ययमर्थः स्यादिति कर्मणः प्रत्ययोत्पत्तिनिमित्तत्वं न प्रतीयेत ॥

( आक्षेपभाष्यम् )

**तत्तर्हि निमित्तोपादानं कर्तव्यम् ? ।**

( सिद्धान्तिभाष्यम् )

**न कर्तव्यम् ॥**

( १९२४ निमित्तोपादानवैयर्थ्यवार्तिकम् ॥ ६ ॥ )

**॥#॥ तत्र वचनमुपपदसंनियोगार्थम् ॥#॥**

( भाष्यम् ) **तत्र वचनं क्रियते तदुपपदसंज्ञासंनियोगार्थं भविष्यति । कर्मण्यण्विधीयते तत्र च प्रत्ययो भवतीति ॥**

( प्रदीपः ) तत्र वचनमिति । तत्रैव सति प्रत्ययो भवति नासतीति तत्रग्रहणाल्लभ्यते । कथमिति चेत् ॥ उच्यते—

३ उपपदं प्रत्ययस्य निमित्तमिति वक्तव्यमित्यर्थः । ( र. ना. )

४ स चोपपदस्य प्रत्ययनिमित्तत्वेन विनापि सप्तमीनिर्देशं सिध्यतीति कर्मणीत्यादि सप्तमीनिर्देशः किमर्थ इति प्रश्नभाष्याशयः । ( र. ना. )

५ इति भाष्यग्रन्थो लेखकप्रमादात् त्रुटितो भवेत् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रत्यय इत्यत्रानुवर्तते । तत्रायमर्थः सप्तमीस्थमुपपदसंज्ञं भवति । तत्र चोपपदे प्रत्ययो भवतीति ॥ ९२ ॥

( आक्षेपभाष्यम् )

**ननु चान्यत्तत्रग्रहणस्य प्रयोजनमुक्तम् । किम् । *तत्रग्रहणं विषयार्थमिति ॥**

( समाधानभाष्यम् )

**अधिकारादप्येतत्सिद्धम् ॥ तत्रोपपदम् ॥ ९२ ॥**

( उद्योतः ) भाष्येऽधिकारादपीति । नन्वधिकारादेतत्सिन्धात्वधिकारे इत्यर्थवत् तत एव प्रतिसूत्रमुपपदसंज्ञाविधानेन संनियोगशिष्टन्यायात्तत्र सत्येव प्रत्ययो भविष्यति, किं तत्रग्रहणेनेति चेन्न । तदभावेऽन्वाचयशिष्टत्वमपि संभाव्येतेति स्पष्टप्रतिपत्त्यर्थमिति तत्त्वम् ॥ ९२ ॥

( कृत्प्रकरणम् )

( ४३६ कृत्संज्ञाधिकारसूत्रम् ॥ ३ । १ । ५ आ. ६ )

## ७१० कृदतिङ् ॥ ३ । १ । ९३ ॥

( अतिङ्ग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अतिङिति किमर्थम् ? ।**

( समाधानभाष्यम् )

**पचति पठति ॥**

( उद्योतः ) कृदतिङ् ॥ ९३ ॥ भाष्ये एकदेश्याह—पचतीत्यादि ॥

( अतिङ्ग्रहणवैयर्थ्यभाष्यम् )

**अतिङिति शक्यमकर्तुम् ॥**

( उद्योतः ) शङ्किताऽऽह—शक्यमकर्तुमिति ॥

( आक्षेपभाष्यम् )

**कस्मान्न भवति—पचति पठतीति ॥**

( समाधानभाष्यम् )

**धातोः परस्य कृत्संज्ञा । प्राक् च लादेशाद्धात्वधिकारः ॥**

( उद्योतः ) तदुपपादयति स एव—धातोः परस्येति ॥ धातोरिति पदमुच्चार्य धातोः परत्वेन विहितस्येत्यर्थः । अत एव वक्ष्यति—प्राक् च लादेशाद्धात्वधिकार इति । एवं च तिङ्सु कृत्संज्ञाया अप्राप्त्या निषेधो व्यर्थ इति भावः ॥

( आक्षेपभाष्यम् )

**एवमपि स्थानिवद्भावात्प्राप्नोति ॥**

( उद्योतः ) तत्साफल्यमेकदेशी शङ्कते—एवमपीति ॥

( प्रतिबन्दीभाष्यम् )

**अथातिङित्युच्यमाने यावता स्थानिवद्भावः । कथमिवैतत्सिध्यति ॥**

( प्रदीपः ) कृदतिङ् ॥ ९३ ॥ स्थानिवद्भाव इति । अतिङिति प्रतिषेधः स्वाश्रयामेव तिङः कृत्संज्ञां बाधितुमुत्सहते नत्वतिदेशशास्त्रेण प्रसक्ताम् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति वचनादिति भावः ॥

( उद्योतः ) सिद्धान्ती शिष्यबुद्धिपरीक्षार्थं प्रतिबन्दीमाह—अथेति ॥

( समाधानभाष्यम् )

**प्रतिषेधवचनसामर्थ्यात् ॥**

( प्रदीपः ) प्रतिषेधेति । अन्यथानर्थकः प्रतिषेधः स्यादिति भावः ॥

( उद्योतः ) एकदेश्याह—प्रतिषेधेति ॥

( समाधानान्तरभाष्यम् )

**अथ वा तिङ्भाविनो लकारस्य कृत्संज्ञाप्रतिषेधः ॥**

( प्रदीपः ) अथ वेति । तिङ्भावी लकार एव तिङ्शब्देनोच्यत इति मूलोच्छेद एव कृतसंज्ञाप्रतिषेधेन क्रियते ॥

( उद्योतः ) तृतीयाध्यायान्तं धात्वधिकारे तिङो व्यावृत्त्या तत्सार्थक्यमत आह—अथ वेति ॥ तिङ्भावीति । अत एवामन्तविषयकलकारस्य कृत्त्वं भवत्येव । तस्य तिङ्भावित्वाभावात् । तिङ्भावित्वस्य फलोपहितस्यैव निवेशात् ॥ मूलोच्छेद इति । मूलभूते लकार एव कृत्त्वोच्छेदः[१] क्रियत इत्यर्थः । भो भगो इति सूत्रभाष्योक्तरीत्याऽल्विधित्वादप्यत्र स्थानिवत्त्वप्रतिषेध इत्यपि बोध्यम् ॥

( आक्षेपभाष्यम् )

**किं च स्यात् । यद्यत्र कृत्संज्ञा स्यात् ? ॥**

( उद्योतः ) अथ तृतीयाध्यायान्तं धात्वधिकारेऽपि भाष्ये फलाभावान्निषेधं प्रत्याख्यातुमाह—किं च स्यादिति ॥

( समाधानभाष्यम् )

**कृत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा स्यात् । 'प्रातिपदिकात्' इति स्वाद्युत्पत्तिः प्रसज्येत ॥**

( दूषणोद्धारभाष्यम् )

**नैष दोषः । एकत्वादिषु अर्थेषु स्वादयो विधीयन्ते । ते चात्र 'तिङोक्ता एकत्वादय' इति कृत्वा उक्तार्थत्वान्न भविष्यन्ति ॥**

( उद्योतः ) एकत्वादिष्विति । ननूक्तेऽपि एकत्वे एकशब्दात्कर्मत्वमात्रप्रतिपत्तये द्वितीयावत् पचति पश्येत्यादौ कर्मत्वोक्तये द्वितीया स्यात् । किं चैकवचनमुत्सर्गत इति तद्दुर्वारमिति चेन्न । कर्मत्वस्यापि वाक्येन प्रतीत्या तदनुत्पत्तेः ॥ तिङोक्ता इत्यस्य च तिङ्घटितवाक्येनोक्ता इत्यर्थः ॥ एकत्वादिष्वित्यादिपदेन कर्मत्वादीनामपि ग्रहणं बोध्यम् ॥ उत्सर्गोऽव्ययविषय एवेत्याशयात् ॥

( प्रयोजनभाष्यम् )

**टाबादयस्तर्हि तिङन्ताद् मा भूवन्निति ॥**

( प्रदीपः ) टाबादय इति । यथा साधनाश्रयसंख्यानिमित्तैकवचनोत्पत्तिस्तथैव तद्गतलिङ्गाश्रयाष्टाबादयः स्युरिति भावः ॥

१–३ 'करोति' ॥

[१] कृत्संज्ञोच्छेद इत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रयोजननिराकरणभाष्यम् )

स्त्रियां टाबादयो विधीयन्ते । न च तिङन्तस्य स्त्रीत्वेन योगोस्ति ॥

( प्रदीपः ) स्त्रियामिति । शब्दशक्तिस्वाभाव्यात्साधनाश्रयसंख्योपादानमस्ति[1] तिङन्तस्य न लिङ्गोपादानमिति भावः॥

( उद्द्योतः ) तिङन्तस्येति । तदर्थक्रियाया इत्यर्थः ॥

( प्रयोजनभाष्यम् )

अणादयस्तर्हि तिङन्तान्मा भूवन्निति ॥

( प्रयोजननिराकरणभाष्यम् )

अपत्यादिष्वणादयो विधीयन्ते । न च तिङन्तस्यापत्यादिभिर्योगोस्ति ॥ अथापि कथंचिद्योगः स्यात् । एवमपि न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'न तिङन्तादणादयो भवन्ती'ति । यदयं क्वचित्तद्धितविधौ तिङ्ग्रहणं करोति—"अतिशायने तमविष्ठनौ । तिङश्च" ॥

( उद्द्योतः ) भाष्ये—अथापि कथं च्चिद्योगः स्यादिति । शेष इत्यस्य विधायकत्वाद्दृपदि पिष्टा इत्याद्यर्थे इव पचत्यादिभ्यः पश्यत्याद्यर्थे प्रत्ययः स्यादिति भावः ॥ न तिङन्तादिति । अयमत्राभिसन्धिः—तिङन्तानां कृदन्तत्वप्रयुक्तप्रातिपदिकत्वाभावो ज्ञाप्यत इति पचति भवतीत्यादौ प्रथमापि नेति बोध्यम् । पचेरन्नित्यादौ नलोपश्चात एव न ॥ अतएवाहन्नित्यादौ न दोषः ॥

( प्रयोजनभाष्यम् )

इह तर्हि पचति पठतीति "ह्रस्वस्य पिति कृति तुग्भवती"ति तुक् प्राप्नोति ॥

( प्रयोजननिराकरणभाष्यम् )

"धातोरि"ति वर्तते ॥

( प्रदीपः ) धातोरिति । धात्वादेरित्यतः ॥

( प्रयोजनभाष्यम् )

एवमपि चिकीर्षतीत्यत्रापि[2] प्राप्नोति ॥

( प्रयोजननिराकरणभाष्यम् )

अत्रापि शपा व्यवधानात् ।

( प्रयोजनसाधकभाष्यम् )

एकादेशे कृते नास्ति व्यवधानम् ।

( प्रयोजननिराकरणभाष्यम् )

एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेवेति ॥ कृदतिङ् ॥ ९३ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥

( प्रदीपः ) एकादेश इति । ननु स्थानिवद्भावं बाधित्वा परत्वादन्तवद्भावेन भाव्यम् । नैष दोषः । परशब्दस्येष्टवाचित्वात् स्थानिवद्भाव एवान्तवद्भावस्य बाधकः ॥ नन्वतिङिति प्रत्याख्यायमाने पचेरन्निति प्रातिपदिकान्तत्वान्नकारलोपः प्राप्नोति । झस्य रन्निति नकारोच्चारणसामर्थ्यान्न भविष्यति ॥ इह तर्हि विचीयादिति कृद्यकारत्वाद्दीर्घो न प्राप्नोति ॥ एषोऽप्यदोषः । सार्वधातुकप्रतिषेधो ज्ञापयति—'अकृदिति प्रतिषेधस्तिङो न भवतीति । यदि हि स्यात् सुनुयाच्चिनुयादित्यादावपि सार्वधातुके कृत्प्रतिषेधेन दीर्घो न भविष्यतीति पृथक्सार्वधातुकप्रतिषेधोऽनर्थकः स्यात् ॥ ९३ ॥

इति श्रीमदुपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥

( उद्द्योतः ) परशब्दस्येष्टेति । अन्तवद्भावस्य प्रापकत्वेन स्थानिवद्भावस्याभावातिदेशकत्वेन निषेधकतया निषेधाश्च बलीयांस इति न्यायेनाचः परस्मिन्नित्यस्यैव प्रवृत्तिरित्यपि बोध्यम् । यत्किञ्चित्स्थानिभूतादचः पूर्वधर्मावच्छिन्नोद्देश्यकत्वादचः परस्मिन्नित्यस्य प्रवृत्तिः ॥ एतेनान्तवद्भावेन शबन्तस्यैव कार्यमिति पूर्वविध्यभावात्कथं स्थानिवत्त्वमिति परास्तम् । स्थानिभूतादचः पूर्वोऽस्थानिभूत एव गृह्यत इत्यत्र न मानम् । तक्रकौण्डिन्यन्यायस्यानवकाशविषयकत्वेन विधेयविषयकत्वेन चेदृशे विषयेऽप्राप्तेः । तत्र सूत्रेऽभावातिदेशस्याप्यङ्गीकारेण स्थानिनि सत्यभवतस्तुक एकादेशेप्यभावातिदेशो बोध्यः ॥ एतेन स्थानिवद्भावेऽपि शबन्तस्य शपा व्यवधानाभावात्तुग् दुर्वार इत्यपास्तम् । धीर्धियौ धिय इत्यत्र तु न दोषः । ध्यायतेः संप्रसारणं चेत्यनेन संप्रसारणे पूर्वत्वे हल इति दीर्घत्वे च कृते एकादेशस्य निवृत्तेस्तस्य स्थानिवत्त्वाप्रवृत्तेर्जुहुवतुरित्यादावपि ह्वेञोऽन्तरङ्गत्वादात्त्वे वार्णादाङ्गमित्यालोपे संप्रसारणे एकादेशस्यैवाभावान्न दोषः । स्पष्टं चेदं सर्वत्रप्रसारणिभ्य इति वार्तिकभाष्ये । धियावित्यादावियङ आकारात्पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाभावाच्च ॥ नकारोच्चारणेति ॥ समाध्यन्तरमपि प्रागुक्तम् ॥ पृथक्सार्वधातुकेति । न च श्यनर्थम्, दीर्घप्रवृत्तियोग्याजन्तेभ्यः श्यनभावात् ॥ ९३ ॥

इति काल्लोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते तृतीयस्य प्रथमे पादे पञ्चममाह्निकम् ॥

## अथ तृतीयाध्यायस्य प्रथमपादे षष्ठमाह्निकम् ॥

( ४३७ सूत्रम् ॥ ३ । १ । ६ आ. १ )

### ७११ वाऽसरूपोऽस्त्रियाम् ॥ ३।१।९४ ॥

( आक्षेपभाष्यम् )

कथमिदं विज्ञायते—'स्त्रियामभिधेयायां वाऽसरूपो न भवतीति । आहोस्वित् 'स्त्रीप्रत्ययेष्वि'ति ? ॥ किं चातः ? ।

१ उपादानं ग्रहणम् । ( र. ना. )

२ 'चिकीर्षति जिहीर्षतीत्यादौ' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रदीपः) वाऽसरूपोऽस्त्रियाम् ॥ कथमिति । स्त्रियामित्यभिधेयसप्तमी वा स्यात्, स्त्रियामित्यस्यैव वा स्वरूपस्य निषेधः स्यात्—स्त्रियामित्युचार्य ये प्रत्यया विधीयन्ते तेषु वाऽसरूपो न भवतीति संदिहानः पृच्छति ॥

(उद्योतः) वाऽसरूपो ॥ ९४ ॥ ननु स्वरूपस्य निषेधे तदभाव एव स्यादतस्तत्पक्षे वाक्यार्थं दर्शयति—स्त्रियामित्युच्चार्यैति ॥ स्वरूपस्येत्यस्य स्वरूपपरस्येत्यर्थः ॥ निषेधः स्यादित्यस्य निषेधान्वय्यन्वयित्वं स्यादित्यर्थः ॥

(अभिधेयपरत्वदूषणभाष्यम्)

यदि विज्ञायते-'स्त्रियामभिधेयायाम्' इति—लव्या लवितव्या अत्र वाऽसरूपो न प्राप्नोति ॥

(प्रदीपः) लव्येति । अचो यदिति यता तव्यादीनां नित्यं बाधनं प्राप्नोतीत्यर्थः ॥

(स्त्रीप्रत्ययपरत्वदूषणभाष्यम्)

अथ विज्ञायते-'स्त्रीप्रत्ययेषु' इति, व्यावक्रोशी व्यावक्रुष्टिरिति न सिध्यति ॥

(प्रदीपः) व्यावक्रोशीति । कर्मव्यतिहारे णच् स्त्रियामिति णचा क्तिनो बाधः प्राप्नोतीत्यर्थः ॥

(सिद्धान्तभाष्यम्)

एवं तर्हि नैवं विज्ञायते-'स्त्रियामभिधेयायाम्', नापि 'स्त्रीप्रत्ययेष्वि'ति । कथं तर्हि ? स्त्रीग्रहणं स्वरयिष्यते[१] ॥ तत्र स्वरितेनाधिकारगतिर्भवतीति 'स्त्रियाम्'इत्यधिकृत्य ये प्रत्यया विहितास्तेषां प्रतिषेधो विज्ञास्यते ॥

(प्रदीपः) स्त्रियामित्यधिकृत्येति । स्त्रियां क्तिन्नित्यस्मिन् त्र्यधिकारे ये उत्सर्गापवादास्तेष्वपवाद उत्सर्गस्य बाधक एवेत्यर्थः ॥

(उद्योतः) ननु ये विहितास्तेषां प्रतिषेधे विधिवैयर्थ्यं स्यात्, विहितप्रतिषिद्धत्वाद्विकल्पो वा स्यादत आह—स्त्रियां क्तिन्निति । तदधिकारे ये विहिता उत्सर्गास्तेषां वासरूपविधिना प्रसक्तानां प्रतिषेधो बाधो विज्ञास्यते इति भाष्याक्षरार्थं इति भावः ॥ एवं चोत्सर्गापवादयोर्द्वयोरपि अधिकारनिवेशित्वे सति अस्त्रियामिति प्रतिषेध इति लभ्यते । अन्येनापि यत्रासमावेश इष्टः सोऽनभिधानात्साध्यः ॥

(सूत्रप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

किमर्थं पुनरिदमुच्यते ? ॥

(१९२५ समाधानवार्तिकम् ॥ १ ॥)

॥ * ॥ असरूपस्य वावचनमुत्सर्गस्य बाधकविषयेऽनिवृत्त्यर्थम् ॥ * ॥

(भाष्यम्) असरूपस्य वावचनं क्रियते । उत्सर्गस्य बाधकविषयेऽनिवृत्तिर्यथा स्यात् । तव्यत्तव्यानीयर उत्सर्गाः, तेषामजन्ताद्यदपवादः—चेयम् चेतव्यमित्यपि यथा स्यात् ॥

(प्रयोजननिरासभाष्यम्)

नैतदस्ति प्रयोजनम् । अजन्ताद्यद्विधीयते । हलन्तात् ण्यद्विधीयते । एतावन्तश्च धातवो यदुताजन्ता हलन्ताश्च । उच्यन्ते च तव्यदादयस्ते वचनाद्भविष्यन्ति ॥

(प्रयोजनभाष्यम्)

एवं तर्हि ण्वुल्तृचावुत्सर्गौ, पचादिभ्योऽजपवादः—पचतीति पचः । 'पक्ता पाचक' इत्यपि यथा स्यात् ॥

(प्रयोजननिरासभाष्यम्)

एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—'अजपि सर्वधातुभ्यो वक्तव्य' इति ॥

(प्रयोजनभाष्यम्)

एवं तर्हि ण्वुल्तृजच उत्सर्गाः । तेषामिगुपधात्कोपवादः—विक्षिपः विलिखः । 'विक्षेप्ता विक्षेपक' इत्यपि यथा स्यात् ॥

अस्ति प्रयोजनमेतत् । किं तर्हीति ।

(१९२६ आक्षेपवार्तिकम् ॥ २ ॥)

॥*॥ तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धिते ॥*॥

(भाष्यम्) तत्रोत्पत्तिर्विभाषा प्राप्नोति यथा तद्धिते ॥

(प्रदीपः) तत्रोत्पत्तिवाप्रसङ्ग इति । 'वाऽसरूप' इत्येतावच्छ्रूयते । तत्र वाग्रहणेन किं भावो विकल्प्यताम्—असरूपोऽपवादो वा भवति पक्षे न भवतीति । अथ बाधकत्वं विकल्प्यताम् वा बाधको भवति, पक्षे न बाधक इति ॥ तत्रान्तरङ्गत्वात्सत्ताया एव विकल्पः स्यात् । यथोक्तम् 'यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपर' इति । न तु बहिरङ्गस्य बाधकत्वस्येत्युत्पत्तेरेव विकल्पः स्यात्, पक्षे तु न कश्चित् प्रत्यय उत्पद्येतेत्यर्थः ॥

(उद्योतः) भाष्ये तत्रोत्पत्ति वा प्रसङ्ग इति । उत्पत्तेर्वार्थविकल्पप्रसङ्ग इत्यर्थः ॥ ननु बाधकत्वविकल्पे नायं दोष इत्याशङ्क्य तद्विकल्प एव न सिध्यतीत्याह—वाऽसरूप इति ॥ असरूपोपवादो वा भवतीति । अपवादपदं वक्ष्यमाणसिद्धान्ताभिप्रायेण ॥ बहिरङ्गस्येति । शब्दानुपात्तस्येत्यपि बोध्यम् ॥

(आक्षेपबाधकभाष्यम्)

अस्तु, यदा विक्षिपो विलिख इत्येतन्न, तदा विक्षेप्ता विक्षेपक इत्येतद्भविष्यति ॥

(प्रदीपः) अस्त्विति । बाधकाभावे उत्सर्गस्यानिवार्यत्वादिति भावः ॥

(उद्योतः) इत्येतन्नेत्यन्तो भाष्ये छेदः ॥

१ स्वरितस्वरयुक्तं करिष्यत इत्यर्थः । (र. ना.)

२ वैकल्पिकासरूपबाधकत्वस्येति शेषः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( आक्षेपसाधकभाष्यम् )

**यद्येतल्लभ्येत कृतं स्यात् । तत्तु न लभ्यम् । किं कारणम्? । यथा तद्धित इत्युच्यते ॥**

**तद्धितेषु च सर्वमेवोत्सर्गापवादं विभाषा, उत्पद्यते वा न वा ॥**

( प्रदीपः ) यद्येतदिति । अपवादशास्त्रेणोत्सर्गशास्त्रस्य बाधितत्वादपवादाभावपक्षेप्युत्सर्गस्याप्रवर्तनादिति भावः । तत्र यथा अत इञिति विकल्पितेनेञा मुक्ते पक्षेऽण् न भवति अपि तु वाक्यमेव । तथेहाप्यपवादाभावपक्षे प्रकृतिरेव कर्त्रादीनर्थानभिदध्याद् यथाग्निचिदित्यादौ क्विवादिलोपे कृते ॥

( उद्द्योतः ) भाष्ये यद्येतल्लभ्येतेति । अपवादपदाभावादपवादविषय एव विकल्प इत्यत्र मानाभावादपवादोत्सर्गोभयविषयो विकल्पः स्यात् । एवं च तद्धित इवोत्सर्गापवादयोर्विकल्पाद्यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते उत्सर्गाप्रवृत्त्या पक्षेऽनुत्पत्तिरेव प्राप्नोतीति भावः ॥ अपवादशास्त्रेणेति कैयटोक्तिस्तु[1] चिन्त्या, तद्धितेषु सर्वमुत्सर्गापवादं विभाषेति दृष्टान्तेन मदुक्तार्थस्यैव लाभात् ॥

( १९२७ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सिद्धं त्वसरूपस्य बाधकस्य वावचनात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् । कथम्? । असरूपस्य बाधकस्य वावचनात् "असरूपो वा बाधको भवतीति" इति वक्तव्यम् ॥**

( प्रदीपः ) सिद्धं त्विति । बाधकत्वे विकल्पिते यत्र पक्षेऽपवादस्य बाधकत्वं नास्ति तत्र बाधकत्वाभावादुत्सर्गः प्रवर्तते ॥

( उद्द्योतः ) सिद्धं त्विति । भाष्ये बाधकपदे कृतेऽसरूपस्य बाधकस्यैव विकल्पे उत्सर्गविकल्पाभावादसिद्धमिति भावः ॥ इदं चापवादशास्त्रेणैकवाक्यतापन्नम् । न चैवमसरूपो वा बाधको भवतीति भाष्येण बाधकत्वविकल्पप्रतिपादनं व्यर्थमिति वाच्यम् । *असरूपस्य बाधकस्य वावचनादिति वार्तिकस्वारस्येन 'असरूपो बाधको वा भवतीत्येव भाष्येऽन्वयात् । वार्तिकाद्धि बाधकानुवादेन विकल्पविधिरित्येव स्वरसतो लभ्यते, न तु बाधकत्वानुवादेनेति दिक् ॥ प्रत्यासत्त्या च यन्निरूपितं बाधकत्वं तस्यैव पक्षेऽभ्यनुज्ञानमिति नातिप्रसङ्गः ॥ कैयटे बाधकत्वे विकल्पिते इत्यादि । इदं त्विन्त्यम्*' वार्तिकोक्तबाधकपदार्थैकदेशस्य बाधकत्वस्य विकल्पेनान्वयायोगात् । किं च पक्षे बाधकत्वाभावे शप्तिपोरिव समुच्चयः स्यादिति महदनिष्टम् ॥ धर्मनिषेधे धर्म्यभावाप्रतीतेः । अत एव न वेति सूत्रे साधुत्वविकल्पे पक्षे तस्यैवासाधुत्वमापादितम् ॥

( आक्षेपभाष्यम् )

**सिध्यति । सूत्रं तर्हि भिद्यते ॥**

( समाधानभाष्यम् )

**यथान्यासमेवास्तु ॥**

( दूषणस्मारणभाष्यम् )

**ननु चोक्तम्—*तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धिते* इति ॥**

( दूषणपरिहारभाष्यम् )

**नैष दोषः । अस्ति कारणं येन तद्धितेषु विभाषोत्पत्तिर्भवति । किं कारणम्? । प्रकृतिस्तत्र प्रकृत्यर्थे वर्तते, अन्येन च शब्देन प्रत्ययार्थोऽभिधीयते । इह पुनर्न केवला प्रकृतिः प्रकृत्यर्थे वर्तते । नचान्यः शब्दोस्ति यस्तमर्थमभिदधीतेति कृत्वा तेनानुत्पत्तिर्न भविष्यति ॥**

**अथ वा समयः कृतः—"न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः"इति । एतस्मात्समयादनुत्पत्तिर्न भविष्यति ॥**

( प्रदीपः ) अन्येनेति । दक्षस्यापत्यमित्यादावपत्यादिशब्देनेत्यर्थः । इह पुनरिति । केवला प्रकृतिः स्वार्थमपि नाभिधत्ते किं पुनः कर्त्रादिकमर्थमभिधास्यति । तथाहि । प्रकृतिप्रत्ययसमुदाये प्रयुज्यमानेऽन्वयव्यतिरेकाभ्यां प्रकृतिः प्रकृत्यर्थे वर्तते प्रत्ययस्तु प्रत्ययार्थे इत्युच्यते अनुत्पन्नप्रत्यया तु प्रकृतिर्न कश्चिदर्थं गमयति । अथापि हि क्षिपेः कर्तेति कर्त्रादिशब्दाः प्रयुज्यन्ते तथापि करोतिक्रियापेक्षमपि कर्तृत्वं प्रतीयेत न तु क्षिपिक्रियापेक्षमेव तस्मात्सामर्थ्याद् बाधकत्वं बहिरङ्गमपि विकल्प्यते ॥

( उद्द्योतः ) क्षिपेरिति धात्वर्थनिर्देश इक्प्रत्ययः । इक्कृष्यादिभ्य इति इग्वा ॥ तथापीति । कर्तेत्यत्र तस्यापि सत्त्वादिति भावः ॥ बाधकत्वं बहिरङ्गमपीति । इदं चिन्त्यम्[2] । सामर्थ्यादपवाद एवासरूपशब्देन विवक्षितो न तु उत्सर्गोपीति तु भाष्यतात्पर्यं बोध्यम् ॥ भाष्ये—अथ वा समय इति । एवं च समयैतत्सूत्रयोरन्यतरस्याप्यबाधायासरूपपदेनापवाद एव गृह्यते इति भावः ॥

( आक्षेपभाष्यम् )

**ननु च य एव तस्य समयस्य कर्ता स एवेदमप्याह । यद्यसौ तत्र प्रमाणम्, इहापि प्रमाणं भवितुमर्हति ॥**

( प्रदीपः ) य एवेति । समयस्यायं बाधकोस्त्विति भावः ॥

( उद्द्योतः ) इहापि प्रमाणं चेत्किमेतावता, तत्राह—समयस्येति ॥

---

१ 'समर्थानां प्रथमाद्वा' इत्यनेन अणोपवादस्य 'अत इञ्' इत्यस्य विकल्पेनाप्रवृत्तिपक्षेऽणोऽप्यनुत्पत्तिरेव यथेत्यर्थः ॥

२ इदं चिन्त्यम् । 'इक्श्तिपौ धातुनिर्देशे*' इत्येवमेव वार्तिकपाठे कथं धात्वर्थे प्रत्ययः । 'धात्वर्थनिर्देशे ण्वुल्*' इति वार्तिकेन ण्वुल एव धात्वर्थे विधानात् ॥ तस्मात् शब्दरूपस्य धातोः कर्त्रसंभवात् वाच्यवाचकयोस्तादात्म्याच्छब्दार्थज्ञानानामेकाकारताया एव प्रयोगे सर्वैरङ्गीकृतत्वात्पचिपदं तदर्थपरमेव प्रयुक्तमिति कल्पनमेव वरमिति दाधिमथाः ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( समाधानभाष्यम् )

प्रमाणमसौ तत्र चेह च । सामर्थ्यं त्विह द्रष्टव्यं शब्दानां प्रयोगे । न चानुत्पत्तौ सामर्थ्यमस्ति । ततोनुत्पत्तिर्न भविष्यति ॥

( प्रदीपः ) सामर्थ्यमिति । अर्थप्रत्यायनाय शब्दाः प्रयुज्यन्ते न च प्रत्ययस्यानुत्पत्तावर्थः प्रत्याययितुं शक्यत इत्यर्थः । पूर्वस्मिन् परिहारे प्रकृतेरेव केवलायाः स्वार्थमात्राभिधानेपि सामर्थ्यं नास्तीत्युक्तम् । उत्तरत्र तु समयात् प्रयोग एव केवलाया नास्तीत्युच्यते ॥

( उद्द्योतः ) अर्थः प्रत्याययितुमिति । न च प्रत्ययानुत्पत्तौ प्रयोगे सामर्थ्यमस्ति । न केवला प्रकृतिरिति निषेधात् । नापि प्रयुक्तादर्थबोध इति भाष्यार्थः इति भावः ॥

( आक्षेपभाष्यम् )

कथं तर्हि तद्धितेष्वनुत्पत्तौ सामर्थ्यं भवति ? ॥

( प्रदीपः ) कथं तर्हीति । समयात् केवलस्य प्रातिपदिकस्य तद्धितानुत्पत्तौ साधुत्वं न प्राप्नोतीत्यर्थः ॥

( समाधानभाष्यम् )

अन्येन प्रत्ययेन सामर्थ्यम् । केन ? । षष्ठ्या ॥ अथ वा रूपवत्तामाश्रित्य वाविधिरुच्यते । न चानुत्पत्ती रूपवती । तेनानुत्पत्तिर्न भविष्यति ॥

( प्रदीपः ) अन्येनेति । दक्षस्यापत्यमिति षष्ठ्यन्तस्य प्रातिपदिकस्य प्रयोगो, न केवलस्य । इह तु कृदनुत्पत्तौ सत्यां केवल एव धातुः स्यात्तस्य च समयात् प्रयोगाभावः ॥ अथ वेति । असरूपशब्देन भिन्नरूप उच्यते । तस्य च भिन्नरूपत्वं रूपवदुत्सर्गापेक्षया भवतीति स एव पक्षेऽभ्यनुज्ञायते न त्वरूपानुत्पत्तिरित्यर्थः ॥

( उद्द्योतः ) असरूपशब्देनेति । भिन्नरूपो वेत्युक्ते भावाभावयोः परस्परभिन्नरूपस्य सत्ता प्रतीतिरिति नानेनोभयोरुत्सर्गापवादयोर्विभाषा बोधनम् । तथा सति पक्षेऽनुत्पत्तिः स्यात् । सा च न रूपवतीति अभावपक्षे न भिन्नरूपस्य सत्ता स्यादिति भावः ॥

( आक्षेपभाष्यम् )

एवमपि कुत एतत्—अपवादो विभाषा भविष्यति, न पुनरुत्सर्ग इति ॥

( उद्द्योतः ) नन्वस्तु सामर्थ्यादन्यतरस्य विकल्पो, न तूभयोरिति बाधकपदाभावे अपवाद एवेति कुतो लभ्यत इत्याशङ्कते भाष्ये कुत एतदिति ॥

( समाधानभाष्यम् )

न चैवास्ति विशेषो यदपवादो विभाषा स्याद्, उत्सर्गो वा ॥ अपि च सापेक्षोयं निर्देशः क्रियते—'वाऽसरूप' इति । न चोत्सर्गवेलायां किं चिदपेक्ष्यमस्ति । अपवादवेलायां पुनरुत्सर्गोपेक्ष्यते । तेन यो रूपवानन्यपूर्वो बाधकः प्राप्नोति, स वा बाधको भविष्यति ॥ कः पुनरसौ ? । अपवादः ॥

( प्रदीपः ) न चैवास्तीति । उत्सर्गविकल्पेऽप्राप्तविभाषा, अपवादविकल्पे तु प्राप्तविभाषेति न कश्चिद्विशेषः ॥ अपवादवेलायामिति । बाध्यत्वेन यावदुत्सर्गो नापेक्ष्यते तावदपवादस्य प्रवृत्तिरेव नास्तीत्यर्थः ॥

( उद्द्योतः ) इष्टापत्त्या समाधत्ते—न चैवास्तीति ॥ तद्व्याचष्टे—उत्सर्गेति । असरूप उत्सर्गो वा भवतीत्यनेन प्रत्यासत्त्याऽसरूपोपवाद एव पक्षे स्थाप्यते इति कविषये नाणिति भावः ॥ वस्तुतोऽसरूपपदेनापवाद एवोपतिष्ठत इत्याह—भाष्ये अपि च सापेक्ष इति ॥ अवधि सापेक्ष इत्यर्थः । भिन्नरूपत्वं ह्यसरूपत्वं तत्र कुतो भिन्नरूप इत्यपेक्षायां स्वविधानवेलायां यः स्वविषये प्राप्तः स एव बुद्धिस्थो गम्यते । अपवादविधिसमये चोत्सर्गस्तमपि विषयमुपढौकमान उपारूढो भवतीति तदपेक्षया भिन्नरूपोपवाद एव गृह्यत इत्यर्थः ॥ न चोत्सर्गवेलायामिति । नन्वपवादवाक्यार्थोत्तरमुत्सर्गस्य लक्ष्यसंस्कारकतेति प्रातिपदिकार्थसूत्रभाष्ये उक्तत्वेनोत्सर्गोपि स्ववेलायामपवादमपेक्षते इति कथमेतदिति चेन्न । लक्ष्यसंस्कारवेलायामपेक्षायामपि वाक्यार्थबोधवेलायां तदभावात् । अस्य च तदैवैकवाक्यतेति भावः ॥

( आक्षेपभाष्यम् )

यदि यो रूपवानन्यपूर्वो बाधकः प्राप्नोति स वा बाधको भवतीत्युच्यते । किबादिषु समावेशो न प्राप्नोति—ग्रामणीः ग्रामनाय इति । न ह्येते रूपवन्तः ॥

( उद्द्योतः ) स वा बाधको भवतीति भाष्ये स बाधको वा भवतीत्यन्वयः ॥

( समाधानभाष्यम् )

एतेपि रूपवन्तः । कस्यामवस्थायाम् ? । उपदेशावस्थायाम् ॥

( प्रदीपः )उपदेशावस्थायामिति । प्रत्यासत्तिन्यायादुपदेशावस्थायामसारूप्यमाश्रीयते इत्यर्थः ॥

( वार्तिकशेषभाष्यम् )

यद्येवम् ।

( १९२८ आक्षेपवार्तिकम् ॥ ४ ॥ )

॥ * ॥ अनुबन्धविभिन्नेषु विभाषाप्रसङ्गः ॥ * ॥

( भाष्यम् ) अनुबन्धविभिन्नेषु विभाषा प्राप्नोति—"कर्मण्यण्" "आतोनुपसर्गे क" इति कविषयेऽणपि प्राप्नोति ।

---

१ षष्ठ्व्दो यद्यर्थे । (र. ना.)

२ प्राचीनतरपुस्तके तु 'ग्रामनायः' इत्यत्र णत्वं न दृश्यते ॥ नव्यपण्डितैस्तु णत्वं कृतम् । परंतु तैः 'ग्रामनयनस्योत्सर्गतः' इति कौमुदी 'कर्मण्यणि णत्वं न भवति—ग्रामनाय इति' इति तत्त्वबोधिन्यादिग्रन्था नैव दृष्टा इति दाधिमथः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( १९२९ समाधानवार्तिकम् ॥ ५ ॥ )

**॥*॥ सिद्धमनुबन्धस्यानेकान्तत्वात् ॥*॥**

( भाष्यम् ) सिद्धमेतत् । कथम् ? । अनुबन्धस्यानेकान्तत्वात् । 'अनेकान्ता' अनुबन्धाः ॥

( उद्योतः ) सिद्धमनुबन्धस्यानेकान्तत्वादिति । ननु यद्यनुबन्धोऽनवयवस्तदा कथं क्प्रत्यये कसेरत्वम्, प्रत्ययादित्वाभावात् । कथं वाडादीनामनेकान्त्वेन सर्वादेशत्वम् न चादेशप्रवृत्तिकालेऽनुबन्धत्वाभावादनेकान्त्वम् । तर्हि केऽपि वाक्यार्थबोधात्पूर्वं प्रत्ययत्वाज्ञानेन तदुत्तरमेवेत्संज्ञाप्रवृत्तौ सर्वत्र नाज्झलाविति-सूत्रभाष्योक्तरीत्या उपदेशोत्तरकालमेवेत्संज्ञा प्रवृत्त्या च उपदेशेऽनुबन्धसत्त्वादसरूपाकारत्वं स्यादिति चेन्न, चुटू इत्यादावादिशब्दस्य समीपपरत्वाच्च दोषः । अनेकाल्त्रित्र संबन्धसामान्यषष्ठ्यर्थबहुव्रीह्यङ्गीकाराच्च दोषः । डादेशेऽपि डा आ इत्याकारप्रश्लेषात्सर्वादेशत्वम् इत एव वाऽस्वरसाद् अथैकान्तेषु दोष एवेति वक्ष्यति भाष्यकृत् ॥

( समाधानान्तरभाष्यम् )

अथ वा प्रयोगेऽसरूपाणां वाविधिर्न्याय्यः ॥

( उद्योतः ) अथ वा प्रयोगे इति ॥ क्विपि रूपाभावादेव स प्रयोगेऽसरूपः । असरूपपदेन च समानरूपाभाववानुच्यते इति भावः ॥

( १९३० दूषणवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ प्रयोगे लादेशेषु प्रतिषेधः ॥ * ॥**

( भाष्यम् ) प्रयोगे चेल्लादेशेषु प्रतिषेधो वक्तव्यः । ह्योऽपचदित्यत्र लुङपि प्राप्नोति । श्वः पक्तेत्यत्र लङपि प्राप्नोति ॥

( प्रदीपः ) ह्योऽपचदिति । लङ्यनचूकस्तकारः प्रत्ययः लुङित्वपाक्षीदिति 'ईत्' शब्द इति भिन्नरूपत्वात्समावेशप्रसङ्गः॥

( दूषणपरिहारभाष्यम् )

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति–'न लादेशेषु वासरूपो भवति' इति । यदयं "हशश्वतोर्लङ् च" इत्याह ॥

( प्रदीपः ) यदयमिति । परोक्षे लिडिति लिटा लङः समावेशोऽसारूप्यात्सिद्ध एवेति नार्थो लङ्विधानेन । विहितस्तु लकाराणामसमावेशं ज्ञापयतीत्यर्थः ॥

( उद्योतः ) न लादेशेषु वाऽसरूप इति । आदेशगतमसारूप्यं गृहीत्वा लकारविषये वाऽसरूपविधिर्नास्तीति तात्पर्यम् । आदेशप्रवृत्त्युत्तरकालिकवैरूप्यवत्सु लकारेष्विलक्षरार्थः ॥ तदाह—लकाराणामसमावेशमिति ॥

( समाधानान्तरभाष्यम् )

अथ वा प्रयोगेऽसरूपाणां वाविधौ न सर्वमिष्टं संगृहीतमिति कृत्वा द्वितीयः प्रयोग उपास्यते ॥

कोऽसौ ? । उपदेशो नाम ॥ उपदेशे चैतेऽसरूपाः ॥

( प्रदीपः ) अथ वेति । क्विबादयो न संगृहीतास्तेषां प्रयोगे रूपाभावादित्यर्थः ॥

( उद्योतः ) सर्वेष्टासंग्रहमुपपादयति—क्विबादय इति । असरूपपदेन भिन्नरूपस्यैव ग्रहणमित्याशयः ॥

( दूषणस्मारणभाष्यम् )

ननु चोक्तम्—*अनुबन्धविभिन्नेषु विभाषाप्रसङ्गः* इति ॥

( दूषणपरिहारस्मारणभाष्यम् )

परिहृतमेतत्—*सिद्धमनुबन्धस्यानेकान्तत्वाद्* इति ॥

( उद्योतः ) डादौ तु प्रश्लेषान्निर्वाहः ॥

( दूषणभाष्यम् )

अथैकान्तेषु दोष एव ॥

( उद्योतः ) चुटू इत्यादावादिशब्दस्य समीपपरत्वे चुञ्चुप्चणयोर्यादित्वेऽपीत्त्वापत्तेः ॥

( दूषणपरिहारभाष्यम् )

एकान्तेषु च न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमसारूप्यं भवति' इति । यदयं "ददातिदधात्योर्विभाषां" शास्ति ॥

( उद्योतः ) भाष्ये नानुबन्धकृतमिति । भाव्यनुबन्धस्य-ज्ञानविषयवर्णकृतमसारूप्यं नेत्यर्थः ॥ "ददातिदधात्योर्विभाषा" शः, पक्षे ण्यः[३] ॥

( परिहारान्तरभाष्यम् )

अथवाऽसरूपो वा बाधको भवतीत्युच्यते । अपवादश्च नाम अनुबन्धभिन्नो वा भवति रूपान्यत्वेन वा । तेनानेनावश्यं किंचित्त्याज्यं किंचिच्च संगृहीतव्यम् । तद्यदनुबन्धकृतमसारूप्यम्, तन्नाश्रयिष्यामः, यत्तु रूपान्यत्वेनासारूप्यम्, तदाश्रयिष्यामः ॥

( उद्योतः ) अथवेति । उभयकृतासारूप्ये गृह्यमाणे व्यावर्त्याभावादसरूप इति व्यर्थं स्पष्टत्वाद् 'वाऽपवादः' इत्येव वदेत् । तत्सामर्थ्यादनुबन्धकृतासारूप्यं नाश्रीयते, किं तु रूपान्यत्वेनैवेत्यर्थः ॥

( परिहारान्तरभाष्यम् )

अथवा–'असरूपो वा बाधको भवती'त्युच्यते । सर्वेश्चासरूपः तत्र प्रकर्षगतिर्विज्ञास्यते—'साधीयो योऽसरूपः' इति । कश्च साधीयान् ? । यः प्रयोगे, प्राक् च प्रयोगात् ॥

( उद्योतः ) तत्सामर्थ्यात्प्रकर्षगतिः । तेन प्रयोगे उपदेशे चासरूप इति द्वितीयः पक्षः ॥

---

१ अनुबन्धानामनेकान्तत्वे इत्यादिः ॥

२ इत्त्वापत्तेरिति । अस्य 'इत्यादिः' इति शेषः ॥ तथा च 'अनुबन्धानामनेकान्तत्वे आदिपदस्य समीपपरत्वे चुञ्चुप्चणयोर्यादित्वेपि चकारस्येत्वापत्तेर्व्याघाताद् यकारादित्वाङ्गीकारवैयर्थ्यापत्त्या स्वीकरणीये एकान्तत्वे दोष एवेति भाष्याक्षरार्थः ॥

३ 'श्याद्व्यधास्रु–' इत्यनेनादन्तत्वादिति बोध्यम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( परिहारान्तरभाष्यम् )

**अथवा—'असरूपो वा बाधको भवतीत्युच्यते । न चैवं सति कश्चिदपि सरूपः । त एवं विज्ञास्यामः—'क्वचिद्येऽसरूपाः' इति । अनुबन्धभिन्नाश्च प्रयोगे सरूपाः ॥**

( प्रदीपः ) क्वचिद्य इति । प्रयोग इत्यर्थः । उपदेशे सर्वेषामेवासारूप्यमित्यसरूपग्रहणमनर्थकं स्यात् ॥

( उद्द्योतः ) तत्सामर्थ्यात् प्रायोगिकमसारूप्यमिति तृतीयः पक्षः ॥ तत्रान्त्ययोः क्विबादिसंग्रहः । कथमिति चेत् ? रूपाभावादेव सारूप्याभावस्याक्षतेः । असरूपपदेन च सारूप्याभाववानुच्यत इत्याहुः ॥

( आक्षेपभाष्यम् )

**अथ कथमिदं विज्ञायते अस्त्रियामिति—किं 'स्त्रियां न भवति' इति, आहो स्वित् 'प्राक् स्त्रिया भवति' इति । कश्चात्र विशेषः ? ।**

( प्रदीपः ) कथमिति । स्त्र्यधिकारविहितेष्वेव किं प्रतिषेधः, परस्तात् स्त्र्यधिकारस्य भवत्येव वासरूपविधिः । अथ स्त्र्यधिकारात् प्राग्वासरूपविधिर्भवति स्त्र्यधिकारेण विच्छिद्यत इति प्रश्नः ॥

( उद्द्योतः ) प्रागिति । अत्र पक्षे सूत्रे संन्धिः सौत्रः । यद्वा परिभाषापक्षे प्रथमः पक्षः । अधिकारत्वे द्वितीयः । तदा स्त्रियामिति दृष्टं निवर्तते इत्यर्थः ॥

( १९३१ दूषणवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषाप्रसङ्गः ॥ * ॥**

**( भाष्यम् ) स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषा प्राप्नोति ॥ क्त—हसितं छात्रस्य शोभनम् । घञपि प्राप्नोति ॥ ल्युट्—हसनं छात्रस्य शोभनम् । घञपि प्राप्नोति ॥ तुमुन्—इच्छति भोक्तुम् । लिङ्लोटावपि प्राप्नुतः ॥ खलर्थः—ईषत्पानः सोमो भवता । खलपि प्राप्नोति ॥**

( प्रदीपः ) लिङ्लोटाविति । लिङ्चेति लिङ् भवत्येव । इच्छार्थेषु लिङ्लोटावित्यत्र तु लिङ्लोटोः सहनिर्देशादत्रापि सहनिर्देशः कृतः । लिङ्चेति नियमाल्लोण्न भविष्यतीति शक्यते वक्तुम् ॥ ननु तुमुन् भावे, कर्तृकर्मणोर्लिङ्लोटाविति भिन्नार्थत्वात् कुतो बाध्यबाधकभावः ॥ नैष दोषः । भावेपि लिङ्लोटोरस्ति विधानमिति तदपेक्षया बाध्यबाधकभावोभिमतः ॥

( उद्द्योतः ) 'समानकर्तृकेषु तुमुन्' 'लिङ्चे'ति वचनालिङ इष्टत्वादाह—लिङ् चेति । लोडापादन एव भाष्यतात्पर्यमिति भावः ॥ नियमादिति । नियमो वा कल्प्यः, ज्ञापकं वा कल्प्यमिति तु भाष्याशयः ॥ किं च लिङ् कर्तृकर्मणोश्चरितार्थः । भावे तुमुन् भावार्थयोस्तयोरपवाद एवेतीष्टं भगवत इति ज्ञायते इति लिङ्भवत्येवेत्यपि कैयटश्चिन्त्यः ॥ ननु लिङ्लोटौ कामप्रवेदने विधीयेते इच्छामि भुञ्जीय इच्छामि भुङ्क्तां भवानिति हि तदुदाहरणम् । इदं त्वकामप्रवेदनेऽपीति कथमनयोर्बाध्यबाधकभावः । न चेदमपि कामप्रवेदनविषयः 'इच्छति भोक्तुम्' इत्युदाहरणसंगतेः । वक्त्रभिप्रायाविष्करणमेव हि कामप्रवेदनशब्देनोच्यत इति चेन्न । तत्र भोजनमिच्छतीति तदर्थेनात्रापि तत्सत्त्वात् ॥

( स्त्रियाः प्राग् इति पक्षाङ्गीकारभाष्यम् )

**एवं तर्हि स्त्रियाः प्रागिति वक्ष्यामि ।**

( १९३२ दूषणवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ स्त्रियाः प्रागिति चेत् क्त्वायां वावचनम् ॥ * ॥**

**( भाष्यम् ) स्त्रियाः प्रागिति चेत्क्त्वायां वावचनं कर्तव्यम् । आसित्वा भुङ्क्ते । आस्यते भोक्तुमित्यपि यथा स्यात् ॥**

( प्रदीपः ) आस्यते भोक्तुमिति । भोजनार्थत्वादासनस्य पौर्वकाल्यमात्रं गम्यते इति समानविषयत्वाद् बाध्यबाधकभावप्रसङ्गः । क्त्वा भावे तत्रैव च लकारोत्पत्तिरत्रेति समानार्थत्वमपि विद्यते । तत्रायं निर्णयः । स्त्र्यधिकारस्य परस्तादपि वासरूपविधिर्भवति । अर्हे कृत्यतृचश्चेत्यत्र तु कृत्यतृज्ग्रहणेन तस्यानित्यत्वं ज्ञाप्यते ॥ ९४ ॥

( उद्द्योतः ) ननु पौर्वकाल्याप्रतीतेः कथं क्त्वाविषये लकारप्राप्तिरत आह—भोजनार्थत्वादिति ॥

( १९३३ दूषणवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ कालादिषु तुमुन्विधाने वावचनम् ॥ * ॥**

**( भाष्यम् ) कालादिषु तुमुन्विधाने वावचनं कर्तव्यम् । कालो भोजनस्येत्यपि यथा स्यात् ॥**

( १९३४ वार्तिकम् ॥ ८ ॥ )

**॥ * ॥ अर्हे तृज्विधानम् ॥ * ॥**

**( भाष्यम् ) अर्हे तृज् विधेयः । इमे अर्हे कृत्या विधीयन्ते ते विशेषविहिताः सामान्यविहितं तृचं बाधेरन् ॥**

( दूषणोद्धारभाष्यम् )

**नैष दोषः । भावकर्मणोः कृत्या विधीयन्ते कर्तरि तृच् । कः प्रसङ्गो यद्भावकर्मणोः कृत्याः कर्तरि तृचं बाधेरन् ।**

**एवं तर्हि ।**

१ अयं भावः—'वा असरूपः आ स्त्रियाम्' इत्येवं चत्वारि पदानि । आङ् मर्यादायाम् । 'स्त्रियाम् इति पञ्चमीस्थाने व्यत्ययेन सप्तमी' इति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( १९३५ वार्तिकन्यासान्तरम् ॥ ९ ॥ )

॥ * ॥ अर्हे कृत्यतृज्विधानम् ॥ * ॥

( भाष्यम् ) अर्हे कृत्यतृचो विधेयाः । अयमर्हे लिङ् विधीयते । स विशेषविहितः सामान्यविहितान् कृत्यतृचो वा बाधेत ॥ वासरूपोऽस्त्रियाम् ॥९४॥

( उद्योतः ) स्त्रियाः प्रागित्यत्र पक्षे दूषणान्तरमाह—भाष्ये कालादिष्विति । अर्हे तृजिति च ॥ ९४ ॥

( अथ कृत्प्रकरणे कृत्यप्रकरणम् )

( ४३८ अधिकारसूत्रम् ॥ ३ । १ । ६ आ. २ )

## ७१२ कृत्याः ॥ ३।१।९५ ॥

( अवधिज्ञापनाधिकरणम् )

( १९३६ आक्षेपवार्तिकम् ॥ १ ॥ )

॥*॥ कृत्यसंज्ञायां प्राङ् ण्वुल्वचनम् ॥*॥

( भाष्यम् ) कृत्यसंज्ञायां प्राङ् ण्वुल इति वक्तव्यम् । किं प्रयोजनम् । ण्वुलः कृत्यसंज्ञा मा भूदिति ॥

( १९३७ आक्षेपवारकवार्तिकम् ॥ २ ॥ )

॥ * ॥ अर्हेकृत्यतृज्ग्रहणं तु ज्ञापकं प्राङ् ण्वुल्वचनानर्थक्यस्य ॥ * ॥

( भाष्यम् ) कृत्यतृचश्चेति तृज्ग्रहणं करोति तज्ज्ञापयत्याचार्यः—प्राङ् ण्वुलः कृत्यसंज्ञा भवतीति ॥

( प्रदीपः ) कृत्याः ॥ ९५ ॥ कृत्याः इत्येतावत् सूत्रमित्याह—कृत्यसंज्ञायामिति ।

( आक्षेपभाष्यम् )

एवमपि ण्वुलः कृत्यसंज्ञा प्राप्नोति ।

( समाधानभाष्यम् )

योगापेक्षं ज्ञापकम् ॥ कृत्याः ॥ ९५ ॥

( प्रदीपः ) योगापेक्षमिति । ण्वुल्तृचावित्येतस्माद्योगात् प्राक् कृत्यसंज्ञाधिकार इत्येवं तृज्ग्रहणेनानुमास्यत इत्यर्थः ॥ ९५ ॥

( ४३९ प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. ३ )

## ७१३ तव्यत्तव्यानीयरः ॥ ३।१।९६ ॥

( १९३८ प्रत्ययविधिवार्तिकम् ॥ १ ॥ )

॥ * ॥ केलिमर उपसंख्यानम् ॥ * ॥

( भाष्यम् ) केलिमर उपसंख्यानं कर्तव्यम् । पचेलिमा माषाः पक्तव्याः । भिदेलिमाः सरलाः भेत्तव्याः ।

( प्रदीपः ) तव्यत्तव्या ॥ ९६ ॥ केलिमर इति । कर्मकर्तरि चायं कैश्चिदिष्यते ॥ भाष्यकारेण तु कर्मणि प्रदर्शितः ॥

( उद्योतः ) तव्यत्तव्या ॥ ९६ ॥ कैश्चिदिति । वृत्तिकारैरित्यर्थः । कर्मणि प्रदर्शित इति । पक्तव्या इति विवरणात् । न हि तव्यः कर्मकर्तरि, लकारवाच्यः कर्ता कर्मवदिति वचनादिति भावः ॥

( १९३९ प्रत्ययविधिवार्तिकम् ॥ २ ॥ )

॥ * ॥ वसेस्तव्यत् कर्तरि णिच्च ॥ * ॥

( भाष्यम् ) वसेस्तव्यत्कर्तरि वक्तव्यः, णिच्च चासौ भवतीति वक्तव्यम् । वसतीति वास्तव्यः ।

( १९४० कर्तरि तव्यत् प्रत्याख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ तद्धितो वा ॥ * ॥

( भाष्यम् ) तद्धितो वा पुनरेष भविष्यति । वास्तुनि भवो वास्तव्यः ॥ तव्यत्तव्या० ॥ ९६ ॥

(प्रदीपः) वास्तुनि भव इति । दिगादित्वाद्यत्प्रत्ययः । नित्यानां शब्दानां यथाकथञ्चिदन्वाख्यानं कर्तव्यमिति मन्यते । यथोक्तम्—

'उपादायापि ये हेयास्तानुपायान् प्रचक्षते ।
उपायानां च नियमो नावश्यमवतिष्ठते' इति ॥

अवास्तव्य इत्यत्र स्वरभेदोऽपि नास्ति । कृत्योकेष्णुजिति यदन्तोदात्तत्वं विधीयते तदेव ययतोश्चातदर्थे इत्यनेन॥९६॥

( उद्योतः ) ननु बोधे विशेषात्कथं तद्धितेन सिद्धिरत आह—नित्यानामिति । वास्तु भवत्वेनापि वासकर्तुरेव रूढ्या बोधान्नार्थविशेषः । रूढ्या सर्वदोषपरिहारादिति भावः ॥ उपादायापि ये हेया इति । उपायशब्दव्युत्पत्तिः । पृषोदरादित्वात्साधुः ॥ रेखागवयस्थानीयत्वादिति भावः ॥ 'कृत्योकेति' ययतोरिति चान्तोदात्तविधायके । नञ इति च तत्र वर्तते । अत्रेन वास्तव्योऽन्नवास्तव्य इत्यादिसमासस्तु अनभिधानान्न भवतीति भाष्याशयः ॥ ९६ ॥

( अथ यत्प्रत्ययप्रकरणम् )

( ४४० यत्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. ४ )

## ७१४ अचो यत् ॥ ३ । १ । ९७ ॥

( अज्ग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

अज्ग्रहणं किमर्थम् ? ।

---

१ 'प्राक् तृचः' इत्येवमेव पाठ आसीत् । अतएवाग्रे 'ण्वुलः कृत्यसंज्ञा प्राप्नोति' इत्याक्षेपः संगच्छते । 'ण्वुलः प्राक्' इति पाठे ण्वुलः कृत्यसंज्ञाप्राप्तिः कथं संगच्छेतेति दाधिमथाः ॥

२ काशिकायाम् "कृत्याः प्राङ् ण्वुलः" इत्येवं दर्शितः सूत्रपाठोऽनार्ष इति सूचितम् ॥

३ इत्यमेव 'योगापेक्षं ज्ञापकम्' इत्यस्य संख्यासंज्ञासूत्रस्थभाष्यस्यापि 'बहुगुणवतुडति' इति 'योगापेक्षं ज्ञापकम्' इत्येवार्थो ज्ञेय इति दाधिमथाः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रयोजनभाष्यम् )

अजन्ताद्यथा स्याद्, हलन्तान्मा भूदिति ॥

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम्। हलन्ताण्ण्यद्विधीयते, स बाधको भविष्यति ॥

( प्रयोजनसाधकभाष्यम् )

यथैव तर्हि ण्यद्यतं बाधते । एवं तव्यदादीनपि बाधेत। अज्ग्रहणे पुनः क्रियमाणे अजन्ताद्यद्विधीयते, हलन्ताण्ण्यद्विधीयते। एतावन्तश्च धातवो यदुताजन्ता हलन्ताश्च। उच्यन्ते च तव्यदादयः। ते वचनाद्भविष्यन्ति ॥

( प्रयोजनबाधकभाष्यम् )

नैतदस्ति प्रयोजनम्। वासरूपेण तव्यदादयो भविष्यन्ति ॥

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्। अजन्तभूतपूर्वमात्रादपि यथा स्यात्—लव्यम्, पव्यम्। आर्द्धधातुकसामान्ये गुणे कृतेपि प्रत्ययसामान्येपि च वान्तादेशे कृते 'हलन्तादिति' ण्यत् प्राप्नोति ॥ तथा दित्स्यं धित्स्यम्। आर्द्धधातुकसामान्ये अकारलोपे कृते "हलन्तादिति" ण्यत् प्राप्नोति। अज्ग्रहणसामर्थ्याद्यदेव भवति।

( उद्योतः ) अचो यत् ॥ ९७ ॥ भाष्ये आर्धधातुकसामान्य इति ॥ विषयसप्तम्यामपि परभूतविषयसत्त्वे एव प्रवृत्त्या परनिमित्तत्वमस्त्येवेति कथयतीत्यादौ स्थानिवत्त्वनिर्वाहः । आर्धधातुके इति च जातिनिर्देश इति भावः ॥

( १९४१ यत्प्रत्ययवार्तिकम् ॥ १ ॥ )

॥ * ॥ यति जनेरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) यति जनेरुपसंख्यानं कर्तव्यम् । जन्यं वत्सेन ॥

अत्यल्पमिदमुच्यते [—'जनेः' इति ।]

( १९४२ वार्तिकन्यासान्तरम् ॥ २ ॥ )

॥ * ॥ तकिशसिचतियतिजनीनामुपसंख्यानमिति वक्तव्यम् ॥ * ॥

( भाष्यम् ) तकि-तक्यम्। शसि-शस्यम्। चति-चत्यम्। यति-यत्यम्। जनि-जन्यम् ॥

( प्रदीपः ) अचो यत् ॥ ९७ ॥ यति जनेरिति । यतोऽनाव इति स्वरार्थं जनेर्यद्विधानम्। जन्यमिति तु ण्यतापि सिध्यति—जनिवध्योश्चेति वृद्धिप्रतिषेधात् ॥

( उद्योतः ) यतोऽनाव इति । आद्युदात्तस्वरार्थमित्यर्थः ॥

( १९४२ कृत्ययत्प्रत्ययवार्तिकम् ॥ २ ॥ )

॥ * ॥ हनो वा वध च ॥ * ॥

( भाष्यम् ) हन्तेर्वा यद्वक्तव्यः । वध इत्ययं चादेशः। वध्यः। घात्यः ॥

( १९४३ कृत्यप्रत्याख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ तद्धितो वा ॥ * ॥

( भाष्यम् ) तद्धितो वा पुनरेष भविष्यति—वधमर्हतीति वध्यः ॥

( प्रदीपः ) वधमर्हतीति । दण्डादिभ्य इति यत्प्रत्ययः ॥

( उद्योतः ) यत्प्रत्यय इति । एतेन दण्डादिभ्यो य इति वृत्तिपाठ एतद्भाष्यविरुद्ध इति भावः ॥

( तद्धितानुपपत्तिभाष्यम् )

यदि तद्धितः, समासो न प्राप्नोति—असिवध्यो मुसलवध्य इति। यति पुनः सति *साधनं कृतेति वा पादहारकाद्यर्थम्*इति समासः सिद्धो भवति॥

( प्रदीपः ) यदि तद्धित इति। तेन सह समासस्य लक्षणाभावात् ॥

( उद्योतः ) लक्षणाभावादिति । सुप्सुपेति तु न सार्वत्रिकमित्यर्थः ॥

( तद्धितोपपत्तिभाष्यम् )

यदि पुनरसिवधशब्दादेवोत्पत्तिः स्याद्। असिवधमर्हतीति ॥

( उद्योतः ) [[1]भाष्ये यदि पुनरिति । असिवधादयः समस्ता अपि गणे पाठ्याः । आकृतिगणो वा स इति भावः ॥ एतेन न चासि वधेत्याद्यपास्तम् ॥ ]

( तद्धितानुपपत्तिभाष्यम् )

नैवं शक्यं वक्तुम्। स्वरे हि दोषः स्यात्—'असिवध्यः' एवं स्वरः प्रसज्येत। असिवध्य इति चेष्यते ॥ अचो ॥ ९७ ॥

( प्रदीपः ) स्वरे हि दोष इति। असिवधशब्दाद्यति सति तित्स्वरितमिति स्वरितः प्रसज्येत। कृदन्तेन तु समासे कृदुत्तरपदप्रकृतिस्वरेण वध्यशब्द आद्युदात्तो भवति। न चासिवधशब्दात् प्राप्नोति यत् दण्डादिषु केवलवधशब्दस्य पाठात्तदन्तविध्यभावाच्च ॥ ९७ ॥

( उद्योतः ) कृदुत्तरपदेति । वध्यशब्दो 'यतोऽनावः' इति द्व्यच्कत्वादाद्युदात्तः ॥ एवं च तद्धितेनासिद्धिरिति वार्तिकं कार्यमेवेति भावः ॥ ९७ ॥

१. विधायकाभावादित्यर्थः। ( र. ना. )

२. अयं कोष्ठकान्तर्गतपाठः "कृदुत्तरपदेति" इति प्रतीकतः प्रागेवोचितः कुतः भाष्यपाठसंवादात् ॥ सद्युपलभ्यमानपुस्तकेषु तु 'द्व्यच्कत्वादाद्युदात्तः' इत्युत्तरम् 'एवं च तद्धितेनासिद्धिः' इत्यतः प्राक् समुपलभ्यते ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ४४१ यत्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. ५ )

## ७१७ गदमदचरयमश्चानुपसर्गे ॥ ३ । १ । १०० ॥

( १९४४ यत्प्रत्ययविधिवार्तिकम् ॥ १ ॥ )

॥ * ॥ अनुपसर्गाच्चरेराङि चागुरौ ॥ * ॥

( भाष्यम् ) अनुपसर्गाच्चरेरित्यत्राङि चागुराविति वक्तव्यम् । आचर्यो देशः ॥

अगुराविति किमर्थम् ? ।

आचार्य उपनयमानः ॥ गदमद ॥ १०० ॥

---

( ४४२ यत्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. ६ )

## ७२० अर्यः स्वामिवैश्ययोः ॥३।१।१०३॥

( १९४५ अन्तोदात्तत्वविधिवार्तिकम् ॥ १ ॥ )

॥ * ॥ स्वामिन्यन्तोदात्तत्वं च ॥ * ॥

( भाष्यम् ) स्वामिन्यन्तोदात्तत्वं च वक्तव्यम् । अर्यः स्वामीति ॥ अर्यः स्वामि० ॥ १०३ ॥

---

( ४४३ यत्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. ७ )

## ७२२ अजर्यं सङ्गतम् ॥ ३।१।१०५ ॥

( आक्षेपभाष्यम् )

सङ्गतमिति । किं प्रत्युदाह्रियते ? ।

( प्रदीपः ) अजर्यम् ॥ १०५ ॥ तयोरेवेति वचनाद्भावेऽजर्यशब्दः प्राप्नोति—अजर्यं सङ्गतेनेति । कर्तरि च सङ्गत इष्यते अजर्यमार्यसङ्गतमित्यतः पृच्छति—किं प्रत्युदाह्रियत इति ॥

( उद्द्योतः ) अजर्यं ॥ १०५ ॥ कर्तरि च सङ्गत इष्यत इति । कर्तरि अर्थे, संगते विशेष्ये इष्यत इत्यर्थः ॥

( समाधानभाष्यम् )

अजरः कम्बलः, अजरिता कम्बल इति ।

( प्रदीपः ) अजर इति । कर्तर्ययं प्रत्ययो निपात्यते ॥ ततो व्यङ्गविकलतापरिहाराय कर्तैव प्रत्युदाहरणे प्रदर्शनीय इति भावः ॥

( उद्द्योतः ) कर्तर्ययमिति । अत एवाजर्यमिति निपातनाश्रयणम् ॥ व्यङ्गेति । कर्त्रर्थत्वसङ्गतविशेष्यकत्वरूपेत्यर्थः ॥

( आक्षेपभाष्यम् )

किं पुनः कारणं कर्तृसाधन एव प्रत्युदाह्रियते, न भावसाधनः प्रत्युदाहार्यः ।

( समाधानभाष्यम् )

एवं तर्हि,

( १९४६ वार्तिकम् ॥ १ ॥ )

॥ * ॥ अजर्यं कर्तरि ॥ * ॥

( भाष्यम् ) अजर्यं कर्तरीति वक्तव्यम् ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ।

( समाधानभाष्यम् )

न वक्तव्यम् । गत्यर्थानां क्तः कर्तरि विधीयते तेन योगाद् अजर्यं कर्तरि भविष्यति ॥

( प्रदीपः ) गत्यर्थानामिति । यद्यपि सङ्गमनं सङ्गतमिति भावे इह क्तो विहितः तथापि गत्यर्थानां क्तः प्रत्ययः कर्तरि दृष्टो गतो ग्रामं देवदत्त इति । ततो गत्यर्थधातुसाहचर्यादजर्यमिति कर्तरि निपातनमिति मन्यते ॥

( उद्द्योतः ) गत्यर्थानामिति । भाष्यं दृष्ट्वा सङ्गतमिति कर्तरि क्तः । तदर्थे च निपात्यमानमजर्यं कर्तरीति प्रतीयते ॥ तदसंगतम्, संगतमिति मैत्रीपर्यायस्य भावक्तान्तस्यैवात्र ग्रहणाद् । अतस्तत्तात्पर्यमाह—तथापीति ॥ तेन योगादिति भाष्यस्य तेन साहचर्यादित्यर्थः ॥

( आक्षेपभाष्यम् )

गत्यर्थानां वै क्तः कर्मण्यपि विधीयते । तेन योगादजर्यं कर्मण्यपि प्राप्नोति ॥

( समाधानभाष्यम् )

जीर्यतिरकर्मकः ।

( प्रदीपः ) जीर्यतिरकर्मक इति । सोपसर्गस्य सकर्मकत्वेपीहानुपसर्गस्य निपातनादकर्मकत्वं बोद्धव्यम् । द्रव्यकर्माभावाश्रयेण त्वाकर्मकत्वमुक्तम् । कालादिना तु सर्वस्यैव सकर्मकत्वम् ॥

( उद्द्योतः ) सोपसर्गस्येति । अर्थान्तरवृत्त्येति भावः ॥ ननु कालादिकर्मसद्भावात्कथमकर्मकत्वम् । तत्राह—द्रव्येति ॥ एतच्च गतिबुद्धीति सूत्रे कालाध्वनोरिति सूत्रे च निरूपितम् ॥

( आक्षेपभाष्यम् )

भावे तर्हि प्राप्नोति ।

( उद्द्योतः ) कर्तरीति वार्तिकारम्भवादी आह—भाष्ये भावे तर्हीति । गत्यर्थेभ्यो विशिष्यविधानेन भावेऽपि क्तदर्शनादिति भावः ॥

( प्रत्याक्षेपभाष्यम् )

संगतग्रहणमिदानीं किमर्थं स्यात् ? ।

( प्रदीपः ) सङ्गतग्रहणमिति । नहि गमेर्भावस्य जीर्यतेर्भावेन सामानाधिकरण्यमुपपद्यत इति प्रश्नः ॥

( उद्द्योतः ) प्रत्याख्यानवाद्याह—संगतग्रहणमिति । तथा च तत्सामर्थ्यात्कर्तर्येव भविष्यति, नार्थो वार्तिकेनेत्यर्थः ॥

( समाधानभाष्यम् )

कर्तृविशेषणं संगतग्रहणम् । संगतं कर्तृचेद्भवतीति । तद्यथा—"द्दृषेर्लोमसु"इति लोमानि चेत्कर्तृणि भवन्तीति ॥ अजर्यम् ॥ १०५ ॥

---

१ 'संगतं चेत् कर्तृ भवति' इत्येवमेव प्राचीनपुस्तकपाठः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रदीपः) कर्तृविशेषणमिति। वैयधिकरण्यमनयोः पदयोः स्यादिति भावः॥ लोमानि चेदिति। तथा च हृषितं लोमभिर्हृष्टं लोमभिरिति वैयधिकरण्येपीड्विकल्पो भवति। तस्मात्कर्तरीति वक्तव्यम्। अथ वा सामानाधिकरण्यत्यागेन वैयधिकरण्याश्रयणस्यायुक्तत्वान्निपातनाद्वा कर्तर्येव प्रत्ययो भवतीति स्थितम्॥ १०५॥

(उद्द्योतः) वार्तिकारम्भवाधाह—कर्तृविशेषणमिति। कर्तृपदाध्याहारेणेति भावः॥ तद्व्याचष्टे—वैयधिकरण्यमिति। अजर्यं संगतेनेत्युदाहरणमिति भावः॥ एवं च तस्सामर्थ्याभावेन भावे प्रत्ययव्यावृत्त्यर्थं कर्तरीति वाच्यम्। निपातनसामर्थ्याद्वा कर्तरीति भावः॥ वैयधिकरण्येपीडिति॥ कर्तरि निष्ठायां सामानाधिकरण्येपि तद्विकल्प इति भावः॥ १०५॥

(अथ क्यप्प्रत्ययप्रकरणम्)

(४४४ प्रत्ययविधिसूत्रम्॥ ३।१।६ आ. ८)

## ७२३ वदः सुपि क्यप् च॥ ३।१।१०६॥

(१९४७ परिसंख्यावार्तिकम्॥ १॥)

॥ * ॥ वदः सुप्यनुपसर्गग्रहणम्॥ * ॥

(भाष्यम्) वदः सुप्यनुपसर्गग्रहणं कर्तव्यम्। इह मा भूत्—प्रवाद्यं संवाद्यम्।

(आक्षेपभाष्यम्)

तत्तर्हि कर्तव्यम्।

(समाधानभाष्यम्)

न कर्तव्यम्। अनुपसर्ग इति वर्तते॥

(वार्तिकसार्थक्यभाष्यम्)

एवं तर्ह्यन्वाचष्टे–'अनुपसर्ग इत्येवं वर्तते' इति॥

(वार्तिकवैयर्थ्यभाष्यम्)

नैतदन्वाख्येयम्—'अधिकारा अनुवर्तन्ते' इति। एष एव च न्यायो यदुत "अधिकारा अनुवर्तेरन्" इति॥ वदः सुपि॥ १०६॥

(प्रदीपः) वदः सुपि॥ १०६॥ नैतदिति। यत्राधिकारस्य विच्छेदोऽवध्यपरिज्ञानं वा सिंहावलोकनन्यायाश्रयणं वा तत्रावश्यवक्तव्यो विशेषः। एवमादौ तु प्रयोजनाभावादवक्तव्य इत्यर्थः॥ १०६॥

(उद्द्योतः) वदः सुपि॥ १०६॥ यत्राधिकारस्येति। यथा मण्डूकानुवृत्तिविषयं धान्यानामित्यादौ॥ अवधीति। यथाऽलुगधिकारः प्रागानङ इति॥ सिंहेति। यथा प्राचां ष्फेत्यत्र सर्वत्रेति॥ १०६॥

१ भावे प्रत्ययस्वीकारे इत्यादिः। (र. ना.)
२ 'गदमदचरयमश्चानुपसर्गे' इति सूत्रादिति भावः॥
३ 'गदमदचरयमश्च' इत्यत इति भावः॥

(४४५ क्यप्प्रत्ययविधिसूत्रम्॥ ३।१।६ आ. ८)

## ७२४ भुवो भावे॥ ३।१।१०७॥

(आक्षेपभाष्यम्)

भावग्रहणं किमर्थम्?।

(प्रयोजनभाष्यम्)

कर्मणि मा भूदिति।

(प्रयोजननिरासभाष्यम्)

नैतदस्ति प्रयोजनम्। भवतिरकर्मकः।

(प्रदीपः) भुवो भावे॥ १०७॥ भवतिरकर्मक इति। ननु प्राप्त्यर्थः सकर्मकोस्ति। नैष दोषः। प्राथम्यात्सत्तार्थस्यैवेह ग्रहणात्। ननु कालादिकर्मणि प्राप्नोति। अनभिधानात्कालादिकर्मणि न भविष्यतीति मन्यते॥ १०७॥

(उद्द्योतः) भुवो भावे॥ १०७॥ प्राथम्यादिति। धातुपाठ इति भावः॥ प्रसिद्धत्वाच्चेत्यपि बोध्यम्॥ १०७॥

(प्रयोजनसाधकभाष्यम्)

अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति। तेनानुभाव्यमामन्त्रणमित्यत्रापि प्राप्नोति॥

(प्रयोजनबाधकभाष्यम्)

एतदपि नास्ति प्रयोजनम्। अनुपसर्गे इति वर्तते।

(प्रयोजनभाष्यम्)

उत्तरार्थं तर्हि भावग्रहणं कर्तव्यम्। "हनस्त च" भावे यथा स्यात्—श्वहत्या वर्तते। इह मा भूत्—'श्वघात्यो वृषलः' इति॥ भुवो भावे॥ १०७॥

(४४६ क्यप्प्रत्ययविधिसूत्रम्॥ ३।१।६ आ. ९)

## ७२५ हनस्त च॥ ३।१।१०८॥

(१९४८ वार्तिकम्॥ १॥)

॥ * ॥ हनस्तश्चित्स्त्रियां छन्दसि॥ * ॥

(भाष्यम्) हनस्त चेत्यत्र चित्स्त्रियां छन्दसि इति वक्तव्यम्। 'तां भ्रूणहत्यां निगृह्यानुचरणम्'। 'अस्यै त्वा भ्रूणहत्यायै चतुर्थं प्रतिगृह्यते'।

(आक्षेपभाष्यम्)

स्त्रियामिति किमर्थम्?।

(समाधानभाष्यम्)

आघ्नते दस्युहत्याय।

(प्रदीपः) हनस्त च॥१०८॥ दस्युहत्यायेति। छन्दस्यैवैतत् क्यबन्तं नपुंसकम्, भाषायां तु स्त्रीलिङ्गमेव॥१०८॥

४ लिङ्गव्यत्ययस्य छन्दस्येव विधानात्। तत्र चित्त्वं न स्त्रीत्वाभावात्। अत्र तत्र 'अनुदात्तत्वम्' इत्येव भवतीति भावः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्योतः ) हनस्त ॥ १०८ ॥ भाषायां त्विति । शब्दशक्तिस्वभावादेतद्विहितक्यबन्तस्य स्त्रीत्वमित्यर्थः ॥ १०८ ॥

( आक्षेपभाष्यम् )

छन्दसीति किमर्थम् ? ।

( समाधानभाष्यम् )

श्वहत्या दस्युहत्या[1] वर्तते ॥ हनस्त च ॥ १०८ ॥

( ४४७ क्यप्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. १० )

## ७२६ एतिस्तुशास्वृदृजुषः क्यप् ॥ ३ । १ । १०९ ॥

( आक्षेपभाष्यम् )

क्यबिति वर्तमाने पुनः क्यब्ग्रहणं किमर्थम् ? ।

( समाधानभाष्यम् )

क्यबेव यथा स्याद् । यदन्यत्प्राप्नोति तन्मा भूदिति ।

( प्रत्याक्षेपभाष्यम् )

किं चान्यत् प्राप्नोति ? ।

( प्रत्याक्षेपसमाधानभाष्यम् )

ण्यत् ।

( समाधानभाष्यम् )

*ओरावश्यके ण्यतः स्तौतेः क्यप् पूर्वविप्रतिषिद्धम्* इति वक्ष्यति, स पूर्वविप्रतिषेधो न पठितव्यो भवति ॥ अथवा *हनस्तश्चित्स्त्रियां छन्दसि* चोदितः, स न वक्तव्यो भवति ॥

( प्रदीपः ) एतिस्तु ॥ १०९ ॥ अथवेति । पूर्वस्मात् क्यपोऽस्य वैलक्षण्यप्रदर्शनाय क्यब्ग्रहणं कृतम् । तेन पूर्वं क्यप् छन्दसि स्त्रियां चिद्भवति ॥

( उद्योतः ) एतिस्तु ॥ १०९ ॥ आत्मनेपदिभ्यामिति । अकोरवद्विकरणाभ्यामित्यपि बोध्यम् । एतदंशे उत्तरसाहचर्यमप्यनुग्राहकम् ॥ वृणातिरिति । वृङ् संभक्तावित्ययम् । एवं च क्यब् वृञ एवेति भावः ॥ वस्तुतो व्याख्यानादत्र वृञो ग्रहणमित्येव तत्त्वम् ॥

( १९४९ परिसंख्यावार्तिकम् ॥ १ ॥ )

### ॥ * ॥ क्यब्विधौ वृञ्ग्रहणम् ॥ * ॥

( भाष्यम् ) क्यब्विधौ वृञ्ग्रहणं कर्तव्यम् । इह मा भूत्—'वार्या ऋत्विजः' इति ॥

( प्रदीपः ) क्यब्विधाविति । ईडवन्दवृशंसुदुहां ण्यत इति वार्यशब्दस्याद्युदात्तविधानादेतज् ज्ञायते । तत्र हीडिवन्दिभ्यामात्मनेपदिभ्यां साहचर्याद्वृशब्देन वृणातिर्गृह्यते ।

( १९५० क्यप्प्रत्ययवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अञ्जेश्चोपसंख्यानं संज्ञायाम् ॥ * ॥

( भाष्यम् ) अञ्जेश्चोपसंख्यानं संज्ञायां कर्तव्यम् । आज्यम् ॥

( आक्षेपभाष्यम् )

यदि क्यप् । वृद्धिर्न प्राप्नोति । तस्माण्ण्यदेषः ॥

( प्रदीपः ) तस्माण्ण्यद् एष इति । ननु स्वरभेदो भवति । क्यपि सत्याद्युदात्तं पदं ण्यति सत्यन्तस्वरितम् । नैष दोषः । नब्विषयस्यानिसन्तस्येत्याद्युदात्तविधानात् ॥

( ण्यदनुपपत्तिभाष्यम् )

यदि ण्यत् । उपधालोपो न प्राप्नोति । तस्मात् क्यबेवैषः ।

( दूषणस्मारणभाष्यम् )

ननु चोक्तम्—वृद्धिर्न प्राप्नोतीति ।

( दूषणोद्धारभाष्यम् )

आङ्पूर्वस्य प्रयोगो भविष्यति ।

( दूषणभाष्यम् )

यद्येवमवग्रहः प्राप्नोति ॥

( दूषणोद्धारभाष्यम् )

न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षणं पदं कर्तव्यम् ॥ एतिस्तुशास् ॥ १०९ ॥

( प्रदीपः ) न लक्षणेनेति । संहिताया एव नित्यत्वम् । पदविच्छेदस्य तु पौरुषेयत्वम् । तथा च यत्रार्थनिश्चयाभावस्तत्रावग्रहो न क्रियते । तदुक्तम्—हरिद्रूरनवगृह्यते इति । हरिद्रूरित्यत्र किं हरिशब्द इकारान्तः । अथ हरित्शब्दस्तकारान्त इति संदेहात् ॥ १०९ ॥

( उद्योतः ) संहिताया एव नित्यत्वमिति । अविच्छिन्नपारम् । पर्यत्वमेवात्र नित्यत्वम् ॥ अर्थनिश्चयाभाव इति । आज्यशब्दस्य रूढत्वादाङर्थोऽस्ति न वेति निश्चयाभाव इत्यर्थः ॥ समासे संहिता नित्येत्यवग्रहस्य साधुत्वाभावात्संप्रदायमात्रशरणस्य तस्य लक्षणा विषयतेत्यर्थमन्ये ॥ १०९ ॥

( ४४८ क्यप्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. ११ )

## ७२८ ई च खनः ॥ ३ । १ । १११ ॥

( आक्षेपभाष्यम् )

दीर्घोच्चारणं किमर्थम् । न "इ च खनः" इत्येवोच्येत ॥

( प्रत्याक्षेपभाष्यम् )

का रूपसिद्धिः—खेयम् ? ।

---

[1] लोके चिन्न भवतीति भावः ॥

[2] अकारे श्रूयमाणत्वस्य तु नाग्रह ईडेरादादिकत्वात् इति बोध्यम् ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रत्याक्षेपसमाधानभाष्यम् )

आद्गुणेन सिद्धम् ॥

( आक्षेपबाधकभाष्यम् )

न सिध्यति। "षत्वतुकोरसिद्धः" इति एकादेशस्यासिद्धत्वात्तुक् प्रसज्येत ॥

( आक्षेपसाधकभाष्यम् )

नैतदस्ति। पदान्तपदाद्योरेकादेशोऽसिद्धः। नैष पदान्तपदाद्योरेकादेशः तस्माद् 'इ च खनः' इत्येव वक्तव्यम् ॥ ईच्च खनः ॥ १११ ॥

( प्रदीपः ) ई च खनः ॥ १११ ॥ दीर्घोच्चारणे भाष्यकारेण प्रत्याख्याते केचित् प्रश्लेषनिर्देशेन द्वितीय इकारो ये विभाषेत्यात्वस्य पक्षे परत्वात् प्राप्तस्य बाधनार्थं इत्याहुः। तदयुक्तम्। क्यप्सन्नियोगेन विधीयमानस्येत्वस्यान्तरङ्गत्वाद्, आत्वस्य तु यकारादावुत्पन्ने विधीयमानस्याङ्गस्य बहिरङ्गत्वाद्विप्रतिषेधाभावात् प्राप्त्यभावात् ॥ १११ ॥

( उद्योतः ) ई च खनः ॥१११॥ क्यप्सन्नियोगेनेति। ननु अन्तरङ्ग इत्वे कृते एकदेशविकृतन्यायेन प्राप्तात्ववारणार्थं तदावश्यकम्। इत्वं तु पक्षे चरितार्थम्। किं च अचः कर्तृयकीति सूत्रे भाष्ये ये विभाषेत्यत्र ये इत्यस्य विषयसप्तम्यन्ततया उक्ततया परत्वेन क्यपः पूर्वमेवात्त्वे ततः परत्वात्सवर्णदीर्घे एकदेशविकृतन्यायेन इ च खन इत्यस्य प्रवृत्तौ खियमिति स्यात्तद्वारणार्थं दीर्घनिर्देश इति केषांचिदाशय इति चिन्त्यमेतत् इति केचित् ॥ भाष्याशयस्तु व्यवस्थितविभाषयाऽत्रात्त्वाप्रवृत्तिरिति। इदं च तवाप्यावश्यकम्। अन्यथाकारस्य दीर्घेकारेऽपि खीयमिति स्यात्, न तु खेयमिति। न च खनेर्नेस्यानुनासिकेकारः स्यात्। तस्माद्गुणेऽपि कदाचित्तादृश एव स्यात्। तद्वारणाय ईकाररूप एवेकार इत्यर्थं दीर्घनिर्देश इति वाच्यम्। स्थान्यनुरूपेनुनासिक एवोच्चारणीयेऽननुनासिकोच्चारणात्। स्पष्टं चेदं पथिमथि अष्टन आ इत्यत्र भाष्यकैयटयोरित्याहुः ॥ १११ ॥

---

( ४४९ क्यप्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. १२ )

## ७२९ भृञोऽसंज्ञायाम् ॥ ३।१।११२ ॥

( आक्षेपभाष्यम् )

असंज्ञायामिति[1] किमर्थम्।

( प्रदीपः ) भृञोऽसं ॥ ११२ ॥ असंज्ञायामिति किमर्थमिति। क्रियमाणेऽपि प्रतिषेध इष्टं न सिध्यतीति प्रश्नः ॥

( समाधानभाष्यम् )

भार्या।

( प्रदीपः ) भार्येति। गृहिण्या इयं संज्ञेति क्यबभावे ण्यत्प्रत्ययः ॥

( १९५१ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वात् ॥ * ॥

( भाष्यम् ) भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधः। अनर्थकः प्रतिषेधः अप्रतिषेधः। किं कारणम्?। अन्येन विहितत्वात्। अन्येन लक्षणेन स्त्रियां क्यब्विधीयते "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" इति ॥

( प्रदीपः ) अनर्थक इति। भृञ इति प्राप्तेरयं प्रतिषेध आनन्तर्यात्, नतु लक्षणान्तरप्राप्तेर्व्यवधानादिति भावः ॥

( उद्योतः ) भृञोऽसंज्ञा ॥ ११२ ॥ स्त्रियामप्रतिषेध इति भाष्ये स्त्रीलिङ्गभार्याशब्दविषयेऽनर्थकोऽसंज्ञायामिति प्रतिषेध इत्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

प्रतिषेध इदानीं किमर्थः स्यात्?।

( प्रदीपः ) प्रतिषेध इदानीमिति। प्रतिषेधविधानसामर्थ्याल्लक्षणान्तरेण प्राप्तस्यापि क्यपः प्रतिषेधो भविष्यतीति भावः ॥

( १९५२ प्रत्याक्षेपसमाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ प्रतिषेधः किमर्थ इति चेदस्त्रीसंज्ञाप्रतिषेधार्थः ॥ * ॥

( भाष्यम् ) प्रतिषेधः किमर्थ इति चेद्, अस्त्रीसंज्ञाऽस्ति। तदर्थः प्रतिषेधः स्यात्—भार्या नाम क्षत्रियाः।

( प्रदीपः ) अस्त्रीसंज्ञेति। संज्ञायत इति संज्ञेति कर्मसाधनोऽत्र संज्ञाशब्दः ॥

( उद्योतः ) अस्त्रीशब्दस्य संज्ञाशब्देन समानाधिकरणसमासमभिप्रेत्य तत्सिद्धये कर्मणि संज्ञाशब्दं व्युत्पादयति—संज्ञायत इति। अस्त्री रूढ्या बोध्या यस्यास्तीत्यर्थः ॥

( १९५३ समाधानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ सिद्धं तु स्त्रियां संज्ञाप्रतिषेधात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत्। कथम्?। स्त्रियां संज्ञाप्रतिषेधो वक्तव्यः। "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः"। ततो "न स्त्रियां भृञः" इति ॥

( प्रदीपः ) ततो न स्त्रियामिति। स्त्रीशब्देनात्र स्तनकेशवती गृह्यते। अन्यथा विधिप्रतिषेधयोर्विषयविभागो न स्यात्। तस्माद्भरणं भृत्येति विधेर्विषयः। लौकिकी तु स्त्री प्रतिषेधस्य ॥

---

१ आङ्स्येति च्छेदः। ( र. ना. )

२ 'असंज्ञाग्रहणम्' इति प्राचीनपुस्तकेषु पाठः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्द्योतः ) अन्यथेति । संज्ञायां समजेति क्यबन्तानां समज्या इत्यादीनां स्त्रीलिङ्गत्वादिति भावः ॥ लौकिकी स्विति । न च विपरीतं किं न स्यादिति वाच्यम्, स्त्रियां क्तिन्नित्यत्र शास्त्रीयस्यैव ग्रहेणाऽस्यापि तत्रैव प्रवृत्तेरिति भावः ॥

( आक्षेपभाष्यम् )

सिध्यति । सूत्रं तर्हि भिद्यते ॥

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ॥

( उद्द्योतः ) भाष्ये यथान्यासमिति । संज्ञायां समेति सूत्रे यदधिकं 'न स्त्रियाम्' इत्यादि कृतम्, तन्न कार्यमित्यर्थः ॥

( दूषणस्मारणभाष्यम् )

ननु चोक्तम्—*भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वाद्* इति ॥

( दूषणोद्धारभाष्यम् )

नैष दोषः। "भावे" इति तत्रानुवर्तते। कर्मसाधनश्चायम् ॥

( प्रदीपः ) भाव इति तत्रेति । व्रजयजोर्भावे क्यविस्यतः ॥

( उद्द्योतः ) भाष्ये—भाव इति तत्र वर्तत इति । ननु समज्या-निषद्या-निपत्यानामधिकरणे, मन्याविद्ययोः करणे, तेन सिद्धेरङ्गीकारेण कथं 'भावे' इत्यस्य तत्र संबन्ध इति चेन्न। भृञ्विषये 'भावे' इति वर्तते इत्यर्थः। एवं च भृञो भावे एवेष्यत इत्यर्थः ॥ एवमग्रे भावाधिकारोऽस्तीत्यपि व्याख्येयम्।

( भाष्यम् ) अथ वा य एते संज्ञायां विधीयन्ते, तेषु नैवं विज्ञायते—'संज्ञायामभिधेयायामिति । किं तर्हि ? । प्रत्ययान्तेन चेत्संज्ञा गम्यत इति ॥

( प्रदीपः ) संज्ञायामिति संज्ञाशब्दः कर्मसाधनो न गृह्यते, किं तर्हि ? भावसाधनः। तेन प्रत्ययान्तेन यदि रूढिर्गम्यते ततः प्रत्ययः। न च भृत्याशब्देन हि गृहिण्यभिधीयत इति क्यपोऽप्रसङ्गः ॥

( उद्द्योतः ) संज्ञाशब्द इति । संज्ञाशब्देन कर्मसाधनेन संज्ञायमानमभिधीयते । तत्राभिधेये प्रत्ययश्चेत्तर्हि भृत्याशब्देन स्यादेव गृहिण्यभिधानमिति भावः ॥ भावसाधनेन धातूनामनेकार्थत्वाद्रूढिरुच्यते । तदाह—रूढिरिति । तद्विषयोऽर्थः । तेन रूढ्यर्थो गम्यत इत्यर्थः ॥ नामधेयवाची संज्ञाशब्दस्तु करणव्युत्पन्न इति बोध्यम् ॥

( पक्षान्तरभाष्यम् )

अपर आह—

( १९५४ आक्षेपश्लोकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ "संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति" ॥ * ॥

( व्याख्याभाष्यम् )

संज्ञायां पुंसि दृष्टत्वात्तव भार्याशब्दो न सिध्यति।

( १९५५ समाधानश्लोकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ "स्त्रियां भावाधिकारोस्ति तेन भार्या प्रसिध्यति" ॥ * ॥

( प्रदीपः ) संज्ञायामिति । 'भार्या नाम क्षत्रिया' इत्यत्रासंज्ञायामिति प्रतिषेधस्य चरितार्थत्वात्सूत्रान्तरेण स्त्रियां संज्ञायां क्यपः प्रसङ्गाद्भार्याशब्दो न सिध्यतीति चोद्यम्।

( उद्द्योतः ) अपर आहेति भाष्ये *सिद्धं तु स्त्रियां संज्ञाप्रतिषेधादित्यादिकरणेन पक्षान्तरत्वम् ॥

( व्याख्याभाष्यम् )

भाव इति तत्र वर्तते। कर्मसाधनश्चायम्।

( प्रदीपः ) स्त्रीप्रकरणे भावग्रहणानुवर्तनात्कर्मणि क्यबभावाण्ण्यदेव भवतीत्युत्तरम् ॥

( उद्द्योतः ) कर्मणि क्यबभावादिति। भृञ इति शेषः ॥

( १९५६ समाधानान्तरश्लोकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ "अथ वा बहुलं कृत्याः संज्ञायामिति तत्स्मृतम्" ॥ * ॥

( व्याख्याभाष्यम् )

अथ वा कृत्यल्युटो बहुलमिति एवमत्रापि ण्यद्भविष्यति।

( १९५७ दृष्टान्तश्लोकवार्तिकम् ॥ ७ ॥ )

॥ * ॥ "यथा यत्यं यथा जन्यं यथा भित्तिस्तथैव सा" ॥ * ॥

( प्रदीपः ) यथेति। अजन्ताद्विधीयमानो यद् यथा हलन्तात् कुतश्चिद् भवति बहुलवचनात्। यथा च भित्तिरित्यद्विषये क्तिन् भवति। एवं भार्येति क्यप्प्रसङ्गे ण्यद्भवतीत्यर्थः ॥ ११२ ॥

( उद्द्योतः ) जन्ये स्वरार्थं यदेवेष्यते, स बाहुलकादेव सिद्ध इति यतिजनेरित्युक्तमुपसंख्यानं न कार्यमिति बोध्यम् ॥

( १९५८ वार्तिकम् ॥ ८ ॥ )

॥ * ॥ समश्च बहुलम् ॥ * ॥

( भाष्यम् ) समश्च बहुलमुपसंख्यानं कर्तव्यम्। संभृत्या एव संभाराः। संभार्या एव संभाराः॥ भृञोसंज्ञायाम् ॥ ११२ ॥

( उद्द्योतः ) भाष्ये संभार्या एव संभारा इति । संभारा इति पाठे भृ इति दीर्घान्तात्क्र्यादेर् ऋदोरब् बोध्यः ॥ ११२ ॥

---

( ४५० क्यप्निपातनविधिसूत्रम् ॥ ३। १।६ आ. १३ )

## ७३१ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥ ३ । १ । ११४ ॥

( १९५९ अर्थनिर्देशवार्तिकम् ॥ १ ॥ )

॥ * ॥ सूर्यरुच्याव्यथ्याः कर्तरि ॥ * ॥

( भाष्यम् ) सूर्यरुच्य अव्यथ्य इत्येते कर्तरि निपा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्यन्ते। किं निपात्यते?। "सूर्यः सूसर्तिभ्याम्, सर-तेरुत्वम्, सुवतेर्वा रुडागमः" ॥ सरणाद्वा सुवति कर्मणीति वा सूर्यः॥ रुच्यः। रोचतेसौ रुच्यः॥ न व्यथत इत्यव्यथ्यः॥

( १९६० वार्तिकम् ॥ २ ॥ )

॥ * ॥ कुप्यं संज्ञायाम् ॥ * ॥

( भाष्यम् ) कुप्यं संज्ञायामिति वक्तव्यम्। गो-प्यमन्यत्।

( १९६१ वार्तिकम् ॥ ३ ॥ )

॥ * ॥ कृष्टपच्यस्यान्तोदात्तत्वं च कर्मकर्तरि च ॥ * ॥

( भाष्यम् ) कृष्टपच्यस्यान्तोदात्तत्वं च वक्तव्यं संज्ञायां कर्मकर्तरि चेति वक्तव्यम्। कृष्टे पच्यन्ते स्वयमेव। 'कृष्टपच्याश्च मे'। यो हि कृष्टे पक्तव्यः स कृष्टपाक्यो भवति ॥ राजसूय ॥ ११४ ॥

( उद्योतः ) राजसूय ॥ ११४ ॥ सूसर्तिभ्यामिति भाष्यस्य क्यप् निपात्यत इति शेषः॥ कुप्ये गुपेरादेः कत्वम्। सुवर्णरजत-भिन्नं धनं कुप्यम् ॥ ११४ ॥



( ४५१ क्यप्प्रत्ययविधिसूत्रम् ॥ ३।१।६ आ. १४ )

## ७३५ प्रत्यपिभ्यां ग्रहेः ॥ ३।१।११८ ॥

( १९६२ परिसंख्यावार्तिकम् ॥ १ ॥ )

॥ * ॥ प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥ * ॥

( भाष्यम् ) प्रत्यपिभ्यां ग्रहेः छन्दसीति वक्त-व्यम्। 'मत्तस्य न प्रतिगृह्यम्'। 'अनृतं हि मत्तो वदति तस्मान्नापि गृह्यम्'॥ प्रतिग्राह्यमपि ग्राह्य-मित्येवान्यत्र ॥ प्रत्यपिभ्याम् ॥ ११८ ॥

( उद्योतः ) प्रत्यपिभ्याम् ॥ ११८ ॥ अपिगृह्यशब्देन बलात्कारग्राह्यमुच्यते इति केचित् ॥ ११८ ॥



(४५२ ण्यत्प्रत्ययवृद्धिविकल्पविधिसूत्रम् ॥३।१।६आ. १५)

## ७३६ अमावस्यदन्यतरस्याम् ॥ ३ । १ । १२२ ॥

( आक्षेपभाष्यम् )

कस्यायं[2]मनुबन्धः?।

( समाधानभाष्यम् )

प्रधानस्य।

( प्रदीपः ) अमावस्यत् ॥ १२२ ॥ प्रधानस्येति। विधीयमानत्वात् प्रत्ययस्य प्राधान्यमिति यत्प्रत्ययो निपात्यत इत्युक्तं भवति ॥

( उद्योतः ) अमाव ॥ १२२ ॥ यत्प्रत्यय इति। सूत्रे तदानुपूर्व्या एव श्रवणादित्यर्थः॥

( समाधानबाधकभाष्यम् )

यदि प्रधानस्य। अमावस्या इत्येवं स्वरः प्रस-ज्येत। अमावस्या इति चेष्यते। तथा अमावास्या-ग्रहणेनामावस्याग्रहणं न[3] प्राप्नोति ॥

( प्रदीपः ) एवं स्वर इति। यतोऽनाव इति उत्तर-पदमाद्युदात्तं स्यात्। अन्तस्वरितं चेष्यते॥ अमावास्याग्र-हणेनेति। शब्दान्तरत्वादमावास्याशब्दस्य ण्यदन्तत्वादमा-वस्याशब्दस्य यदन्तत्वादिति भावः॥

( उद्योतः ) अन्तस्वरितमिति। अमेति लुप्तसप्तमीकमित्यु-पपदत्वात्, निपातनेन वा तत्त्वादुपपदसमासे कृदुत्तरपदप्रकृति-स्वरेणेति भावः॥

( समाधानभाष्यम् )

एवं तर्हि निपातनस्य ॥

( प्रदीपः ) एवं तर्हीति। यत्प्रत्ययान्तत्वं न निपा-त्यत इत्यर्थः॥

( उद्योतः ) यत्प्रत्ययेति। निरस्तावयवविभागः समुदाय एव निपात्यते। तस्य च तकारोन्त इति अन्तस्वरितत्वं सिध्यतीति भावः॥ अमावास्याशब्दस्थाने चेदं निपातनमिति तद्ग्रहणेनास्य ग्रहणमपि सिद्धमिति तात्पर्यम्॥

( समाधानबाधकभाष्यम् )

यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति "श्रोत्रियंश्छन्दोधीते" इति व्यपवर्गाभावात् ञ्नि-त्याद्युदात्तत्वं न प्राप्नोति ॥

( प्रदीपः ) ननु तितिप्रत्ययग्रहणं चोदयिष्यते। निर-स्तविभागे च निपातन आश्रीयमाणे स्वरितत्वं न सिध्यतीति मत्वाह—यदि तर्हीति॥ एवंजातीयकानीति। निरस्ता-वयवविभागानीत्यर्थः॥

( उद्योतः ) भाष्ये ञ्नितीत्याद्युदात्तत्वं न प्राप्नोतीति। ञ्नितीति परसप्तमीलभिप्रायेणेदम्॥ प्रकृते[4] स्वरितत्वं न प्राप्नोतीत्यपि बोध्यम्॥ तैस्सूत्रे प्रत्ययग्रहणस्य प्रत्याख्यास्यमानत्वाच्चैद्रीत्येदं भाष्यमित्यन्ये॥

( समाधानभाष्यम् )

एवं तर्हि—

१ सृधातोर्ऋकारस्योत्वे रपरत्वे 'हलि च' इत्युकारस्य दीर्घे सूर्य इति सिध्य-तीति भावः॥

२ अयं तकारः॥

३ 'अमावास्याया वा' इत्यत्रेति पदमञ्जरी ॥

४ तित्स्वरितमिति सूत्रे वार्तिकोक्तप्रत्ययग्रहणस्येत्यर्थः। ( र. ना. )

५ प्रकृते समुदायनिपातनेऽपि अन्तस्वरितत्वसिद्धेति भावः। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( १९६३ श्लोकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ "अमावसोरहं ण्यतोर्निपातयाम्य-वृद्धिताम् ॥ * ॥ तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥"

( भाष्यम् ) अमा ॥ १२२ ॥

( प्रदीपः ) अमावसोरिति । वृद्धिभावाभावकृतभेदाश्रयो द्विवचननिर्देशः ॥ निपातयामीति । एकतरस्येति शेषः ॥ एकवृत्तितेति । एका तद्धितवृत्तिरुभयोः सिध्यति एकदेशविकृतस्यानन्यत्वात् । तथा हि ण्यत्यमावास्याशब्दस्य न्याय्यत्वादाकारस्य प्रकृतित्वमकारस्य तु विकारत्वम् ॥ १२२ ॥

( उद्द्योतः ) एकतरस्येतीति । वसधातुभ्यां ण्यतोः कृतयोरन्यतरस्येत्यर्थः ॥ वसोरिति पञ्चम्यर्थे षष्ठीद्विवचनम् ॥ ण्यदप्यमाशब्दे उपपदे निपात्यत इति बोध्यम् । अन्यथोपपदत्वाभावे समास उत्तरपदप्रकृतिस्वरश्च न स्यादिति बोध्यम् ॥ वार्तिकेऽवृद्धिशब्देन ह्रस्वो लक्ष्यते । तद्ध्वनयन्नाह—एकदेशेति ॥ भाष्ये स्वरश्च मे इति तित्प्रत्ययप्रयुक्तस्वरित इत्यर्थः ॥ १२२ ॥



( ४५३ छान्दसनिपातनसूत्रम् ॥ ३ । १ । ६ आ. १६ )

## ७४० छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥ ३।१।१२३ ॥

( आक्षेपभाष्यम् )

निष्टर्क्य इति किं निपात्यते ।

( १९६४ निपातनप्रदर्शकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छन्दसि कृताद्यर्थः ॥ * ॥

( भाष्यम् ) यथा कृतेस्तर्कः, कसेः सिकता, हिंसेः सिंहः ॥

( प्रदीपः ) छन्दसि ॥ १२३ ॥ कृताद्यर्थ इति । कृतशब्दस्य धातोर्य आदिः ककारस्तत्प्रयोजनः । आदेरन्तत्वम्, अन्तस्य चादित्वं यथा स्यादित्यर्थः । आद्यन्तयोः परस्परूपापत्तिर्न तु वर्णान्तररूपापत्तिरिति प्रदर्शनाय कृताद्यर्थ इत्युक्तं भवति ॥ १२३ ॥

( उद्द्योतः ) छन्दसि नि ॥ १२३ ॥ कृतेराद्यन्तविपर्ययः कृताद्यर्थ इत्यसंगतं मत्वाह—कृतशब्दस्येति । तत्प्रयोजन इत्यस्य तत्स्थाने तदुत्पत्तिप्रयोजनः तत्स्थाने(कस्थाने)तोत्पत्तिप्रयोजनस्तत्स्थाने(तस्थाने)कोत्पत्तिप्रयोजनश्चेत्यर्थः । तद्ध्वनयन्नाह—परस्परेति । अन्यथा आद्यन्तयोः स्थाने तृतीयवर्णकरणमप्याद्यन्तविपर्ययः स्यादिति भावः ॥ निष्टर्क्ये कृते राद्यन्तविपर्ययछन्दसि कृताद्यर्थ इत्येव भाष्यपाठ इति कैयटतात्पर्यम् । साम्प्रतपुस्तकेषु तु निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छन्दसि कृताद्यर्थः । यथा कृतेस्तर्क इत्यादि दृश्यते । तत्र निष्टर्क्ये कृतेश्छन्दसि इत्यन्वयः । निपात्यत इति शेषः ॥ प्रत्ययप्रकरणाण्ण्यन्निपात्यः । षत्वं च निपात्यमित्यर्थः । अन्यथा ऋदुपधत्वात्क्यबेव स्यादिति भावः ॥ आद्यन्तविपर्ययः कृताद्यर्थ इत्यस्य कृताद्यर्थं आद्यन्तविपर्यय आवश्यकस्तेनात्रापि सिद्धे तदर्थं न निपातनमित्यर्थः । कृताद्यर्थ इत्यादिशब्दार्थमेव दर्शयति कृतेस्तर्क इत्यादिना ॥

( मतान्तरभाष्यम् )

अपर आह—

( १९६५ मतान्तरवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनात् । ण्यदायादेश इत्येतावुपचाय्ये निपातितौ ॥ * ॥

( भाष्यम् ) निष्टर्क्यं चिन्वीत पशुकामः ।

( १९६६ निपातनीयवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः । ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥ * ॥

( भाष्यम् ) 'ण्यदेकस्मात्'–निष्टर्क्यः । 'चतुर्भ्यः क्यप्'—देवहूयः, प्रणीयः, उन्नीयः, उच्छिष्यः । 'चतुर्भ्यश्च यतो विधिः'—मर्यः, स्तर्या, ध्वर्यः, खन्यः । 'ण्यदेकस्मात्'—खान्यः । 'यशब्दश्च'—देवयज्या । 'द्वौ क्यपौ'—आपृच्छ्यः, प्रतिषीव्यः । 'ण्यद्विधिश्चतुः'—ब्रह्मवाद्यः, भाव्यः, स्ताव्यः, उपचाय्यपृडम् । उपपूर्वाच्चिनोतेरायादेशोपि निपात्यते । नहि ण्यतैव सिध्यति ।

( १९६७ वार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ हिरण्य इति च ॥ * ॥

( भाष्यम् ) हिरण्य इति च वक्तव्यम् । उपचेयपृडमित्येवान्यत्र ॥ छन्दसि निष्टर्क्य ॥ १२३ ॥

( उद्द्योतः ) अपर आह—निष्टर्क्ये व्यत्ययमिति । वर्णव्यत्ययं प्रत्ययव्यत्ययं चेत्यर्थः । व्यत्ययो बहुलमिति सूत्रेणेति

१ 'निष्टर्क्ये' ॥

२ 'इत्यस्यान्तस्थाने' ॥

३–४ 'तत्स्थानेऽन्तोत्पत्ति' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


भावः । एवं च षत्वमात्रफलकं निपातनमित्याह—निसः षत्वमिति ॥ भाष्ये ण्यद्विधिश्चतुरिति । सुजन्तमेतत् । चतुरो वारानित्यर्थः । चतुर्थ्यं इति यावत् ॥ उपपूर्वाच्चिनोतेरिति । पृष्ठे उत्तरपदे इति यावत् । पृडेरिगुपधलक्षणः कः ॥ १२३ ॥

( इति क्यप् प्रकरणम् )

( अथ ण्यत्प्रकरणम् )

( ४५४ ण्यत्प्रत्ययविधिसूत्रम् ॥ ३।१।६ आ. १७ )

## ७४१ ऋहलोर्ण्यत् ॥ ३ । १ । १२४ ॥

( १९६८ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पाणौ सृजेर्ण्यद्विधिः ॥ * ॥

( भाष्यम् ) पाणौ सृजेर्ण्यद्विधेयः । पाणिसर्ग्या रज्जुः ॥

( उद्द्योतः ) ऋहलोः ॥ १२४ ॥ पाणौ सृजेर्ऋदुपधादिति क्यपोपवादो ण्यत् ॥

( १९६९ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ समवपूर्वाच्च ॥ * ॥

( भाष्यम् ) समवपूर्वाच्चेति वक्तव्यम् । समवसर्ग्या रज्जुः ॥

( १९७० वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ लपिदभिभ्यां च ॥ * ॥

( भाष्यम् ) लपिदभिभ्यां चेति वक्तव्यम् । अपलाप्यम् । अपदाभ्यम् ॥ ऋहलो ॥ १२४ ॥

( उद्द्योतः ) लपिदभिभ्यां पोरदुपधादिति[1] यतः ॥ १२४॥

( ४५५ ण्यत्प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. १८ )

## ७४२ ओरावश्यके ॥ ३ । १ । १२५ ॥

( आक्षेपभाष्यम् )

कथमिदं विज्ञायते—आवश्यके उपपदे, आहोस्विद्—द्योत्य इति ।

( प्रदीपः ) ओरावश्यके ॥ १२५ ॥ कथमिति । किमावश्यकार्थवाचिन्युपपदे प्रत्ययः, उत प्रत्ययेन आवश्यके द्योत्य इति प्रश्नः ॥

कश्चात्र विशेषः ? ।

( १९७१ उपपदपक्षदूषणवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आवश्यक उपपद इति चेद् द्योत्य उपसंख्यानम् ॥ * ॥

( भाष्यम् ) आवश्यके उपपदे इति चेद् द्योत्ये उपसंख्यानं कर्तव्यम् । पाव्यं लाव्यम् ॥

( द्योत्यपक्षाभ्युपगमभाष्यम् )

अस्तु तर्हि द्योत्ये ।

( १९७२ द्योत्यपक्षदूषणवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ द्योत्य इति चेत्स्वरसमासानुपपत्तिः ॥ * ॥

( भाष्यम् ) द्योत्य इति चेत् स्वरसमासानुपपत्तिः प्राप्नोति । अवश्यलाव्यम् । अवश्यपाव्यम् ॥

( प्रदीपः ) अवश्यलाव्यमिति । द्वावपूपावित्यादौ गतार्थस्यापि क्वचित् प्रयोगो लोके दृश्यते लाघवं प्रत्यनादरादिति मन्यते ॥

( उद्द्योतः ) ओरावश्य ॥ १२५ ॥ ननु उक्तार्थत्वादवश्यशब्दप्रयोग एव न स्यात् । ण्यदेव वा न स्यादिति कुतो नोक्तम्, अत आह—द्वावपूपाविति । द्योत्य इत्युक्तेर्द्योतकसमुच्चय इष्ट एवेति लभ्यते ॥ उपपदत्वाभावात्स्वरसमासयोरनुपपत्तिरिति भावः ॥

( दूषणोद्धारभाष्यम् )

नैष दोषः । मयूरव्यंसकादित्वात् समासः । विस्पष्टादिवत् स्वरश्च ॥

( प्रदीपः ) विस्पष्टादिवदिति । यथा विस्पष्टकन्दुकमित्यत्र मयूरव्यंसकादित्वात्समासे कृते पूर्वपदप्रकृतिस्वरो भवति, एवमवश्यलाव्यमित्यादावपि मयूरव्यंसकादिषु निपातनादुत्तरपदप्रकृतिस्वरो भविष्यतीत्यर्थः ॥ १२५ ॥

( उद्द्योतः ) ननु विस्पष्टादीनि गुणवचनेष्वित्यनेन पूर्वपदप्रकृतिस्वरविधानादत्रचोत्तरपदप्रकृतिस्वरस्येष्टत्वेन विस्पष्टादिवदित्यसंगतमिति मत्वाह—यथेति । एवं च मयूरव्यंसकादिषु निपातनादेव सिद्धे विस्पष्टादीनि इति सूत्रमपि न कार्यमिति भावः॥ १२५॥

( १९७३ पूर्वविप्रतिषेधवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ ओरावश्यके ण्यतः स्तौतेः क्यप् पूर्वविप्रतिषिद्धम् ॥ * ॥

( भाष्यम् ) ओरावश्यके ण्यतः स्तौतेः क्यप् भवति पूर्वविप्रतिषेधेन । ओरावश्यके ण्यद्भवतीत्यस्यावकाशः—अवश्यलाव्यम् । अवश्यपाव्यम् । क्यपोवकाशः—स्तुत्यः ॥ इहोभयं प्राप्नोति—अवश्यस्तुत्यः । क्यप् भवति पूर्वविप्रतिषेधेन ॥

( आक्षेपभाष्यम् )

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।

( समाधानभाष्यम् )

न वक्तव्यः । उक्तं तत्र[2] 'क्यबिति वर्तमाने पुनः क्यब्ग्रहणस्य प्रयोजनम्'— क्यबेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ॥ ओरावश्यके १२५

१ 'अपवादो ण्यत्' इत्यनुपज्यते ॥

२ तत्रेति क्यब् विधावित्यर्थः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ४५६ ण्यत्प्रत्ययायादेशनिपातनसूत्रम् ॥३।१।६ आ. १९ )

## ७४४ आनाय्योऽनित्ये ॥ ३।१।१२७ ॥

( १९७४ परिसंख्यावार्तिकम् ॥ १ ॥ )

॥ * ॥ दक्षिणाग्नौ ॥ * ॥

( भाष्यम् ) दक्षिणाग्नाविति वक्तव्यम् । आनेयोऽन्यः ॥

( १९७५ पूर्वपक्षवार्तिकम् ॥ २ ॥ )

॥ * ॥ आनाय्योऽनित्य इति चेद् दक्षिणाग्नौ कृतं भवेत् ॥ * ॥

( १९७६ समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ॥ * ॥

( भाष्यम् ) आनाय्यो ॥ १२७ ॥

( प्रदीपः ) आनाय्यो ॥ १२७ ॥ आनाय्योऽनित्य इति चेदिति । घटादिष्वपि प्रसङ्ग इति शेषः ॥ भवेदिति । संभावने लिङ् । निपातनाद्रूढिराश्रीयते । एकयोनाविति । यो गार्हपत्यादानीयते आहवनीयेन सहैकयोनिर्दक्षिणाग्निस्तत्रेत्यर्थः । यस्तु वैश्यकुलादानीयते तत्रानाय्यशब्दो न भवति ॥ १२७ ॥

( उद्द्योतः ) आनाय्यो ॥ १२७ ॥ संभावने लिङिति । दक्षिणाग्नौ युक्तत्वं संभाव्यते निपातनादित्यर्थः ॥ १२७ ॥

( ४५७ ण्यत्प्रत्ययादिनिपातनविधिसूत्रम् ॥३।१।६आ. २० )

## ७४६ पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ ३ । १ । १२९ ॥

( आक्षेपभाष्यम् )

पाय्यनिकाय्ययोः किं निपात्यते ? ।

( १९७७ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ पाय्यनिकाय्ययोरादिपत्वकत्वनिपातनम् ॥ * ॥

( भाष्यम् ) पाय्यनिकाय्ययोरादिपत्वमादिकत्वं च निपात्यते ॥ मेयं निचेयमित्येवान्यत्र ॥ पाय्यसां ॥ १२९ ॥

( उद्द्योतः ) पाय्यसांनाय्य ॥ १२९ ॥ भाष्ये पाय्यनिकाय्ययोरिति । आयादेशोपि निपात्यत इति बोध्यम् ॥ १२९ ॥

( ४५८ ण्यत्प्रत्ययादिनिपातनसूत्रम् ॥ ३।१।६ आ. २१ )

## ७४७ क्रतौ कुण्डपाय्यसंचाय्यौ ॥ ३ । १ । १३० ॥

( १९७८ वार्तिकम् ॥ १ ॥ )

॥ * ॥ कुण्डपाय्ये यद्विधिः ॥ * ॥

( भाष्यम् ) कुण्डपाय्ये यद्विधेयः ॥ कुण्डपाय्यः क्रतुः ॥ क्रतौ कु० ॥ १३० ॥

( उद्द्योतः ) क्रतौ ॥ १३० ॥ यद्विधेय इति । तेन यतोऽनाव इत्याद्युदात्तः, कृदुत्तरपदप्रकृतिस्वरेण तत्सत्ता[2] च युक् च निपात्यत इत्यपि बोध्यम् ॥ १३० ॥

( ४५९ ण्यत्प्रत्ययायादेशादिनिपातनसूत्रम् ॥३।१।६आ.२२ )

## ७४८ अग्नौपरिचाय्योपचाय्यसमूह्याः ॥ ३ । १ । १३१ ॥

( १९७९ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ समूह्य इत्यनर्थकं वचनं सामान्यैकृतत्वात् ॥ * ॥

( भाष्यम् ) समूह्य इत्यनर्थकं वचनम् ॥ किं कारणम् ॥ सामान्यकृतत्वात्[3-4] । सामान्येनैवात्र ण्यद्भविष्यति "ऋहलोर्ण्यद्"इति ।

( आनर्थक्यबाधकभाष्यम् )

वह्यर्थं तर्हि निपातनं कर्तव्यम् । वहेर्ण्यद्यथा स्यात् ॥

( उद्द्योतः ) अग्नौ प ॥१३१॥ भाष्ये वहेर्ण्यदिति । समूह्यशब्दे इति शेषः ॥ तत्र कृते संप्रसारणदीर्घत्वे निपातनादित्यर्थः ॥

( १९८० आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ वह्यर्थमिति चेदूहेस्तदर्थत्वात्सिद्धम् ॥ * ॥

( भाष्यम् ) ऊहिरपि वह्यर्थे वर्तते ।

( आक्षेपभाष्यम् )

कथं पुनरन्यो नामान्यस्यार्थे वर्तते । कथमूहिर्वह्यर्थे वर्तते ? ।

( समाधानभाष्यम् )

बह्वर्था अपि धातवो भवन्ति ।

---

१ प्रदीपाक्षरस्वारस्येन तु प्रथमचरणेनाक्षेपः कृतः । द्वितीयचरणेन समाधानमिति प्रतीयते ॥ परं तु—'आनाय्योऽनित्ये' इति चेदुच्यते तर्हि यद्यपि दक्षिणाग्नाविष्टसिद्धिः, तथापि घटादिष्वनित्येषु अतिप्रसङ्गः स्यात्' इत्येवं पूर्वार्धस्यैव शङ्काग्रन्थत्वम्, 'एकयोनौ' इत्युत्तरार्धस्य समाधानग्रन्थत्वम्' इति दाधिमथानां प्रतिभायां योग्यायोग्यत्वं विचार्यमार्यैः ॥

२ आद्युदात्तसत्ता । 'ण्यति तु स्वरितत्वं स्यादिति पदमञ्जरी' ॥

३-४ 'सामान्येन कृतत्वात्' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(आक्षेपभाष्यम्)

अस्ति पुनः क्वचिदन्यत्रापि ऊहिर्वह्वर्थे वर्तते।

(समाधानभाष्यम्)

अस्तीत्याह।

(१९८१ आनर्थक्यसाधकान्तरवार्तिकम् ॥ ३ ॥)

॥*॥ ऊहिविग्रहाच्च ब्राह्मणे सिद्धम् ॥*॥

(भाष्यम्) ऊहिविग्रहाच्च ब्राह्मणे सिद्धमेतत्। "समूह्यं चिन्वीत पशुकामः"। पशवो वै पुरुषैः[2] पशूनेवास्मै तत्समूहतीति ॥ अग्नौ षहि ॥ १३१ ॥

(प्रदीपः) अग्नौ ॥ १३१ ॥ ऊहिविग्रहादिति। वहिसमानार्थेनोहिना ब्राह्मणे समूह्यशब्दस्य निर्वचनं कृतमित्यर्थः ॥ १३१ ॥

(उद्योतः) वहिसमानार्थेनेति। संवाह्यमित्यग्नौ तु न अनभिधानादिति भावः ॥ भाष्ये—ऊहिविग्रहादिति। ब्राह्मणे ऊहिना विग्रहदर्शनादूहेर्वह्वर्थत्वं सिद्धमित्यर्थः ॥ १३१ ॥

(४६० निपातनसूत्रम् ॥ ३ । १ । ६ आ. २३)

## ७४९ चित्याग्निचित्ये च ॥ ३।१।१३२ ॥

(१९८२ वार्तिकम् ॥ १ ॥)

॥*॥ अग्निचित्येत्यन्तोदात्तो भावे ॥*॥

(भाष्यम्) अग्निचित्येतिभावेन्तोदात्तो भवति। अग्निचयनमेवाग्निचित्या ॥ चित्याग्नि ॥ १३२ ॥

(इति कृत्यप्रकरणम्)

(४६१ प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. २४)

## ७५० ण्वुल्तृचौ ॥ ३ । १ । १३३ ॥

(आक्षेपभाष्यम्)

किमर्थश्चकारः।

(समाधानभाष्यम्)

स्वरार्थः। चितोन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात्।

(समाधानबाधकभाष्यम्)

नैतदस्ति प्रयोजनम्। एकाजयम्। तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन प्रत्ययस्वरेणैव सिद्धम्॥

(समाधानान्तरभाष्यम्)

विशेषणार्थस्तर्हि। क्व विशेषणार्थेनार्थः?। "अप्तृन्तृच्–" इति। 'तृ' इत्युच्यमाने मातरौ मातरः पितरौ पितर इत्यत्रापि प्राप्नोति ॥

(प्रदीपः) ण्वुल्तृचौ ॥ १३३ ॥ मातराविति। उणादिषु तृप्रत्ययान्ता मात्रादयो निपातिता इति भावः ॥

(उद्योतः) ण्वुल्तृचौ ॥ १३३ ॥ भाष्ये यदि तृ इत्युच्यते मातरौ मातरः अत्रापि प्राप्नोतीति। न च निरनुबन्धकत्वादस्यैव ग्रहणं स्यादिति वाच्यम्। लक्ष्यानुरोधेन ज्ञापकसिद्धतयाऽनित्यत्वेन च तस्या इहाप्रवृत्तेरिति भावः ॥ तृप्रत्ययान्ता इति। निरनुबन्धतृप्रत्ययान्ता इत्यर्थः। अस्यापि तृच्त्वे यथान्यासेऽप्यापत्तेः सत्त्वेन तृ इत्युच्यमाने इत्यस्यासंगत्यापत्तेः ॥

(समाधानबाधकभाष्यम्)

स्वसृनप्तृग्रहणं नियमार्थं भविष्यति। एतयोरेव योनिसंबन्धयोः, नान्येषां योनिसंबन्धानामिति ॥

(प्रदीपः) स्वसृनप्तृग्रहणमिति। नप्तृग्रहणं नियमार्थं स्वसृशब्दस्तु ऋन्प्रत्ययान्तत्वाद्विध्यर्थं एव ॥

(समाधानान्तरभाष्यम्)

सामान्यग्रहणाविघातार्थस्तर्हि। क्व सामान्यग्रहणाविघातार्थेनार्थः?। अत्रैव। यदेतत्तृन्तृचोर्ग्रहणम्, एतत् 'तृ' इति वक्ष्यामि ॥

(उद्योतः) भाष्ये तृ इति वक्ष्यामीति। एवं च तृनो ग्रहणसिद्ध्यर्थं चकार इति भावः ॥

(समाधानबाधकभाष्यम्)

यदि 'तृ' इत्युच्यते। मातरौ मातरः पितरौ पितरः। अत्रापि प्रसज्येत ॥

(समाधानसाधकभाष्यम्)

स्वसृनप्तृग्रहणं नियमार्थं भविष्यति—"एतयोरेव योनिसंबन्धयोः, नान्येषां योनिसंबन्धानामिति ॥

(उद्योतः) यदि तृ इत्युच्यत इति। चकारकरणसामर्थ्यात्सानुबन्धकग्रहणेऽपि निरनुबन्धकग्रहणं दुर्वारमेवेति भावः ॥

(सामान्यग्रहणाविघातभाष्यम्)

"तुरिछन्दसि" "तुरिष्ठेमेयःस्विति" चोभयोर्ग्रहणं यथा स्यात् ॥

(प्रदीपः) सामान्यग्रहणाविघातार्थत्वं चकारस्य स्थितम्। तुश्छन्दसि 'तुरिष्ठेमेयःस्वि'त्यत्राप्येतत्प्रयोजनसद्भावात् ॥ १३३ ॥

(उद्योतः) अन्यत्रापि तदर्थत्वं दर्शयति—इति चोभयोर्ग्रहणमिति। इदम् उणादयो व्युत्पन्ना इति शाकटायनादिमते ॥

---

१ 'क्वचिदूहिरन्यत्रापि बह्वर्थे' ॥

२ 'पुरुषाः' ॥

३ उणादिषु निरनुबन्धो यथा तृशब्दोऽस्ति, तथा 'ण्वुलतृचौ' इत्यत्रापि निरनुबन्धतृशब्दस्यैव विधाने, एतद्विहितनिरनुबन्धतृप्रत्ययान्ते इष्टस्य सिद्ध्ये 'अप्तृन्तृ' इत्येवं न्यासे एतद्विहिते तृशब्दे दीर्घस्येष्टत्वेन उणादिविहितेऽनिष्टस्य दीर्घस्यापत्तिरित्यभिप्रायेण भाष्यकृता 'अत्रैव' इति नोक्तम्, किंतु 'अत्रापि' इत्येवोक्तमिति नागेशस्य पूर्वपक्ष एव न समीचीन इति दाधिमथाः ॥

४ 'एवं च एकेन 'तृ'ग्रहणेनैव तृनोपि ग्रहणसिद्ध्यर्थं चकारः' 'खण्डितः' इत्येवमुद्द्योते पाठकल्पनेन भाष्ययोजना कार्येति दाधिमथाः ॥

५ निरनुबन्धकग्रहण इति परिभाषायाः पूर्वोक्तरीत्याऽनित्यत्वादिति भावः। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अव्युत्पत्तिवादिमते तु प्राप्तिरेव न ॥ [1]मातयतीत्यादौ टिलोपवारणायात्राव्युत्पत्तिपक्ष एवावश्यक इति अचिर ऋत इति सूत्रे कैयटः ॥

( १९८३ धातुपरिसंख्यावार्तिकम् ॥ १ ॥ )

**॥ * ॥ ण्वुलि सकर्मकग्रहणम् ॥ * ॥**

( भाष्यम् ) ण्वुलि सकर्मकग्रहणं कर्तव्यम् । इह मा भूद्—आसिता शयितेति ॥

( १९८४ परिसंख्यानिराकरणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा धातुमात्राद्दर्शनाद् ण्वुलः ॥ * ॥**

( भाष्यम् ) न वा वक्तव्यः । किं कारणम् ? । धातुमात्राद्दर्शनाद् ण्वुलः । धातुमात्राण्ण्वुल् दृश्यते । इमे अस्य आसकाः । इमे अस्य शायकाः । उत्थिता आसका वैश्रवणस्येति ॥

( उद्द्योतः ) किं कारणमिति । कस्माद्धेतोरित्यर्थः ॥ हेतुमाह—धातुमात्रादित्यादिना ॥

( १९८५ कालपरिसंख्यावार्तिकम् ॥ ३ ॥ )

**॥ * ॥ तृजादिषु वर्तमानकालोपादानमध्यापकवेदाध्यायाद्यर्थम् ॥ * ॥**

( भाष्यम् ) तृजादिषु वर्तमानकालोपादानं कर्तव्यम् । किं कारणम् ? । अध्यापकवेदाध्यायाद्यर्थम् । अध्यापकः वेदाध्यायः । अधीतवत्यध्येष्यमाणे वा मा भूद् इति ॥

( १९८६ परिसंख्यानिराकरणवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा कालमात्रे दर्शनादन्येषाम् ॥ * ॥**

( भाष्यम् ) न वा वक्तव्यम् । किं कारणम् ? । कालमात्रे दर्शनादन्येषाम् । कालमात्रे ह्यन्ये प्रत्यया दृश्यन्ते । चर्चापारः शमनीपारः ॥ ण्वुल्तृचौ ॥ १३३ ॥

( उद्द्योतः ) अन्येषामिति । ण्वुल्तृज्व्यतिरिक्तानामित्यर्थः । एवं च [2]वर्तमाने इति कृते दोषः । ण्वुल्तृचोस्तु अन्यत्र कालेऽनभिधानं स्वीकार्यमिति भावः ॥ १३३ ॥



( ४६२ प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. २५ )

## ७५१ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ ३ । १ । १३४ ॥

( १९८७ इष्टसाधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अजपि सर्वधातुभ्यः ॥ * ॥**

( भाष्यम् ) अजपि सर्वधातुभ्यो वक्तव्यः । इहापि यथा स्याद्–भवः सव इति ॥

( आक्षेपभाष्यम् )

न तर्हीदानीमिदं पचाद्यनुक्रमणं कर्तव्यम् ।

( समाधानभाष्यम् )

कर्तव्यं च । किं प्रयोजनम् ? ।

( १९८८ गणपाठप्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ पचाद्यनुक्रमणमनुबन्धासंजनार्थमपवादबाधनार्थं च ॥ * ॥**

( भाष्यम् ) अनुबन्धासंजनार्थं तावत् । नदट् नदी । चोरट् चोरी । अपवादबाधनार्थम् । जारभरा श्वपचेति ॥ नन्दिग्रहि ॥ १३४ ॥

( प्रदीपः ) नन्दि ॥ १३४ ॥ श्वपचेति । कर्मण्यण् बाध्यते । न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात्पक्षे सोपि भवति ॥ १३४ ॥

( उद्द्योतः ) नन्दिग्रहि ॥ १३४ ॥ भवः सव इति भाष्ये पाठः ॥ १३४ ॥



( अथ कप्रत्ययप्रकरणम् )

( ४६३ कप्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ. २६ )

## ७५२ इगुपधज्ञाप्रीकिरः कः ॥ ३ । १ । १३५ ॥

( १९८९ वार्तिकम् ॥ १ ॥ )

**॥ * ॥ इगुपधेभ्य उपसर्गे कविधिर्मेषाद्यर्थः ॥ * ॥**

( भाष्यम् ) इगुपधेभ्य उपसर्गे को विधेयः । किं प्रयोजनम् । मेषाद्यर्थः । मेषः देवः सेवः ॥

---

[1] मातरमाचष्टे इति विग्रहे णिच् टिलोपः । ( र. ना. )

[2] तृजादिषु वर्तमाने इति कृते कालान्तरे प्रत्ययो न स्यादिति दोष इत्यर्थः । ( र. ना. )

[3] अनुपसर्गत्वात् को नेति 'अजपि सर्वधातुभ्यः*' इति वार्तिके नाऽजितिभावः ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( १९९० निराकरणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा बुधादीनां दर्शनादनुपसर्गेऽपि ॥ * ॥**

( भाष्यम् ) न वा को विधेयः । किं कारणम् । बुधादीनां दर्शनादनुपसर्गेऽपि । बुधादीनामनुपसर्गेऽपि को दृश्यते बुधः युधः भिद इति ॥

( आक्षेपभाष्यम् )

कथं मेषः देवः सेव इति ।

( समाधानभाष्यम् )

पचादिषु पाठः करिष्यते ॥ इगुपधज्ञा ॥ १३५ ॥

( अथ शप्रत्ययप्रकरणम् )

( ४६४ शप्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ० २७ )

## ७५४ पाघ्राध्माधेट्दृशः शः ॥३।१।१३७॥

( १९९१ वार्तिकम् ॥ १ ॥ )

**॥ * ॥ जिघ्रः संज्ञायां प्रतिषेधः ॥ * ॥**

( भाष्यम् ) जिघ्रः संज्ञायां प्रतिषेधो वक्तव्यः । व्याजिघ्रतीति व्याघ्रः ॥

( आक्षेपभाष्यम् )

इह केचिच्छस्यैव प्रतिषेधमाहुः । केचिज्जिघ्रभावस्य । किं पुनरत्र न्याय्यम् ॥

( समाधानभाष्यम् )

शस्यैव प्रतिषेधो न्याय्यः । जिघ्रभावे हि प्रतिषिद्धे केन शे आकारलोपः स्यात् ॥ पाघ्राध्मा ॥१३७॥

( उद्द्योतः ) पाघ्रा ॥ १३७ ॥ केचिदिति भाष्ये जिघ्रः संज्ञायामित्यादेशोऽकार उच्चारणार्थ इति जिघ्र इति पञ्चमीति भावः ॥ केचिज्जिघ्रभावस्येति । वार्तिके जिघ्र इति षष्ठ्यन्तं मन्यन्ते ॥ केन शे आकारलोप इति । आतो लोप इत्यत्रार्धधातुक इत्यभिकारादिति भावः । श्नाभ्यस्तयोरित्यस्य प्राप्तिरेव न ॥ १३७ ॥

( ४६५ शप्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ० २८ )

## ७५५ अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ ३ । १ । १३८ ॥

( १९९२ अव्याप्तिवारकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अनुपसर्गान्नौ लिम्पेः ॥ * ॥**

( भाष्यम् ) अनुपसर्गान्नौ लिम्पेरिति वक्तव्यम् । निलिम्पा नाम देवाः ।

( १९९३ परिसंख्यावार्तिकम् ॥ २ ॥ )

**॥ * ॥ गवि च विन्देः संज्ञायामुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) गवि चोपपदे विन्देः संज्ञायामुपसंख्यानं कर्तव्यम् । गोविन्दः ॥

( न्यूनतापूरकभाष्यम् )

अत्यल्पमिदमुच्यते गवीति ॥

( १९९४ वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ गवादिष्विति वक्तव्यम् ॥ * ॥**

( भाष्यम् ) गोविन्दः । अरविन्दः[2] ॥ अनुपसर्गाल्लिम्प ॥ १३८ ॥

(उद्द्योतः) अनुपस ॥१३८॥ अरविन्दोऽर्धर्चादिः ॥१३८॥

( ४६६ णप्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ० २९ )

## ७५७ ज्वलितिकसन्तेभ्यो णः ॥ ३ । १ । १४० ॥

( १९९५ न्यूनतापूरकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तनोतेर्णउपसंख्यानम् ॥ * ॥**

( भाष्यम् ) तनोतेर्ण उपसंख्यानं कर्तव्यम् । अवतनोतीत्यवतानः ॥ ज्वलितिक ॥ १४० ॥

---

१ प्रतिपदविधित्वादच् कस्य बाधक इति भावः ॥

२ एवं 'खविन्दः' । प्रज्ञायणि 'खाविन्दः' इति दाधिमथाः ॥ इदं सर्वं प्रमादविजृम्भितमिति तु वयम् । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ४६७ ष्वुन् प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ० ३० )

## ७६२ शिल्पिनि ष्वुन् ॥ ३।१।१४५ ॥

( १९९६ परिसंख्यावार्तिकम् ॥ १ ॥ )

॥ * ॥ नृतिखनिरञ्जिभ्यः ॥ * ॥

( भाष्यम् ) नृतिखनिरञ्जिभ्य इति वक्तव्यम् । इह मा भूत्—वायकः ॥ शिल्पिनि ष्वुन् ॥ १४५ ॥

( ४६८ वुन् प्रत्ययविधिसूत्रम् ॥ ३ । १ । ६ आ० ३१ )

## ७६६ प्रुसृल्वः समभिहारे वुन् ॥ ३ । १ । १४९ ॥

( १९९७ वार्तिकम् ॥ १ ॥ )

॥ * ॥ प्रुसृल्वः साधुकारिणि वुन्विधानम् ॥ * ॥

( भाष्यम् ) प्रुसृल्वः साधुकारिणि वुन्विधेयः । सकृदपि यः सुष्ठु करोति तत्र यथा स्यात् ॥ बहुशोपि यो दुष्ठु करोति तत्र मा भूद् इति ॥ प्रुसृल्वः ॥ १४९ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये तृतीयाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥ पादश्च समाप्तः ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयाध्यायस्य प्रथमपादे षष्ठमाह्निकम् ॥ पादश्च समाप्तः ॥

( उद्द्योतः ) प्रुसृल्वः ॥१४९॥ साधुकारिणीति । समभिहारग्रहणस्थाने इदं कार्यमित्यर्थः ॥ १४९ ॥

इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते तृतीयाध्यायस्य प्रथमपादे षष्ठमाह्निकम् ॥ पादश्च समाप्तः ॥

---

१ रङ्गरेच=नीलकर पर्यायत्वे रजक इत्यत्रायं ष्वुन् ॥ धौविनि तु 'रजकः' इत्यत्र रजकरजनरजःसु कित्वात्सिद्धम्' इति पाँठवार्तिकसूचितक्वुन्प्रत्यय एवेति न परस्परवार्तिकविरोधः । नापि—

"नृपायां शूद्रतश्चौर्याज्जातो रजक उच्यते ।
पुल्कसाद्वैदेयकन्यायां जातो रजक उच्यते ॥"

इत्यौशनस्यां स्मृतौ दर्शितस्य भिन्नभिन्नजातिवाचकस्य शब्दद्वयस्य सिद्धिविरोध इति दाधिमथानां सिद्धान्तः ॥

| | पूर्वयोगः | अस्मिन्पादे सूत्रवार्तिकसंख्याबोधकचक्रम् | | | | | | | सर्वयोगः |
|---|---|---|---|---|---|---|---|---|---|
| | | १ म आह्निके | २ य आह्निके | ३ य आह्निके | ४ र्थं आह्निके | ५ म आह्निके | ६ ष्ठ आह्निके | सर्वयोगः | |
| व्याख्यातसूत्राणि | ३७९ | ६ | १५ | ११ | १६ | ६ | २५ | ८९ | ४६८ |
| अव्याख्यातसूत्राणि | २३७ | १ | ४ | ५ | २८ | १ | ३२ | ६१ | २९९ |
| समुदितसूत्राणि | ६१६ | ७ | १९ | १६ | ४४ | ७ | ५७ | १५० | ७६७ |
| वार्तिकयोगः | | | | | | | | | १९९६ |

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्रीदधिमती(थी) जयति ॥

# तृतीयाध्यायस्य द्वितीयपादे प्रथममाह्निकम् ॥

( अथ कर्मोपपदप्रकरणम् )

( ४६९ अण्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ० १ )

## ७६८ कर्मण्यण् ॥ ३ । २ । १ ॥

( १९९७ परिसंख्यावार्तिकम् ॥ १ ॥ )

**[ ॥ * ॥ कर्मणि निर्वर्त्यमानविक्रियमाणे ॥ * ॥**

( भाष्यम् ) कर्मणि निर्वर्त्यमानविक्रियमाण इति वक्तव्यम् । इह मा भूत्—आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छतीति ॥

( प्रदीपः ) कर्मण्यण् ॥ १ ॥ निर्वर्त्यमानेति । हरिणा निर्वर्त्यादीनां विशेषो दर्शितः—

'सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते' ॥

यस्योपादानकारणं नास्ति तन्निर्वर्त्यं यथा-संयोगं करोतीति । यस्यापि सदप्युपादानकारणं न विवक्ष्यते तन्निर्वर्त्यं यथा-घटं करोतीति । यदा तूपादानकारणमेव परिणामित्वेन विवक्ष्यते मृदं घटं करोतीति तदा विकार्यं कर्म । भेदविवक्षायां तु मृदा घटं करोतीति निर्वर्त्यमेव कर्म ॥ विकार्यमपि द्विधम्—

प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादिभस्मवत् ।
किंचिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवदिति ॥

प्राप्यमपि—

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ इति ॥

तत्र प्राप्यत्वं सर्वस्य कर्मणोऽस्ति क्रियया प्राप्यमाणत्वात् ॥ अवान्तरविवक्षायां तु त्रैविध्यमुच्यते ॥

( उद्योतः ) कर्मण्यण् ॥ १ ॥ यस्य सती परिणामिनी प्रकृतिर्नाश्रीयते, यस्य वाऽविद्यमाना, तन्निर्वर्त्यमित्युच्यत इत्यर्थः ॥ तदेवाह—यस्येति । कार्यसामानाधिकरण्येन प्रतीयमानं नास्तीत्यर्थः । यथा मृदं घटं करोतीति ॥ विवक्ष्यत इति । कार्याभेदेनेति शेषः ॥ तदा विकार्यं कर्मेति । अवस्थाद्वयानुगमेन पूर्वाकारपरित्यागेनाकारान्तरप्राप्त्यवगमादिति भावः ॥ भेदविवक्षायामिति । कर्मणः सकाशादुपादानस्य भेदविवक्षायामित्यर्थः ॥ मृदा घटमिति । करणत्वविवक्षायां तृतीया । नो चेत्संबन्धसामान्यविवक्षायां मृदो घटमिति षष्ठीति बोध्यम् ॥ विकार्यमपीति । पूर्वरूपस्य सर्वात्मना परित्यागतदभावाभ्यामित्यर्थः ॥ दर्शनादिति । प्रत्यक्षादित्यर्थः ॥ निर्वर्त्ये स्वरूपलाभ एव क्रिया कृतो विशेषः ॥ विकार्ये विकाररूप एव सः । घटं करोति, स्वर्णं कुण्डलं करोति । काष्ठं भस्म करोतीति ॥ अनुमानाद्यथा—पुत्रः सुखं करोतीति । अत्र सुखरूपलाभो मुखप्रसादानुमेयः ॥

( १९९८ अप्राप्तविधायकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ कर्मणि निर्वर्त्यमानविक्रियमाणे इति चेद् वेदाध्यायादीनामुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) कर्मणि निर्वर्त्यमानविक्रियमाण इति चेद्वेदाध्यायादीनामुपसंख्यानं कर्तव्यम् । वेदाध्यायः चर्चापारः शमनीपारः ॥

( प्रदीपः ) वेदाध्याय इति । नित्यो वेदः स्थित एवाधीयते इति निर्वर्त्यत्वाभावः ॥

( उद्योतः ) नित्यस्तत्तत्कल्पेऽविच्छिन्नपारम्पर्य इत्यर्थः ॥

( १९९९ परिगणनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ यत्र च नियुक्तः ॥ * ॥**

( भाष्यम् ) यत्र च नियुक्तस्तत्र चोपसंख्यानं कर्तव्यम् । छत्रधारः द्वारपालः ॥

( २००० परिगणनवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ हृग्रहिनीवहिभ्यश्च ॥ * ॥**

( भाष्यम् ) हृग्रहिनीवहिभ्यश्चेति वक्तव्यम् । हृ—भारहारः । हृ ॥ ग्रहि—कमण्डलुग्राहः । ग्रहि ॥ नी—उष्ट्रप्रणायः । नी ॥ वहि—भारवाहः । वहि ॥

( प्रदीपः ) छत्रधार इति । वेदाध्यायादिग्रहणेन च्छत्रधारादीनां ग्रहणं नास्ति प्रकारार्थेनादिशब्देन सदृशानां शास्त्राध्यायादीनामेव शब्दानां ग्रहणात् । तत्प्राप्यमेव, न विकार्यम् । नहि धारणादूर्ध्वं छत्रस्य कश्चित् क्रियाकृतो विशेषः प्रत्यक्षानुमानपरिच्छेद्योऽस्ति ॥

( उद्योतः ) ननु वेदाध्यायादीनाम् इत्यादिनैव सर्वसंग्रहे सिद्धे *यत्र च नियुक्तः* इत्यादिवैयर्थ्यमत आह—वेदाध्यायादीति । वस्तुतः प्रपञ्चार्थमेवैतानीति बोध्यम् ॥

१ 'मृदो' ॥
२ 'तत्रैविध्य' ॥
३ वैधर्म्ये दृष्टान्तः । ( र. ना. )
४ एवमेव—पीलुवानः, रथवानः, पानीयारः, इत्यादयोऽपि ॥ सिद्धानामेव शब्दानां शास्त्रेण साधुत्वान्वाख्यानादेपाश्च संस्कृतानामात्मयोगाभावात्तत्तदर्थेष्वसाधुत्वमेवेति दाधिमथानां प्रमादो विभावनीयः सूरिभिः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( २००१ परिगणनप्रत्याख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अपरिगणनं वा ॥ * ॥

( भाष्यम् ) न वार्थः परिगणनेन ॥

( आक्षेपभाष्यम् )

कस्मान्न भवति—आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छतीति ? ।

( २००२ प्रत्याख्यानहेतुवार्तिकम् ॥ ६ ॥ )

॥ * ॥ अनभिधानात् ॥ * ॥

( भाष्यम् ) अनभिधानादेव न भविष्यति ।

( प्रदीपः ) अनभिधानादिति । नित्यानां शब्दानामिदमन्वाख्यानमात्रम् । न चादित्यं पश्यतीत्याद्यर्थप्रतिपादनायादित्यदर्शादयः शब्दा लोके प्रयुज्यन्त इति शास्त्रेणापि साधुत्वेन नानुशास्यन्त इत्यर्थः ॥

(उद्द्योतः) शास्त्रेणापि । कर्मण्यण् इति सामान्यशास्त्रेणापि ॥

( २००३ विप्रतिषेधवार्तिकम् ॥ ७ ॥ )

॥ * ॥ अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) अकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन । अनुपपदस्यावकाशः—पचतीति पचः, कर्मोपपदस्यावकाशः—कुम्भकारः नगरकारः । इहोभयं प्राप्नोति—ओदनपाचः । कर्मोपपदो भवति विप्रतिषेधेन ॥

अनुपपदस्यावकाशः—विक्षिपः विलिखः । कर्मोपपदस्य स एव । इहोभयं[1] प्राप्नोति—काष्ठभेदः । कर्मोपपदो भवति विप्रतिषेधेन ॥

अनुपपदस्यावकाशः—जानातीति ज्ञः । कर्मोपपदस्य स एव । इहोभयं प्राप्नोति—अर्थज्ञः । कर्मोपपदो भवति विप्रतिषेधेन ॥

( प्रदीपः ) कर्मोपपदस्येति । यदा गणपठितधातुविषय एवाच्प्रत्ययस्तदायं विप्रतिषेधो । यदा तु सर्वधातुविषयोऽच्प्रत्ययस्तदा येन नाप्राप्तिन्यायादण्प्रत्ययस्यापवादत्वादुत्सर्गापवादयोर्विप्रतिषेधोऽनुपपन्नः । तथा च करोतेरच्प्रत्ययः कृतः 'शिवशमरिष्टस्य करे' इति । ततश्च कुम्भकारादिरपि नाणोऽवकाशः तत्राप्यच्प्रत्ययप्रसङ्गात् । अत एव भाष्यकार उदाहरणान्तराणि काष्ठभेदादीनि विप्रतिषेधस्य वक्ष्यति ॥ काष्ठभेद इति । सर्वधातुभ्यो विधानादच उत्सर्गस्य काणावपवादौ तयोर्विप्रतिषेधादणेवात्र भवति ॥

(उद्द्योतः) ननु सर्वधातुभ्योऽज्विधानेन कुम्भकार इति कथमणोऽवकाश इत्यत आह—यदेति ॥ सर्वधातुविषयश्चाच्प्रत्यय आवश्यक इत्याह—तथा चेति । उदाहरणान्तराणि काण्विषयाणि ॥ काणाविति । इगुपधेति कः । कर्मण्यण् ॥ भाष्ये अर्थज्ञः ॥ कर्मोपपद इति । विप्रतिषेधेन प्राप्तमणं बाधित्वा आतोऽनुपसर्गे इति तात्पर्यम् ॥

( विप्रतिषेधायुक्तत्वभाष्यम् )

नैष युक्तो विप्रतिषेधः । अनुपपदस्तृतीयः[2] । ण्वुल्तृजचः[3] । तेषां णः[4] । तस्य कः[5] । स यथैव को णं बाधते एवं कर्मोपपदमपि बाधेत ॥

( प्रदीपः ) स यथैव क इति । प्राप्तिमात्रस्य बाध्यत्वमपेक्ष्यैतदुच्यते । यदा तु प्राप्तिविशेषोऽपेक्ष्यते, तदा तु येन नाप्राप्तिन्यायाण्णस्यैव को बाधको, न तु कर्मोपपदस्याणः ॥ कः पुनरनयोः प्रत्यययोर्विशेषः । उच्यते—कर्मोपपदे के सति नित्यसमासो भवति । अकर्मोपपदे तु विकल्पेन षष्ठीसमासः स्यात् ॥

( उद्द्योतः ) एतत्तात्पर्यमजानान एकदेश्याह—नैषं युक्त इति ॥ ज्ञाविषये काणोर्य इत्यर्थः ॥ तेषां ण इति । श्याद्व्यधेतिविहितः ॥ तत्र हि श्या आद् इति च्छेदः ॥ स यथैवेति । बाध्यसामान्यचिन्तयाऽणोपि स बाधक इत्यर्थज्ञः सिद्धो विप्रतिषेधं विनापीत्यर्थः । तदाह—प्राप्तिमात्रस्येति ॥ न तु कर्मोपपदस्येति । एवं च विप्रतिषेधोऽयुक्त एवेति भावः ॥

( विप्रतिषेधसाधकभाष्यम् )

कर्मोपपदोपि तृतीयः । ण्वुल्तृजचः । तेषामण् । अणः कः । उभयोस्तृतीययोर्युक्तो विप्रतिषेधः ॥

( विप्रतिषेधोदाहरणान्तरभाष्यम् )

अनुपपदस्यावकाशः—लिम्पतीति लिम्पः । कर्मोपपदस्य—स एव । इहोभयं प्राप्नोति—कुड्यलेप इति । कर्मोपपदो भवति विप्रतिषेधेन ॥

( विप्रतिषेधबाधकभाष्यम् )

नैष युक्तो विप्रतिषेधः । अनुपपदस्तृतीयः । ण्वुल्तृजचः । तेषां कः[6] । कस्य शः । स यथैव शः कं बाधते एवं कर्मोपपदमपि बाधेत ॥

( सिध्युपायप्रश्नभाष्यम् )

का तर्हि गतिः ? ।

( सिध्युपायभाष्यम् )

"मध्येऽपवादाः पूर्वान् विधीन्बाधन्ते नोत्तरानि"त्येवं शः कं बाधिष्यते, कर्मोपपदं न बाधिष्यते ॥

( विप्रतिषेधोदाहरणान्तरभाष्यम् )

अनुपपदस्यावकाशः सुग्लः सुम्लः । कर्मोपपदस्य स एव । इहोभयं प्राप्नोति गोसंदायः बडवासंदायः । कर्मोपपदो भवति विप्रतिषेधेन ॥

---

१ 'काष्ठभेदे उभयं प्राप्नोति ।' ॥

२ तृतीयकोटिस्थ इत्यर्थः ॥

३ प्रथमकोटौ इति शेषः ॥

४ तेषां ण्वुल्तृजचां बाधको णो द्वितीयकोटिस्थत्वेन द्वितीय इत्यर्थः ॥

५ तस्य णस्य बाधकः कः तृतीयकोटिस्थत्वेन तृतीयः ॥ एवमग्रेपि बोध्यम् ॥

६ ण्वुल्तृजचांकोऽपवादो द्वितीयकोटिस्थ इत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( विप्रतिषेधबाधकभाष्यम् )

नैष युक्तो विप्रतिषेधः। अनुपपदस्तृतीयः। ण्वुल्तृजचः। तेषां णः। तस्य कः। स यथैव को णं बाधते एवं कर्मोपपदमपि बाधेत॥

( गतिप्रश्नभाष्यम् )

का तर्हि गतिः?।

( गतिभाष्यम् )

"पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानि"त्येवमयं को णं बाधिष्यते, कर्मोपपदं न बाधिष्यते॥

( प्रदीपः ) नन्वर्थज्ञ इत्यत्रातोऽनुपसर्गे क इति कः प्राप्नोति न त्वण् प्रत्ययः, तत्कथमुच्यते कर्मोपपदस्य स पदेति, न हि कुम्भकारः कर्मोपपदस्य विषयः। एवं तर्हि काणोर्विप्रतिषेधे परत्वादण् कं बाधते, अणमपि कर्मोपपदः कोपवादत्वादिति क्रममाहत्यैतदुक्तमित्यदोषः॥

( उद्योतः ) नन्वर्थज्ञ इत्यत्राणं बाधितुं न कमलयेन विप्रतिषेध उच्यते। किं त्वातोऽनुपसर्गे क इति कं बाधितुम्। एवं चेगुपधेति कस्याणा बाधेऽप्यातोऽनुपसर्गे इति केन तृतीयकक्ष्याप्राप्तस्येगुपधेति कस्य विप्रतिषेधः संभवत्येवेत्याह—सिद्धान्त्येकदेशी—कर्मोपपदेतीति॥ अणः क इति। आतोऽनुपसर्गे इत्ययमिति भावः॥ उभयोरिति। सोपपदनिरुपपदयोः कयोरित्यर्थः॥ कर्मोपपदस्य कस्य विषय इति। अनाकारान्तत्वादिति भावः॥ किं तु गोद इत्यवकाश इति वक्तुं युक्तमिति तात्पर्यम्। क्रममाहत्येति। अर्थज्ञः कर्मोपपदो भवति विप्रतिषेधेनेत्युत्तरम्। नैष युक्त इत्यादिर्युक्तो विप्रतिषेध इत्यन्तं भाष्यं त्वेकदेशयुक्तिरित्युक्तमेव॥

अथ विप्रतिषेधस्योदाहरणान्तरमाह—अनुपपदस्येत्यादिना भाष्ये॥

भाष्ये का तर्हि गतिरिति। तृतीयस्य प्रश्नः॥

( २००४ णप्रत्ययविधिवार्तिकम्॥ ८॥ )

॥ * ॥ शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च॥ * ॥

( भाष्यम् ) शीलिकामिभक्ष्याचरिभ्यो णो वक्तव्यः, पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्। शीलि—मांसशीलः। मांसशीला। कामि—मांसकामः मांसकामा। भक्षि—मांसभक्षः मांसभक्षा। आचरी—कल्याणाचारः कल्याणाचारा॥

( प्रदीपः ) मांसकाम इति। मांसशब्दः सप्रत्ययान्तोन्तोदात्तः। कल्याणशब्दश्च लघावन्ते द्वयोश्च बह्वषो गुरुरिति मध्योदात्तस्तत्र कृदुत्तरपदप्रकृतिस्वरे प्राप्ते पूर्वपदप्रकृतिस्वरो विधीयते॥

( उद्योतः ) समासे पूर्वपदप्रकृतिस्वरत्वं दर्शयितुं पूर्वपदस्वरान्दर्शयति—मांसेति॥ एकस्मिन्नन्त्ये लघौ द्वयोर्वान्त्ययोर्लघ्वोः सतोर्बह्वषः बह्वचः बह्वच्छस्येत्यर्थः॥

( २००५ णप्रत्ययवार्तिकम्॥ ९॥ )

॥ * ॥ ईक्षिक्षमिभ्यां च॥ * ॥

( भाष्यम् ) ईक्षिक्षमिभ्यां चेति वक्तव्यम्। सुखप्रतीक्षः सुखप्रतीक्षा। कल्याणक्षमः कल्याणक्षमा॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते?।

( समाधानभाष्यम् )

पूर्वपदप्रकृतिस्वरत्वं वक्ष्यामि। ईकारश्च मा भूदिति॥

( उद्योतः ) भाष्ये ईकारश्च मा भूदिति। अतो णेः कृत इति भावः॥

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम्। इह यो मांसं भक्षयति मांसं तस्य भक्षो भवति। तत्र योसौ भक्षयतेरच् तदन्तेन बहुव्रीहिः॥

( प्रदीपः ) भक्षयते रजिति। एरजण्यन्तानामित्येतत्तु मुनित्रयस्य मते नास्ति कल्प्यादिभ्यः प्रतिषेध एवास्ति॥ ननु च बहुव्रीहौ सति बहवो भक्षा अस्य बहुभक्ष इत्यत्र बहोर्नञ्वदुत्तरपदभूम्नीत्यन्तोदात्तत्वं प्राप्नोतीति पूर्वपदप्रकृतिस्वरो न सिध्यति॥ नैष दोषः। भक्षणं भक्षः बहुषु भक्षोस्येत्येवं व्यधिकरणपदो बहुव्रीहिः करिष्यते तत्रोत्तरपदभूमाभावाद्बहुव्रीहौ प्रकृत्येति स्वरो भविष्यति॥

( उद्योतः ) मांसं तस्य भक्ष इति। भक्षेः कर्मण्यच्। घञजपाः पुंसीति नित्यपुंस्त्वम्। ऐतेनेदं भावघञ्विषयमेवेत्यपास्तम्॥ भक्षणं भक्ष इति। भावेऽजिति भावः॥ कर्माजन्तेन् समानाधिकरणबहुव्रीहिस्तु नानभिधानात्। तच्च त्वयाप्यावश्यकमेवेति बोध्यम्॥

( ज्ञापनभाष्यम् )

एवं तर्हि सिद्धे सति यत्कर्मोपपदं णं शास्ति तज्ज्ञापयत्याचार्यः—'समानेर्थे केवलं विग्रहभेदाद् यत्र कर्मोपपदश्च प्राप्नोति बहुव्रीहिश्च, कर्मोपदस्तत्र भवति'इति॥

किमेतस्य ज्ञापने प्रयोजनम्?।

काण्डलावः। काण्डानि लावोऽस्येति बहुव्रीहिर्न भवति॥

( प्रदीपः ) काण्डानि लावोऽस्येति। लावयतेरच्॥

---

१ कमलयस्येति शेषः। ( र. ना. )

२ अणि कृते तु कुम्भकारीत्यादाविव 'टिड्ढाणञ्—' इति ङीप् प्रसज्येत। 'शीलम्। छत्रादिभ्यो णः' इति णान्ते चौरी इत्यत्र तु 'ताच्छीलिके णेऽणकृतानि भवन्ति' इति "कार्मस्ताच्छील्ये" इति निपातनेन ज्ञापितत्वाद् भवत्येवेत्यन्यत्॥

३ इदम्। घञजपा इति शास्त्रमित्यर्थः। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्योतः ) भाष्ये तज्ज्ञापयत्याचार्य इति । नन्वणि सति मांसभक्षीति प्रयोगः स्यादिति तद्वारणेन चरितार्थं वार्तिकं कथं ज्ञापकमिति चेत् । अनभिधानादणभावं मन्यते ॥ लावयतेरच्प्रत्यय इति । निवृत्तप्रेषणप्रकृतिकप्राकृतार्थणिजन्तादच्प्रत्यय इत्यर्थः ॥ अन्यथा काण्डानि लुनातीत्यनेन समानार्थत्वं न स्यात् ॥ काण्डानि लाव इत्यत्र लाव इति जातावेकवचनं बोध्यम् ॥

( ज्ञापनवैयर्थ्यभाष्यम् )

भवति बहुव्रीहिरपि मांसे कामोस्य मांसकामः मांसकामुक इति वा ॥ [ नं त्वम्भोभिगमा । ] न त्विदं भवति अम्भोऽभिगमोऽस्या अम्भोभिगमा इति । किं तर्हि ? । 'अम्भोभिगामी'इत्येव भवति । काण्डलावेपि च विग्रहाभावान्न ज्ञापकस्य प्रयोजनं भवतीति । नैषोस्ति विग्रहः-काण्डानि लावोऽस्येति ॥

( प्रदीपः ) भवति बहुव्रीहिरपीति । तेन ज्ञापनस्य प्रयोजनाभावादण्बाधनार्थमेवेदं वक्तव्यमित्यर्थः ॥ न त्वम्भोभिगमेति । तेनात्रानभिधानाद्बहुव्रीहिर्न भवतीति भावः ॥ नैषोस्तीति । काण्डानि लुनातीति प्रकृत्यर्थविवक्षायामभावाण्णिचः लूयत इति लवः काण्डानि लवोस्येति विग्रहेण भाव्यमिति भावः ॥

( उद्योतः ) अण्बाधनार्थमेवेति । अनभिधानेन प्रत्याख्यानं तु न चमत्कारीति भावः ॥ भाष्ये न त्वम्भोऽभिगमेति । अम्भोभिगमा तु नेष्यते । तस्मादनभिधानमेव तदर्थमाश्रयणीयम् । न त्वेकप्रयोजनार्थं सामान्यज्ञापकाश्रयणमिति भावः ॥ लूयत इति लव इति । न च निवृत्तप्रेषणादिति प्रागुक्तरीत्या तदर्थो लावशब्दोप्यस्तीति वाच्यम् । सा हि कल्पना क्वचिदिष्टप्रयोगसिद्धये, न त्वनिष्टायेति भावः ॥

( २००६ वार्तिकम् ॥ १० ॥ )

॥ * ॥ अन्नादायेति च कृतां व्यत्ययश्छन्दसि ॥ * ॥

( भाष्यम् ) अन्नादायेति च कृतां व्यत्ययश्छन्दसि द्रष्टव्यः । अन्नादायान्नपतये य आहुतिमन्नादां कृत्वा ॥ कर्मण्यण् ॥ १ ॥

( प्रदीपः ) अन्नादायेति । अन्नमत्तीत्यणः प्रसङ्गेऽच्प्रत्ययः क्रियते । तेनाद्य अदायेत्येवमवग्रह उपपद्यते ॥ १ ॥

( उद्योतः ) चतुर्थ्यन्तप्रयोग एव व्यत्ययोक्तेस्तत्र विशेषोऽणचोरत आह—अवग्रह इति । न लक्षणेन पदकारा अनुवर्त्या इत्यादि भाष्येणावग्रहार्थताया लक्षणस्य दूषितत्वादिदं व्यर्थमित्यनेन सूचितम् ॥ १ ॥

( अथ कप्रत्ययप्रकरणम् )

( ४७० कप्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. २ सू. )

## ७७० आतोऽनुपसर्गे कः ॥ ३।२।३ ॥

( २००७ कबाधकवार्तिकम् ॥ १ ॥ )

॥*॥ कविधौ सर्वत्र प्रसारणिभ्यो डः ॥*॥

( भाष्यम् ) कविधौ सर्वत्र प्रसारणिभ्यो डो वक्तव्यः । ब्रह्मज्य इति ॥

( प्रदीपः ) आतोऽनुपस ॥ ३ ॥ ब्रह्मज्य इति । ब्रह्म जिनातीति डप्रत्ययः ॥

( उद्योतः ) आतोऽनुप ॥ ३ ॥ प्रसारणिनः संप्रसारणभाजः ॥ ब्रह्मज्य इति । के हि संप्रसारणे इयङ् स्यादिति भावः ॥

( आक्षेपभाष्यम् )

किमुच्यते—सर्वत्रेति ? ।

( उद्योतः ) भाष्ये किमुच्यते सर्वत्रेति । सर्वत्रेत्यस्य कमात्रे इत्यर्थः ॥

( समाधानभाष्यम् )

अन्यत्रापि । नावश्यमिहैव ॥

क्वान्यत्र ? ।

आह्वः प्रह्व इति ॥

( २००८ हेतुवार्तिकम् ॥ २ ॥ )

॥ * ॥ के हि संप्रसारणप्रसङ्गः ॥ * ॥

( भाष्यम् ) के हि सति संप्रसारणं प्रसज्येत । संप्रसारणे कृते संप्रसारणस्य पूर्वत्वे च उवङादेशः । आह्वुव इत्येतद्रूपं प्रसज्येत ॥

( उद्योतः ) तमाह—अन्यत्रापीति । आतश्चोपसर्गे इत्यत्रापीत्यर्थः ॥

( आक्षेपभाष्यम् )

स तर्हि वक्तव्यः ? ।

( वार्तिकप्रत्याख्यानभाष्यम् )

न वक्तव्यः । अस्त्वत्र संप्रसारणम् । संप्रसारणे कृते आकारलोपः । तस्य स्थानिवद्भावादुवङादेशो न भविष्यति ॥

( वार्तिकस्थापनभाष्यम् )

पूर्वत्वे कृते प्राप्नोति ॥

( वार्तिकप्रत्याख्यानभाष्यम् )

एवं तर्हीदमिह संप्रधार्यम्—आकारलोपः क्रियताम्, पूर्वत्वमिति । किमत्र कर्तव्यम् ? । परत्वाद् आकारलोपः ॥

( वार्तिकस्थापनभाष्यम् )

न सिध्यति । अन्तरङ्गत्वात्पूर्वत्वं प्राप्नोति ॥

( वार्तिकप्रत्याख्यानभाष्यम् )

एवं तर्हि 'वार्णादाङ्गं बलीयः' इत्याकारलोपो भविष्यति ॥

१ एकस्मिन्प्राचीनतरपुस्तके तु नोपलभ्यते ॥ तत्र त्रुटितं भवेत् प्रदीपे प्रतीकदर्शनात् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( प्रकारान्तरेण आकारलोपसाधकभाष्यम् )

**एवं तर्हि—इदमिह संप्रधार्यम् । आकारलोपः क्रियतां, संप्रसारणमिति । किमत्र कर्तव्यम् ? । परत्वादाकारलोपः ॥**

( प्रदीपः ) **वार्णादाङ्गमित्युक्ते यो ब्रूयात् 'समानाश्रयाङ्गवार्णविषयमेतत्' इति तं प्रत्याह—एवं तर्हीति ॥**

( उद्द्योतः ) एवं तर्हि वार्णादिति । इत्यायेत्यादिसिद्धयेऽस्या विभिन्ननिमित्तकेऽपि प्रवृत्तिरावश्यिकीति भावः ॥ समानाश्रयेति । तदनाश्रयणेऽप्याहेति वक्तुमुचितम् ॥ एवं च एवं तर्हीति किं चेत्यर्थकमिति भावः ॥

( वार्तिकस्थापनभाष्यम् )

**नित्यं संप्रसारणम् कृतेऽप्याकारलोपे प्राप्नोति, अकृतेऽपि ॥**

( प्रदीपः ) **नित्यमिति** । संप्रसारणे कृते पूर्वत्वेन भाव्यमित्याकारलोपस्यानित्यत्वं मन्यते ॥

( वार्तिकप्रत्याख्यानवादिभाष्यम् )

**आकारलोपोपि नित्यः । कृतेपि संप्रसारणे प्राप्नोति, अकृतेपि ॥**

( वार्तिकावश्यकतासमर्थकभाष्यम् )

**अनित्य आकारलोपः । न हि कृते संप्रसारणे प्राप्नोति । अन्तरङ्गं हि पूर्वत्वं बाधते ॥**

( प्रदीपः ) **अन्तरङ्गमिति । वार्णादाङ्गं बलीय** इत्येतत्तु समानाश्रयविषयमित्युक्तम् ॥

( उद्द्योतः ) भाष्ये अन्तरङ्गंहि पूर्वत्वमिति । यद्यपि वार्णपरिभाषयापि आल्लोपस्य नित्यत्वं वक्तुं शक्यं तथापि तदनाश्रयेणैवास्य ग्रन्थस्य प्रवृत्तेर्न दोषः ॥

( वार्तिकप्रत्याख्यानभाष्यम् )

**यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवाकारलोपस्य निमित्तं विहन्ति । अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् ॥**

( वार्तिकाभावे लक्ष्यसिद्ध्युपसंहारभाष्यम् )

**उभयोर्नित्ययोः परत्वादाकारलोपः । आकारलोपे कृते संप्रसारणे कृते यणादेशेन सिद्धं रूपम्—आह्वः प्रह्व इति ॥**

( उद्द्योतः ) प्रकारान्तरेण तदुपपादयितुमाह—यस्येति ॥

( वार्तिकावश्यकतासाधकभाष्यम् )

**एवमपि न सिध्यति । योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः आदिष्टाच्चैषोऽचः पूर्वो भवति ॥**

( प्रदीपः ) **एवमपि न सिध्यतीति** । आह्व इत्यादिरूपमिति शेषः ॥ **योऽनादिष्टादिति** । उकारश्चानादिष्टादचः पूर्वो न भवति ॥ नन्वनादिष्टादचः पूर्वो वकार इति तदादेशस्यापि स्थानिवद्भावादनादिष्टादचः पूर्वत्वं भविष्यति । नैतदस्ति । शास्त्रीयकार्यसिद्धये स्थानिवद्भावो विधीयते न त्वनादिष्टादचः पूर्वत्वे लौकिके ॥

( उद्द्योतः ) नत्वनादिष्टादच इति । अत एव न पदान्तसूत्रस्थसवर्णग्रहणं भगवता प्रत्याख्यातम् ॥ न धातुसूत्रस्थं भाष्यं तु तत्रैव योजितमिति न तद्विरोध इति बोध्यम् ॥ समाधानान्तरस्य संभवादनित्यमिदं नाश्रितमिति तत्त्वम् ॥

( वार्तिकप्रत्याख्यानभाष्यम् )

**एवं तर्हि आकारलोपस्यासिद्धत्वादुवङादेशो न भविष्यति ॥**

( प्रदीपः ) **आकारलोपस्यासिद्धत्वादिति । असिद्धवदत्राभादित्यनेनेति भावः ॥**

( अनिष्टापत्तिभाष्यम् )

**इहापि तर्ह्याकारलोपस्यासिद्धत्वादुवङादेशो न स्याद् जुहुवतुः जुहुवुरिति ॥**

( समाधानभाष्यम् )

**अस्त्यत्र विशेषः । अकृतेऽत्वे पूर्वत्वं भवति ॥**

**इदमिह संप्रधार्यम्—आत्वं क्रियताम्, पूर्वत्वमिति । किमिह कर्तव्यम् ? । परत्वात्पूर्वत्वम् ॥**

( समाधानबाधकभाष्यम् )

**न सिध्यति । अन्तरङ्गत्वादात्वं प्राप्नोति ॥ एवं तर्हीदमिह संप्रधार्यम्—आत्वं क्रियताम्, संप्रसारणमिति । किमत्र कर्तव्यम् ? । परत्वादात्वम् ॥**

( प्रदीपः ) **जुहुवतुरिति । ह्वेञो लिटि ह्वः संप्रसारणमभ्यस्तस्यचेति** संप्रसारणे रूपम् ॥

( उद्द्योतः ) हु धातुना सिद्धमिदं रूपमत आह—ह्वेय इति । वार्णादाङ्गं बलीय इति पूर्वरूपं बाधित्वा लोप इति पक्षेप्यस्यासिद्धिर्बोध्या ॥

( समाधानसाधकभाष्यम् )

**नित्यं संप्रसारणम्, कृतेऽप्यात्वे प्राप्नोति, अकृतेऽपि ॥**

---

१ तदिति । समानाश्रयाङ्गवार्णविषयकत्वानाश्रयणेऽपीत्यर्थः । ( र. ना. )

२ पूर्वत्वे प्रतीक्ष्यमिति, पूर्वत्वमतीक्ष्यमिति वा पाठः शोभनो भाति । यद्वा पूर्वत्वं प्रतीति प्रतियोगे द्वितीया पूर्वत्वं प्रति अवश्यं लक्षणान्तरमीक्ष्यमिति योजना । ( र. ना. )

३ तद् आकारलोपस्य नित्यत्वम् ॥

४ आकारलोपोत्तरं संप्रसारणे प्राप्तावियङुवङावाकारलोपस्य स्थानिवद्भावान्न जायेते इति प्रागुक्तमेव न विस्मरणीयम् 'इति सिद्धं रूपम्—'आह्वः प्रह्वः' इति' इति भाष्येण सूचितम् । तत्र स्थानिवद्भावस्याप्राप्त्या इयङुवङोः प्राप्तिरव्याहतेत्यभिप्रायेणाह—एवमपीत्यादि ॥ स्थानिवद्भावप्राप्तिं वारयति—योऽनादिष्टादच इत्यादिना ॥

५ शिण्ढि इत्यादौ अनुस्वारस्यानादिष्टादचः पूर्वत्वाभावेन स्थानिवत्त्वाप्राप्त्या सवर्णविधौ तत्प्रतिषेधस्यानावश्यकत्वादिति भावः । ( र. ना. )

६ आकारलोपस्यासिद्धत्वादुवङादेशो न भविष्यतीत्येवं रूपस्य वक्ष्यमाणस्य इति भावः । अनित्यमिदम्, आकारलोपस्यानित्यत्वमित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( समाधानबाधकभाष्यम् )

आत्वमपि नित्यम् । कृतेऽपि संप्रसारणे प्राप्नोति, अकृतेऽपि ॥

( समाधानसाधकभाष्यम् )

अनित्यमात्वम् । नहि कृते संप्रसारणे प्राप्नोति । परत्वात्पूर्वत्वेन भवितव्यम् ॥

( प्रदीपः ) परत्वादात्वमिति । अशितीति पर्युदासाश्रयेणैतदुक्तम् । प्रसज्यप्रतिषेधे त्वनैमित्तिकत्वादात्वमन्तरङ्गम् । न चान्तरङ्गवहिरङ्गयोर्युक्तो विप्रतिषेधः ॥

( उद्द्योतः ) भाष्ये—अन्तरङ्गत्वादात्वमिति । एवं चात्त्वे पूर्वरूपलोपयोः प्राप्तयोर्वार्णादिति न्यायेन लोपे तस्य स्थानिवत्त्वादुवङ् न स्यादिति भावः ॥ एवं तर्हीति । प्राग्देव किं चेत्यर्थे ॥ प्रसज्यप्रतिषेधे त्विति । वच्चिस्वपीत्यत्र कितीत्यपि यदि विषयसप्तमी तदा भाष्यं सम्यगेव ॥

( समाधानबाधकभाष्यम् )

यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् । न च संप्रसारणमेवात्वस्य निमित्तं विहन्ति । अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् ॥ उभयोर्नित्ययोः परत्वादात्वम् । आत्वे कृते संप्रसारणम् ॥

( उद्द्योतः ) भाष्ये आत्वे कृते संप्रसारणमिति । आत्वे कृते लोपे कृते संप्रसारणे कृते प्राप्तोवङि स्थानिवत्त्वाभावेऽपि असिद्धत्वादुवङोऽसिद्धिरिति भावः ॥

( समाधानभाष्यम् )

एवं तर्हि पूर्वत्वे योगविभागः करिष्यते—"संप्रसारणात्" संप्रसारणात्परः पूर्वो भवति ॥ ततः "एङः" एङश्च संप्रसारणात्पूर्वो भवति ॥ किमर्थमिदम् ? । अकृते आत्वे पूर्वत्वं यथा स्यात् ॥ ततः "पदान्तादिति" 'एङः' इत्येव ॥

( प्रदीपः ) एवं तर्हीति । एङः पदान्तादतीत्ययं योगो विभज्यते 'एङः' इति तेनात्वं बाध्यते पूर्वत्वविधानेन ॥

( उद्द्योतः ) समाधत्ते—एवं तर्हीति । योगविभागसामर्थ्यादन्तरङ्गमप्यात्वं बाधित्वा पूर्वं संप्रसारणं पूर्वत्वं चेति उवङसिद्धो जुहुवतुरित्यादाविति भावः ॥

( आक्षेपभाष्यम् )

इहापि तर्ह्यकृत आत्वे पूर्वत्वं स्याद् आह्वः प्रह्व इति ॥

( समाधानभाष्यम् )

अस्त्यत्र विशेषः । आकारान्तलक्षणः कप्रत्ययविधिः । तेनानेनावश्यमात्वं प्रतीक्ष्यम् । लिट् पुनरविशेषेण धातुमात्राद्विधीयते । "नित्यं प्रसारणं ह्वो यण् वार्णादाङ्गं न पूर्वत्वं हि ।
योनादिष्टादचः पूर्वस्तत्कार्ये स्थानिवत्त्वं हि ॥
प्रोवाच भगवान्कात्यस्तेनासिद्धिर्यणस्तु ते ।
आतः को लिण्नैङः पूर्वः सिद्ध आह्वस्तथा सति ॥" आतोऽनुपसर्गे ॥ ३ ॥

( प्रदीपः ) आकारान्तलक्षण इति । पर्युदासाश्रयेऽपि ह्वावामश्चेतिज्ञापकादाकारान्तलक्षणे कप्रत्यये कर्तव्ये पूर्वमेवात्वं भवति । ततस्तन्निमित्तः प्रत्यय इति भावः ॥

उक्तार्थसंग्रहार्थश्लोकाः—नित्यं प्रसारणमिति । कृताकृतप्रसङ्गित्वादिति भावः ॥ तत्र कृते पूर्वत्वं क्रियतामाकारलोप इति वार्णादाङ्गमिति वचनादाकारलोपो भवति, न तु पूर्वत्वम् । तत्राकारलोपस्य स्थानिवत्त्वादुवङ् नास्तीति ह्वो यण् प्रवर्तेत इत्यर्थः ॥ इतर आह—योऽनादिष्टादिति ॥ तेनासिद्धिरिति । असिद्धवदत्राभादित्याकारलोपस्येत्यर्थः । तस्यासिद्धत्वाद्यणादेशो भवतीत्यर्थः ॥ जुहुवतुरित्यत्रापि तथैव यण् स्यादित्याह—एङः पूर्व इति । आह्व इत्यत्रापि तथैव पूर्वत्वं स्यादित्याह—आतः क इति ॥ लिण्नेति । लिड् धातुमात्राद्विधीयते न त्वाकारान्तादेवेत्यर्थः ॥ ३ ॥

( उद्द्योतः ) पर्युदासाश्रयेऽपीति । अन्यथाऽन्योन्याश्रयः स्यादिति भावः ॥ आभीयासिद्धानित्यत्वेनापि जुहुवतुरिति सिध्यति । ह्वः के कृते आलोपात्पूर्वं संप्रसारणं यतो नित्यम् ॥ नित्यत्वं दर्शयति—कृतेति । एवं च ह्वो यण् फलतीत्यर्थः ॥ वार्णादित्यादि व्याचष्टे—तत्र कृत इति । यतोऽनादिष्टादचः पूर्वत्वे स्थानिवत्त्वमतो भगवान्कात्यः संप्रसारणिभ्यो डं प्रोवाचेत्यन्वयः ॥ प्रत्याख्यानवाद्याह—तेनासिद्धिर्यणस्तुत इति । तेनाभादितिसूत्रेण यतोऽसिद्धिरतो यणस्त्वित्यर्थः । प्रोवाच भगवान् कात्य इत्युक्त्या डविधानस्याह्वसिद्ध्यर्थमावश्यकता ध्वनिता ॥ तथा चेदमेव ज्ञापक-

---

१ उकारस्यानादिष्टादचः पूर्वत्वाभावेनेति शेषः । ( र. ना. )

२ संप्रसारणात्परो य एङ् तस्य स्थाने पूर्वो भवतीत्यर्थः । एङ इति षष्ठ्यन्तम् । पदान्तादतीत्यत्रानुवृत्तं तु पञ्चम्यन्तं संपद्यते इति भावः । ( र. ना. )

३ आत्वाकारलोपापेक्षया संप्रसारणं नित्यं, कृताकृतप्रसङ्गित्वात्, तत्र कृते वार्णादाङ्गमिति परिभाषया पूर्वत्वं नहि भवति, किन्त्वाकार लोप एव भवति, ततश्चाकारलोपस्य स्थानिवत्त्वादुवङ् नास्तीति ह्वो यण् प्रवर्तेत इत्यर्थः । हि यतो योऽनादिष्टादचः पूर्वः तस्य कार्ये स्थानिवत्त्वं भवति नचात्रोकारोऽनादिष्टादचः पूर्व इति तस्योवङि कार्ये आलोपस्य स्थानिवत्त्वाप्राप्त्याऽऽह्व इत्यादिरूपासिद्ध्या भगवान् कात्यः प्रसारणिभ्यो डं प्रोवाचेत्यन्वयः । वार्तिकप्रत्याख्यावाद्याह—तेन, आभादिति सूत्रेण आकारलोपस्य यतोऽसिद्धिरत उवङोऽप्राप्त्या ते आह्व इत्यादौ त्वयोदाह्रियमाणो यण् भवत्वित्यर्थः । तथा सति वार्तिक साध्य आह्वः सिद्ध इति योजना । ननु जुहुवतुरित्यत्रापि तथैव यण् स्यादित्याशङ्क्याह—एङः पूर्व इति । एङः पदान्तादतीत्यत्र पूर्वोक्तेन योगविभागेनेति भावः । ननु आह्व इत्यत्रापि तथैव पूर्वत्वं स्यादित्यत आह—आतः क इति । आदन्तादेव कविधानसामर्थ्यान्नैङः पूर्वत्वमिति भावः । जुहुवतुरित्यादौ तु नैवं वक्तुं शक्यत इत्याह—लिण् नेति । लिट् धातुमात्राद् विधीयते नत्वाकारान्तादेवेत्यर्थः । ( र. ना. )

४ अशितीत्यत्रेति शेषः । अशितीति विषयसप्तमीत्यपि बोध्यम् । ( र. ना. )

५ पर्युदासाश्रयणेऽपि विषयसप्तमीत्वानाश्रयणे इत्यर्थः । विषयसप्तमीत्वानाश्रयणे हि कप्रत्ययं विनाऽऽत्वं न स्यादात्वं विना च कप्रत्ययो न स्यादित्यन्योन्याश्रय इति भावः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मीदृशविषये आभीयासिद्धत्वाभावस्य वार्णादाङ्गमित्येतदभावस्य चेति जुहुवतुरित्यादिसिद्धिः ॥ योगविभागस्य तथापि कर्तव्यत्वेन गौरवस्य तदवस्थत्वादिति ध्वनितम्। एवं च तेनासिद्धिरित्युक्तिरेकदेशिनः प्रौढ्येति च ध्वनितम् ॥ ३ ॥

(४७१ कप्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. ३ सूत्रम्)

## ७७१ सुपि स्थः ॥ ३।२।४ ॥

(२००९ भावार्थविधिवार्तिकम् ॥ १ ॥)

### ॥ * ॥ सुपि स्थो भावे च ॥ * ॥

(भाष्यम्) सुपिस्थ इत्यत्र भावे चेति वक्तव्यम्। इहापि यथा स्यात्—आखूत्थो वर्तते। शयेनोत्थः शलभोत्थः ॥

(आक्षेपभाष्यम्)

तर्हि वक्तव्यम्।

(प्रत्याख्यानभाष्यम्)

न वक्तव्यम्।

(२०१० प्रत्याख्यानसाधकवार्तिकम् ॥ २ ॥)

### ॥ * ॥ योगविभागात्सिद्धम् ॥ * ॥

(भाष्यम्) योगविभागः करिष्यते—"आतोऽनुपसर्गे कः" आतोऽनुपसर्गे को भवति। ततः—"सुपि" सुपि चातः को भवति। कच्छेन पिबति कच्छपः। कटाहेन पिबति कटाहपः। द्वाभ्यां पिबति द्विपः। ततः—"स्थः" स्थश्च सुपि को भवति ॥ किमर्थमिदम्?। भावे यथा स्यात् ॥

(प्रदीपः) सुपि स्थः ॥ ४ ॥ कच्छेन पिबतीति। अत्र केचिदाहुः—कच्छं पिबतीत्येवमसन्तमप्यवयवार्थमाश्रित्य कर्मोपपदः को विधास्यते किं योगविभागेन। नैतत्साधूच्यते। कच्छेन पिबति द्वाभ्यां पिबति इत्येतस्मिन् सत्येवार्थेऽसदर्थाश्रयेण रूढिशब्दानामपि व्युत्पत्तेरयुक्तत्वात्। यत्र तु सर्वात्मनाऽर्थानुगमो नास्ति यथा तैलपायिकेति तत्रैवासदर्थाश्रयः व्युत्पत्तिः क्रियते ॥

भावे यथा स्यादिति। अत्राप्याहुः—घञर्थे कविधानमिति कः सिद्ध इति। एवं तर्हि नित्यसमासार्थं स्थ इत्यनेन उपपदाश्रयः को विधीयते। अन्यथा पाक्षिकः षष्ठीसमासः स्यात् ॥

(उद्योतः) सुपि स्थः ॥ ४ ॥ भाष्ये भावे चेति चात्कर्तरि। कच्छेन पिबतीति अकर्मण्युपपदे प्रत्यार्थं सुपीति योगविभाग इति भावः ॥ सत्येवार्थे इति। एवशब्दो वाक्यालङ्कारे। संभवति योग्येऽर्थेऽसदर्थाश्रयेण व्युत्पादनमयुक्तमित्यर्थः ॥ नित्यसमासेति। उपपदमतिङिति नित्यमनेनेति भावः। घञर्थे कविधानमित्येतदुदाहरणपरे* 'स्था-स्ना-पा-व्यधि-हनियुध्यर्थमित्यत्र स्थाग्रहणं तु कर्माद्यर्थमिति बोध्यम् ॥

(आक्षेपभाष्यम्)

कुतो नु खल्वेतद् भावे भविष्यति, न पुनः कर्मादिष्वपि कारकेष्विति।

(समाधानभाष्यम्)

योगविभागादयं कर्तुरपकृष्यते। न चान्यस्मिन्नर्थे आदिश्यते। "अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ती"ति। तद्यथा "गुप्तिज्किद्भ्यः सन्" "यावादिभ्यः कन्" इति। सोऽसौ स्वार्थे भवन्भावे भविष्यति ॥ सुपि स्थः ॥ ४ ॥

(प्रदीपः) अनिर्दिष्टार्था इति। प्रत्यासन्नत्वात्तस्यार्थस्येति भावः ॥ यद्येवं स्थ इत्यनेन भावे विधीयमानः कर्तरि[२] बाधेत। तथा च समस्थ इति कर्तरि न स्यात् ॥ नैष दोषः। यद्यत्र साक्षाद्भावशब्दोपादानेन भावे को विधीयेत[३]। तदा भावः कर्तारं तक्रकौण्डिन्यन्यायेन बाधेत। सामर्थ्यात्त्वयं भावे व्यवतिष्ठत इति भावेन न बाध्यते कर्ता ॥ ४ ॥

(उद्योतः) प्रत्यासन्नत्वादिति। अत एवास्य नित्यमेकत्वमेव, न तु घञादिवाच्यवद् द्विवचनयोगोपीति भावः ॥ तक्रकौण्डिन्येति। विधेयविषय एव स न्यायो नानुवादविषय इत्यन्ये[४] ॥४॥

(४७२ कप्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. ४)

## ७७२ तुन्दशोकयोः परिमृजापनुदोः ॥ ३।२।५ ॥

(२०११ अर्थपरिसंख्यावार्तिकम् ॥ १ ॥)

### ॥ * ॥ तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः ॥ * ॥

(भाष्यम्) तुन्दशोकयोः परिमृजापनुदोरित्यत्र "आलस्यसुखाहरणयोः" इति वक्तव्यम्। तुन्दपरिमृजोऽलसः। शोकापनुदः पुत्रो जातः। यो हि तुन्दं परिमार्ष्टि तुन्दपरिमार्जः स भवति। यश्च शोकमपनुदति शोकापनोदः स भवति ॥

(प्रदीपः) तुन्द ॥ ५ ॥ आलस्यसुखाहरणयोरिति। आलस्ये गम्यमाने सुखोत्पादने च प्रत्ययो भवतीत्यर्थः। तत्र सामर्थ्यादलसे कर्तरि सुखस्य चाहर्तरि प्रत्ययो भवतीत्युक्तं भवति ॥ शोकापनोद इति। यः संसारानित्यतोद्भावनादिना शोकमेव निवर्तयति न तु सुखमुत्पादयति स शोकापनोदः ॥ ५ ॥

१ एकः पदान्तादतीत्यमेति शेषः। (र. ना.)

२ कर्तरि 'कम्' इति शेषः ॥

३ 'विधीयते' इति पाठे न चमत्कारः ॥

४ नचात्र भावोऽर्थो विधीयत इति भावः। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(उद्द्योतः) तुन्दशो ॥ ५ ॥ तत्र सामर्थ्यादिति । एवं हि सति ते[1] गम्ये भवत इत्यर्थः ॥ तुन्दपरिमृजे मृजेरचि क्किति वेति पक्षे वृद्धिः प्राप्नोति सा भवत्येव सत्यभिधाने । यत्तु 'अचि' इत्येव वक्तव्ये 'अजादौ' इत्युक्तेरादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिरिति ॥ तत्र तत्र तदभावात् । यस्मिन्विधिरिति परिभाषालभ्यादिग्रहणस्यैव तत्रानुवादाच्च । अत्रत्यभाष्यस्वरसात्तत्र क्किस्पदेनातिदेशिकक्किितोरेव ग्रहणम् ॥ व्याकरणान्तरे संक्रमपदेन तयोरेव ग्रहणाच्चेति परे ॥

( २०१२ कप्रत्ययविधिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ॥ * ॥

(भाष्यम्) कप्रकरणे मूलविभुजादिभ्य उपसंख्यानं कर्तव्यम् । मूलविभुजो रथः । नखमुचानि[2] धनूंषि । काकगुहास्तिलाः । सरसीरुहं कुमुदम् ॥ तुन्दशोकयोः ॥ ५ ॥

(उद्द्योतः) मूलविभुजादिभ्य इति । तादर्थ्ये चतुर्थी ॥ काकगुहा इति । काकेभ्यो गूहितव्या इत्यर्थः ॥ घञर्थे कविधानमित्यनेनापि सिध्यत्येतत् । सरसि सरस्यां वा रोहति । कौ मोदत इत्यर्थः ॥ ५ ॥

( ४७३ टक्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. ५ )

## ७७५ गापोष्टक् ॥ ३ । २ । ८ ॥

( २०१३ उपपदपरिसंख्यावार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सुराशीध्वोः पिबतेः ॥ * ॥

(भाष्यम्) सुराशीध्वोः [पिबते[3]]रिति वक्तव्यम् । इह मा भूत्—क्षीरपा ब्राह्मणीति ॥ पिबतेरिति च वक्तव्यम् । या हि सुरां पाति सुरापा सा भवति ॥

(प्रदीपः) गापोष्टक् ॥ ८ ॥ पिबतेरिति । लुग्विकरणपरिभाषालभ्यार्थकथनम् ॥

( २०१४ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ बहुलं तणि ॥ * ॥

(भाष्यम्) बहुलं तणीति वक्तव्यम् ।

किमिदं तणीति ? ।

संज्ञाछन्दसोर्ग्रहणम् । या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति । या ब्राह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति ॥ गापोष्टक् ॥ ८ ॥

(उद्द्योतः) गापो ॥ ८ ॥ बहुलं तणीति । पक्षे आतोऽनुपसर्गे इति कः । या ब्राह्मणी सुरापेति सुरां पिबतीत्यर्थे एवायं प्रयोग इति बाहुलकाश्रयणम् ॥ ८ ॥

( अथ अच्प्रकरणम् )

( ४७४ अच्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. ६ )

## ७७६ हरतेरनुद्यमनेऽच् ॥ ३।२।९ ॥

( २०१५ अच्प्रत्ययविधिवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम् ॥ * ॥

(भाष्यम्) अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानं कर्तव्यम् । शक्तिग्रहः । शक्ति ॥ लाङ्गल—लाङ्गलग्रहः । लाङ्गल ॥ अङ्कुश—अङ्कुशग्रहः । अङ्कुश ॥ यष्टि—यष्टिग्रहः । यष्टि ॥ तोमर—तोमरग्रहः । तोमर ॥ घट—घटग्रहः । घट ॥ घटी—घटीग्रहः । घटी ॥ धनुष्—धनुर्ग्रहः । धनुष् ॥

(प्रदीपः) हरतेरनु ॥ ९ ॥ अच्प्रकरणे इति । घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् ॥ ९ ॥

(उद्द्योतः) हरते ॥ ९ ॥ लिङ्गेति । तत्फलं तु—देवदत्तसखी इत्यादौ टँजभावः ॥

( २०१६ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सूत्रे च धार्यर्थे ॥ * ॥

(भाष्यम्) सूत्रे च धार्यर्थे ग्रहेरुपसंख्यानं कर्तव्यम् । सूत्रग्रहः ॥ धार्यर्थ इति किमर्थम् ? । यो हि सूत्रं गृह्णाति सूत्रग्राहः स भवति ॥ हरतेरनुद्यमने ॥ ९ ॥

(उद्द्योतः) धार्यर्थे इति । ग्रहणपूर्वकधारणे लाक्षणिकाद् ग्रहेरित्यर्थः ॥ ९ ॥

( ४७५ अच्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. ७ )

## ७८० स्तम्बकर्णयोरमिजपोः[5] ॥ ३।२।१३ ॥

( २०१७ अर्थपरिसंख्यावार्तिकम् ॥ १ ॥ )

## ॥ * ॥ स्तम्बकर्णयोर्हस्तिसूचकयोः ॥ * ॥

(भाष्यम्) स्तम्बकर्णयोरित्यत्र हस्तिसूचकयो-

---

१ आलस्यसुखाहरणे इत्यर्थः । ( र. ना. )

२ अतिकर्कशतया नखैश्छेत्तुमशक्यत्वाद् नखैर्मुच्यन्ते यानि तानि नखमुचानीत्यर्थः । ( र. ना. )

३ वार्तिकं दृष्ट्वा अग्रिमभाष्यमदृष्ट्वा वर्धितोऽयं कोष्ठकान्तर्गतपाठ इति बोध्यम् ।

४ 'राजाहः सखिभ्यः' इति ।

५ स्तम्बकर्णयो रमिजपि कर्मत्वासंभवात् 'कर्मणि' इति न संबध्यते । किंतु सिंहावलोकनेन 'अधिकरणे' इत्यस्य संबन्धो भवेदिति दाधिमथाः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


रिति वक्तव्यम् । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः । स्तम्बेरन्ता कर्णे जपितेत्येवान्यत्र ॥ स्तम्बकर्णयोः ॥ १३ ॥

( ४७६ अच्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. ८ )

## ७८१ शमि धातोः संज्ञायाम् ॥ ३ । २ । १४ ॥

( आक्षेपभाष्यम् )

धातुग्रहणं किमर्थम् ? ।

( २०१८ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) शमि संज्ञायां धातुग्रहणं क्रियते कृञो हेत्वादिषु टो मा भूदिति । शमि संज्ञायां धातोरज्भवतीत्यस्यावकाशः शंभवः शंवदः । टस्यावकाशः—श्राद्धकरः पिण्डकरः । शंकरा नाम परिव्राजिका शंकरा नाम शकुनिका तच्छीला च, तस्यामुभयं प्राप्नोति । परत्वाटः स्यात् ॥ धातुग्रहणसामर्थ्यादजेव भवति ॥

( वार्तिकोक्तप्रयोजनप्रत्याख्यानभाष्यम् )

कुरणवाडवस्त्वाह—नैषा शंकरा । शंगरैषा ॥ कुत एतत् ? । गृणातिः शब्दकर्मा । तस्यैष प्रयोगः ॥ शमि धातोः ॥ १४ ॥

( प्रदीपः ) शमि धातोः ॥ १४ ॥ शंगरेति । पृषोदरादित्वात्संज्ञायां गकारस्य ककारव्यत्ययेन शंकराशब्दस्य सिद्धत्वात्तदर्थं धातुग्रहणं न कर्तव्यमित्यर्थः ॥ १४ ॥

( उद्योतः ) शमिधा ॥१४॥ ककारव्यत्ययेनेति । नैषा शङ्करेति भाष्यविरोधाच्चिन्त्यमेतत् ॥ धातुग्रहणं न कर्तव्यमिति । टज्बाधनार्थं न कर्तव्यमित्यर्थः ॥ क्विपो बाधनार्थं तु तदावश्यकमिति स्थः क चेति सूत्रे भाष्ये स्पष्टम् ॥ १४ ॥



( ४७७ अच्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. ९ )

## ७८२ अधिकरणे शेतेः ॥ ३।२।१५ ॥

( २०१९ उपपदपरिसंख्यावार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अधिकरणे शेतेः पार्श्वादिषूपसंख्यानम् ॥ * ॥

( भाष्यम् ) अधिकरणे शेतेः पार्श्वादिषूपसंख्यानं कर्तव्यम् । पार्श्वशयः पृष्ठशयः उदरशयः ॥

( २०२० उपपदपरिसंख्यावार्तिकम् ॥ २ ॥ )

### ॥ * ॥ दिग्धसहपूर्वाच्च ॥ * ॥

( भाष्यम् ) दिग्धसहपूर्वाच्चेति वक्तव्यम् । दिग्धसहशयः ॥

( प्रदीपः ) अधिकर ॥ १५ ॥ दिग्धसहपूर्वाच्चेति । दिग्धसहशब्दस्य समुदायस्य पूर्वत्वमाश्रीयते न तु प्रत्येकम् । तत्र दिग्धेन सह शेत इत्यचि कृते मयूरव्यंसकादित्वात् समासः ॥

( उद्योतः ) अधिकरणे शेतेः ॥ १५ ॥ मयूरव्यंसकेति । दिग्धसहपूर्वता प्रायोगिकी बोध्या । पृथक्दिग्धसहशब्दस्य सिद्ध्यभावात् ॥

( २०२१ उपपदन्यूनतापूरकवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ उत्तानादिषु कर्तृषु ॥ * ॥

( भाष्यम् ) उत्तानादिषु कर्तृष्विति वक्तव्यम् । उत्तानशयः । अवमूर्धशयः ।

( २०२२ उपपदवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ गिरौ डश्छन्दसि ॥ * ॥

( भाष्यम् ) गिरावुपपदे छन्दसि डो वक्तव्यः । गिरौ शेते गिरिशः ॥

( २०२३ प्रत्याख्यानवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ तद्धितो वा ॥ * ॥

( भाष्यम् ) तद्धितो वा पुनरेष भविष्यति । गिरौ शेते गिरिरस्यास्तीति गिरिशः ॥ अधिकरणे ॥१५॥

( प्रदीपः ) तद्धितो वेति । यो गिरौ शेते गिरिरस्यास्तीति लोमादिषु दर्शनात् शप्रत्ययः ॥ अन्ये त्वाहुः—गिरौ गिरौ शेत इति संख्यैकवचनादिति सप्तम्यन्ताच्छस् प्रत्ययः । व्युत्पत्तिर्हि यथाकथंचित्कर्तव्या उपायानामनियमात् ॥ तदुक्तं हरिणा—

वैरवासिष्ठगिरिशास्तथैकागारिकादयः । कैश्चित्कथंचिदाख्याता निमित्तावधिसंकरैरिति । छन्दसीति वचनाद्भाषायां गिरिशशब्दस्यासाधुत्वमाहुः ॥ १५ ॥

( उद्योतः ) गिरौ शेते इत्यर्थे तद्धितस्याविधानादाह—यो गिराविति ॥ अन्ये त्वाहुरिति । अत्रारुचिस्त्वदन्तशब्दासिद्धिरव्ययत्वापत्तिः । शसः स्वार्थिकत्वेन गिरौ गिरौ शेत इति विग्रहासङ्गतिश्च ॥ वैरेति । वीरस्येदं वीराया वा वीरादागतं तत्र भवमिति । वसिष्ठस्येदं तेन कृतं प्रोक्तं वा । गिरौ शेते गिरिं श्यति वा गिरिशः ॥ निमित्तमर्थः । अवधिः प्रत्ययानां प्रकृतिस्तत्संकरैरित्यर्थः ॥१५॥

( टप्रत्ययप्रकरणम् )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

(४७८ टप्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. १० सू०)

## ७८३ चरेष्टः ॥ ३।२।१६ ॥

## [७८४ भिक्षासेनादायेषु च ॥ ३।२।१७ ॥]

(आक्षेपभाष्यम्)

इह कस्मान्न भवति—कुरूंश्चरति पञ्चालांश्चरतीति?।

(प्रदीपः) चरेष्टः ॥ १६ ॥ कुरूंश्चरतीति। यस्य कुरव एव प्राप्याः स कुरूंश्चरतीत्युच्यते। यस्तु कुरुषु भ्रमति स कुरुषु चरतीत्युच्यते ॥ १६ ॥

(उद्द्योतः) चरेष्टः ॥ १६ ॥ कुरूंश्चरतीति। तान्गच्छतीत्यर्थः ॥ यद्यर्थभेदो न स्यात्तर्हि द्वितीयान्तात्प्रत्ययानुत्पत्तिप्रतिपादनं व्यर्थं स्यादत आह—यस्त्विति ॥

(समाधानभाष्यम्)

अधिकरण इति वर्तते ॥

(आक्षेपभाष्यम्)

ननु च कर्मणीत्यपि वर्तते। तत्र कुत एतद् 'अधिकरणे भविष्यति' न पुनः कर्मणीति ॥

(२०२४ समाधानवार्तिकम् ॥ १ ॥)

### ॥ * ॥ चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य ॥ * ॥

(भाष्यम्) यदयं "भिक्षासेनादायेषु च" इति चरेर्भिक्षाग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न भवति कर्मणीति' ॥ चरेष्टः ॥ १६ ॥

(उद्द्योतः) भिक्षाचरे चरतिश्चरणकरणकार्जने लाक्षणिकः भक्षणार्थो वा। तत्रैव चायं प्रयोग इष्यते। भाष्य²प्रामाण्यात्। एतेन भिक्षया हेतुना चरतीत्यर्थकभिक्षाचरप्रयोगसाधकेन तत्सूत्रेण विपरीतं कर्मणीत्यस्य संबन्ध एव ज्ञाप्येतेति परास्तम्। सेनाग्रहणस्य ज्ञापकत्वं तु नोक्तम्। सेनां चरति सेनायां वेत्यर्थद्वयेपीष्टेः। एवं चाधिकरण इति कर्मणीति चोभयोरप्यधिकारो यथायोगं च संबन्ध इति ध्वनितम् ॥ १६ ॥



(४७९ कृञष्ट प्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. ११ सूत्रम्)

## ७८८ दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु ॥ ३।२।२१ ॥

(२०२५ अच्प्रत्ययविधिवार्तिकम् ॥ १ ॥)

### ॥*॥ किंयत्तद्बहुषु कृञोऽज्विधानम् ॥*॥

(भाष्यम्) किंयत्तद्बहुषु कृञोज्विधानं कर्तव्यम्। किंकरा यत्करा तत्करा बहुकरा ॥ दिवाविभा ॥२१॥

(प्रदीपः) दिवाविभा ॥२१॥ किं यदिति। वार्तिकेन सूत्रस्य बाधितत्वाट्टस्याभावे किंकरोत्यसाधुरित्याहुः ॥२१॥

(उद्द्योतः) दिवा विभा ॥ २१ ॥ इत्याहुरिति। अत्रारुचिबीजं तु वार्तिकस्य हेत्वादौ टबाधनेन चरितार्थतया सूत्रस्थकिमादिग्रहणस्य सार्थक्या³नुपपादनात् ॥ २१ ॥

(अथेन्प्रत्ययप्रकरणम्)

(४८० इन्प्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. १२ सू.)

## ७९१ स्तम्बशकृतोरिन् ॥ ३।२।२४ ॥

(२०२६ अर्थपरिसंख्यावार्तिकम् ॥ १ ॥)

### ॥ * ॥ स्तम्बशकृतोर्व्रीहिवत्सयोः ॥ * ॥

(भाष्यम्) स्तम्बशकृतोरित्यत्र "व्रीहिवत्सयोरिति वक्तव्यम्"। स्तम्बकरिर्व्रीहिः शकृत्करिर्वत्सः ॥ स्तम्बशकृतो ॥ २४ ॥

(४८१ इन्प्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. १३)

## ७९३ फलेग्रहिरात्मंभरिश्च ॥ ३।२।२६ ॥

(आक्षेपभाष्यम्)

आत्मंभरिरिति किं निपात्यते।

(समाधानभाष्यम्)

आत्मनो मुम् भृञश्चेन्प्रत्ययः ॥

(न्यूनताप्रदर्शकभाष्यम्)

अत्यल्पमिदमुच्यते 'आत्मनः' इति।

(२०२७ न्यूनतापूरकवार्तिकम् ॥ १ ॥)

### ॥ * ॥ भृञः कुक्ष्यात्मनोर्मुम् च ॥ * ॥

(भाष्यम्) भृञः 'कुक्ष्यात्मनोर्मुम् चेति वक्तव्यम्'। कुक्षिंभरिः। 'आत्मंभरिश्चरति यूथमसेवमानः' ॥ फलेग्रहिरात्मं ॥ २६ ॥

---

१ यदि हि चरेष्ट इत्यत्र कर्मणीत्यस्य संबन्धः स्यात्तदा तेनैव भिक्षां चरतीत्यर्थे भिक्षाचरस्य सिद्धौ भिक्षाग्रहणं व्यर्थमेव स्यादिति भावः। (र. ना.)

२ ज्ञापकतापरेत्यादिः। (र. ना.)

३ किंकरीति साधुरेवेति भावः। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

(उद्द्योतः) फलेग्रहि ॥२६॥ भाष्ये आत्मनो मुमिति। समासे कृते न लोपे च कृते ततः प्राग्वा मुम् निपात्य इत्यर्थः॥ २६॥

(अथ खश्प्रत्ययप्रकरणम्)

(४८२ खश्प्रत्ययविधिसूत्रम् ॥ ३। २। १ आ. १४ सू.)

## ७९५ एजेः खश् ॥ ३। २। २८॥

(२०२८ खश्प्रत्ययविधिवार्तिकम् ॥ १॥)

॥ * ॥ खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः ॥ * ॥

(भाष्यम्) खश्प्रकरणे वातशुनीतिलशर्धेषु अजधेट्तुदजहातिभ्य इति वक्तव्यम्। वातमजाः[1] मृगाः। वात॥ शुनी—शुनिंधयः। शुनी॥ तिल—तिलंतुदः[2]। तिल॥ शर्ध—शर्धंजहा[3] माषाः। शर्ध॥ एजेः खश्॥ २८॥

(४८३ खश्प्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. १५ सूत्रम्)

## ७९६ नासिकास्तनयोर्ध्माधेटोः ॥ ३। २। २९॥

## ७९७ नाडीमुष्ट्योश्च[4] ॥ ३। २। ३०॥

(२०२९ करणीयसूत्रपाठदर्शकवार्तिकम् ॥ १॥)

॥ * ॥ स्तने धेटः ॥ * ॥

(भाष्यम्) स्तने धेट इति वक्तव्यम्। स्तनंधयः। ततो,

(प्रदीपः) नासिका ॥ २९॥ स्तने धेट इति। यथासंख्याभावार्थं एतावान्योगः कर्तव्य इत्यर्थः॥

(उद्द्योतः) नासिका ॥ २९॥ एतावान्योग इति। एतदन्वाख्यापकं वार्तिकमित्यर्थः॥

(२०३० करणीयसूत्रपाठदर्शकवार्तिकम् ॥ २॥)

॥ * ॥ मुष्टौ ध्मश्च ॥ * ॥

(भाष्यम्) मुष्टौ ध्मश्च धेटश्चेति वक्तव्यम्। मुष्टिंधमः मुष्टिंधयः।

(उद्द्योतः) मुष्टौ ध्मश्चेति वार्तिकं नाडीमुष्ट्योश्चेति पठितसूत्रस्य व्यवस्थापकमेव। नैतावता तत्सूत्रमप्रामाणिकमिति भ्रमः कार्यः। यथा सङ्ख्यसूत्रस्यभाष्ये स्पष्टं तत्सूत्रोपादानात्[5]। यद्यपि नाडीमुष्टिविषये तत्सूत्रे यथासङ्ख्यमुक्तं तथाप्येतद्भाष्यवार्तिकविरोधात्तद्भाष्यं प्रौढिवाद इति बोध्यम्। एवं चात्र नाडीशब्देन ध्म एव संबन्धो मुष्टिशब्देनोभयोरिति बोध्यम्॥

(२०३१ करणीयसूत्रपाठदर्शकवार्तिकम् ॥ ३॥)

॥ * ॥ नासिकायां ध्मश्च धेटश्च ॥ * ॥

(भाष्यम्) नासिकायां ध्मश्च धेटश्चेति वक्तव्यम्। नासिकंधमः। नासिकंधयः॥

(न्यूनताप्रदर्शकभाष्यम्)

अत्यल्पमिदमुच्यते।

(२०३२ न्यूनतापूरकवार्तिकम् ॥ ४॥)

॥*॥ नासिकानाडीमुष्टिघटीखारीषु[6] ॥*॥

(भाष्यम्) नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम्।

नासिकंधयः नासिकंधमः। नासिका॥ नाडिंधयः नाडिंधमः। नाडी॥ मुष्टिंधयः मुष्टिंधमः। मुष्टि॥ घटिंधमः घटिंधयः। घटी॥ खारिंधयः खारिंधमः। खारी॥ नासिकास्तन॥ २९॥

(प्रदीपः) वार्तिकस्याप्यव्याप्तिमुद्भावयन् भाष्यकार आह—अत्यल्पमिति॥२९॥

(उद्द्योतः) वार्तिकस्यापीति। अपिना नाडीमुष्ट्योश्चेति सूत्रस्यापि॥ पूर्ववार्तिकदूषणेन नाडीशब्दसंबन्धोऽप्युभयोरित्याह—नासिका नाडीत्यादि। अत्र ध्मश्च धेटश्चेति वर्तते॥ २९॥

(अथ खच्प्रकरणम्)

(४८४ खच्प्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. १६ सू.)

## ८०५ प्रियवशे वदः खच् ॥ ३।२।३८॥

(२०३३ खच्प्रत्ययवार्तिकम् ॥ १॥)

॥ * ॥ खच्प्रकरणे गमेः सुपि उपसंख्यानम् ॥ * ॥

(भाष्यम्) खच्प्रकरणे गमेः सुपि उपसंख्यानं कर्तव्यम्। मितंगमो हस्ती मितंगमा हस्तिनी॥

---

1 वातं वातगमनं यथा भवति तथाऽजन्ति गच्छन्तीति विग्रहः। वातशब्दस्य वातकर्तृके गमने लक्षणा, अभेदान्वयबोधोत्तरं सादृश्ये पर्यवसानम्। वातगमनसदृशं गमनं कुर्वन्तीत्यर्थः। (र. ना.)

2 तिलान् तुदति लुञ्चति निष्पीडयतीत्यर्थो वा। (र. ना.)

3 जहातिरन्तर्भावितण्यर्थः। (र. ना.)

4 कोष्ठकान्तर्गतः सूत्रपाठः कुत्रापि नोपलभ्यते॥ तथापि 'उच्चैरुदात्तः' 'नीचैरनुदात्तः' इत्यनयोः 'दिङ्नामान्यन्तराले' 'तेन सहेति तुल्ययोगे' इत्यनयोश्चैकविचारविषयत्वेन सह लेखः कृतस्तथाऽत्राप्युचित एवोभयोर्लेख इति धीमतां प्रार्थना॥

5 'अष्टाध्यायी' इत्यादिः॥

6 'खरी' गर्दभी। जातिलक्षणो ङीष्॥ खारीत्यन्ये पठन्ति। स च परिमाणवचनः॥ इति पदमञ्जरीदर्शनेन ज्ञायते—खारीस्थाने खरीति काशिकायां पाठः॥ छिन्नभाष्यपुस्तकेष्वपि खरीत्येवोपलभ्यते॥ कौमुदीकृता तूभयग्रहणमेव कृतम्—'घटीखारीखरीषु' इति॥

7 अयं कोष्ठकान्तर्गतपाठो यद्यपि सर्वपुस्तकेषु 'मुष्टौ ध्मश्चेति वार्तिकम्' इत्यतः प्राक् समुपलभ्यते तथापि तत्र पाठं लेखकप्रमादजं ज्ञात्वा योग्यस्थाने स्थापित इति बोध्यम्॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( २०३४ वार्तिकम् ॥ २ ॥ )

॥ * ॥ विहायसो विह च ॥ * ॥

( भाष्यम् ) विहायसो विह इत्ययमादेशो वक्तव्यः खच्च । विहंगमः ॥

( २०३५ वार्तिकम् ॥ ३ ॥ )

॥ * ॥ खच डिद्वा ॥ * ॥

( भाष्यम् ) खच्च डिद्वा वक्तव्यः । विहंगमः ॥

( २०३६ वार्तिकम् ॥ ४ ॥ )

॥ * ॥ डे च ॥ * ॥

( भाष्यम् ) डे च विहायसो विह इत्ययमादेशो वक्तव्यः विहगः ॥ प्रियवशे ॥ ३८ ॥

( प्रदीपः ) प्रियवशे ॥ ३८ ॥ डेचेति । विहायःशब्दपूर्वाद् गमेः*अन्येष्वपि दृश्यते* इति डप्रत्यये सति विहादेशः ॥ ३८ ॥

---

( अथ डप्रकरणम् )

( ४८५ गमेर्डप्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. १७ सू. )

## ८१५ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ३ । २ । ४८ ॥

( २०३७ उपपदन्यूनतापूरकवार्तिकम् ॥ १ ॥ )

॥ * ॥ डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानं कर्तव्यम् । सर्वत्रगः पन्नगः ॥

( २०३८ न्यूनतापूरकवार्तिकम् ॥ २ ॥ )

॥ * ॥ उरसो लोपश्च ॥ * ॥

( भाष्यम् ) उरसो लोपश्च वक्तव्यः । उरगः ॥

( २०३९ न्यूनतापूरकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ सुदुरोरधिकरणे ॥ * ॥

( भाष्यम् ) सुदुरोरधिकरणे डो वक्तव्यः । सुगः दुर्गः ॥

( २०४० न्यूनतापूरकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ निसो देशे ॥ * ॥

( भाष्यम् ) निसो देशे डो वक्तव्यः । निर्गो देशः ॥ अपर आह—

( २०४१ अपरिसंख्यातोपपदवार्तिकम् ॥ ५ ॥ )

॥ * ॥ डप्रकरणे अन्येष्वपि दृश्यते ॥ * ॥

( भाष्यम् ) डप्रकरणे अन्येष्वपि डो भवतीति वक्तव्यम् । 'तत्र स्त्र्यगारगः अश्नुते' 'यावद्गाय ग्रामगः' 'ध्वंसते गुरुतल्पग' इति ॥ अन्तात्यन्ता ॥४८॥

---

( ४८६ डप्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. १८ सू. )

## ८१६ आशिषि हनः ॥ ३ । २ । ४९ ॥

( २०४२ अनुप्रत्ययादिविधिवार्तिकम् ॥ १ ॥ )

॥ * ॥ दारावाहनोणन्त्यस्य च टः संज्ञायाम् ॥ * ॥

( भाष्यम् ) दारावुपपदे आङ्पूर्वाद्धन्तेरण्वक्तव्यः । अन्त्यस्य च टो वक्तव्यः । दार्वाघाटस्ते वनस्पतीनाम् ॥

( २०४३ वार्तिकम् ॥ २ ॥ )

॥ * ॥ चारौ वा ॥ * ॥

( भाष्यम् ) चारावुपपदे आङ्पूर्वाद्धन्तेरण्वक्तव्यः । अन्त्यस्य च टो वा वक्तव्यः । चार्वाघाटः चार्वाघातः ॥

( २०४४ वार्तिकम् ॥ ३ ॥ )

॥ * ॥ कर्मणि समि च ॥ * ॥

( भाष्यम् ) कर्मण्युपपदे संपूर्वाद्धन्तेरण्वक्तव्यः । अन्त्यस्य च टो वा वक्तव्यः । वर्णसंघाटः वर्णसंघातः । पदसंघाटः पदसंघातः ॥ आशिषि ॥ ४९ ॥

---

( ४८७ टक्प्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. १९ सूत्रम् )

## ८१९ लक्षणे जायापत्योष्टक् ॥ ३ । २ । ५२ ॥

( आक्षेपभाष्यम् )

कथमिदं विज्ञायते—'लक्षणे कर्तरि', आहो स्वित् 'लक्षणवति कर्तरी'ति । किं चातः ? । यदि विज्ञायते—'लक्षणे कर्तरी'ति । सिद्धं जायाघ्नस्तिलकालकः, पतिघ्नी पाणिरेखेति । इदं तु न सिध्यति—जायाघ्नो ब्राह्मणः, पतिघ्नी वृषलीति ॥

अथ विज्ञायते—'लक्षणवति कर्तरी'ति । सिद्धं जायाघ्नो ब्राह्मणः पतिघ्नी वृषलीति । जायाघ्नस्तिलकालकः, पतिघ्नी पाणिरेखेति न सिध्यति ॥

( प्रथमकल्पस्वीकारभाष्यम् )

अस्तु तर्हि लक्षणे कर्तरीति ॥

( दूषणभाष्यम् )

कथं जायाघ्नो ब्राह्मणः पतिघ्नो वृषलीति ? ।

( दूषणोद्धारभाष्यम् )

अकारो मत्वर्थीयः । जायाघ्नोऽस्मिन्नस्ति सोऽयं जायाघ्न इति ॥

( आक्षेपभाष्यम् )

पतिघ्नी वृषलीति न सिध्यति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( द्वितीयकल्पस्वीकारभाष्यम् )

अस्तु तर्हि लक्षणवति कर्तरीति ॥

( दूषणस्मारणभाष्यम् )

कथं जायाघ्नस्तिलकालकः पतिघ्नी पाणिरेखेति?।

( समाधानभाष्यम् )

"अमनुष्यकर्तृके च" इत्येवं भविष्यति ॥ लक्षणे ॥ ५२ ॥

( ४८८ टक्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. २० सू. )

## ८२० अमनुष्यकर्तृके च ॥ ३।२।५३ ॥

( २०४५ न्यूनतापरिहारवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अप्राणिकर्तृके ॥ * ॥

( भाष्यम् ) अप्राणिकर्तृक इति वक्तव्यम् । इह मा भूत्—नगरघातो हस्ती ॥

( आक्षेपभाष्यम् )

यद्यप्राणिकर्तृक इत्युच्यते, शशघ्नी शकुनीति न सिध्यति ॥

( समाधानभाष्यम् )

अस्तु तर्हि "अमनुष्यकर्तृके च" इत्येव ॥

( आक्षेपभाष्यम् )

कथं नगरघातो हस्ती ? ।

( समाधानभाष्यम् )

"कृत्यल्युटो बहुलम्" इत्येवात्राण् भविष्यति ॥ अमनुष्यकर्तृ ॥ ५३ ॥

( ४८९ टक्प्रत्ययवत्वादिविधिसूत्रम् ॥ ३।२।१ आ. २१ )

## ८२२ पाणिघताडघौ शिल्पिनि ॥ ३ । २ । ५५ ॥

( २०४६ न्यूनतापरिहारवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ राजघ उपसंख्यानम् ॥ * ॥

( भाष्यम् ) राजघ उपसंख्यानं कर्तव्यम् । राजघः ॥ पाणिघताडघौ ॥ ५५ ॥

( ४९० ख्युन्प्रत्ययविधिसूत्रम् ॥ ३।२।१ आ. २२ )

## ८२३ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ ३ । २ । ५६ ॥

( २०४७ च्विप्रतिषेधवैयर्थ्यवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ख्युनि च्विप्रतिषेधानर्थक्यं ल्युट्ख्युनोरविशेषात् ॥ * ॥

( भाष्यम् ) ख्युनि च्विप्रतिषेधोनर्थकः । किं कारणम्? । ल्युट्ख्युनोरविशेषात् । ख्युना मुक्ते ल्युटा भवितव्यम् । न चैवास्ति विशेषः च्व्यन्त उपपदे ख्युनो वा ल्युटो वा । तदेव रूपम् स एव च स्वरः ॥

( विशेषपदर्शकभाष्यम् )

अयमस्ति विशेषः । ल्युटि सति ईकारेण भवितव्यम् । ख्युनि सति न भवितव्यम् ॥

( अविशेषपदर्शकभाष्यम् )

ख्युन्यपि सति ईकारेण भवितव्यम् । एवं हि सौनागाः पठन्ति—*नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्*इति ॥

( उद्योतः ) आढ्यसुभग ॥ ५६ ॥ ख्युनभावे करणे ल्युटोऽवश्यं सत्त्वेनाच्वाविति व्यर्थमित्याह—भाष्ये ख्युना मुक्ते इति ॥ भाष्ये स एव स्वरः । लित्स्वरनित्स्वराभ्याम् ॥

( विशेषप्रदर्शनभाष्यम् )

अयं तर्हि विशेषः—ख्युनि सति नित्यसमासेन भवितव्यम् । उपपदसमासो हि नित्यसमास इति । ल्युटि सति न भवितव्यम् ॥

( अविशेषप्रदर्शनभाष्यम् )

ल्युट्यपि सति भवितव्यम् । गतिसमासोपि हि नित्यसमासः । च्व्यन्तं च गतिसंज्ञं भवति ॥

( २०४८ प्रयोजनवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ [1]मुमर्थं तु ॥ * ॥

( भाष्यम् ) मुमर्थं तर्हि प्रतिषेधो वक्तव्यः । ख्युनि सति मुमा भवितव्यम्, ल्युटि सति न भवितव्यम् ॥

( २०४९ प्रयोजननिरासवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ मुमर्थमिति चेन्नाव्ययत्वात् ॥ * ॥

( भाष्यम् ) मुमर्थमिति चेत् । तन्न । किं कारणम्? । अव्ययत्वात् । अनव्ययस्य मुमुच्यते । च्व्यन्तं चाव्ययसंज्ञं भवति ॥

१ इदं वार्तिकं यद्यप्याधुनिकपुस्तकेषु नोपलभ्यते तथापि 'अत्रैव सूत्रे अग्रिमस्य 'उत्तरार्थं तु' इति वार्तिकस्य तद्भाष्यस्य च सर्वत्र पुस्तकेषु दृष्टत्वेनात्र भाष्यस्यैव दर्शनेन वार्तिकपाठो लेखकप्रमादान्नष्टो भवेदिति ज्ञात्वा कोष्ठकमध्ये रक्षितम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( २०५० प्रयोजनवार्तिकम् ॥ ४ ॥ )

॥ * ॥ उत्तरार्थं तु ॥ * ॥

**( भाष्यम् ) उत्तरार्थं तर्हि प्रतिषेधो वक्तव्यः । "कर्तरि भुवः खिष्णुच्खुकञौ" अच्वावित्येव । आढ्यीभविता ॥**

( प्रदीपः ) आढ्य ॥ ५६ ॥ उत्तरार्थमिति । उत्तरत्र च्विप्रतिषेधस्य चरितार्थत्वादाढ्यीकरणमिति ल्युटा भाव्यम् । तत्र यदन्यैरुक्तं प्रतिषेधसामर्थ्यात् खुन्यसति ल्युडपि न भवतीति ल्युटोप्ययमर्थतः प्रतिषेध इति । तदयुक्तम् ॥

( उद्द्योतः ) ल्युटा भाव्यमिति । अवश्यभाव्यमित्यर्थः ॥ तदयुक्तमिति भाष्यविरोधादित्यर्थः । उत्तरार्थत्वं वदता इहार्थत्वाभावस्य भाष्यकृता बोधितत्वादिति भावः ॥

( आक्षेपभाष्यम् )

**अथेदानीमनेन मुक्ते ताच्छीलिक इष्णुच् विधीयते सोत्र कस्मान्न भवति ?।**

( उद्द्योतः ) भाष्ये इष्णुजिति भुवश्चेत्यनेन ॥

( समाधानभाष्यम् )

**रूढिशब्दप्रकारास्ताच्छीलिकाः। न च रूढिशब्दा गतिभिर्विशेष्यन्ते । न हि भवति-देवदत्तः=प्रदेवदत्त इति ॥ आढ्य ॥ ५६ ॥**

( प्रदीपः ) रूढिशब्दप्रकारा इति । यथा रूढिशब्देषु क्रिया केवलं व्युत्पत्त्यर्थमाश्रीयते गच्छतीति गौरिति । तेन गमनक्रियारहितोपि गौर्भवति । गोपिण्डाच्चान्योर्थो गमनविशिष्टोपि गौर्न भवति । तथा ताच्छीलिका अपि क्रियाविषयं ताच्छील्यमुपादाय क्रियावेशाभावेपि प्रयुज्यन्ते । केचिदेव तु गतिना संबध्यन्ते—आगामुकः प्रवर्षुक इति । न तु सर्वे यथा कामुक इति । न च भवति प्रकामुक इति । अत एव प्रकारग्रहणं सादृश्यार्थम् । रूढिशब्दानां न केषांचिद् गतिसंबन्धो भवति । ताच्छीलिकानां तु भवति केषांचित्, न सर्वेषामिति प्रतिपादयति । द्रव्योपलक्षणाय क्रियायाः प्रवृत्तत्वादात्मातिशयं प्रति आकाङ्क्षाया अभावात्तदतिशययोतनार्थं गतिसंबन्धाभावस्ताच्छीलिकेष्वित्यर्थः ॥ प्रदेवदत्त इति । प्रकर्षेण देवनक्रिया न विशेष्यते । देवशब्दस्य रूढिशब्दत्वात्, तदवयवस्य च देवदत्तशब्दस्येत्यर्थः । व्याघ्रादयस्तु सोपसर्गा एव रूढिशब्दा इति तद्व्यतिरिक्तगत्यन्तरयोगस्तेषां नास्ति ॥ ५६ ॥

( उद्द्योतः ) केचिदेवेति । स्पष्टं प्रतीयमानक्रियावेशा इति भावः ॥ द्रव्योपलक्षणायेति । अवस्थाविशेषविशिष्टस्योपलक्षणायेत्यर्थः ॥ न तु क्रियाप्रकारको बोध इति तात्पर्यम् ॥ वस्तुतस्तु आभिधानस्वाभाव्यात्केषांचिदेव क्लृप्तप्रयोगाणां गतिसंबन्धो न सर्वेषामिति भाष्यतात्पर्यम् ॥ प्रदेवदत्त इत्यत्र प्रशब्दस्य देवनक्रियायां दानक्रियायां वाऽन्वयः ॥ नाद्य इत्याह—देवशब्दस्येति । नान्त्य इत्याह—तदवयवस्य चेति । तदवयवस्येति बहुव्रीहिः । व्याघ्रादौ तर्हि संज्ञाशब्दे कथं गतिसंबन्धोत आह—व्याघ्रादयस्त्विति ॥ ५६ ॥

---

( ४९१ प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. १९ सू. )

## ८२४ कर्तरि भुवः खिष्णुच्खुकञौ ॥ ३ । २ । ५७ ॥

( इकारादित्वनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थं खिष्णुजिकारादिः क्रियते, न 'खष्णुरि'त्येवोच्येत । तत्रायमप्यर्थः—स्वरार्थश्चकारो न कर्तव्यो भवति ।**

( उद्द्योतः ) कर्तरि भुवः ॥ ५७ ॥ भाष्ये—'न चैष्णु'रिति पाठः ॥

( प्रत्याक्षेपभाष्यम् )

**केनेदानीमिकारादित्वं क्रियते ? ।**

( २०५१ प्रत्याक्षेपसमाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ इष्णुच इकारादित्वमुदात्तत्वात् कृतं भुवः ॥ * ॥

**( भाष्यम् ) भवति-रुदात्तस्तस्योदात्तत्वादिड् भविष्यति ।**

( उद्द्योतः ) उदात्तत्वादिति । तेनैका च उपदेशे इत्यस्य प्रवृत्तिरिति भावः ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनं खिदयं क्रियते । तत्र चर्त्वे कृते संदेहः स्यात्-किद्वा, खिद्वेति ॥**

( प्रयोजननिराकरणभाष्यम् )

**संदेहमात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते-'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमि'ति । खिदिति व्याख्यास्यामः ॥**

---

१ अयमुद्योतपाठश्चिरंतनलेखकप्रमादात् अग्रे 'प्रदेवदत्तइत्यत्र' इत्यतः पूर्वमेवोपलब्धः तथापि तत्र पाठे संदर्भासंगत्या संदर्भसंगतयेऽस्माभिरत्र स्थापित इति बोध्यम् ॥

२ 'पलक्षणार्थे' ॥

३ अयं नागेशदीक्षितश्चकारो नैवोचितः 'स्वरार्थश्चकारो न कर्तव्यो भवति' इति भाष्यविरोधात् ॥ किं च चकारसत्त्वे खकारस्येत्संज्ञानुपपत्तिश्चकारादित्वेनादि खकाराभावात् ॥ तस्मात् 'ग्लाजिस्थश्च क्स्नुः' इत्यत्रेव दन्त्यसकारवानेव 'क्स्नुः' इत्येव पाठ उचित इति दाधिमथाः ॥

४ 'भवतेरुदात्तत्वादिकारादित्वं' ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( २०५२ प्रयोजनवार्तिकम् ॥ २ ॥ )

॥ * ॥ नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥ * ॥

( भाष्यम् ) इदं तर्हि प्रयोजनं "कृत्योकेष्णुच्चार्वादयश्च" इत्येष स्वरो यथा स्यात् ॥

( प्रदीपः ) कर्तरि ॥ ५७ ॥ नञ इति पञ्चमी ॥ नञ उत्तरस्य स्वरसिद्ध्यर्थमित्यर्थः ॥

( उद्योतः ) ननु कृत्योकेष्णुजिति सूत्रेण नञः स्वराभावादाह—नञ उत्तरस्येति । अन्तोदात्तविधायकमिदं पूर्वपदप्रकृतिस्वरापवादः ।

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । अयमपि इटि कृते षत्वे णत्वे चेष्णुजेव भविष्यति ॥

( प्रदीपः ) अयमपीति । क्स्नुच् प्रत्ययः क्रियते चकारः सामान्यग्रहणार्थं इति मन्यते ॥

खिष्णुचि तु कृते इकारोच्चारणसामर्थ्यात्तदनुबन्धकपरिभाषा नाश्रीयते ॥ ५७ ॥

( उद्योतः ) ननु तदनुबन्धकपरिभाषया इष्णुच एव ग्रहणं भविष्यति, न खिष्णुच इत्यत आह—इकारोच्चारणेति । चकारोच्चारणेनैव द्वयोर्ग्रहणे लक्षणप्रतिपदोक्तपरिभाषातदनुबन्धकपरिभाषाबाधे च ख्ष्णुचः करणेन षत्वणत्वयोरसिद्धत्वाभावे च सिद्धे इकारोच्चारणं व्यर्थमिति 'अयमपीटि कृते' इति भाष्यतात्पर्यम् ॥

( प्रयोजनसाधकभाष्यम् )

न सिध्यति । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । अथ वा असिद्धं खल्वपि षत्वम् । तस्यासिद्धत्वादिस्नुजेव भवति ॥

इष्णुच इकारादित्वमुदात्तत्वात् कृतं भुवः ।
नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥
कर्तरि भुवः ॥ ५७ ॥

(उद्योतः) न सिध्यतीत्यादि त्वेकदेश्युक्तिरिति बोध्यम् ॥ ५७ ॥

( ४९२ प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. २० )

## ८२५ स्पृशोऽनुदके क्विन् ॥ ३।२।५८ ॥

( आक्षेपभाष्यम् )

किमर्थो नकारः ।

( समाधानभाष्यम् )

स्वरार्थः । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वं यथा स्यात् ॥

( प्रत्याख्यानभाष्यम् )

नैतदस्ति प्रयोजनम् । एकाचोऽयं विधीयते । तत्र नार्थः स्वरार्थेनानुबन्धेन नकारेण । धातुस्वरेणैव सिद्धम् ॥

( उद्योतः ) स्पृशोऽनु ॥ ५८ ॥ एकाचोयमिति भाष्ये । यङ्लुगन्तात्त्वयं न क्विन्ननभिधानादिति भावः ॥

( प्रत्याख्यानबाधकभाष्यम् )

यस्तर्ह्यनेकाच् दधृगिति ॥

( प्रत्याख्यानसाधकभाष्यम् )

वक्ष्यत्येतत् 'धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यते' इति ॥

( प्रत्याख्यानबाधकभाष्यम् )

विशेषणार्थस्तर्हि । क्व विशेषणार्थेनार्थः ? । "क्विन्प्रत्ययस्य कुः" इति । "क्विप्रत्ययस्य कुः" इत्युच्यमाने संदेहः स्यात् 'क्विर्वा एष प्रत्ययः, क्विब्वा' इति ॥

( प्रदीपः ) स्पृशोऽनु ॥ ५८ ॥ संदेहः स्यादिति । क्विमेकपकारको निर्देश उत द्विपकारक इत्यर्थः ॥

( प्रत्याख्यानसाधकभाष्यम् )

संदेहमात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते—"व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणमिति" । 'क्विन्प्रत्ययस्य' इति व्याख्यास्यामः ॥

स्पृशोनुदके क्विन् ॥ ५८ ॥

( प्रदीपः ) व्याख्यानत इति । तदनुबन्धकपरिभाषया च क्विपो ग्रहणाभावः ॥ ५८ ॥

( उद्योतः ) ननु क्विग्रहणे क्विपोपि ग्रहणं स्यादत आह—तदनुबन्धेति । अत्र सूत्रे कर्मणीति संबध्यत एव । मन्त्रस्पृगित्यादि तु क्विपा सिद्धम् । क्विन्प्रत्ययस्येति बहुव्रीह्याश्रयणात्कुत्वमपि सिद्धम् ॥ ५८ ॥

( ४९३ प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. २१ )

## ८२६ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ३ । २ । ५९ ॥

( प्रश्नभाष्यम् )

दधृगिति किं निपात्यते ।

( २०५३ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ धृषेर्द्विर्वचनमन्तोदात्तत्वं च ॥ * ॥

( भाष्यम् ) धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यते ॥ ऋत्विग्द ॥ ५९ ॥

( उद्योतः ) ऋत्विग्द ॥ ५९ ॥ अन्तोदात्तत्वं चेति । इदं च क्विनो नकारसत्त्वे उक्तम् । स्रगुष्णिहोर्निपात्यमानवस्तुतः

१ 'भविष्यति' ॥
२ 'स्वरार्थेन नकारेणानुबन्धेन' ॥
३ 'क्विन् इति' ॥
४ यथाश्रुतन्यासाभिप्राये णनकारोच्चारणमिति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्पष्टत्वात्तन्नोक्तम् । क्रुञ्चामिति निपातनान्नलोपाभाव इति परेश्चेति[3] सूत्रे भाष्ये स्पष्टम् ॥ ५९ ॥

(४९४ कञ्क्किन्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ. २२)

## ८२७ त्यदादिषु दृशोऽनालोचने कञ्च ॥ ३ । २ । ६० ॥

( आक्षेपभाष्यम् )

**किमर्थो ञकारः ।**

( प्रदीपः ) त्यदादिषु ॥ ६० ॥ ञकारस्य कार्यद्वयं प्रति युक्तत्वं प्रश्नद्वारेण प्रदर्श्यते—किमर्थ इति ॥

( उद्द्योतः ) त्यदादिषु ॥ ६० ॥ ञकारः केवलस्वरार्थः, उतान्यार्थोऽपीति विचारतात्पर्यमाह—ञकारस्येति ॥

( समाधानभाष्यम् )

**स्वरार्थः । ञ्नितीत्याद्युदात्तत्वं यथा स्यात् ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । नकारेणाप्येष स्वरः सिद्धः ।**

( समाधानभाष्यम् )

**विशेषणार्थस्तर्हि भविष्यति । क्व विशेषणार्थेनार्थः ? । "कञ्क्करपि"ति । 'कन्क्करपित्युच्यमाने' याविका इत्यत्रापि प्रसज्येत ॥**

( उद्द्योतः ) भाष्ये याविका इत्यत्रापीति । न च व्वनुबन्धकत्वादस्य कनो ग्रहणं न स्यादिति वाच्यम् । येनानुबन्धेन व्वनुबन्धकत्वं तदनुच्चारण एव तत्प्रवृत्तेः ॥

( २०५४ उपपदान्तरेऽपि प्रत्ययविधिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ दृशेः समानान्ययोश्च ॥ * ॥

**( भाष्यम् ) दृशेः समानान्ययोश्चोपसंख्यानं कर्तव्यम् । सदृक् । सदृशः । अन्यादृक् । अन्यादृशः ॥**

( २०५५ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ कृदर्थानुपपत्तिस्तु ॥ * ॥

**( भाष्यम् ) कृदर्थस्तु नोपपद्यते । दृशेः कर्तरि प्राप्नोति ॥**

( प्रदीपः ) कृदर्थानुपपत्तिस्त्विति । यः कृतोऽर्थः स तादृशादिशब्दवाच्यो न भवति । तादृशादयो हि सदृशलक्षणमर्थमाचक्षते, न तु दर्शनक्रियायाः कर्तारमित्यर्थः ।

( उद्द्योतः ) यः कृतोऽर्थ इति । प्रकृते दृशेः कर्तेत्यर्थः ॥

( २०५६ तद्धितविधिवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ इवार्थे तु तद्धितः ॥ * ॥

**( भाष्यम् ) इवार्थे त्वयं तद्धितो द्रष्टव्यः । स इवायं तादृक् तादृशः । अन्य इवायमन्यादृक् अन्यादृश इति ।**

(उद्द्योतः) भाष्ये इवार्थेऽयं तद्धित इति । अयं भावः—यथा दृग्दृशवतुष्विति सूत्रे दृक्षे इति वार्तिकबलादनुक्तोपि क्सः कल्प्यते तथा इवाधिकारे तद्धिते त्यदादिभ्यो दृग्दृशदृक्षाः[6]प्रत्ययाः कल्प्याः, दृशटष्टित्वाच्च ङीबपि सिद्ध इति टिड्ढेति । सूत्रे कञ्ग्रहणमपि न कार्यमिति लाघवमिति ॥

( कृदर्थोपपादनभाष्यम् )

**अथ वा युक्त एवायं कृदर्थः । कर्मकर्ताऽयम् । तमिवेमं पश्यन्ति जनाः सोयं स इव दृश्यमानस्तमिवात्मानं पश्यति तादृक् । अन्यमिवेमं पश्यन्ति जनाः सोयमन्य इव दृश्यमानोऽन्यमिवात्मानं पश्यति अन्यादृगिति ॥ त्यदादिषु ॥ ६० ॥**

( प्रदीपः ) कर्मकर्तेति । कर्मण एव सौकर्यात् कर्तृत्वविवक्षायां कर्तर्येव प्रत्ययः क्रियत इत्यर्थः ॥ ६० ॥

( उद्द्योतः ) भाष्ये तमिवात्मानं पश्यतीति । प्रेरणावृद्धावपि अन्तर्भावितण्यर्थत्वान्न णिच् । तमिवात्मानं जनान्दर्शयतीत्यर्थः । अत्र प्रेरणावृद्ध्याधिकार्थत्वेनाज्ञार्थनात्वम्, कर्मण्युपपदे एवायम् । तेन निवृत्तप्रेषणतया स इव पश्यतीति विग्रहोऽनुचितः । सत्सूद्विषेति सूत्रे एव 'कर्मणि' इत्यस्य निवृत्तेः । 'सत्सू' इति सूत्रे भाष्ये ध्वनितत्वेनात्रानुवृत्तेः सत्त्वात् ॥ ननु कर्मकर्तेति व्यवहारोऽनुपपन्नः कर्मत्वाभावात्कर्मवद्भावाभावाच्चेत्यत आह—कर्मण एवेति ॥ ६० ॥

(४९५ क्विप्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ० २३ )

## ८२८ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ॥ ३ । २ । ६१ ॥

( २०५७ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सदादिषु सुब्ग्रहणम् ॥ * ॥

**( भाष्यम् ) सदादिषु सुब्ग्रहणं कर्तव्यम् । होता वेदिषत् । अतिथिर्दुरोणसत् ॥**

---

१ निपातनादिति । औपदेशिकनकारस्य ञकारादेशनिपातनादित्यर्थः ॥

२ नलोपाभाव इति । झलि परतः प्राप्तस्य 'चोः कुः' इति कुत्वस्याभावोऽप्युपलक्षणतया बोध्यः ॥

३ तत्र भाष्ये तु नैव नलोपवारणकथा किंतु चकाररूपझल्निमित्तकस्य 'चोः कुः' इति प्राप्तकुत्वस्यैव निपातनेन वारणकथा ॥ क्रुञ्चधातावौपदेशिक ञकारमाश्रित्य 'नकारजावनुस्वारपञ्चमौ' इति नियमस्य प्रायिकत्वं कथयन् नागेशस्तु कथं भाष्यसिद्धान्तज्ञेषु गणनीयः स्यात् ॥ तत्र पञ्चमस्य ञकारस्य नकारस्थाने निपातनेन जातत्वात् संकोचकल्पनाया अनावश्यकत्वात् ॥ यदि तु पञ्चमत्वमात्रं न नागेशसंमतम् किं तु 'अनुस्वारस्य ययि' इति जातपरसवर्ण एव पञ्चमत्वेनेति विभाव्यते । तदा 'सवर्ण'पदं विहाय पञ्चमपदप्रयोजनं नागेश एव प्रष्टव्यः ॥ प्रयोजनान्तराभावादेतन्निपातनज ञकारस्यैव संग्रहाय पञ्चमपदोपादानमिति दाधिमथानां सिद्धान्ते तु न प्रायिकत्वकल्पनावश्यकतेति विभावयन्तु सुधियः ॥ वस्तुतस्तु सूत्रे कुञ्च इति निपातनबलान्नलोपबाध इति नागेशाशयः, तथाच नकारजत्वमत्राप्यक्षतमिति न नागेशस्य मते कारिकाविरोध इति वयम् । ( र. ना. )

४ 'करप' इति विभक्तिमात्रवर्तिनः प्रकृतिभागस्यैवानुकरणम् ॥

५ 'दृग' इति निपातनादेव पदान्ते शकारस्य गकारादेशो जायते । एतेन तद्धितत्वे क्विनोऽभावाङ्गीकारे कुत्वानुपपत्तिरित्यपास्तम् ॥

६ 'गोयुगजादय इवे'ति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

(प्रदीपः) सत्सूद्विष ॥ ६१ ॥ सदादीनां केषांचित्सकर्मकत्वात्कर्मैवोपपदं प्राप्नोतीति मत्वाह—सदादिष्विति ॥ वेदिषदिति । वेद्यां सीदतीति । क्विप् । पूर्वपदादिति षत्वम् दुरोणे सीदतीति दुरोणसत् । दुरोणं गृहम् ॥

(उद्योतः) सत्सू ॥ ६१ ॥ कर्मैवोपपदमिति । कर्मणीत्यधिकारादिति भावः ॥ सुब्ग्रहणं तु तन्निवृत्तिद्योतनायेति बोध्यम् । वस्तुतः सुब्ग्रहणमेवात्रानुवर्तते कर्मणीति निवृत्तमित्यन्वाख्यातमेवैतत् । अत्र सूत्रे 'उपसर्गेपि' ग्रहणम् 'अनुपसर्गे' इत्यस्यातोऽनुपसर्गे इति सूत्रादनुवर्तमानस्याग्रे निवृत्तिद्योतनाय । भाष्यकार एतज्ज्ञापकेनैव सुब्ग्रहणस्योपसर्गेतरसुप्परत्वं व्याख्यायानुपसर्ग इत्यस्यानधिकारं द्योतयति । तत्फलं ज्ञापकसिद्धस्यासार्वत्रिकत्वेन प्रष्ठ इत्यादि सिद्धिः ॥

(प्रश्नभाष्यम्)

न तर्हीदानीमुपसर्गेऽपीति वक्तव्यम् ॥

(समाधानभाष्यम्)

वक्तव्यं च । किं प्रयोजनम् ? । ज्ञापकार्थम् । किं ज्ञाप्यम् ? । एतज्ज्ञापयत्याचार्यः—"अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवति" इति । किमेतस्य ज्ञापने प्रयोजनम् ? । वदः सुप्यनुपसर्गग्रहणं चोदितम् ॥ तन्न वक्तव्यं भवति ॥ सत्सूद्विष ॥ ६१ ॥

(प्रदीपः) तन्न वक्तव्यमिति । अनुपसर्गग्रहणानुवृत्तिमन्तरेणैवोपसर्गनिवृत्तेः सिद्धत्वादनुवृत्तिप्रदर्शनमपि न युज्यते । यत्र चानुपसर्गग्रहणानुवृत्तिर्न संभाव्यते स्पृशोनुदकेक्विति एतदपि ज्ञापनस्य प्रयोजनम् । तेनोपस्पृशतीत्यादौ क्विन्न भवतीति ॥ ६१ ॥

(उद्योतः) ननु वदः सुपीत्यत्र गदमदेत्यतोऽनुपसर्गग्रहणानुवृत्तिप्रदर्शनपरं वार्तिकं नापूर्वकरणपरमत आह—अनुपसर्गेति ॥ यत्र चेति । यत्र स्पृशोऽनुदक इत्यादावनुपसर्गग्रहणानुवृत्तिर्न संभाव्यते एतदपि ज्ञापनस्य प्रयोजनमित्यन्वयः । इदं चिन्त्यम्, अत्राप्यातोऽनुपसर्गे इत्यतोऽनुवृत्तिसंभवात् ॥ ६१ ॥

(अथ विट्प्रकरणम्)

(४९६–४९७ विट्प्रत्ययविधिसूत्र ॥३।२।१ आ० २४–२५)

# ८३५–८३६ अदोनन्ने ॥ ३ । २ । ६८ ॥ क्रव्ये च ॥ ३ । २ । ६९ ॥

(आक्षेपभाष्यम्)

किमर्थमिदमुच्यते, न "अदोनन्ने" इत्येव सिद्धम् ।

(समाधानभाष्यम्)

न सिध्यति । छन्दसीति वर्तते । भाषार्थोऽयमारम्भः ॥

(समाधानबाधकभाष्यम्)

पूर्वस्मिन्नेव योगे छन्दोग्रहणं निवृत्तम् । तच्चावश्यं निवर्त्यम्[2] । आमादित्येवमर्थम्[3] ॥

(उद्योतः) अदोऽन ॥ ६८ ॥ क्रव्ये च ॥ ६९ ॥ भाष्ये आमादित्येवमर्थमिति । लोके एतत्सिद्ध्यर्थमित्यर्थः ॥

(समाधानभाष्यम्)

अत उत्तरं पठति ।

(२०५८ समाधानवार्तिकम् ॥ १ ॥)

॥ * ॥ अदोनन्नेक्रव्यग्रहणं वासरूपनिवृत्त्यर्थम्[4] ॥ * ॥

(भाष्यम्) अदोनन्ने क्रव्यग्रहणं क्रियते वासरूपो मा भूदिति ॥ अदोन ॥ क्रव्ये च ॥ ६९ ॥

(प्रदीपः) अदोनन्ने ॥६८॥ क्रव्ये च ॥६९॥ वासरूपो मा भूदिति । तेन क्रव्याद इत्यण्न भवतीत्यर्थः ॥६९॥

(उद्योतः) क्रव्याद इत्यण्नेति । आममांसभक्षणकर्तेत्यर्थे इति भावः ॥ पक्वमांस उपपदे अदेरण्, उपपदस्य क्रव्यादेशः पृषोदरादित्वादित्यत्र तु न भाष्यानुग्रहः । क्रव्यशब्देन तदबोधाच्च । एवं च क्रव्याद इत्यसाध्वेवेति बहवः ॥ ६८ ॥ ६९ ॥

(अथ ण्विन् प्रकरणम्)

(४९८ ण्विन् प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ० २६)

# ८३८ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ३ । २ । ७१ ॥

(२०५९ ण्विन् बाधकवार्तिकम् ॥ १ ॥)

॥ * ॥ श्वेतवहादीनां डस् ॥ * ॥

(भाष्यम्) श्वेतवहादीनां डस्वक्तव्यः ॥ श्वेतवा इन्द्रः ॥

(प्रदीपः) मन्त्रे ॥ ७१ ॥ डस् वक्तव्य इति । ण्विन्प्रत्ययबाधनार्थं इति भावः ॥

(उद्योतः) मन्त्रे श्वे ॥ ७१ ॥ भाष्ये श्वेतवहादीनामिति । अनन्तरयोगे षष्ठी ॥

(२०६० पूर्वशेषवार्तिकम् ॥ २ ॥)

॥ * ॥ पदस्य च ॥ * ॥

(भाष्यम्) पदस्येति च वक्तव्यम । इह मा भूत्—श्वेतवाहौ श्वेतवाह इति ॥

(प्रदीपः) पदस्येति । भावि[illegible]दाश्र[illegible]णेदमुच्यते । यत्र तु डसन्तस्य पदत्वं भविष्यति तत्र डस्प्रत्ययोऽन्यत्र ण्विन्नेवेत्यर्थः ॥

(उद्योतः) पदस्येत्यस्य तदन्ते पदत्वस्य संभावनायामि-

1 इदं 'क्रव्ये च' इति सूत्रमित्यर्थः ॥ प्रतीके 'अदोनन्ने' इत्यस्योपादानं प्रकरणबोधनायैव । एवमेवाग्रे २०५८ वार्तिकेपि बोध्यम् ॥

2 अदोऽनन्ने इत्यत्रेति भावः । (र. ना.)

3 'आमात्तस्यादित्येवमर्थम्' ॥

4 आममत्तीति सस्यमत्तीति विग्रहः । (र. ना.)

5 सामर्थ्यादिति भावः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्यर्थः ॥ केचित्तु तत्संबन्धिनो ण्विनः स्थाने डस्वक्तव्य इत्यर्थ इत्याहुः ॥ ननु डसुत्पत्तिवेलायां कथं पदत्वमत आह—भावीति ॥

( प्रयोजनप्रश्नभाष्यम् )

**किं प्रयोजनम् ? ॥**

( २०६१ प्रयोजनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ वैर्थम् ॥ * ॥**

( भाष्यम् ) रुर्यथा स्यात् ॥

( प्रयोजननिराकरणभाष्यम् )

**क्रियते वैर्थं निपातनम्—"अवयाः श्वेतवाः पुरोडाश्च" इति । आतश्च वैर्थम् । उक्थशाःशब्दस्य सामान्येन रुः सिद्धः । न तस्य निपातनं क्रियते ॥**

( उद्योतः ) भाष्ये क्रियते वैर्थमिति । तेन हकारादीनामेव रुत्वमिति भावः ॥ भाष्ये उक्थशस्शब्दस्येति । तत्प्रकृतिकस्येत्यर्थः ॥

( निपातनानावश्यकताभाष्यम् )

**तन्न वक्तव्यं भवति ॥**

( प्रदीपः ) तन्न वक्तव्यमिति । डसैव सिद्धत्वान्निपातनं न कर्तव्यमित्यर्थः ॥

( उद्योतः ) तन्न वक्तव्यमिति ॥ ननु वासरूपन्यायेन डस्विषये ण्विनोऽपि सत्त्वेन तदर्थं निपातनमावश्यकमिति चेन्न । एतद्भाष्यप्रामाण्येनादेशपक्षस्यैवौचित्यात् । कैयटे 'डस्प्रत्ययः' इति व्यवहारः स्थानिवद्भावलब्धप्रत्ययत्वेनेति बोध्यम् ॥

( निपातनावश्यकताभाष्यम् )

**अवश्यं तद्वक्तव्यम् । दीर्घार्थम् ॥**

( उद्योतः ) अवश्यं तद्वक्तव्यमिति । डसारम्भेपीत्यर्थः ॥

( निपातनानावश्यकताभाष्यम् )

**नैतदस्ति प्रयोजनम् । सिद्धमत्र दीर्घत्वम्—"अत्वसन्तस्य चाधातोरि"ति ॥**

( निपातनावश्यकताभाष्यम् )

**यत्र तेन न सिध्यति तदर्थम् ॥ क्व च तेन न सिध्यति ? । संबुद्धौ—हेश्वेतवाः इति ॥**

( उद्योतः ) न तर्हीदानीमिति । हादीनामेव रुत्वं विधेयम् । दीर्घस्तु ण्विनि वृध्यैव सिद्ध इति भावः ॥

( प्रश्नभाष्यम् )

**न तर्हीदानीं डस्वक्तव्यः ॥**

( समाधानभाष्यम् )

**वक्तव्यश्च । किं प्रयोजनम् ? । उत्वार्थम् । श्वेतवोभ्यां श्वेतवोभिः ॥ मन्त्रे श्वेत ॥ ७१ ॥**

( प्रदीपः ) वक्तव्यश्चेति । अवया इत्यादीनि प्रथमान्तान्येव निपात्यन्त इति श्वेतवोभ्यामित्यादिरूपमन्यथा न स्यात् । अथापि पदमात्रविषयं निपातनमाश्रीयते । तथाप्यत उत्वं विधीयमानमाकारान्न स्यात् । तस्मात् संबुद्ध्यर्थं निपातनमपि कर्तव्यम् । डसप्युत्वार्थो वक्तव्यः ॥

( उद्योतः ) अन्यथा डस्भावे ॥

(प्रदीपः) उक्थशा इत्येतदपि संबुद्ध्यर्थं निपातनं कर्तव्यम् । उक्थशोभ्यामित्यादिसिद्धये डसपि कर्तव्यः । ण्विनि हि नलोपे निपात्यमाने वृद्धौ सत्यामुत्वं न स्याद्यदि मन्त्रे दर्शनमस्ति ॥७१॥

(उद्योतः) इत्येतदपि संबुद्ध्यर्थमिति । [पदान्ते डसन्तत्वादिति भावः] ॥ ननु डसेव मास्तु तत्राह—उक्थशोभ्यामिति । यदि मन्त्रे इति । उक्थशस्शब्दस्येति भाष्याच्छंसेर्नलोपोपधावृद्ध्यभावयोर्निपातनाच्छासेर्वोपधा ह्रस्वनिपातनाद्वृध्यभावे उक्थशोभ्यामित्यस्य सिद्धेः । शासेर्विन्वि संबुद्धावुक्थशा इत्यस्यापि सिद्धेर्द्वयमपि न कार्यमित्यन्ये ॥ ७१ ॥

—•○•—

( ४९९ कक्किप्प्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ० २७ )

## ८४४ स्थः क च ॥ ३ । २ । ७७ ॥

( प्रश्नभाष्यम् )

**किमर्थं स्थः कक्किपावुच्येते । न, क्विप्सिद्धः 'अन्येभ्योपि दृश्यते' इति, कश्च 'आतोऽनुपसर्गे कः' इति ? ॥**

( उत्तरभाष्यम् )

**न सिध्यति । विशेषविहितः कः सामान्यविहितं क्विपं बाधेत ॥**

( अन्यथासिद्धिभाष्यम् )

**वासरूपेण क्विबपि भविष्यति ॥**

( अनन्यथासिद्धप्रयोजनभाष्यम् )

**इदं तर्हि शंस्थः शंस्थाः ॥**

( प्रदीपः ) स्थः क च ॥ ७७ ॥ शंस्था इति । *ईत्वमवकारादाविति वचनाद्भाष्यकारवचनप्रामाण्याद्वा प्रत्ययलक्षणेनेत्वाभावः ॥ ७७ ॥

( उद्योतः ) स्थः क च ॥ ७७ ॥ सप्तमीनिर्देशादेव तदादिविधौ लब्धे पुनर्वकारादाविति वचनं मुख्यवकारादिप्रतिपत्त्यर्थमिति वदन्तं प्रत्याह—भाष्यकारवचनेति ॥ यद्वा पावान इति प्रयोगस्य वनिपा सिद्धिमाश्रित्य तत्प्रत्याख्यानादाह—भाष्येति ॥ अत एव *ध्यायतेः संप्रसारणमिति वार्तिके 'दधातेर्धाधीः' इति भाष्ये क्विप्यपीत्वं कृतम् । वस्तुतो भाष्ये क्विप्पदेन सादृश्याद्विजुच्यते इतीत्वाप्रसक्तिरेवात्रेति बोध्यम् ॥

---

१ डस्विधानस्येति शेषः । ( र. ना. )

२ अतोऽपि हेतोर्वैर्थमेवेदं निपातनं क्रियत इत्यर्थः । ( र. ना. )

३ 'शब्दस्य हि सामा' ॥

४ अस्यात्रानुपयोगः किंतु अग्रे 'उक्थशोभ्यामिति' इति प्रतीकोत्तरमेवास्योपयोगः इति तत्रत्योयं पाठो लेखकप्रमादादत्र पतितः ॥ अत्र योग्यस्तु पाठो लेखकप्रमादादेव 'पदान्ते डसि कृतेति संबुद्धौ दीर्घाप्राप्तेर्निपातनमेवावश्यकमिति भावः' इति पाठः कल्पनीयः इति दाधिमथाः ॥

५ पदान्ते डसन्तत्वेन संबुद्धौ 'अत्वसन्तस्य चे'त्यस्यामवृत्त्यां उक्थशा इत्यस्यासिद्धत्वादिति भावः । एतेन अस्यात्रानुपयोग इत्यादिका दाधिमथोक्तिः परास्ता । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( अन्यथासिद्धभाष्यम् )

उक्तमेतत्—*शमिसंज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्*इति । स यथैवाच् टं बाधते । एवं ककिपावपि बाधेत ॥ स्थः क च ॥७७॥

( उद्योतः ) भाष्ये ककिपाविति । आतोऽनुपसर्गे इति क्विप्चेति विहितौ । तत्र कस्य बाधे शंस्थ इति न सिध्येत् । तदर्थं स्थः को विधेयः कस्य चाप्बाधकत्वेन क्विपपवादत्वाभावात् । परत्वेन क्विपो नित्यबाधवारणाय क्विपि विधेय इति भावः । न चाचैव शंस्था इत्यस्य सिद्धत्वेन क्विपो बाधे फलाभावः । शंस्थाशब्दाच्छसि आतोलोपानापत्तेः । कृदतिङितिसूत्रस्थभाष्योक्तरीत्यैकादेशस्य स्थानिवत्त्वात्पुरस्तादिति न्यायेन क्विप एव बाध इत्यस्यापि वक्तुं शक्यत्वात् । तस्माद्बाध्यसामान्यचिन्तयोभयोरपि स बाधकः स्यादिति तात्पर्यम् ॥ ७७ ॥

( ५०० णिनिप्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ० २८ )

## ८४५ सुप्यजातौ णिनिस्ताच्छील्ये ॥ ३ । २ । ७८ ॥

( आक्षेपभाष्यम् )

सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् ? ।

( समाधानभाष्यम् )

अनुपसर्ग इत्येवं तदभूत् । इदं सुम्मात्रे यथा स्यात्—उदासारिण्यः प्रत्यासारिण्य इति ॥

( उद्योतः ) सुप्यजातौ ॥ ७८ ॥ भाष्ये अनुपसर्ग इत्येवमिति उपसर्गेपीति ग्रहणात् ज्ञापकादित्यर्थः । एतेन सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमिति वृत्तिकारोक्तमपास्तम् ॥ ७८ ॥

( २०६२ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ णिन्विधौ साधुकारिण्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) णिन्विधौ साधुकारिण्युपसंख्यानं कर्तव्यम् । साधुकारी साधुदायी ॥

( प्रदीपः ) सुप्य ॥ ७८ ॥ णिन्विधाविति । अताच्छील्यार्थमिदम् । एवं ब्रह्मणि वद इति ॥ ७८ ॥

( २०६३ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ ब्रह्मणि वदः ॥ * ॥

( भाष्यम् ) ब्रह्मणि वद उपसंख्यानं कर्तव्यम् । ब्रह्मवादिनो वदन्ति ॥ सुप्यजा ॥ ७८ ॥

१ 'स्थण्डिलस्थायी' ॥

( ५०१ णिनिप्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ० २९ )

## ८४७ व्रते ॥ ३ । २ । ८० ॥

( प्रश्नभाष्यम् )

किमुदाहरणम् ? ।

( प्रदीपः ) व्रते ॥ ८० ॥ उदाहरणे विचार्यमस्तीति प्रश्नः—किमिति ॥

( समाधानभाष्यम् )

अश्राद्धभोजी ॥

( आक्षेपभाष्यम् )

किं योऽश्राद्धं भुङ्क्ते सोऽश्राद्धभोजी ? ॥ किं चातः ? । यदासावश्राद्धं न भुङ्क्ते तदास्य व्रतलोपः स्यात् । तद्यथा स्थण्डिलस्थायी यदा स्थण्डिले न तिष्ठति तदास्य व्रतलोपो भवति ॥

( प्रदीपः ) यदासाविति । ननु बुभुक्षाप्रयुक्तं श्राद्धाश्राद्धभोजनं प्रसक्तम् । तत्राश्राद्धं भुङ्क्त इत्यनेन श्राद्धभोजनं निषिध्यते । यथा पञ्चपञ्चनखा भक्ष्या इति शशादिव्यतिरिक्तपञ्चनखभक्षणं निवर्त्यते । तत्र कथं व्रतलोपः स्यात् । स्थायीत्यत्र तु स्थानविपरीतगमनाचरणे युक्तो व्रतलोपः । उच्यते—'अश्राद्धं मया भोक्तव्यम्'इति येन संकल्पः कृतः, स यदा बुभुक्षायां सत्यां यस्मिन्नहन्यश्राद्धं न भुङ्क्ते तदा तस्य स्यादेव व्रतलोपः ॥

( उद्योतः ) व्रते ॥ ८० ॥ स्थायीत्यत्रेति । नन्वत्र कथं णिनिः सुप उपपदस्याभावात् इति चेत् । न, उत्तरसूत्राद्बहुलग्रहणमपकृष्य केवलादपि विधानेनाक्षतेः । उत्थित एवाय भविष्यामि न तूपवेक्ष्यामीत्येवंसंकल्परूपं व्रतमेतत् । 'तिष्ठन्मूत्रयते' इत्यादिवदुत्थाने स्था धातुरत्रेति परे ॥ व्रतादि णिन्यन्तस्यैव वा प्रकरणाद्व्रतपरत्वम् ॥ परिसंख्यायां पूर्वपक्षः, विधिमाश्रित्य परिहारः ॥ यस्मिन्नहनीति । एकादश्यादौ ॥ भाष्ये तद्यथा स्थायीति । स्थायीत्यत्रोपपत्तिरुक्ता ॥ आस्थायीति पदमन्ये ॥ स्थण्डिलस्थायीति पाठ इति केचित् ॥ तदुभयमपि भाष्यकैयटविरुद्धम् ॥

( पर्युदासेन समाधानभाष्यम् )

एवं तर्हि णिन्यन्तेन समासो भविष्यति । न श्राद्धभोज्यश्राद्धभोजीति ॥

( प्रदीपः ) न श्राद्धभोजीति । समासार्थं प्रक्रियावाक्यमिदम्, न तु लौकिकम् । न हि केवलः श्राद्धभोजिशब्दो व्रतविषय उपपद्यते । अश्राद्धभोजिशब्दस्यैव व्रतविषयत्वात् ॥

( उद्योतः ) व्रतविषय इति । न हि तादृग्व्रतसंभवः । व्रते णिनेः प्रकृतत्वाच्च । प्रागुक्तैसंकल्पस्त्वप्रसिद्ध एवेति भावः ॥

( समाधानबाधकभाष्यम् )

नैवं शक्यम् । स्वरे हि दोषः स्यात् । अश्राद्धभोजीत्येवं स्वरः प्रसज्येत । अश्राद्धभोजीत्येवं चेष्यते ॥

( प्रदीपः ) एवं स्वर इति । अव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तं पदं स्यात् । कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वं

२ श्राद्धभोजनविषयः संकल्पस्त्वित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

चेष्यत इत्यर्थः ॥ ननु च णिनीत्यनेन पूर्वपदाद्युदात्तत्वेनैव भाव्यमिति नास्ति स्वरे भेदः ॥ अत्राहुः—यदा णिनीत्यत्र संज्ञायामित्यनुवर्तते, तदाऽसंज्ञायामस्ति स्वरे भेदः । अथ नानुवर्तते, स्वरभेदाभावः ॥

( उद्द्योतः ) अथ नानुवर्तत इति । उपमानं शब्दार्थेति सूत्रस्थषाष्ठभाष्येऽयमपि पक्षो दृश्यत इति भावः ॥ अत्र पक्षे स्वरभेदोक्तिरेकदेश्युक्तिरिति बोध्यम् । षाष्ठभाष्यं त्वेकदेश्युक्तिः ॥

( प्रतिसज्यप्रतिषेधाङ्गीकारभाष्यम् )

एवं तर्हि नञ एवायं भुजिप्रतिषेधवाचिनः श्राद्धशब्देनासमर्थसमासः—न भोजी श्राद्धस्येति ॥

( प्रदीपः ) भोजीति । एतदपि भुजिना संबन्धं नञः प्रदर्शयितुं प्रक्रियावाक्यमुपात्तम् । न हि केवलस्य भोजीशब्दस्य प्रयोगः । सुप्युपपदे प्रत्ययविधानात् । तदेतदुक्तं भवति—न श्राद्धं भुङ्क्त इति वाक्यं कृत्वा नञः श्राद्धशब्देनासमर्थसमासं विधायाश्राद्धशब्द उपपदे णिनिः कर्तव्यः । णिनीत्यत्र संज्ञानुवृत्तौ सत्यामत्र कृत्स्वरः ॥ ८० ॥

( उद्द्योतः ) भाष्ये भुजिप्रतिषेधवाचिन इति । तदर्थबोधकस्य नञ इत्यर्थः ॥ सुप्युपपदे इति । बहुलग्रहणं तु क्वचिदिष्टसिद्धये इति भावः ॥ ८० ॥

( प्रसज्यप्रतिषेधे गौरवभाष्यम् )

स तर्ह्यसमर्थसमासो वक्तव्यः ॥

( इष्टापत्तिभाष्यम् )

यद्यपि वक्तव्यः । अथ वै तर्हि[1] बहूनि प्रयोजनानि ॥ कानि ? । असूर्यपश्यानि मुखानि । अपुनर्गेयाः श्लोकाः । अश्राद्धभोजी ब्राह्मणः । "सुडनपुंसकस्येति"[2] ॥ व्रते ॥ ८० ॥

---

(५०२ खशणिनिप्रत्ययविधिसूत्रम् ॥ ३ । २ । १ आ.३० )

## ८५० आत्ममाने खश्च ॥ ३ । २ । ८३ ॥

( आक्षेपभाष्यम् )

आत्मग्रहणं किमर्थम् ? ।

( समाधानभाष्यम् )

परमाने मा भूदिति ॥

( प्रदीपः ) आत्ममाने ॥ ८३ ॥ आत्मशब्दः प्रत्यात्मवचनः परव्यावृत्तिं करोति ॥

( समाधानानुपपत्तिभाष्यम् )

क्रियमाणेपि वै आत्मग्रहणे परमाने प्राप्नोति ॥ किं कारणम् ? । आत्मन इतीयं कर्तरि षष्ठी । मान इत्यकारो भावे । स यद्येवात्मानं मन्यतेऽथापि परम् । आत्मन एवासौ मानो भवति ।

( समाधानसाधकभाष्यम् )

नैष दोषः । आत्मन इतीयं कर्मणि षष्ठी । कथम् ? । "कर्तृकर्मणोः कृति" इति ॥

( समाधानबाधकाक्षेपभाष्यम् )

ननु च कर्तर्यपि वै तेनैव विधीयते । तत्र कुत एतत्—कर्मणि भविष्यति, न पुनः कर्तरीति ॥

( समाधानान्तरभाष्यम् )

एवं तर्हि,

( २०६४ वार्तिकम् ॥ १ ॥ )

[ ॥ * ॥ कर्मकर्तरि च ॥ * ॥ ]

( भाष्यम् ) कर्मकर्तरि खश् चेति वक्तव्यम् ॥

( प्रश्नभाष्यम् )

तत्तर्हि वक्तव्यम् ॥

( समाधानभाष्यम् )

न वक्तव्यम् । आत्मन इतीयं कर्मणि षष्ठी । कथम् ? । "कर्तृकर्मणोः कृति" इति ॥

( समाधानबाधकस्मारणभाष्यम् )

ननु चोक्तं कर्तर्यपि वै तेनैव विधीयते । तत्र कुत एतत् । कर्मणि भविष्यति न पुनः कर्तरीति ? ॥

( प्रत्याख्यानसाधकभाष्यम् )

एवं तर्हि आत्मग्रहणसामर्थ्यात्कर्मणि विज्ञास्यते॥

( प्रदीपः ) कर्मकर्तरीति । यदा प्रत्ययार्थः कर्ता आत्मानमेव पाण्डित्यादियुक्तं मन्यते तदासौ कर्मकर्ता भवति तत्र यदि कर्तरि षष्ठी स्यात्तदात्मग्रहणमनर्थकं स्यात् । कर्तृसंबन्धाव्यभिचारान्मननक्रियायाः ॥

( उद्द्योतः ) आत्ममाने ॥ ८३ ॥ पूर्वं कर्मण इदानीं कर्तृत्वाभावेन युगपदेकस्य कर्मकर्तृत्वविरोधेन चेदमसंगतमत आह—यदेति । केवलविशिष्टभेदेन शब्दभेदेन वा न कर्तृकर्मविरोध इति भावः ॥ आत्मग्रहणमनर्थकमिति । यद्यप्युभयप्राप्ताविति नियमादपि न कर्तरीति वक्तुं शक्यम् । तथापि उभयोः प्रयोगाभावादत्र तदप्राप्तिः ॥ किं च तेन षष्ठ्यां समासाप्राप्तिः । कर्मणि चेति निषेधादित्याशयमाहुः ॥ तद्वक्ष्यति भाष्यकृत्—आत्मग्रहणसामर्थ्यात्कर्मणीति ॥

( प्रत्याख्यानबाधकभाष्यम् )

एवमपि कर्मकर्तृग्रहणं कर्तव्यम् । कर्मापदिष्टो यग्यथा स्यात्, श्यन्माभूदिति ॥

( प्रदीपः ) कर्मापदिष्ट इति । लान्तस्य कर्ता कर्मवदित्यनपेक्ष्योक्तं श्यनैव सिद्धेर्वक्ष्यमाणत्वात् । यकः सिद्धान्तलाभावादुपेक्षणीयत्वात् ॥

---

1 अथवेति तथाप्यर्थे एतर्हि, इदानीम् । असमर्थसमासकरणदशायामिति यावत् । ( र. ना. )

2 असमर्थसमासं सूत्रकारोपि करोतीति न तत्राप्रामाणिकतेत्याह—'सुडनपुंसकस्येतीति ॥ वार्तिककारोपि 'लिङ्गानां च न सर्वभाक्' इत्यादावङ्गीकरोतीति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( उद्योतः ) लान्तस्येति । इदमुपलक्षणं कर्मस्थया क्रियया तुल्यक्रियत्वस्यापि ॥ वस्तुतः कर्मकर्तृग्रहणमिति भाष्यस्य कर्मवद्भावो वक्तव्य इत्यर्थः । यथास्यापि कर्मकर्तृत्वेन ग्रहणं व्यवहारो भवति तथा वक्तव्यमित्यक्षरार्थः । श्यनैव तत्फलसिद्ध्या तत्प्रत्याख्यातम् ॥

( प्रत्याक्षेपभाष्यम् )

**कश्चात्र विशेषः यको वा श्यनो वा ॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**यकि सत्यन्तोदात्तत्वेन भवितव्यम् । श्यनि सत्याद्युदात्तत्वेन ॥**

( विशेषाभावभाष्यम् )

**श्यन्यपि सत्यन्तोदात्तत्वेनैव भवितव्यम् । कथम् ? । खश्स्वरः श्यन्स्वरं बाधिष्यते ॥**

( विशेषसाधकभाष्यम् )

**सतिशिष्टत्वात् श्यन्स्वरः प्राप्नोति ॥**

( विशेषबाधकभाष्यम् )

**आचार्यप्रवृत्तिर्ज्ञापयति सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधत इति । यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति ॥**

( उद्योतः ) भाष्ये यदयं तासेरिति । लावस्थायां स्वतास्योरुत्पत्तौ तु वाचनिकमेवेदं बोध्यम् ॥ ८३ ॥

( ज्ञापनस्यविशेषविषयत्वभाष्यम् )

**लसार्वधातुक एवैतज्ज्ञापकं स्यात् ॥**

( ज्ञापकस्यसामान्यविषयत्वभाष्यम् )

**नेत्याह । अविशेषेण ज्ञापकम् ॥ आत्ममाने ॥८३॥**

(प्रदीपः) अविशेषेणेति । सार्वधातुकमात्र इत्यर्थः ॥८३॥

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥**

इति श्रीमदुपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे तृतीयस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयस्य द्वितीये पादे प्रथममाह्निकम् ॥

---

( ५०३ अधिकारसूत्रम् ॥ ३ । २ । २ आ. १ )

## ८५१ भूते ॥ ३ । २ । ८४ ॥

( भूतपदार्थविशेष्यभूतपदार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**भूत इत्युच्यते । कस्मिन् भूते ? ।**

( प्रदीपः ) भूते ॥ ८४ ॥ यस्य स्वसत्ता व्यपवृक्ता तत्सर्वं भूतशब्देनोच्यते । तत्र विशेषज्ञानाय पृच्छति—कस्मिन्निति ॥

( उद्योतः ) भूते ॥ ८४ ॥ यस्य स्वसत्ता व्यपवृक्तेति । अतीतेत्यर्थः ॥

( समाधानभाष्यम् )

**काले ।**

( प्रदीपः ) इतर आह—काल इति । तस्यैव भूतादिशब्दवाच्यत्वेन सुप्रसिद्धत्वादिति भावः ॥ अत्र केचिन्नित्यं कालं पदार्थानामनुज्ञाप्रतिबन्धाभ्यां स्थित्युत्पत्तिप्रलयहेतुमाचक्षते । तत्र संसर्गिसूर्यादिक्रियाभेदाश्रयो मासादिभेदव्यवहारो भूतादिव्यपदेशश्च ॥ अन्ये तु प्रसिद्धपरिमाणक्रिया सूर्यादिकर्तृका अप्रसिद्धपरिमाणायाः क्रियायाः परिच्छेदायोपात्ता अहरादिव्यपदेश्या काल इत्याहुः ॥

( उद्योतः ) तस्यैवेति । अन्यत्र तत्कालवृत्तित्वेन भूतशब्दप्रयोगो गौण इति भावः ॥ एतदाशयानभिज्ञस्य न वै इत्यादिग्रन्थ इति तात्पर्यम् ॥ अनुज्ञा प्रतिबन्धार्थाभ्यामिति तद्रूपाभ्यामर्थाभ्यामित्यर्थः । तत्रानुज्ञया स्थित्युत्पत्तिहेतुः । प्रतिबन्धेन प्रलयहेतुः । ईश्वराधिष्ठितत्वेन च तदुपपत्तिः ॥ ननु नित्ये काले तत्सत्ताया व्यपवृक्तत्वाभावात्कथं भूतत्वव्यवहार इत्यत आह—तत्र संसर्गीति । तत्क्रियया उपाधिभूतया यो भेद उपधेयस्य तत्कृतो मासादिव्यवहार इत्यर्थः ॥ अन्ये त्विति । तथा च तस्या अनित्यत्वात् सिद्ध एव भूतादिव्यवहार इत्यर्थः । आद्ये पक्षे क्षणोपाधेर्निर्वक्तुमशक्यत्वम् । उत्तरदेशसंयोगावच्छिन्नक्रियेति चेत् । तस्या विशेष्यविशेषणसंबन्धरूपत्वे त्रयाणामपि स्थिरत्वात्क्षणव्यवहारनियामकत्वाभावः । अतिरिक्तत्वे सिद्धोऽतिरिक्तः क्षणपदार्थ इति तत्प्रचयैरेव कलामुहूर्तादिव्यवहारोपपत्तौ किमखण्डेन तेन । स्पष्टं चेदं कालाः परिमाणिनेत्यत्र भाष्ये इति निरूपितं तत्रैव ॥ ईश्वरस्यापि कालनियामकत्वेन कालत्वव्यवहारः शुक्लादिष्विति बोध्यम् ॥ अन्ये त्विति मतेऽपि एष दोषोऽस्त्येव । किं च प्रसिद्धपरिमाणेत्युक्तिरसंगता, तस्या अपि क्रियान्तरस्यैव परिच्छेदकत्वेऽनवस्थापत्तिरिति दिक् ॥

**( भाष्यम् ) न वै कालाधिकारोस्ति ॥**

( प्रदीपः ) न वै कालाधिकार इति । ततश्च सामान्यशब्दस्य विशेषेऽवस्थानं न लभ्यत इत्यर्थः ॥

**( भाष्यम् ) एवं तर्हि धातोरिति वर्तते । धातौ भूते ॥**

**( भाष्यम् ) धातुर्वै शब्दः । न च शब्दस्य भूतभविष्यद्वर्तमानतायाः संभवोस्ति ॥**

( प्रदीपः ) न च शब्दस्येति । शब्दस्यार्थे गुणभावाद्गुणस्य विशेषणसंबन्धायोग्यत्वान्नित्यत्वाद्वा शब्दस्यानित्यत्वेऽपि

---

१ अनुज्ञा स्थूलरूपतया सत्त्वसंपादनं तेन स्थित्युत्पत्तिहेतुः । प्रतिबन्धो निरोधः स्वकारणे सूक्ष्मरूपतयाऽवस्थानं तत्संपादनेन प्रलयहेतुः । न तु वस्तुनो वस्तुगत्या जन्मप्रलयौ स्त इति भावः । इदं च सत्कार्यवादाभिप्रायेण । ( र. ना. )

२ 'बन्धार्थाभ्याम्' इति नागेशोपलब्धपाठः ॥

३ उपधेयस्य, कालस्येत्यर्थः । ( र. ना. )

४ शब्दस्येति नित्यत्वादिति पूर्वेणान्वेति । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भूतात्प्रत्ययविधानासंभवादुच्चरितत्वलक्षणभूतत्वाश्रये च विशेषणवैयर्थ्यादिति भावः ॥

( उद्द्योतः ) शब्दस्येति । स्वाभिधेयप्रतिपादने व्यग्रतया विशेषणसंबन्धायोग्यत्वादिति भावः । तदाह—गुणस्येति ॥ नित्यत्वाद्वेत्यनेन भूतादिव्यवहारायोग्यत्वं दर्शयति ॥ वैयर्थ्यादिति । अनुच्चारितात्प्रत्ययविधेरसंभवादिति भावः ॥ न च शब्दस्येति भाष्ये तस्य नित्यत्वेन भूतादिविशेष्यतायाः संभवो नेत्यर्थः ॥ अनित्यत्वपक्षेऽपि यथा वर्तमानशब्दस्य प्रकृतित्वसंभवे । न तथा भूतभविष्यतोः शब्दयोः प्रकृतित्वसंभव इति योजना बोध्या ॥

( भाष्यम् ) शब्देऽसंभवादर्थे कार्यं विज्ञास्यते ॥ कः पुनर्धात्वर्थः ? । क्रिया । क्रियायां भूतायाम् ॥

( उद्द्योतः ) क्रियाया भूतायामिति । तस्यां भूतत्वं च वर्तमानध्वंसप्रतियोगिकालवृत्तित्वम् ॥

( आक्षेपवार्तिकशेषभाष्यम् )

यद्येवं ।

( २०६५ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः ॥ * ॥

( भाष्यम् ) निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् ॥

का इतरेतराश्रयता ? ।

भूतकालेनायं शब्देन निर्देशः क्रियते । निर्देशोत्तरकालं च भूतकालता । तदेतदितरेतराश्रयं भवति ॥ इतरेतराश्रयाणि कार्याणि च न प्रकल्पन्ते ॥

( प्रदीपः ) भूतकालेनेति । भवतेर्निष्ठाप्रत्ययो भूतक्रियावाचिनो विधातव्यः । न च भूताधिकारमन्तरेण निष्ठाप्रत्ययस्य भूतक्रियाविषयत्वं लभ्यते । न च भूतक्रियाविषयनिष्ठाविधानमन्तरेण भूताधिकार उपपद्यते । ततश्चाधिकाराश्रयो निष्ठाप्रत्ययस्तदाश्रयश्चाधिकार इतीतरेतराश्रयत्वमित्यर्थः ॥

( उद्द्योतः ) भूतकालेनेति । भूतकालक्रियावाचकेनेत्यर्थः ॥

( २०६६ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अव्ययनिर्देशात्सिद्धम् ॥ * ॥

( भाष्यम् ) अव्ययवता शब्देन निर्देशः करिष्यते । अवर्तमाने अभविष्यतीति ।

( उद्द्योतः ) अव्ययनिर्देशादिति वार्तिकेऽव्ययपदमर्शआद्यजन्तम्, न्यासान्तरपरं चेत्याशयेनाह—अव्ययवतेति ॥

( अनुयोगभाष्यम् )

स तर्हि अव्ययवता शब्देन निर्देशः कर्तव्यः ? ।

( समाधानभाष्यम् )

न कर्तव्यः । अव्ययमेष भूतेशब्दः । नैषा भवतेर्निष्ठा ॥

कथमव्ययत्वम् ? ।

उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा । निपातोऽव्ययमित्यव्ययसंज्ञा ॥

( उद्द्योतः ) अव्ययमेष इति । अव्ययस्य भूतेशब्दस्य निर्देशादिति वार्तिकार्थ इति भावः ॥

( निष्ठापक्षेपि समाधानभाष्यम् )

अथापि भवतेर्निष्ठा । एवमप्यव्ययमेव । कथम् ? । नव्येतीत्यव्ययमिति ।

क्व पुनर्न व्येति ? ।

एतौ कालविशेषौ भविष्यद्वर्तमानौ । स्वभावतो भूते एव वर्तते ॥

( प्रदीपः ) एवमपीति । न शास्त्रीयमव्ययत्वमभिप्रेतं, किं तर्हि नित्यत्वमित्यर्थः । ततो नित्यो भूतशब्दोऽतिक्रान्तार्थवाची, नित्येनार्थेन भविष्यद्वर्तमानप्रतिद्वन्द्विना संबद्धोधिक्रियत इत्यर्थः ॥

( उद्द्योतः ) नित्येनार्थेनेति । साधुत्वज्ञानं न शाब्दे कारणम्, नाप्यसाधुत्वज्ञानं प्रतिबन्धकमित्यर्थः । परमतेऽपि शिष्टोच्चरितत्वेन साधुत्वानुमानाद्बोधः । शास्त्रजं तल्लक्षं तु पश्चाद्भविष्यतीत्यदोषः । यदि तु शास्त्रेणैव निष्पाद्यः स्यात्स्यादयं दोष इति भावः ॥ भाष्ये—न व्येतीति । विविधमर्थं न प्राप्नोतीत्यक्षरार्थः ॥ शास्त्राभावेऽपि तदर्थक एवायमिति भावः ॥ तदुक्तं कैयटेन—नित्यत्वमित्यर्थ इति ॥ क्व पुनर्न व्येतीति । क्वेति विषयसप्तमी । कस्मिन्विषये विविधमर्थं न प्राप्नोति=किं रूपं विविधमर्थं न प्राप्नोतीत्यर्थः ॥

तत्रोत्तरमाह—भाष्ये—एतौ कालविशेषाविति ॥

( वार्तिकावतरणभाष्यम् )

यदि तर्हि न व्येतीत्यव्ययम्—

( २०६७ अधिकारवैयर्थ्याक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ न वा तद्विधानस्यान्यत्राभावात् ॥ * ॥

( भाष्यम् ) न वा भूताधिकारेणार्थः । किं कारणम् ? । तद्विधानस्यान्यत्राभावात् । येऽपि ह्येते इत उत्तरं प्रत्ययाः शिष्यन्ते तेऽप्येतौ कालविशेषौ न वियन्ति भविष्यद्वर्तमानौ । स्वभावतो भूत एव वर्तन्ते ॥

( उद्द्योतः ) तद्विधानस्येति । तस्मिन्विधानं यस्येत्यर्थः ॥

---

१ तद्गुपाधेरुपाधिर्भवति विशेषणस्य च विशेषणमिति न्यायादपि विशेषणसंबन्धायोग्यत्वं बोध्यम् । ( र. ना. )

२ नित्यार्थक इत्यर्थः । संबद्धो वाच्यवाचकभावरूपसंबन्धवान् इत्यर्थः । ( र.ना. )

३ ननु भूतेशब्दस्य अव्ययस्य नित्यार्थे साधुत्वबोधकशास्त्राभावेन कथं ततस्तदर्थविषयकशाब्दबोध इत्याशङ्क्याह साधुत्वज्ञानमित्यादि । ( र. ना. )

४ साधुत्वप्रत्यक्षमित्यर्थः । ( र. ना. )

५ 'एतेऽप्येतौ' ॥

६ 'वर्तमानभविष्यन्तौ' ॥

७ 'स्वभावत एव ते भूते' ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


भूतशब्दवत्तेपि स्वभावत एव भूतमात्रवाचका भवन्ति किमधिकारेणेति भावः ॥

( समाधानवार्तिकावतरणभाष्यम् )

अत उत्तरं पठति—

( २०६८ समाधानवार्तिकम् ॥ ४ ॥ )

[॥ * ॥ प्रयोजनं कुमारघाती शीर्षघाती आखुहा बिडालः सुत्वानः सुन्वन्तः सुषुपुषोऽनेहाः अग्निमादधानस्य ॥*॥]

( भाष्यम् ) भूताधिकारस्य प्रयोजनम् । कुमारघाती, शीर्षघाती, आखुहा बिडालः, सुत्वानः सुन्वन्तः सुषुपुषोऽनेहाः अग्निमादधानस्य [ भूतेकालनिवृत्त्यर्थं भविष्यद्वर्तमानकालसंप्रत्ययार्थम् ? ] ॥

कुमारघाती शीर्षघातीति भविष्यद्वर्तमानार्थौ भूतनिवृत्त्यर्थः ॥

आखुहा बिडाल इति भविष्यद्वर्तमानार्थौ भूतनिवृत्त्यर्थः । इतरथा हि ब्रह्मादिनियमस्त्रिषु कालेषु निवर्तकः स्यात् ॥

सुत्वानः सुन्वन्तः । यज्ञसंयोगे ङ्वनिपस्त्रिषु कालेषु शतापवादो मा भूत् ॥

सुषुपुषः । नजिङ् सर्वकालापवादो मा भूत् ॥

अनेहा इति वर्तमानकाल एव । अन्यत्र अनाहन्ता ॥

आदधानस्य कानचश्चानश् ताच्छील्यादिषु सर्वकालापवादो मा भूत् । अग्निमादधानस्येत्येवान्यत्र ॥ भूते ॥ ८४ ॥

( प्रदीपः ) कुमारघातीति । यदीह भूताधिकारो न क्रियते तदा कर्मणि हन इति णिनिः सामान्येन विधीयते । कुमारशीर्षयोर्णिनिरित्ययमपि णिनिस्तथैव कालसामान्ये । पुनर्विधानं तु वासरूपनिवृत्त्यर्थं स्यात् । ततश्च विशेषविहितः कुमारशीर्षयोर्णिनिरित्ययं भूतेऽपि प्रसज्येत । सति तु भूताधिकारे तक्रकौण्डिन्यन्यायेन कुमारशीर्षयोरित्यनेन भूते णिनिं बाधित्वा भविष्यद्वर्तमानयोरेव णिनिर्विधीयते ॥

आखुहेति । सति भूताधिकारे ब्रह्मादिष्वेव हन्तेर्भूते क्विब् भवतीति नियमेन भूत एवोपपदान्तरे क्विन्निवर्त्यते न तु कालान्तर इत्याखुहेति भविष्यद्वर्तमानयोः प्रयोग उपपन्नो भवति ॥

सुन्वन्त इति । सुञो यज्ञसंयोग इति शतृप्रत्ययः । तत्र यदि भूताधिकारो वर्तमानाधिकारश्च न क्रियते तदा यज्ञसंयोगे विशेषे विधीयमानः शता कालत्रयेऽपि ङ्वनिपं बाधेत । ततश्च भूते यज्ञसंयोगे सुत्वेति न स्यात् । अथ वासरूप इति ङ्वनिब् विधीयते तथापि सुत्वा सुन्वन्निति कालभेदो न स्यात् । सति त्वधिकारे कालभेदेन तयोरवस्थानं भवति ॥

सुषुपुष इति । असति भूतवर्तमानाधिकारे विशेषविहितेन नजिङा लिटो बाधनं स्यात् । ताच्छीलिकेषु वासरूपविधिर्नास्ति । सति त्वधिकारे भूते लिड्, वर्तमाने नजिङिति वाध्यबाधकभावाभावः ॥

अनेहा इति । नञ्यहन एह चेति असिप्रत्ययोऽसत्यधिकारे सर्वस्मिन्काले तृचं बाधेत । सति त्वधिकारे वर्तमानकाल एवौणादिकस्तृचं बाधते ॥

चानशिति । असत्यधिकारे कानचश्चानश् बाधकः स्यात् । कः पुनरनयोर्भेदः यावताऽन्यस्तानामाद्रिरिति लसार्वधातुके विधीयते न सार्वधातुकमात्रे । एवं तर्ह्युपग्रहकृतो भेदः । कानजात्मनेपदत्वात्कर्त्रभिप्राय एव भवति । चानश् पुनरविशेषेण । सति त्वधिकारे भूते कानज् वर्तमाने चानशिति बाध्यबाधकभावाभावः ॥ ८४ ॥

( उद्योतः ) सामान्येनेति । कालसामान्येनेत्यर्थः । सामान्ये इति सप्तम्यन्तपाठस्तु युक्त एव । ननु वृत्तौ कर्मणीनि सूत्रे कुत्सितग्रहणं कृतमिति अकुत्सितार्थं तदिति चेन्न । कुत्सितग्रहणस्य भाष्येऽभावात् । शब्दशक्तिस्वभावसिद्धं चेत्तत्रापीति भाष्याशयः ॥ ननु तेनैव सिद्धेः कुमारेत्यादि व्यर्थमिति चेत्तत्राह—पुनर्विधानं त्विति । कुमारहन्त्रेत्यादि व्यावृत्तये इत्यर्थः ॥ विशेषविहितः उपपदविशेषे विहितः ॥ इत्ययं भूतेऽपीति । इत्ययमपि भूते प्रसज्येतेत्यन्वयः ॥ तक्रकौण्डिन्येति । कुमारशीर्षयोर्विशेषविहितो णिनिः कर्मणि हन इत्येतं बाधते तत्र तेनापि णिनेरेव विधानेन णिनेर्बाधस्य वक्तुमशक्यतया तत्सहचरितभूतकालो बाध्यते इति वर्तमानभविष्यतोरेव कुमारेत्यादि णिनिर्भवति । एवं च तद्बाधनेन चरितार्थं शास्त्रमिति वासरूपन्यायबाधे मानाभावेन कुमारहन्तेत्यापि सिध्यतीति भावः ॥ कुमारघातीत्यादौ विधीयमानः कुमारेत्यादिणिनिर्भविष्यद्वर्तमानयोर्यथास्यात्, तस्य भूतार्थनिवृत्तिश्च यथा स्यादिति भूताधिकार इति भाष्याक्षरार्थः ।

इदं चिन्त्यम् । तक्रकौण्डिन्यन्यायस्य विधेयविषयत्वात् । तस्माद्भूताधिकारसामर्थ्यात्कर्मणि हन इत्यत्रायमेव णिनिर्भूत इति नियमादन्यस्य णिनेर्भूते निवृत्तिरिति भाष्यार्थः । यथास्य णिनेरधिकाराभावेऽपि स्वभावत एव भूते वृत्तिस्तथा कुमारेत्यस्य स्वभावत एव भूते वृत्तिर्भविष्यतीत्यरुचेः प्रयोजनान्तरमाह—भाष्ये आखुहेति ।

यज्ञसंयोग इति । यज्ञसंयोगविषये शता ङ्वनिपस्त्रिषु कालेषु

१ अयं कोष्ठकान्तर्गतो वार्तिकस्त्वस्माभिः कस्मिन्नपि पुस्तकेऽनुपलब्धोऽपि व्याख्याभाष्यानुसारेणास्माभिः कल्पित इति क्षन्तव्यम् ॥

२ कोष्ठकान्तर्गतः पाठो नैव बहुषु पुस्तकेषु ॥

३ भविष्यत्सहितो वर्तमानार्थ इत्यर्थः । ( र. ना. )

४ स्वपेः क्वसौ यस्य रूपम् । नजिङ्प्रत्ययो वर्तमाने स्वमक् । ( र. ना. )

५ वृत्ताविव भाष्येऽपि 'कर्मणि कुत्सिते' इति वार्तिकस्य समुपलभ्यमानत्वाचिन्त्योयं समाधिः ॥ दाधिमथास्तु 'कर्मणीनि' इति सूत्रभाष्ये कुत्सितग्रहणवार्तिकसत्त्वेऽपि 'कुमारशीर्षयोः—' इत्यत्र तत्संबन्धस्याग्रथ्यत्वाच्छङ्कापीयं न संभवतीति वदन्ति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अपवादो मा भूदित्यन्वयः । प्रसङ्गाद्वर्तमानाधिकारस्यापि प्रयोजनप्रदर्शनम् । वार्तिके भूताधिकारस्येत्युपलक्षणम् । तत्र ङ्वनिप् भूताधिकारे, शता वर्तमानाधिकारे । ङ्वनिप् सुयजोर्ङ्वनिबिति विहितः ॥

कालभेदो न स्यादिति । वासरूपेण वर्तमानेऽपि ङ्वनिप् प्राप्नोतीति भावः ॥

नजिङेति । स्वपितृषोर्नजिङ् । अयं वर्तमानाधिकारे, लिट् भूताधिकारे ॥ लिटः='छन्दसि लिट्' 'लिटः कानज्वा' 'क्वसुश्चे'त्यस्य ॥ भाष्ये सर्वकालापवाद इत्यस्य सर्वकालद्योतकप्रत्ययापवाद इत्यर्थः ॥ भूतकाललिटोपीति यावत् ॥

असत्यधिकारे इति । वर्तमाने इत्यधिकारेऽसतीत्यर्थः ॥ सति त्विति । वर्तमान इत्यधिकारे सति । उणादय इत्यस्य तदधिकारस्थत्वात् असिर्वर्तमानकाल इति भावः । रूढिशब्दत्वादेवोणादिषु वासरूपविधिर्नास्तीति तात्पर्यम् । एतत्प्रयोजनोक्तिरेकदेशिनः । उणादीनामव्युत्पन्नत्वेऽसंभवात् । ण्वुलतृचोरपि वर्तमानकाल एव साधुत्वस्य तत्सूत्रे भाष्ये उक्तत्वेनान्यत्रानाहन्तेत्यस्यासंगतेश्च ॥

असत्यधिकार इति । भूतवर्तमानयोरधिकारयोरसतोरित्यर्थः ॥ कानच इति । क्वसोरप्युपलक्षणमिदम् । यद्वा कानजुपलक्षितस्य लिट इत्यर्थः ॥ लसार्वधातुकेति । तत्र चानशः सार्वधातुकत्वेऽपि लादेशत्वाभावः । कानचो लादेशत्वेप्यार्धधातुकत्वमित्युभयत्रापि अन्तोदात्तत्वमेवेति भावः ॥ कर्त्रभिप्राये एवेति । अतस्मिंस्तु क्वसुरिति भावः । भाष्ये चानश् ताच्छील्यादिषु सर्वकालापवादो माभूदित्युत्तरमग्निमादधानस्येव पाठः । सुषुपुषोऽनेहाऽग्निमित्यपपाठः । आदधानस्येत्येवान्यत्रेति । भूतार्थातिरिक्तवर्तमानत्वविवक्षायां अकर्त्रभिप्राये कर्त्रभिप्राये च आदधानस्येत्येव । भूते तु कर्त्रभिप्राये एव तथा, अकर्त्रभिप्राये तु कंझुरेवेत्यर्थः ॥ ८४ ॥

---

( ५०४ क्विप्प्रत्ययनियमसूत्रम् ॥ ३ । २ । २ आ. २ )

## ८५४ ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ३।२।८७ ॥

( आक्षेपभाष्यम् )

**किमर्थं ब्रह्मादिषु हन्तेः क्विब्विधीयते, न "क्विप्चान्येभ्योपि दृश्यते" इत्येव सिद्धम् ? ।**

( २०६९ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् ॥ * ॥

**( भाष्यम् ) नियमार्थोयमारम्भः ॥ [ ब्रह्मादिष्वेव हन्तेर्भूते क्विब्यथा स्यादिति ॥ ]**

**किमविशेषेण ? ।**

( प्रदीपः ) ब्रह्मभ्रूण ॥ ८७ ॥ किमविशेषेणेति । किं धातूपपदकालप्रत्ययाश्चत्वारोपि नियम्यन्ते, अथ किंचिदेव नियम्यत इति प्रश्नः ॥

( उद्द्योतः ) ब्रह्मभ्रूण ॥ ८७ ॥ किं धातूपपदेति । भाष्ये नियमार्थोयमारम्भः । किमविशेषेणेत्येव पाठः । ब्रह्मादिष्वेवेत्यादिनियमाकारलेखस्तु लेखकप्रमादात् । अन्यथा तदाकारप्रदर्शनेनैव नियमान्तरतिरस्कारात्पुनः प्रश्नानुपपत्तेः ॥

**( भाष्यम् ) नेत्याह । उपपदविशेषे एतस्मिंश्च विशेषे ॥**

( प्रदीपः ) उपपदविशेष इति । अनेन धातुनियमं दर्शयति । ब्रह्मादिष्वेव हन्तेर्भूते क्विब् भवति नोपपदान्तरे । तेन पुरुषं हतवानित्यत्र क्विन्न भवति ॥

( उद्द्योतः ) उपपदविशेषे इति । नियमस्य सजातीयापेक्षत्वाद्धन्तेः क्विप् उपपदविशेषे एवेत्यर्थः ॥ एतस्मिंश्च विशेषे इति । भूत इत्यर्थः ॥ तेन भूते हन्तेः क्विप् ब्रह्मादिष्वेवेति नियम इति भावः ॥ तदाह—अनेनेति । धातोर्ब्रह्माद्यतिरिक्ते उपपदे भूतकालावच्छिन्नेर्थेवर्तमानात् क्विपोऽसंबन्धबोधकत्वादिति भावः ॥

**( भाष्यम् ) अथ ब्रह्मादिषु हन्तेर्णिनिना भवितव्यम् ? ।**

**न भवितव्यम् । किं कारणम् ? ।**

**उभयतोनियमात् ।**

( प्रदीपः ) अथेति । कर्मणि हन इत्यनेनेति भावः ॥

(उद्द्योतः) भाष्ये अथेति । एतन्मात्रनियमाङ्गीकारे इत्यर्थः ॥

**(भाष्यम्) उभयतो नियमोयम् । ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति । क्विबेव हन्तेर्भूते ब्रह्मादिष्विति ॥**

(प्रदीपः) क्विबेवेति । ब्रह्मादिषु हन्तेर्भूते क्विबेव भवति न प्रत्ययान्तरमिति । क्विब् भूतकाले नियम्यत इति कालनियमोयं भवति । एतदेव नियमद्वयं भाष्यकारेणाश्रितम् ॥ 'ब्रह्मादिषु हन्तेरेव भूते क्विब् भवति । ब्रह्मादिषु हन्तेः क्विब् भूत एवे'त्येतत्तु नियमद्वयं नाभ्युपगतम् ॥ अन्यैस्त्वाहोपुरुषिकया चतुर्विधो नियमो व्याख्यातः । स भाष्यविरोधान्नादरणीयः ॥

(उद्द्योतः) कालनियम इति । भूतकालावच्छिन्नार्थाद् धातोः क्विबतिरिक्तासंबन्धबोधकत्वादिति भावः ॥ तत्र केवलधातोः प्रत्ययान्तरसंबन्धस्यावारणात् तात्पर्यतः कालनियमोयमिति बोध्यम् ॥ नियमद्वयमिति । ब्रह्मादिष्वेव, क्विनेति च । कथ्यमानस्यैवकारस्य श्रुत्युपस्थापितेन्वयो न्याय्यः । स च भाष्यप्रामाण्यादुभयत्रापीति तत्त्वम् ॥

( २०७० इष्टोपपत्तिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ तथा चोत्तरस्य वचनार्थः ॥ * ॥

**( भाष्यम् ) एवं च कृत्वोत्तरस्य योगस्य वचनार्थं**

---

१ वार्तिकपदेन वार्तिकेऽपि तथा पाठ आसीदिति स्पष्टमेव मतीयते । यद्वा वार्तिकपदं वार्तिकव्याख्याभूतमाष्यस्योपलक्षणम् ॥

२ एवं पाठेन "पाणिनिना 'आतो मनिन्क्वनिब्वनिपश्च । क्विप् च । अन्येभ्योऽपि दृश्यते' इत्येवमेव सूत्रक्रमः आश्रितः । ननु 'अन्येभ्योपि दृश्यते । क्विप् च' इति" इति नागेशभट्टपर्यालोचिताष्टाध्यायी पाठः ॥ दाक्षिणात्यानां सिद्धान्ते तु 'कुत्वं कस्मान्न भवति—'चोकुः पदस्य' इति भाष्यसमालोचनेन मुक्तसूत्रस्यान्तेऽनुवृत्तसूत्रयोजनेन न कोऽपि प्रचरिताष्टाध्यायीपाठे भाष्यविरोध इति बोध्यम् ॥

३ अयं कोष्ठकपतितः पाठो लेखकप्रमादपतितः' इत्युद्योते नागेशः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपपन्नो भवति—"बहुलं छन्दसि"इति । 'यो मातृहा पितृहा भ्रातृहा' । न च भवति—अमित्रघात इति ॥ ब्रह्मभ्रूण ॥ ८७ ॥

( प्रदीपः ) तथा चेति । यस्माद् ब्रह्मादिष्वेवेति नियमोऽनेन क्रियते तस्मादुत्तरस्य योगस्य वचने प्रयोजनमस्ति । उपपदान्तरेपि हन्तेश्छन्दसि क्विब्यथा स्यादिति ॥ ८७ ॥

( उद्योतः ) उत्तरस्य वचनार्थ इति । सापेक्षत्वेऽपि गमकत्वात्समासः ॥ धातुनियमस्येदं मानमिति दर्शयति—यस्मादिति । न चैतदर्थं छन्दसीत्येवास्तु सामर्थ्यादुपपदान्तरे भविष्यति किं बहुलग्रहणेनेत्यत—आह—भाष्ये न च भवति अमित्रेति । तावन्मात्रोक्तौ क्विवेवेति नियमादण् स्यात् स भवत्वित्येतदर्थं बहुलपदमिति भावः ॥ ८७ ॥

( ५०५ इनिप्रत्ययविधिसूत्रम् ॥ ३ । २ । २ आ. ३ )

## ८६० कर्मणीनि विक्रियः ॥ ३।२।९३ ॥

( २०७१ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कर्मणि कुत्सिते ॥ * ॥

( भाष्यम् ) कर्मणि कुत्सिते इति वक्तव्यम् । इह मा भूत्—धान्यविक्राय इति ॥

( प्रदीपः ) कर्मणि ॥९३॥ कर्मणि कुत्सित इति । यस्य सोमघृतादेः शास्त्रेण विक्रयः प्रतिषिद्धस्तत्कर्मं विक्रये कुत्सितम् ॥ ९३ ॥

(उद्योतः) कर्मणीति ॥ ९३ ॥ ननु कर्मणः कथं कुत्सितत्वमत आह—यस्य सोमेति ॥ ९३ ॥

( अथ डप्रत्ययप्रकरणम् )

( ५०६ डप्रत्ययविधिसूत्रम् ॥ ३ । २ । २ आ. ४ )

## ८६८ अन्येष्वपि दृश्यते ॥ ३।२।१०१ ॥

( २०७२ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अन्येभ्योपि दृश्यते ॥ * ॥

( भाष्यम् ) अन्येभ्योपि दृश्यत इति वक्तव्यम् । इहापि यथा स्यात्—आखा उखा परिखा ॥ अन्येष्वपि ॥ १०१ ॥

( प्रदीपः ) अन्येष्वपि ॥ १०१ ॥ अन्येष्विति सप्तमीनिर्देशादुपपदान्तरमेवाश्रितं न तु धात्वन्तरमित्याह । अन्येभ्योपीति ॥ १०१ ॥

१ अत्र क्विन्न भवतीति भावः । ( र. ना. )

( ५०७ निष्ठासंज्ञकप्रत्ययविधिसूत्रम् ॥ ३ । २ । २ आ. ५ )

## ८६९ निष्ठा ॥ ३ । २ । १०२ ॥

( २०७३ अन्योन्याश्रयदूषणवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ निष्ठायामितरेतराश्रयत्वाद्-प्रसिद्धिः ॥ * ॥

( भाष्यम् ) निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् ॥

केतरेतराश्रयता ? ।

सतोः क्तक्तवत्वोः संज्ञया भवितव्यम् । संज्ञया च क्तक्तवतू भाव्येते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥

( २०७४ गौरवापत्तिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ द्विर्वा क्तक्तवतुग्रहणम् ॥ * ॥

(भाष्यम्) द्विर्वा क्तक्तवतुग्रहणं कर्तव्यं भवति—"क्तक्तवतू भूते" । "क्तक्तवतू निष्ठा" इति ॥

( गौरववारणभाष्यम् )

यदि पुनरिहैव निष्ठासंज्ञाप्युच्येत—"क्तक्तवतू भूते" । ततो "निष्ठा" । क्तक्तवतू निष्ठासंज्ञौ भवत इति ॥

किं कृतं भवति ? ।

द्विः क्तक्तवतुग्रहणं न कर्तव्यं भवति ॥

( गौरवस्यापरिहार्यताभाष्यम् )

एवमपि "तौ" इति वक्तव्यं स्यात् । वक्ष्यति ह्येतत्—*तौ सदिति वचनमसंसर्गार्थम्* इति । असंसक्तयोर्भूतकालेन क्तक्तवत्वोर्निष्ठा संज्ञा यथा स्यात्—जिमिदा । मिन्नः । जिक्ष्विदा क्ष्विण्णः ॥

( उद्योतः ) निष्ठा ॥ १०२ ॥ तौ सदिति वचनमित्यादिवार्तिकं तौ सदिति सूत्रे । तेन समानन्यायमिदमित्याह—भाष्ये असंसक्तयोरिति । ताविद्युक्ते हि अगृहीतविशेषस्वरूपमात्रपरामर्शान्न दोष इति भावः ॥ मिन्न इत्यादौ जीतः क्त इति वर्तमाने क्तः ॥

( अन्योन्याश्रयद्विःकरणदूषणपरिहारभाष्यम् )

यदि पुनरदृष्टश्रुतावेव क्तक्तवतू गृहीत्वा निष्ठासंज्ञोच्येत ।

( प्रदीपः ) निष्ठा ॥ १०२ ॥ यदि पुनरिति । यौ लौकिके प्रयोगे न दृष्टौ, नापीह शास्त्रे श्रुतौ, तौ क्तक्तवतू निर्दिश्य संज्ञा विधीयते । एतदुक्तं भवति—इहैव प्रकरणे 'क्तक्तवतू निष्ठा' इति सूत्रं कर्तव्यम् । यौ भूते क्तक्तवतू तौ निष्ठासंज्ञौ भवतः । तत्र संज्ञाविधानान्यथानुपपत्त्या तयोर्भूते विधानमनुमास्यते । इतरेतराश्रयदोषश्च न भविष्यतीति ॥

२ 'तौ' इत्यनेन क्तक्तवत्वोः परामर्शेनैव लाघवम्, किंतूपदर्शितगौरवमव्याहतमेवेति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( उद्योतः ) यदि पुनरिति भाष्यं पूर्वोक्तेन पुनरुक्तमित्याशङ्क्याह—यौ लौकिक इति । न दृष्टाविति । अनुबन्धविशिष्टौ न दृष्टावित्यर्थः । कथमश्रुतत्वमत आह—एतदुक्तं भवतीति ।

( परिहाराशक्यत्वभाष्यम् )

नैवं शक्यम् । दृष्टश्रुतयोर्हि न स्यात्—'ञिमिदा–स्विन्नः, ञिक्ष्विदा–क्ष्विण्ण'इति । तस्मान्नैवं शक्यम् । न चेदेवं, द्विः क्तक्तवतुग्रहणं कर्तव्यं भवति । इतरेतराश्रयं वा भवति ॥

(प्रदीपः) दृष्टश्रुतयोरिति । यद्यपि क्तवतुरन्यो नास्ति । तथापि संज्ञाविधाने द्वयोः सह निर्देशादत्रापि द्विवचनेन निर्देशो, न तु द्वित्वं विवक्षितम् ॥

( उद्योतः ) भाष्ये दृष्टश्रुतयोरिति । ञीतः क्तः इत्यादौ । अत्र शास्त्रज्ञानां तत्त्वप्रत्यभिज्ञानात्प्रयोगेऽनुबन्धविगमेपि दृष्टत्वं बोध्यम् ॥ भाष्ये द्विः क्तेति । तद्बोधकग्रहणमित्यर्थः । 'क्तक्तवतू भूते' तौ निष्ठेति ॥

( अन्योन्याश्रयपरिहारस्मारणभाष्यम् )

नैष दोषः । इतरेतराश्रयमात्रमेतद्भवति । सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि—*सिद्धं तु नित्यशब्दत्वाद्*इति ॥

( प्रदीपः ) एकत्वेनेति । सामान्येनेत्यर्थः ॥

(उद्योतः) सामान्येनेति । एकत्वपदेन तदाश्रयो लक्ष्यते ॥ साधारणपर्यायश्चैकशब्द इत्यन्ये ॥

( उक्तपरिहाराप्राप्तिभाष्यम् )

नेदं तुल्यमन्यैरितरेतराश्रयैः । न हि संज्ञा नित्या ॥

( प्रदीपः ) न हि संज्ञा नित्येति । वृद्ध्यादिका संज्ञा विषयनियतत्वान्नित्या आकारादयो हि प्रयोगे विद्यन्ते तत्र मृजेर्वृद्धिरित्यादिना साधुत्वमात्रमन्वाख्यायते—मृजेर्वृद्धिः साधुर्भवति । क्तक्तवतू तु सानुबन्धकौ प्रयोगे न विद्येते इति नित्यत्वाभावं संज्ञिनोऽभिप्रेत्यैतदुक्तम् ॥

( उद्योतः ) ननु वृद्ध्यादिसंज्ञापि कृत्रिमत्वादनित्यैव तत्कथं तत्रायं समाधिर्नेहेत्यत आह—वृद्ध्यादिकेति ॥ विषयनियतत्वादिति । संज्ञाविषयस्य शास्त्रे प्रयोगे चैकरूपत्वेन संज्ञिनो नित्यत्वात्संज्ञा नित्या, साधुत्वान्वाख्यानस्य च संभवो, नैवं प्रकृते इति भावः ॥

( परिहारान्तरस्मारणभाष्यम् )

एवं तर्हि भाविनी संज्ञा विज्ञास्यते । तद्यथा कश्चित्कंचित्तन्तुवायमाह—'अस्य सूत्रस्य शाटकं वय' इति । स पश्यति—'यदि शाटको न वातव्यः । अथ वातव्यो, न शाटकः । शाटको वातव्यश्चेति विप्रतिषिद्धम् । भाविनी खल्वस्य संज्ञाभिप्रेता । स मन्ये वातव्यः यस्मिन्नुते शाटक इत्येतद्भवति' इति । एवमिहापि तौ भूते काले भवतो ययोरभिनिर्वृत्तयोर्निष्ठेत्येषा संज्ञा भविष्यति ॥

( प्रदीपः ) भाविनी संज्ञेति । संज्ञिनोर्भावित्वात्संज्ञा भाविनीति । तथा हि—निष्ठेत्युक्ते संज्ञावाक्यं क्तक्तवतू निष्ठेति स्मर्यते । तत्र सामर्थ्यात् क्तक्तवतुविधानं संपद्यते ॥

(उद्योतः) ननु संज्ञायाः स्वतो भावित्वमनुपपन्नमत आह—संज्ञिन इति ॥ सामर्थ्यादिति । अन्यस्योत्पन्नस्य निष्ठासंज्ञाया अभावादिति भावः ॥

( २०७५ निष्ठाविधिवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ आदिकर्मणि निष्ठा ॥ * ॥

( भाष्यम् ) आदिकर्मणि निष्ठा वक्तव्या । प्रकृतः कटं देवदत्त इति ॥

( प्रदीपः ) आदिकर्मणीति । आद्येषु क्रियाक्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम् । न चादिकर्मणि क्तः कर्तरि चेत्येतदर्थादेशनमादिकर्मणि निष्ठाया ज्ञापकम् । ञीतः क्त इत्यादिना वर्तमानकालविषयस्य क्तस्य संभवात्तस्यैवैतदर्थादेशनं स्यात् ॥

( उद्योतः ) आदिकर्मणीति । कर्मशब्दः क्रियावाची । एकफलोद्देशप्रवृत्तसमूहरूपा च क्रिया ॥ तत्र वार्तिकफलं दर्शयति—आद्येष्विति । संपूर्णसमूहस्य व्यपवृक्तत्वे हि भूतव्यवहार इति भावः ॥ क्रियाक्षणेष्विति । अत्र क्षणशब्दः सूक्ष्मग्राह्यकालोपलक्षणम् । अन्यथा क्षणरूपत्वे क्रियायास्तद्वदेव सूक्ष्मकालावच्छिन्नत्वात् प्रत्यक्षत्वानापत्त्या 'पश्य मृगो धावती' त्यादेर्लोपापत्तिरिति बोध्यम् ॥

वस्तुतः क्रियाऽप्रत्यक्षैव फलानुमेया च । तद्वक्ष्यति भाष्ये—अत्यन्तापर दृष्टेति । अवयवरूपेण समुदायरूपेण चाप्रत्यक्षेत्यर्थः ॥ पश्य मृगो धावतीत्यादि प्रयोगस्तत्फलसंयोगदर्शनाभिप्रायेण । दृशेर्वा ज्ञानसामान्ये लक्षणा । निरूपयिष्यते चेदं वर्तमाने लडिति सूत्रे ॥ आद्येषु क्रियालक्षणेष्विति क्वचित्पाठः । तत्राद्येषु क्रियावयवेष्वित्यर्थः ॥ ञीतः क्त इति । यदि तद्विषयमेव स्यात्, वर्तमानग्रहणमेव कुर्यादिति चिन्त्यमिति हरदत्तः । तेन क्तानुशासनेपि क्तवत्वर्थं वचनमावश्यकमित्यपरे ॥

( प्रश्नभाष्यम् )

किं पुनः कारणं न सिध्यति ? ।

( २०७६ हेतुवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ यद्वा भवन्त्यर्थे ॥ * ॥

( भाष्यम् ) यद्वा भवन्त्या अर्थे भाष्यते । प्रकृतः कटं देवदत्तः प्रकरोति कटं देवदत्त इति ॥

( प्रदीपः ) यद्वा भवन्त्यर्थे इति । यस्माल्लटोर्थे विकल्पेन भाष्यते निष्ठा तस्माद्वक्तव्येत्यर्थः ॥

---

१ 'थीतिदेशनं' ॥
२ 'दृशे' ॥
३ क्षणस्य ग्राह्यत्वाभावे इत्यर्थः । ( र. ना. )

१ क्षणरूपत्वेनेति पाठो भाति । क्रियायाः सूक्ष्मकालावच्छिन्नत्वात्तद्वदेव क्षणवदेव प्रत्यक्षत्वानापत्त्येति योजना । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

(उद्योतः) यस्माल्लुङ इति । धात्वर्थस्य वर्तमानत्व एव, यतो लोके विकल्पेन प्रयुज्यतेऽतो वक्तव्येत्यर्थः । यद्भवन्त्यर्थे वा भाष्यत इति भाष्येऽन्वयः ॥

( २०७७ प्रत्याख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ न्याय्या त्वाद्यपवर्गात् ॥ * ॥

(भाष्यम्) न्याय्या त्वेषा भूतकालता । कुतः ? । आद्यपवर्गात् । आदिरत्रापवृक्तः । एष च नाम न्याय्यो भूतकालः—यत्र किंचिदपवृक्तं दृश्यते ॥

(प्रदीपः) न्याय्येति । आदिभूत एवावयवे समूहरूपस्य समाप्तत्वादस्ति भूतत्वोपपत्तिरित्यर्थः । तदुक्तं हरिणा—

समूहः स तथा भूतः प्रतिभेदं[1] समूहिषु ।
समाप्यते ततोऽभेदे कालभेदस्य[2] संभव इति ॥

(उद्योतः) भाष्ये आदिरत्रेति । आद्यक्रियाक्षण इत्यर्थः ॥ ननु तस्य भूतत्वेऽपि धात्वर्थस्य किमायातमत आह—आदिभूत एवेति ॥

समाप्तत्वाद् आरोपितत्वात् ॥ प्रतिभेदम् । प्रत्यवयवम् ॥ समूहिषु । अवयवेषु ॥ समाप्यते । आरोप्यत इत्यर्थः ॥ अभेदे अवयवे समूहाभेदे ॥

( २०७८ (२०७६ वार्तिक) प्रत्याख्यानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ वा चाद्यतन्याम् ॥ * ॥

(भाष्यम्) वा चाद्यतन्यां भाष्यते । प्रकृतः कटं देवदत्तः, प्राकार्षीत्कटं देवदत्त इति ।

(प्रदीपः) वा चाद्यतन्यामिति । यदुक्तं यद्वा भवन्त्यर्थे भाष्यत इति, तस्य व्यभिचारः । लुङोपि विषये निष्ठाया अयं प्रयोगः । तस्मादवश्यमाद्यपवर्गात् भूततैष्टव्या । अन्यथा लुङः प्रयोगो न स्यादित्यर्थः ॥

( आक्षेपभाष्यम् )

किं शक्यन्त एते शब्दाः प्रयोक्तुमित्यतो न्याय्यैषा भूतकालता ॥

(प्रदीपः) किं शक्यन्त इति । यावदभिमतफलप्रयोजनसकलक्रियापरिसमाप्तिर्न[3] भवति तावद्वर्तमानत्वमेव क्रियाया न तु भूतत्वम् । ततश्च वस्तुशून्या एवामीशब्दाः प्रयुज्यन्त इति भावः ॥

( समाधानभाष्यम् )

नावश्यं प्रयोगादेव । क्रिया नामेयमत्यन्तापरदृष्टा अनुमानगम्या न शक्या पिण्डीभूता निदर्शयितुम् । यथा गर्भो निर्लुठित इति । सासौ येन येन शब्देनाभिसंबध्यते तावति तावति परिसमाप्यते तद्यथा—कश्चित्पाटलिपुत्रं जिगमिषुरेकमहर्गत्वाह 'इदमद्य गतम्'इति । न च तावता तस्य व्रजिक्रिया समाप्ता भवति । यत्तु गतं तदभिसमीक्ष्यैतत् प्रयुज्यते 'इदमद्य गतम्'इति । एवमिहापि यत्कृतं तदभिसमीक्ष्यैतत्प्रयुज्यते—'प्रकृतः कटं देवदत्तः' इति । यदा हि वेणिकान्तः कटोभिसमीक्षितो भवति । 'प्रकरोति कटम्'इत्येव तदा भवितव्यम् ॥ निष्ठा ॥ १०२ ॥

(प्रदीपः) अत्यन्तापरदृष्टेति । परं प्रधानं प्रमाणं प्रत्यक्षम् । अनुमानस्य तत्पूर्वकत्वात् । तेन क्रिया न दृश्यते । अवयवसमूहस्य युगपदनुत्पादादनवस्थानाच्च । तदुक्तम्—

क्रमात्सदसतां तेषामात्मानो न समूहिनाम् ।
सद्वस्तुविषयैर्यान्ति संबन्धं चक्षुरादिभिरिति ॥

येन येनेति । शब्देन प्रत्याख्यमाना येनयेनावयवेन संबध्यते समूहरूपा क्रिया तस्मिन्नेवावयवे समाप्यते । तत्रावयवानां कालत्रययोगात् क्रियाया अपि कालत्रययोगः ॥१०२॥

(उद्योतः) तेन क्रिया न दृश्यते इति । अत्यन्तमवयवशः समूहशश्च न दृश्यत इत्यर्थः ॥ अनवस्थानाच्चेति । अनेनावयवस्याप्यप्रत्यक्षत्वम् । क्षणिकत्वेनानवस्थानादित्यर्थः ॥

क्रमात्सदसतामिति । भूयोऽवयवसंनिकर्षः समूहप्रत्यक्षे कारणमिति भावः ॥ चक्षुरादिभिरसंबन्धे हेतुः—सद्वस्तुविषयैरिति ॥ येन शब्देनेति सामानाधिकरण्ये तच्छब्देनापि तस्यैव परामर्शात् शब्दे परिसमाप्तिरुक्ता स्यात् । न च सा युक्तिमती । अतो वैयधिकरण्येन व्याचष्टे—येनावयवेनेति । संबध्यते यत्रयत्रावयव आरोप्यत इत्यर्थः । यो योऽवयवः फलानुकूलत्वेन विवक्ष्यते तत्रैव समाप्यते । तत्रावयवे समाप्ते समूह एव समाप्यतेऽतीतो भवतीत्यर्थः ॥ वेणिका कटचरमावयवः । तदन्तः कट इत्यस्य तदन्तकटनिर्वर्तकः क्रियासमूह इत्यर्थः ॥ १०२ ॥

---

( ५०८ लिटः कानज्विधिसूत्रम् ॥ ३ । २ । २ आ. ६ )

## ८७३ लिटः कानज्वा ॥ ३।२।१०६ ॥

( ५०९ लिटः क्वसुविधिसूत्रम् ॥ ३ । २ । २ आ. ७ )

## ८७४ क्वसुश्च ॥ ३ । २ । १०७ ॥

( वाग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं कानच्क्वस्वोर्वावचनं क्रियते ।

( २०७९ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ कानच्क्वस्वोर्वावचनं छन्दसि तिङो दर्शनात् ॥ * ॥

(भाष्यम्) कानच्क्वस्वोर्वावचनं क्रियते । छन्दसि तिङो दर्शनात् । छन्दसि तिङपि दृश्यते—

---

१ प्रतिभेदं, प्रत्येकम् । ( र. ना. )

२ कालभेदस्य, कालविशेषस्य भूतत्वस्य संभव इत्यर्थः । ( र. ना. )

३ अभिमतं फलं प्रयोजनं साध्यं यासां तास्तथाभूतसकलेत्यादि । ( र. ना. )

४ 'डस्य' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अहं सूर्यमुभयतो ददर्श । अहं द्यावापृथिवी आततानेति ॥

( प्रदीपः ) लिटः कान ॥ १०६ ॥ क्वसु ॥ १०७ ॥ छन्दसि तिङो दर्शनादिति । वासरूपविधिश्च लादेशेषु[1] नास्तीत्युक्तम् ।

( उद्योतः ) लिटः कानज्वा ॥ १०६ ॥ क्वसुश्च ॥ १०७ ॥ वासरूपविधिरिति । ननु हशश्वतोर्लङ् चेति ज्ञापकादादेशगतवैरूप्यमादाय लविधौ वासरूपो नास्तीत्युक्तम् । एवं च प्रकृते[2] स्यादेव । न च प्रत्ययविधिविषयस्यादेशेष्वभावः । आदेशविधावपि प्रत्यय इत्यस्योपस्थितेराद्युदात्तश्चेति सूत्रभाष्यसंमतत्वात् इति चेन्न । एतद्वाग्रहणादादेशरूपप्रत्ययविधौ तदनुपस्थितिकल्पनात् । तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव न पक्षे तिङ इति भावः ॥

( २०८० समाधानासंगतिवार्तिकम् ॥ २ ॥ )

॥*॥ न वानेन विहितस्यादेशवचनात् ॥*॥

( भाष्यम् ) न वा एतत्प्रयोजनमस्ति । किं कारणम् ? । अनेन विहितस्यादेशवचनात् ॥

( प्रदीपः ) अनेनेति । छन्दसि लिडित्यनेनेत्यर्थः । तस्यैव लिट इहानुकृतत्वाद् आनन्तर्यादिति भावः ॥

( आक्षेपभाष्यम् )

अस्त्वनेन विहितस्यादेशः । केनेदानीं छन्दसि विहितस्य लिटः तिङः श्रवणं भविष्यति ॥

( समाधानभाष्यम् )

"छन्दसि लुङ्लङ्लिटः" इत्यनेन । तदेतद्वावचनं तिष्ठतु तावत् सांन्यासिकम्[3] ॥

(प्रदीपः) तदेतदिति । उत्तरत्रोपयोक्ष्यत इति भावः ॥

( उद्योतः ) उत्तरत्रेति । केचित्तु तस्य[4] धातुसंबन्धे विधानेन धातुसंबन्धे पक्षे भूतसामान्ये लिट्स्थानिकतिङः श्रवणार्थमिदमावश्यकमित्याशयो भाष्यस्येत्याहुः ॥ यत्तु वृत्तौ लिडित्यनुवर्त्य विभक्तिविपरिणामेन सिद्धे लिट्ग्रहणेन लिण्मात्रस्यादेशो ज्ञाप्यते इति वावचनमावश्यकमेवेत्युत्यम् ॥ तन्न । प्रकृत[5]भाष्यविरोधादित्याहुः ॥

( कित्करणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

अथ कित्करणं किमर्थम् । न "असंयोगाल्लिट् कित्" इत्येव सिद्धम् ।

( २०८१ प्रयोजनवार्तिकम् ॥ ३ ॥ )

॥ * ॥ कित्करणं संयोगान्तार्थम् ॥ * ॥

( भाष्यम् ) कित्करणं क्रियते । संयोगान्तार्थम् । संयोगान्ताः प्रयोजयन्ति । वन्धे वृत्रस्य यद्बद्धधानस्य रोदसी । त्वमर्णवान् वद्बधानाँ अरम्णाः । अञ्जेः आजिवानिति ॥

( प्रदीपः ) वद्बधानस्येति[6] । बन्धबन्धने छान्दसत्वादभ्यासधकारस्य हलादिः शेषेण निवृत्त्यभावे झलां जश् झशीति जश्त्वं दकारः ॥ १०६ ॥ १०७ ॥

( प्रयोजननिराकरणभाष्यम् )

छान्दसौ कानचूक्वसू । लिट् च छन्दसि सार्वधातुकमपि भवति । तत्र सार्वधातुकमपिद् ङिद्भवति । ङित्त्वादुपधालोपो भविष्यति ॥

( २०८२ प्रयोजनान्तरवार्तिकम् ॥ ४ ॥ )

॥ * ॥ ऋकारान्तगुणप्रतिषेधार्थं वा ॥ * ॥

( भाष्यम् ) ऋकारान्तानां गुणप्रतिषेधार्थं तर्हि कित्त्वं वक्तव्यम् । अयं हि लिटि ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते । स यथैवेह प्रतिषेधं बाधित्वा गुणो भवति—तेरतुः तेरुरिति । एवमिहापि स्यात्—तितीर्वान्, तितिराण इति । पुनः कित्करणात् प्रतिषिध्यते । तस्मात्कित्त्वं कर्तव्यम् ॥ लिटः कानज्वा ॥ १०६ ॥ क्वसुश्च ॥ १०७ ॥

( उद्योतः ) भाष्ये पुनः कित्करणादिति । आरिवानित्यादौ गुणस्तु ऋच्छत्यॄतामित्यत्र ॠकारान्तरप्रश्लेषेण ऋधातोः पुनर्विधानाद्बोध्य इति दिक् ॥ १०६ ॥ १०७ ॥

---

( ५१० क्वसुःविधिसूत्रम् ॥ ३ । २ । २ आ. ८ )

## ८७५ भाषायां सदवसश्रुवः ॥ ३ । २ । १०८ ॥

( २०८३ लिड्विकल्पवार्तिकम् ॥ १ ॥ )

॥*॥ भाषायां सदादिभ्यो वा लिट् ॥*॥

( भाष्यम् ) भाषायां सदादिभ्यो वा लिड्वक्तव्यः । किं प्रयोजनम् ? ॥

---

१ अत्र लविधेरभावादिति भावः । ( र. ना. )

२ वाऽसरूपविधिस्तत्पदार्थः । ( र. ना. )

३ सांन्यासिकमिति । 'काम्यानां कर्मणां त्यागं संन्यासं कवयो विदुः' इति भगवद्गीतोक्तेः काम्यानां कर्मणां दृष्टप्रयोजनानां त्यागो राहित्यमेव संन्यासोऽत्रेति 'वा' वचनस्यादृष्टार्थत्वमेव न दृष्टार्थत्वमिति बोध्यम् ॥ यथा—न्यासः= निक्षेपः=आधिः=इत्येतेषु धर्मशास्त्रेण 'न चाधेः कालसंरोधात् विसर्गोऽस्ति न विक्रयः' इति दानविक्रययोरधिकाराभावो बन्धकिनः, किंतु 'अविकृतस्थापितरक्षण एवाधिकारः तथात्र वाग्रहणेन किमपि कार्यं कर्तुमधिकारो नेति तत्त्वम् । इति दाधिमथाः ॥ वस्तुतस्तु संन्यसनं संस्थापनं तदेवास्य प्रयोजनं तदतिरिक्तप्रयोजनाभाव इति तदाशयः । ( र. ना. )

४ छन्दसि लिडिति विहितस्य लिटः । ( र. ना. )

५ प्रकृतभाष्येण छन्दसि लिडिति विहितस्यैव लिट आदेश इत्यस्य लाभादिति भावः । ( र. ना. )

६ 'अनिदितां हल उपधायाः' इत्युपधालोपार्थं कित्त्वमावश्यकमिति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( २०८४ लिड्विकल्पवार्तिकशेषवार्तिकम् ॥ २ ॥ )

॥ * ॥ तद्विषये लुङोऽनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् ) तस्य लिटो विषये लुङोऽनिवृत्तिर्यथा स्यात्। उपसेदिवान् कौत्सः पाणिनिम्। उपासदत्॥

( प्रदीपः ) भाषायाम् ॥ १०८ ॥ इह क्वस्वादेशविधानाद् भूतसामान्ये लिद् सदादिभ्योऽनुमीयते स विशेषविषयत्वाल्लुङो बाधकः प्राप्नोतीति मत्वाह—भाषायामिति ॥

( उद्योतः ) भाषायां ॥ १०८ ॥ इति मत्वाहेति। एवं च विकल्पमात्रविधानेऽस्य तात्पर्यमिति भावः ॥

( २०८५ लङ्समावेशवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अनद्यतनपरोक्षयोश्च ॥ * ॥

( भाष्यम् ) अनद्यतनपरोक्षयोश्च वा लिड्वक्तव्यः। उपसेदिवान् कौत्सः पाणिनिम्। उपासीदत्। उपससाद ॥

( उद्योतः ) अनद्यतनपरोक्षयोरिति वचनस्य तयोरपि क्वसुर्विधेयः। तेन च तद्विषयो लिडनुमातव्यः। स च वेत्यर्थः।

( २०८६ हेतुवार्तिकम् ॥ ४ ॥ )

॥ * ॥ अपवादविप्रतिषेधाद्धि तयोर्भावः ॥ * ॥

( भाष्यम् ) अपवादविप्रतिषेधाद्धि तौ स्याताम्। कौ ?। लङ्लिटौ ॥

( प्रदीपः ) अपवादविप्रतिषेधादिति। लुङोऽपवाद एतत्सूत्रानुमितो लिट्। तथाऽनद्यतने लङ् परोक्षे लिडिति च तत्रास्य लिटो लङ्लिटोश्च विप्रतिषेधे परत्वाल्लङ्लिटौ स्यातामित्यर्थः। अस्य तु भूतसामान्यमवकाशः। एतदादेशविधानानुमितस्यैव लिटः सदादिभ्यः क्वसुः न तु परोक्षे लिडित्यनेन विहितस्य, तस्याप्रकृतत्वात् ॥

( उद्योतः ) ननु भूतसामान्येऽनुमितस्य विशेषपरतापि भविष्यति, किमनेनेत्यत आह—भाष्ये अपवादेति। तद्व्याचष्टे लुङोऽपवाद इति ॥ ननु अनद्यतनादौ लिड्वैकल्पिकस्तस्य नित्यं क्वसुरित्युपससादेति। न स्यादत आह—एतदादेशेति। अनद्यतनेत्यादि वचनेन तयोरप्यनेन लिडनुमानान्न दोषः ॥

( २०८७ वार्तिकम् ॥ ५ ॥ )

॥ * ॥ तस्य क्वसुरपरोक्षे नित्यम् ॥ * ॥

( भाष्यम् ) तस्य लिटो भाषायां क्वसुरपरोक्षे नित्यमिति वक्तव्यम् ॥

( प्रदीपः ) तस्येति। नित्यग्रहणं वेति प्रकृतस्य विकल्पस्य निवृत्त्यर्थम्। अपरोक्षग्रहणं परोक्षे लिडित्यनेन विहितस्य लिटस्तिङां श्रवणार्थम् ॥

( अपरोक्षग्रहणप्रत्याख्यानभाष्यम् )

अपरोक्षग्रहणेन नार्थः। तस्य क्वसुर्नित्यमित्येव ॥
केनेदानीं लिटः परोक्षे श्रवणं भविष्यति ? ॥
परोक्षे लिडित्यनेन ॥
तत्तर्हि वक्तव्यम् ? ॥
न वक्तव्यम्। अनुवृत्तिः करिष्यते। भाषायां सदादिभ्यो वा लिड् भवति। लिटश्च क्वसुर्भवति ॥ ततो "लुङ्" लुङ् भूते काले भवति। भाषायां सदादिभ्यो वा लिड् भवति, लिटश्च क्वसुर्भवति ॥ ततः—"अनद्यतने लङ्"। अनद्यतने भूतकाले लङ् भवति। भाषायां सदादिभ्यो वा लिड् भवति, लिटश्च क्वसुर्भवति ॥ [ततः—] "परोक्षे लिट्"। परोक्षे लिड् भवति। भाषायां सदादिभ्यो वा लिड् भवति लिटश्च क्वसुर्भवति। तत्रायमप्यर्थः—'*तस्य क्वसुरपरोक्षे नित्यम्'*इत्येतन्न वक्तव्यं भवति ॥ भाषायां सद ॥ १०८ ॥

( प्रदीपः ) अपरोक्षग्रहणेनेति। अनद्यतनपरोक्षयोश्चेति वचनेन वा लिडयं विधीयते तत्र यस्मिन् पक्षेऽयं लिण्न भवति तत्र लङ्लिटौ भवतः। ततश्च परोक्षे लिडिति विहितस्य लिटः सूत्रान्तरविहितत्वात् क्वस्वभावात्तिङो भवन्ति ॥ भाषायां सदादिभ्यो वा लिडिति। लिटः कानज्वेत्यतो वेत्यनुवर्तते। तच्च न क्वसुना संबध्यते किं तर्हि लिटा। तत्र वावचनात्पक्षे लुङ्भावः सिध्यति। ततोऽनद्यतने लङ् परोक्षे लिडित्यत्रास्य सूत्रस्यानुवर्तनादनद्यतनपरोक्षयोरपि सदादिभ्यो वा लिड् भवतीत्यर्थः ॥ १०८ ॥

( उद्योतः ) ननु वा ग्रहणानुवृत्तौ क्वसोर्विकल्पः स्यादत आह—तच्च नेति। व्याख्यानादिति भावः ॥ १०८ ॥

---

(५११ क्वसुप्रत्ययसंनियोगनिपातनसूत्रम् ॥ ३।२।२ आ. ९)

## ८७६ उपेयिवाननाश्वाननूचानश्च ॥ ३। २। १०९ ॥

( प्रदीपः ) उपेयिवान् ॥ १०९ ॥ उपसर्गस्यातन्त्रत्वादीयिवान् समीयिवान् इत्याद्यपि भवति ॥

( आक्षेपभाष्यम् )

किमर्थमुपेयिवानिति निपातनं क्रियते ॥

( २०८८ निपातनप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ उपेयुषि निपातनमिडर्थम् ॥ * ॥

( भाष्यम् ) उपेयुषि निपातनं क्रियते इडर्थम्। इडन्यथा स्यादिति ॥

---

१ अत्रापि विषये 'लुङोऽनिवृत्त्यर्थम्' इति प्रयोजनं कल्पनीयम् ॥
२ अनद्यतनपरोक्षयोरित्यर्थः। अनेन, लिटः क्वस्वादेशविधानेनेत्यर्थः। न दोषः। क्वस्वादेशानापत्तिरूपो दोषो नेत्यर्थः। ( र. ना. )
३ 'ततो ऽनद्यतने' ॥
४ लेखकप्रमादात्रयं भवेत् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रयोजननिराकरणभाष्यम् )

**नैतदस्ति प्रयोजनम् । सिद्धोऽत्रेड् "वस्वेकाजाद्घसाम्" इत्येव ।**

( प्रयोजनसाधकभाष्यम् )

**द्विर्वचने कृतेऽनेकाच्त्वान्न प्राप्नोति ।**

( प्रयोजनबाधकभाष्यम् )

**इदमिह संप्रधार्यं, द्विर्वचनं क्रियतामिडिति । किमत्र कर्तव्यम् । परत्वादिडागमः ॥**

( साधकभाष्यम् )

**नित्यं 'द्विर्वचनं' कृतेऽपीटि प्राप्नोत्यकृतेऽपि प्राप्नोति ॥**

( बाधकभाष्यम् )

**इडपि नित्यः, कृतेऽपि द्विर्वचने एकादेशे च प्राप्नोत्यकृतेऽपि प्राप्नोति ॥**

( साधकभाष्यम् )

**नात्रैकादेशः प्राप्नोति । किं कारणम् । "दीर्घ इणः कितीति" इति दीर्घत्वेन बाध्यते । तदेतदुपेयुषि निपातनमिडर्थं क्रियते ॥**

( प्रदीपः ) उपेयुषीति । इणो लिट् क्वसुः तत्रेडागमात्पूर्वं नित्यत्वाद् द्विर्वचनं दीर्घ इणः कितीत्यभ्यासस्य दीर्घत्वम् तत्सामर्थ्यादेकादेशो न प्रवर्तते । न च दीर्घस्यावकाश ईयतुरित्यादिः तत्रापि पूर्वपरविधेः पूर्वविधित्वात् तत्र कर्तव्ये यणादेशस्य स्थानिवत्त्वादेकादेशप्रसङ्गात् । तत्रानेकाच्त्वादिडप्राप्तो निपात्यत इत्यर्थः ॥

( उद्योतः ) उपेयिवान् ॥ १०९ ॥ इडागमादिति । वस्वेकाजाद्घसामित्येकाज्ग्रहणादित्यर्थः । द्वित्वे कृतेऽनेकाच्त्वात्तदप्राप्तेरनित्यत्वमिट इति भावः ॥ नन्वेकादेशे कृते एकाच्त्वात्तत्प्राप्तिरिति सोऽ[1]पि नित्य इत्यत आह—तत्सामर्थ्यादिति ॥ न चेति । तत्र द्वित्वे सवर्णदीर्घं बाधित्वेणो यणि निमित्ताभावादेकादेशाप्राप्तौ दीर्घः सावकाश इति भावः ॥

( २०८९ दूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ उपेयुषि निपातनमिडर्थमिति चेदजादावतिप्रसङ्गः ॥ * ॥

**( भाष्यम् ) उपेयुषि निपातनमिडर्थमिति चेदजादाविटोऽतिप्रसङ्गो भवति । उपेयुषा उपेयुषे उपेयुषः उपेयुषीति ॥**

( प्रदीपः ) अजादावतिप्रसङ्ग इति । यदाऽपूर्व इण्निपात्यते तदा विशेषानुपादानादजादावपि प्राप्नोति । यथा स्य सिच् सीयुडित्यत्रोक्तं, नित्यश्चायं वल्निमित्तो विघातीति ॥ यदि त्वनेन निपातनेन क्रादिनियमप्राप्तस्य वस्वेकाजाद्घसामित्यनेन नियमेन निवारितस्य प्रतिप्रसवमात्रमिटः क्रियते न त्वपूर्वो विधिस्तदाऽजादावतिप्रसङ्गाभावः ।

( उद्योतः ) विशेषेति । वलादित्वरूपेत्यर्थः ॥ तदाजादाविति । प्राप्तविषय एव प्रतिप्रसवसंभवात् इति भावः ॥ किं च पूर्वस्यैव विधौ स्थानिवत्त्वं न पूर्वपरयोरिति सिद्धान्तादीयतुरित्यादौ तदप्रवृत्त्या सवर्णदीर्घाप्राप्तेरभ्यासदीर्घस्य नैकादेशबाधकत्वमितीट् सिद्ध एवेति न तन्निपातनफलमित्यपि बोध्यम् ॥

( २०९० निपातनीयान्तरवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ एकादिष्टस्येय्भावार्थं तु ॥ * ॥

**( भाष्यम् ) एकादिष्टस्येय्भावार्थं तु निपातनं क्रियते । एकादिष्टस्य ईय् इत्येतद्रूपं निपात्यते ॥**

( प्रदीपः ) इदानीमजादावतिप्रसङ्गपरिहाराय प्रकारान्तरमाश्रयति—एकादिष्टस्येति । द्विर्वचने कृते अभ्यासस्य दीर्घत्वे चैकादेशस्तस्येयादेशो निपात्यते ॥ यद्यप्युपेयिवानित्येतदियादेशनिपातनेन सिध्यति, तथापि समीयिवानित्यादि न सिध्यतीति तदर्थमीयादेशो निपात्यते ॥ क्वचित्तु, भाष्ये "इय" इति पाठः, स उपेयिवानित्येतद्रूपसिद्ध्यपेक्षया द्रष्टव्यः ॥

( उद्योतः ) ईयादेश इति । अन्यथेटि कृते इणो यणिति [2]स्यादिति भावः ॥ तदर्थमिति । ईयादेशे दीर्घो[3]च्चारणमसंध्युच्चारणं चोपेत्यस्याविवक्षायां बीजं द्रष्टव्यम् ॥ भाष्ये—इयिति ह्रस्वपाठे ईयिवानित्यादौ छान्दसो वर्णव्यत्ययो बोध्यः । लोके तु उपेयिवानित्येव साधुः । उपेत्यविवक्षायां मानाभावादित्यन्ये ॥

( उक्तदूषणस्मारणभाष्यम् )

**ननु चोक्तं नात्रैकादेशः प्राप्नोति । किं कारणम् ? । "दीर्घ इणः किति" इति दीर्घत्वेन बाध्यत इति ॥**

( तद्दूषणासामञ्जस्यभाष्यम् )

**तद्धि न सुष्ठूच्यते । न हि दीर्घत्वमेकादेशं बाधते । कस्तर्हि बाधते ? । यणादेशः । स चापि क्व बाधते ? । यत्रास्य निमित्तमस्ति । यत्र हि निमित्तं नास्ति निष्प्रतिद्वन्द्वस्तत्रै[4]कादेशः ॥**

( प्रदीपः ) कस्तर्हीति । इणो यणित्यनेनाजादौ विधीयमान इत्यर्थः । ननु चोक्तमीयतुरित्यत्राभ्यासदीर्घत्वे कृते एकादेशात् पूर्वं वार्णादाङ्गं बलीय इति यणि कृते स्थानिवत्त्वादेकादेशः प्राप्नोति ततश्चावश्यमभ्यासदीर्घत्वेनैकादेशो बाध्यः । नैष दोषः । नहि स्थानिवद्भावेन रूपमतिदिश्यते, रूपाश्रयश्च पूर्वपरयोरेकादेशो न यकारस्य भवितुमर्हति । अथवा यणादेशेन वार्णादाङ्गमिति वचनेन बाधितस्यैकादेशस्य पुनः स्थानिवद्भावाद् बाधितत्वादेव प्रवृत्त्यभावात् ॥

---

१ इडपीत्यर्थः । ( र. ना. )

२ एकादेशस्य पूर्वान्तवत्त्वेनेण्त्वादिति भावः । ( र. ना. )

३ प्रकृतभाष्ये इति शेषः । ( र. ना. )

४ प्रकृते द्वित्वोत्तरमनेकाच्त्वेनेटोऽभावे यण्निमित्ताभावान्निष्प्रतिद्वन्द्व एकादेश इति भावः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(उद्द्योतः) भाष्ये न हि दीर्घत्वमिति । ईयतुरित्यादौ प्रागुक्तरीत्या चारितार्थ्यादिति भावः ॥ न हीति । किं तु शास्त्रातिदेश इति भावः ॥ रूपाश्रयश्चेति । अक्-अच् पदाभ्यां तत्तद्रूपेणोपस्थितयोरेव दीर्घ इति भावः ॥ ननु कार्यातिदेशे दोषस्तु तदवस्थ इत्यस्वेराह—अथवेति । वस्तुतः पूर्वस्यैव विधौ स्थानिवत्त्वमिति नात्र स्थानिवत्त्वमिति बोध्यम् ॥ भाष्ये निष्प्रतिद्वन्द्व इति । एकादेशात्पूर्वमिटोऽभावेन यणप्राप्तेरिति भावः ॥

(२०९१ निपातनीयान्तरवार्तिकम् ॥ ४ ॥)

॥ * ॥ व्यञ्जने यणादेशार्थं वा ॥ * ॥

(भाष्यम्) अथ वा व्यञ्जन एवं यणादेशो निपात्यते। यणादेशे कृते "एकाच" इतीट् सिद्धो भवति॥

(प्रदीपः) व्यञ्जन इति । अभ्यासदीर्घत्वे कृतेऽजादौ विधीयमान इणो यणिति यणादेशो हलादौ न प्राप्नोतीति निपात्यते ॥ ततश्चैकाच्त्वाद्वस्येकाजाद् घसामित्यनेनैवेड्भवतीत्यजादौ न भवति ॥

(उद्द्योतः) यणादेशो निपात्यत इति । एकादेशबाधकतयेति भावः ॥

(ऋष्यन्तरमतभाष्यम्)

अपर आह—

(२०९२ वार्तिकम् ॥ ५ ॥)

॥ * ॥ नोपेयिवान्निपात्यो द्विर्वचनादिड् भविष्यति परत्वात् ॥ * ॥

(भाष्यम्) द्विर्वचनं क्रियतामिडिति परत्वादिड् भविष्यति विप्रतिषेधेन ॥

(प्रदीपः) नोपेयिवानिति । इणो भाषायां केवलभूतमात्रे वा लिङ्विधेयस्तस्य च नित्यं क्वसुरादेशः, कार्यान्तरं तु सिध्यत्येवेत्यर्थः ॥

(उद्द्योतः) इणो भाषायामिति । पूर्वसूत्र एवेणग्रहणं कार्यमिति भावः ॥

(आक्षेपभाष्यम्)

इहापि तर्हि द्विर्वचनादिट् स्याद् विभिद्वान् चिच्छिद्वानिति ।

(२०९३ वार्तिकम् ॥ ६ ॥)

॥ * ॥ अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः ॥ * ॥

(भाष्यम्) अन्येषामेकाचां द्विर्वचनं नित्यम्—कृतेऽपीटि प्राप्नोति, अकृतेऽपि ।

(प्रदीपः) अन्येषामिति । भिदादीनां द्विर्वचने कृतेऽनेकाच्त्वादिटोऽप्रसङ्गादनित्यत्वम् ॥ १०९ ॥

(२०९४ वार्तिकम् ॥ ७ ॥)

॥ * ॥ अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य ॥ * ॥

(भाष्यम्) अस्य पुनरिट् चैवं नित्योऽस्य हि द्विर्वचनं च न विहन्यते ।

(उद्द्योतः) भाष्येऽस्य पुनरिट् चेति । द्वित्वे कृते एकादेशे तत्प्राप्तेरिति भावः ॥ न विहन्यते ह्यस्येति । अस्येटो निमित्तं द्विर्वचनेन न विहन्यते यत इत्यर्थः ॥

(२०९५ वार्तिकम् ॥ ८ ॥)

॥ * ॥ द्विर्वचने चैकाच्त्वात् ॥ * ॥

(भाष्यम्) द्विर्वचने कृते एकादेशे चैकाज्भवति।

(२०९६ वार्तिकम् ॥ ९ ॥)

॥ * ॥ तस्मादिड्बाधते द्वित्वम् ॥ * ॥

(भाष्यम्) तस्मादिड् द्विर्वचनं बाधते ॥

(२०९७ वार्तिकम् ॥ १० ॥)

॥ * ॥ अनूचानः कर्तरि ॥ * ॥

(भाष्यम्) अनूचानः कर्तरीति वक्तव्यम् । अनूक्तवाननूचानः । अनूक्तमित्येवान्यत्र ॥

(उद्द्योतः) लकाराणां भावकर्मणोरपि सत्त्वेन तत्राप्यनूचानः स्यादतो भाष्ये कर्तरीति ॥ १०९ ॥

नोपेयिवान्निपात्यो द्विर्वचनादिड् भविष्यति परत्वात् ।

अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः ॥

अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य । द्विर्वचने चैकाच्त्वात्तस्मादिड्बाधते द्वित्वम् ॥

उपेयि ॥ १०९ ॥

(५१२ लुङ्विधिसूत्रम् ॥ ३ । २ । २ आ. १०)

## ८७७ लुङ् ॥ ३ । २ । ११० ॥

(२०९८ आक्षेपवार्तिकम् ॥ १ ॥)

॥ * ॥ लुङ्लटोरपवादप्रसङ्गो भूतभविष्यतोरविशेषवचनात् ॥ * ॥

(भाष्यम्) लुङ्लटोरपवादः प्राप्नोति । अगमाम घोषान् । अपाम पयः । अशयिष्महि पूतीकतृणेषु । गमिष्यामो घोषान् पास्यामः पयः शयिष्यामहे पूतीकतृणेषु । किं कारणम् । भूतभविष्यतोरविशेषवचनात् । भूतभविष्यतोर्ह्यविशेषेणैतौ विधीयेते

१ नत्वजादौ मलये इति भावः । (र. ना.)

२ द्विर्वचनेनेटो निमित्तमिति शेषः । (र. ना.)

३ भावकर्मणोरित्यर्थः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लुङ्लटौ, तयोर्विशेषविहितौ लङ्लुटावपवादौ प्राप्नुतः ॥

(प्रदीपः) लुङ् ॥ ११० ॥ लुङ्लटोरिति । कालविशेषसद्भावाश्रयेण चोद्यम् ।

(उद्द्योतः) लुङ् ॥ ११० ॥ भाष्ये लुङ्लटोरिति । तुल्यन्यायत्वात् लटोप्युपन्यासः ॥ कालविशेषेति । अगमामेत्याद्युदाहरणेषु अनद्यतनरूपेत्यर्थः ॥

(२०९९ आक्षेपोद्धारवार्तिकम् ॥ २ ॥)

**॥ * ॥ न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम् ॥ * ॥**

(भाष्यम्) न वा एष दोषः । किं कारणम् ? । अपवादस्य निमित्ताभावात् । नात्रापवादस्य निमित्तमस्ति । किं कारणम् ? । अनद्यतने हि तयोर्विधानम् । अनद्यतने हि तौ लङ्लुटौ विधीयेते । न चात्रानद्यतनः कालो विवक्षितः । किं तर्हि ? । भूतकालसामान्यं भविष्यत्कालसामान्यं च ।

(प्रदीपः) सामान्यविवक्षाश्रयेण प्रतिसमाधानम्—न वेति ।

(आक्षेपभाष्यम्)

यद्यपि तावदेतच्छक्यते वक्तुम्—गमिष्यामो घोषान्पास्यामः पयः । शयिष्यामहे पूतीकतृणेषु । यत्रैतन्न ज्ञायते—किं कदेति । इह तु कथम्—'अगमाम घोषान्, अपाम पयः, अशयिष्महि पूतीकतृणेष्विति । यत्रैतन्निर्ज्ञातं भवति अमुष्मिन्नहनि गतमिति ॥

(प्रदीपः) यत्रैतदिति । विशेषनिश्चयाभावात् सामान्यस्यैव युक्ता विवक्षेति भावः ॥

(समाधानभाष्यम्)

अत्रापि नवापवादस्यनिमित्ताभावादनद्यतने हि तयोर्विधानमित्येव । कथं पुनः सतो नामाविवक्षा स्यात् । सतोऽप्यविवक्षा भवति । तद्यथाऽलोमिका एडका अनुदरा कन्येति । असतश्च विवक्षा भवति । तद्यथा समुद्रः कुण्डिका विन्ध्योवर्धितकमिति ।

(प्रदीपः) असतश्चेति । विवक्षोपारूढ एवार्थः शब्दप्रयोगनिमित्तमित्येतदनेन द्रढयति । इह तु सदेव विशेषेषु सामान्यमाश्रित्य लुङादिप्रयोग उपपद्यत एव । विशेषविवक्षायां तु लङादिप्रयोग इति न कश्चिद्दोषः ॥

(उद्द्योतः) सतोऽप्यविवक्षयेति[1] । सतामेव लोम्नां सत्त्वेनाविवक्षया नञ्घटितप्रयोग इति भावः ॥ नन्वसतो विवक्षानिरूपणस्य प्रकृते नोपयोगोऽत आह—विवक्षोपेति ॥

(३००० वार्तिकम् ॥ ३ ॥)

**॥ * ॥ वसेर्लुङ्रात्रिशेषे ॥ * ॥**

(भाष्यम्) वसेर्लुङ्रात्रिशेषे वक्तव्यः । न्याय्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित् कंचित्पृच्छति 'क्व भवानुषित' इति, स आह 'अमुत्रावात्सम्' इति । अमुत्रावसमिति प्राप्नोति ॥

(प्रदीपः) वसेर्लुङिति । रात्रेश्चतुर्थे यामे प्रबुद्धो यदा वाक्यं प्रयुङ्क्ते अमुत्रावात्समिति तदा तत्रातिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमिति लङ्प्रसङ्गे लुङ् वक्तव्यः । एकस्या रात्रेश्चतुर्थो यामो दिवसश्च सर्वो द्वितीयायाश्च रात्रेः प्रथमोऽद्यतन इत्याहुः ॥

(उद्द्योतः) भाष्ये न्याय्ये प्रत्युत्थाने इति । प्रत्युत्थानं जागरणम् । तत्समये प्रत्युत्थितं प्रबुद्धमित्यर्थः । प्रत्युपस्थितम् इति पाठेऽप्ययमर्थः । प्रस्थितमिति क्वचित्पाठः । तत्रापि प्रत्युत्थाय प्रस्थितमित्यर्थः । स[2] च रात्रेश्चतुर्थयाम एव, तत्र स्मृत्या प्रबोधस्योक्तेः तदाह—रात्रेरिति ॥

(३००१ वार्तिकम् ॥ ४ ॥)

**॥ * ॥ जागरणसन्ततौ ॥ * ॥**

(भाष्यम्) जागरणसंततावितिं वक्तव्यम् । यो हि मुहूर्तमात्रमपि स्वपिति तत्र 'अमुत्रावसम्' इत्येव भवितव्यम् ॥ लुङ् ॥ ११० ॥

(प्रदीपः) जागरणसन्ततावितिं । यदा प्रयोक्ता सकलमतिक्रान्तरात्रिप्रहरत्रयं जागरितवांस्तदा लुङ्प्रयोगः । यदा तु सुप्त्वा प्रबुध्य प्रयुङ्क्ते तदा लङ्प्रत्यय एवेत्यर्थः ११०

(उद्द्योतः) अतिक्रान्तरात्रिप्रहरत्रयं जागरितवानिति । एवं हि पूर्वतनस्य प्रत्युत्थितं कंचित्पृच्छतीति ग्रन्थस्यासंगतिः, स्वापं विना प्रत्युत्थानासंभवात् । तस्माच्चतुर्थे यामे यदा जागरणसंततिरिति भाष्यार्थः । तत्र मुहूर्तमपि स्वापे लङेवेत्यर्थं इति केचित् ॥ ११० ॥

(५१३ लङ्विधिसूत्रम् ॥ ३ । २ । २ आ० ११)

## ८७८ अनद्यतने लङ् ॥ ३ । २ । १११ ॥

(३००२ आक्षेपवार्तिकम् ॥ १ ॥)

**॥ * ॥ अनद्यतन इति बहुव्रीहिनिर्देशोऽद्य ह्योऽभुक्ष्महीति ॥ * ॥**

(भाष्यम्) अनद्यतन इति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानाद्यतनोऽनद्यतन इति ॥ किं प्रयोजनम् ? । 'अद्य ह्योभुक्ष्महीति' ॥ अद्य च ह्यश्चाभुक्ष्महीति व्यामिश्रे लुङेव यथा स्यात् ॥

(उद्द्योतः) अनद्यतने लङ् ॥ १११ ॥ अनद्यतन इति यदि तत्पुरुषः पर्युदासश्च, तर्हि व्यामिश्रे दोषः[3] । प्रसज्यप्रतिषेधे-

१ भाष्यपुस्तकेषु तु प्रथमान्तपाठ एवोपलभ्यते । उद्योतपुस्तकेषु तु तृतीयान्तपाठ इति किं कुर्मः ॥

२ रात्रिशेषश्चेत्यर्थः । स्मृत्या, धर्मशास्त्रेणेत्यर्थः । (र. ना.)

३ लङापत्तिरूपो दोषो व्यामिश्रस्याप्यद्यतनभिन्नत्वात् । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ऽसमर्थसमासो भूतसामान्ये च स्यादत आह—भाष्ये बहुव्रीहिनिर्देश इति । तथा चाविद्यमानाद्यतनभूतकालार्थवृत्तेर्धातोर्लङित्यर्थः । एवं च व्यामिश्रे न, भूतसामान्येऽपि नेति भावः ॥

( आक्षेपभाष्यम् )

यद्येवमद्यतनेपि लङ् प्राप्नोति । न ह्यद्यतनेद्यतनो विद्यते ।

( आक्षेपबाधकभाष्यम् )

अद्यतनेपि हि अद्यतनो विद्यते । कथम् ? । व्यपदेशिवद्भावेन ।

( प्रदीपः ) अनद्यतने ॥ १११ ॥ व्यपदेशिवद्भावेनेति । यथा मुख्ये भेद आधाराधेयभावो भवति तटे तिष्ठतीति । तथेहापि समुदायावयवभेदाश्रयेण समुदायेऽद्यतनेऽवयवा अद्यतनाः सन्तीत्यनद्यतनो न भवतीत्युच्यते । न तु तत्त्वतोऽवयवव्यतिरिक्तोऽत्र समुदाय आधारोस्ति । तदुक्तं हरिणा—
'कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः ।
न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते' इति ॥

( उद्योतः ) गौणाधारत्वाश्रयणे बीजमाह—न तु तत्त्वत इति ॥

कालस्यापीति । यथा दिने मुहूर्त इति । न च तावता मुहूर्तसमुदायातिरिक्तं दिनमस्तीत्यर्थः । अनुगम्यते प्रमाविषयो भवति ॥

( ३००३ वार्तिकम् ॥ २ ॥ )

॥ * ॥ परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये ॥ * ॥

( भाष्यम् ) परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ्वक्तव्यः । अरुणद्यवनः साकेतम् । अरुणद्यवनो मध्यमिकाम् ॥

( आक्षेपभाष्यम् )

परोक्ष इति किमर्थम् ? ।

( प्रत्युदाहरणभाष्यम् )

उदगादादित्यः ॥

( आक्षेपभाष्यम् )

लोकविज्ञात इति किमर्थम् ? ।

( प्रत्युदाहरणभाष्यम् )

चकार कटं देवदत्तः ॥

( आक्षेपभाष्यम् )

प्रयोक्तुर्दर्शनविषय इति किमर्थम् ? ।

( प्रत्युदाहरणभाष्यम् )

जघान कंसं किल वासुदेवः ॥ अनद्यतने ॥१११॥

( प्रदीपः ) परोक्षे चेति । अननुभूतत्वात्परोक्षोपि प्रत्यक्षयोग्यतामात्राश्रयेण दर्शनविषये इति विरोधाभावः १११

( उद्योतः ) भाष्ये जघानेति । कंसवधो हि नेदानींतनप्रयोक्तुर्दर्शनयोग्योपीत्यर्थः ॥ अरुणदित्युदाहरणे तु तुल्यकालः प्रवक्तेति बोध्यम् ॥ १११ ॥

( ५१४ लृड्विकल्पसूत्रम् ॥ ३ । २ । २ आ० १२ )

## ८८१ विभाषा साकाङ्क्षे ॥३।२।११४॥

( आक्षेपभाष्यम् )

किमुदाहरणम् ? ।

( समाधानभाष्यम् )

अभिजानासि देवदत्त कश्मीरान् गमिष्यामः । तत्र सक्तून् पास्यामः । अभिजानासि देवदत्त कश्मीरानगच्छाम । तत्र सक्तूनपिबाम ॥

( उद्योतः ) विभाषा ॥ ११४ ॥ साकाङ्क्षे वर्तमानाद् धातोरित्यर्थः ॥

( आक्षेपभाष्यम् )

भवेत् पूर्वं परमाकाङ्क्षतीति साकाङ्क्षं स्यात्, परं तु कथं साकाङ्क्षम् ।

( प्रदीपः ) विभाषा सा ॥ ११४ ॥ भवेत्पूर्वमिति । यदतिप्रसिद्धं वासगमनादि तल्लक्षणम् तच्च परार्थमुपादीयमानं यत्तत्स्मार्यमाणत्वाल्लक्ष्यं भोजनादि प्रति भवतु साकाङ्क्षम् । लक्ष्यं तु प्रधानमपरोपकारि कथं साकाङ्क्षमित्यर्थः ॥

( उद्योतः ) तत्रैकस्य साकाङ्क्षत्वेप्युभयत्र कथं लृडिति शङ्कते—भवेत् पूर्वमिति ॥ तद्व्याचष्टे—यदतीति । वासगमनादेर्लक्षणत्वे हेतुमाह—तच्चेति । यत् परबोधनार्थमुपादीयते तदेव लक्षणमित्यर्थः । यत्तत्स्मर्यमाणत्वाल्लक्ष्यं भोजनादि, तत्प्रति भवतु लक्षणं साकाङ्क्षमित्यन्वयः । यद्यपि पुरुषगताकाङ्क्षयैवार्थानां साकाङ्क्षत्वव्यवहारः । आकाङ्क्षायाश्चेतनधर्मत्वात् । तथापि तस्यापि गमनेन सक्तुपानं बोधयिष्यामीत्येवाकाङ्क्षा, न तु विपरीतेति भावः ॥

( समाधानभाष्यम् )

परमपि साकाङ्क्षम् । कथम् ? । अस्त्यस्मिन्नाकाङ्क्षेत्यतः साकाङ्क्षम् ॥

( प्रदीपः ) अस्त्यस्मिन्निति । सहशब्दो विद्यमानार्थवृत्तिः । तेन विद्यमानाकाङ्क्षः साकाङ्क्षोर्थ उच्यते, लक्ष्यलक्षणयोश्च परस्परापेक्षत्वाद् द्वयोरपि साकाङ्क्षत्वमित्यर्थः ॥

( उद्योतः ) द्वयोरपीति । उक्ताकाङ्क्षायां द्वयोरपि विषयत्वादिति भावः ॥ परस्परापेक्षत्वादिति । चिन्त्यं, लक्ष्यस्य लक्षणानपेक्षाया भाष्ये दर्शितत्वात् ॥ ११४ ॥

( ३००४ वार्तिकम् ॥ १ ॥ )

॥ * ॥ विभाषा साकाङ्क्षे सर्वत्र ॥ * ॥

( भाष्यम् ) विभाषा साकाङ्क्षे सर्वत्रेति वक्तव्यम् । क सर्वत्र ? । यदि चायदि च । यदि तावत्—अभिजानासि देवदत्त यत्कश्मीरान् गमिष्यामः,

१ मुख्यं परिलक्ष्येत्यादिः । ( र. ना. )

२ 'योग्ये' इत्यर्थः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यत्कश्मीरानगच्छाम । यत्तत्रौदनं भोक्ष्यामहे, यत्तत्रौदनमभुञ्ज्महि । अयदि—अभिजानासि देवदत्त कश्मीरान् गमिष्यामः कश्मीरानगच्छाम । तत्रौदनं भोक्ष्यामहे । तत्रौदनमभुञ्ज्महि ॥ विभाषा सा० ॥ ११४ ॥

( प्रदीपः ) सर्वत्रेति । यदीति नानुवर्तते । तेनोभयत्र विभाषेयमिति भावः ॥ ११४ ॥



( ५१५ लिड्विधिसूत्रम् ॥ ३ । २ । २ आ० १३ )

## ८८२ परोक्षे लिट् ॥ ३ । २ । ११५ ॥

( परोक्षशब्दसिद्ध्यधिकरणम् )

( आक्षेपभाष्यम् )

**परोक्ष इत्युच्यते । किं परोक्षं नाम ? ।**

( प्रदीपः ) परोक्षे लिट् ॥ ११५ ॥ किं परोक्षमिति । यद्यपीन्द्रियाविषयोर्थः परोक्षशब्दवाच्य इति जानाति, तथापि सर्वस्याः क्रियायाः परोक्षत्वाद्विशेषणानर्थक्यमिति पृच्छति ॥

( उद्द्योतः) परोक्षे लिट् ॥ ११५ ॥ इन्द्रियाविषय इति । इन्द्रियजन्यज्ञानाविषय इत्यर्थः ॥ तथापीति । यस्य क्रियायां व्यभिचारस्तत्पारोक्ष्यं किमिति प्रश्नार्थ इति भावः ॥

( समाधानभाष्यम् )

**परमक्षणः परोक्षम् ॥**

( प्रदीपः ) परमक्षण इति । मयूरव्यंसकादित्वात्समासः । अच्प्रत्यन्ववपूर्वेत्यत्राजिति योगविभागादत एव वा निपातनादच्समासान्तः । यद्वा प्रतिपरसमनुभ्योक्ष्ण इति टच्समासान्तः । स च यद्यप्यव्ययीभावे विधीयते तथापि परशब्दस्याक्षिशब्देनाव्ययीभावासंभवात्समासान्तरे विज्ञायते । वृत्तिविषये चाक्षिशब्दः सर्वेन्द्रियवाची, न तु चक्षुर्मात्रपर्यायः । अन्यथेन्द्रियान्तरविज्ञातं वस्तु परोक्षशब्दवाच्यं स्यात् । अत एवान्ये दर्शनपर्यायोयमक्षिशब्दो न भवतीति अक्ष्णोदर्शनादिस्त्वेवं समासान्तं कुर्वन्ति । ततो यदिन्द्रियात्परमिन्द्रियागोचरतामापन्नं वस्तु तत्परोक्षमित्यर्थः ॥

( उद्द्योतः ) इन्द्रियागोचरत्वमेव पारोक्ष्यम् । तच्च साधनद्वारा क्रियायामित्याशयेनोत्तरयति—परमित्यादि ॥ मयूरेति । तत एव परशब्दस्य पूर्वनिपात इति बोध्यम् ॥ योगविभागस्य भाष्येऽदर्शनादाह—अत एवेति ॥ [ वृत्तिविषये त्वक्षिशब्दः सर्वेन्द्रियवचनो, न चक्षुःपर्यायः । अन्यथेन्द्रियान्तरविज्ञातं वस्तु परोक्षमापद्येत । एवं च कृत्वा दर्शनपर्यायोप्यक्षिशब्दो न भवतीलक्ष्णोऽदर्शनादिस्त्वेवाच् समासान्त इति तत्त्वम् ॥ ] प्रतिपरेति । शरदाद्यन्तर्गणसूत्रम् । इन्द्रियाजन्यं ज्ञानं परोक्षम् । अत एव परोक्षं ज्ञानमित्युपपद्यते । अर्शआद्यचा तद्विषयोपि तथा । अत एव क्रियायां परोक्षायामिति भाष्यप्रयोग उपपन्नः ॥

( प्रश्नभाष्यम् )

**अक्षि पुनः किम् ? ।**

( प्रदीपः ) अक्षि पुनरिति । किं चक्षुरेवाक्षिशब्देनोच्यते अथ सर्वमिति प्रश्नः ॥

( समाधानभाष्यम् )

**अश्नोतेरयमौणादिकः करणसाधनः सिप्रत्ययः । अश्नुतेऽनेनेत्यक्षि ।**

( प्रदीपः ) अश्नोतेरिति । व्युत्पत्तिद्वारेण विषयव्यापनात्सर्वमिन्द्रियं वृत्तिविषयेऽक्षिशब्दो वक्तीत्यर्थः ॥

( आक्षेपभाष्यम् )

**यद्येवं परोक्षमिति प्राप्नोति ।**

( दूषणपरिहारभाष्यम् )

**नैष दोषः ॥**

( ३००५ निपातनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम् ॥ * ॥**

( भाष्यम् ) परशब्दस्याक्षिशब्दे उत्तरपदे परोभावो वक्तव्यः ॥

( ३००६ निपातनान्तरवार्तिकम् ॥ २ ॥ )

**॥ * ॥ उत्वं वादेः परादक्ष्णः ॥ * ॥**

( भाष्यम् ) अथ वा परशब्दादुत्तरस्याक्षिशब्दस्योत्वं वक्तव्यम् ॥

( ३००७ निपातनान्तरवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सिद्धं वास्मान्निपातनात् ॥ * ॥**

( भाष्यम् ) अथ वा निपातनादेव सिद्धं "परोक्षे लिट्" इति ॥

( प्रदीपः ) सिद्धं वेति । निर्भागः समुदाय एवेन्द्रियागोचरार्थवाची निपात्यत इत्यर्थः ॥

( उद्द्योतः ) निर्भाग इति । सभागनिपातनस्य गुरुत्वादिति

---

१ यद्वा अतएव ज्ञापकादव्ययीभावोपि कल्पनीय इति सिद्धान्तकौमुद्यां दीक्षिताः ॥ तत्र टिप्पण्यां दाधिमथैस्तूच्छृङ्खलतया 'प्रतिपरि' इति गणसूत्रमङ्गीकृत्य 'अपपरिबहिरञ्चवः पञ्चम्या' इति समासस्य निर्बाधतया 'सिद्धं वाऽस्मान्निपातनात्' इत्यनेनैवेकाराकारयोरोकारनिपातनमपि दर्शितम् ॥

२ अयं कोष्ठकान्तर्गतः पाठो नैवोद्योतपुस्तकेषु दृश्यते । न जाने केनचिद्विद्वरेण प्रदीपं दृष्ट्वा तत्र स्वसंमतिप्रदर्शनायैवान्ते 'तत्त्वम्' इति लिखितम् ॥

३ व्युत्पत्तिद्वारेणेति वक्तीत्यनेनान्वेति । ( र. ना. )

४ 'अक्षशब्दोऽपीन्द्रियवाच्यस्तीति नास्मिन्पक्षे समासान्तकरणक्लेश इति 'प्रतिपरसमनुभ्यः' इति गणसूत्रे परपदोपादानमप्यनार्षमेवेति अत्र गणसूत्रे परग्रहणं प्रक्षिप्तमिति परोक्षे लिडिति सूत्रभाष्यकैयटस्वरस इति शब्देन्दौ नागेशः ॥ अत्र दाधिमथाः—परोक्षशब्दसाधनप्रकारत्रये आद्यन्तप्रकारयोः समासान्तानावश्यकत्वेऽपि मध्यमे 'उत्वं वादेः परादक्ष्णः' इति प्रकारे समासान्तकरणस्यावश्यकत्वमेवोचितम् । अत एव प्रदीपे यदा 'प्रतिपरसमनुभ्योऽक्ष्ण' इति साक्षादेवोपात्तम् ॥ इति वदन्ति ॥'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भावः । अवयवार्थाप्रतीतेश्च ॥ इन्द्रियागोचरार्थवाचीति । तद्विषयकज्ञानवाचीत्यपि बोध्यम् ॥

( परोक्षार्थविशेष्यविचाराधिकरणम् )

( आक्षेपभाष्यम् )

**कस्मिन्पुनः परोक्षे लिड् भवति ? ।**

( समाधानभाष्यम् )

**काले ।**

( प्रदीपः ) **काल इति ।** यथा कालस्य नित्यपक्ष उपाधिभेदाद् भूतादिव्यपदेशस्तथा परोक्षत्वमपि । अनित्यक्रियारूपकालपक्षे तु स्वत एव परोक्षत्वम् ।

( उद्योतः ) ननु कालः सर्वस्यापि इदानीमित्यादि व्यवहारेणापरोक्ष एवेत्यत आह—यथेति । नित्यपक्ष इति । नित्यत्वपक्ष इत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**न वैकालाधिकारोस्ति ।**

( समाधानान्तरभाष्यम् )

**एवं तर्हि "धातोः" इति वर्तते, धातौ परोक्षे ॥**

( समाधानबाधकभाष्यम् )

**धातुर्वै शब्दः । न च शब्दस्य प्रत्यक्षपरोक्षतायां संभवोस्ति ।**

( प्रदीपः ) **न च शब्दस्येति ।** प्रत्ययप्रकृतेः शब्दस्योच्चार्यमाणस्यानुभूतत्वात्परोक्षत्वासंभवः । ततो यथा प्रत्यक्षत्वमव्यभिचाराच्छब्दस्य विशेषणं न संभवति, एवं परोक्षत्वमप्यसंभवादविशेषणमित्यर्थः ॥

( उद्योतः ) भाष्ये प्रत्यक्षपरोक्षतायामिति । प्रत्यक्षपरोक्षत्वयोर्विशेषणतायामित्यर्थः ॥ तत्र प्रत्यक्षत्वेन विशेषणस्य क्वाप्यभावात्तदुपादानमसंगतमत आह—यथा प्रत्यक्षत्वमिति ।

( समाधानसाधकभाष्यम् )

**शब्देऽसंभवादर्थे कार्यं विज्ञास्यते—परोक्षे धातौ=परोक्षे धात्वर्थ इति ॥**

( आक्षेपभाष्यम् )

**कः पुनर्धात्वर्थः ।**

( प्रदीपः ) **कः पुनरिति ।** यद्येकैकः क्षणो धात्वर्थस्तदा तस्य प्रत्यक्षत्वपरोक्षत्वसंभवाद्युक्तं विशेषणम् । अथ समूहस्तस्य युगपदसंनिधानादप्रत्यक्षत्वाव्यभिचारात्परोक्षत्वमविशेषणमिति मत्वा प्रश्नः ।

( उद्योतः ) युगपदसंनिधानादिति । अतः सद्वस्तुविषयैरिन्द्रियैर्न गृह्यते इत्यप्रत्यक्ष एवेत्यर्थः ।

( समाधानभाष्यम् )

**क्रिया । क्रियायां परोक्षायामिति ॥**

( प्रदीपः ) **क्रियेति ।** समूहरूपेति भावः ॥

( उद्योतः ) एवं चैकैकस्य प्रत्यक्षत्वेपि समूहरूपो धात्वर्थः परोक्ष एव । अत एव पिण्डीभूता निदर्शयितुमशक्येत्युक्तमिति भावः । वस्तुतोऽवयवशोऽप्यप्रत्यक्षत्वमेवेति उक्तं प्राक् । किं चावयवशः प्रत्यक्षत्वे एकैकत्रावयवे समुदायरूपारोपेण भूतत्वादिवत् प्रत्यक्षत्वस्यापि संभवेन तद्व्यावृत्त्यर्थं परोक्ष इति विशेषणोपपत्तौ साधनादिप्रत्यक्षत्वेन तत्प्रत्यक्षत्वोपपादनं भाष्योक्तमसंगतं स्यात् । अत एवात्यन्तापरदृष्टेत्यत्यन्तपदं चरितार्थम् ॥

( समाधानबाधकभाष्यम् )

**यद्येवं ह्योपचदित्यत्र लिट् प्राप्नोति । किं कारणम् ? । क्रिया नामेयमत्यन्तापरदृष्टा अनुमानगम्याऽशक्या पिण्डीभूता निदर्शयितुम् । यथा गर्भो निर्लुठितः ॥**

( उद्योतः ) ननु अवयवानां सौक्ष्म्यादप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वं स्यादत आह—अशक्येति । पिण्डीभूतापि निदर्शयितुमशक्याऽवयवानां क्षणिकत्वेन पिण्डीभावस्यैवाभावादिति भाव इति बोध्यम् ॥

( समाधानभाष्यम् )

**एवं तर्हि साधनेषु परोक्षेषु ।**

( प्रदीपः ) **साधनेष्विति ।** शक्तिशक्तिमतोरभेदविवक्षया साधनशब्देन शक्तिमन्ति द्रव्याण्युच्यन्ते ।

( आक्षेपभाष्यम् )

**साधनेषु च परोक्षेषु भवतः कः संप्रत्ययः ? ।**[1]

( प्रदीपः ) इतरो यथोक्तमभिप्रायमप्रतिपद्य पृच्छति—**साधनेष्विति ॥**

( उद्योतः ) साधनेषु चेति भाष्ये साधनपदेन किं भवान्मन्यते इत्यर्थः ।

( समाधानभाष्यम् )

**यदि तावद् गुणसमुदायः साधनम् । साधनमप्यनुमानगम्यम् ॥**

( प्रदीपः ) **गुणसमुदाय इति ।** शक्तीनां समुदाय इत्यर्थः । समुदायग्रहणं सर्वासां करणादिशक्तीनां क्रियासिद्धौ निमित्तत्वाविशेषात् साधनत्वप्रतिपादनार्थम् । तेन यावदुक्तं सर्वाः शक्तयः साधनमिति तावद् गुणसमुदायः साधनमिति । **साधनमपीति ।** शक्तीनां नित्यानुमेयत्वात् ॥

( उद्योतः ) नन्वेकैकस्या अपि शक्तेरप्रत्यक्षत्वात्समुदायग्रहणं व्यर्थमत आह—समुदायेति । नित्यानुमेयत्वादिति । तत्त्वं चातीन्द्रियत्वाद्बोध्यम् ॥

( भाष्यम् ) **अथान्यद् गुणेभ्यः साधनम्, भवति प्रत्यक्षपरोक्षतायां संभवः ॥**

( प्रदीपः ) **अथान्यदिति ।** शक्तिव्यतिरिक्तं शक्तिमद्द्रव्यमित्यर्थः । तत्र द्रव्यप्रत्यक्षत्वे लोकस्य क्रियाप्रत्यक्षत्वाभिमानः तत्परोक्षत्वे क्रियापरोक्षत्वमित्यर्थः ॥[2]

१ साधनेषु परोक्षेषु इति ब्रुवाणस्य भवतः साधनशब्देन किंविषयकः श्रोतुः संप्रत्ययोऽभिमेत इति योजना । ( र. ना. )

२ ततश्च तस्य परोक्षत्वाव्यभिचारात् परोक्ष इति विशेषणासंभव इति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( आक्षेपभाष्यम् )

**अथ यदानेन रथ्यायां तण्डुलोदकं दृष्टं कथं तत्र भवितव्यम्,**

( समाधानभाष्यम् )

**यदि तावत्साधनेषु परोक्षेषु¹ । पपाचेति भवितव्यम् । भवन्ति हि तस्य साधनानि परोक्षाणि ।**

( प्रदीपः ) यदि तावदिति । दृष्ट्वापि तण्डुलोदकं यदा न निश्चितवान् किमेते तण्डुलाः पच्यन्तेऽथ हूयन्तेऽथ क्रुयन्ते इति तदा प्रमाणान्तरेण यदा कालान्तरे प्रयोक्ता पाकमवगम्य वाक्यं प्रयुङ्क्ते तदा साधनत्वस्य संरम्भरूपस्य परोक्षत्वात्पपाचेति प्रयुङ्क्ते ॥

( उद्द्योतः ) ननु तण्डुलोदकदर्शनकाले पाकस्य भूतत्वाभावात्कथं लिट्प्रयोगोऽत आह—दृष्ट्वापीति ॥ साधनस्य तच्छक्त्याश्रयस्य ॥ संरम्भरूपस्येति । संरम्भः शक्तिस्तदाविष्टरूपस्येत्यर्थः । संरम्भशब्दोऽर्श आद्यजन्तः ॥ पपाचेति युक्तमिति पाठः ।

**( भाष्यम् ) अथ य एते क्रियाकृता विशेषाश्चीत्काराः फूत्काराश्च तेषु परोक्षेषु, एवमपि पपाचेति भवितव्यम् ॥**

( प्रदीपः ) अथेति । क्रियाकृतविशेषप्रत्यक्षत्वेऽपि लोकस्य क्रियाप्रत्यक्षत्वाभिमानः । तत्परोक्षत्वे तु पपाचेत्येव भाव्यमित्यर्थः ॥

(उद्द्योतः) भाष्ये सीत्काराः फूत्काराश्चेति पाठः । क्रियाकृतविशेषप्रत्यक्षत्वेऽपीति । अपिना साधनप्रत्यक्षत्वेपीत्यर्थः ।

( परोक्षकालनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**कथंजातीयकं पुनः परोक्षं नाम ? ।**

( प्रदीपः ) कथंजातीयकमिति । यस्मिन् भूतानद्यतनपरोक्षे लिटा भाव्यं तत्परिज्ञानाय प्रश्नः ॥

( समाधानभाष्यम् )

**केचित्तावदाहुः—वर्षशतवृत्तं परोक्षमिति ॥**
**अपर आहुः—वर्षसहस्रवृत्तं परोक्षमिति ॥**
**अपर आहुः—कुड्यकटान्तरितं परोक्षमिति ॥**
**अपर आहुः—द्व्यहवृत्तं त्र्यहवृत्तं चेति ॥**

( प्रदीपः ) केचिदिति । मतभेदप्रदर्शनायानेकदर्शनोपन्यासः । इन्द्रियागोचरसाधनसाधितानद्यतनक्रियावाचिनस्तु धातोर्लिट्प्रत्यय इति निर्णयः । तथाच ह्यःपपाचेत्याद्यपि भवति ॥

(उद्द्योतः) इन्द्रियागोचरसाधनेति । तत्र क्रियाकृतविशेषरूपसीत्कारादिविशिष्टस्य संरब्धरूपस्य चेन्द्रियागोचरत्वं बोध्यम् ।

१ साधनस्येत्येव प्रदीपे पाठो नागेशेनोपलब्धो भवेत् । अत एव समञ्जसतायै सरम्भशब्देऽर्शआद्यजङ्गीकृतः ॥

( उत्तमपुरुषोपपादनाधिकरणम् )

( आक्षेपभाष्यम् )

**सर्वथोत्तमो न सिध्यति ॥**

( प्रदीपः ) सर्वथेति । आत्मसाध्यायाः क्रियायाः प्रत्यक्षत्वाभिमान इति भावः ॥

( ३००८ समाधानवार्तिकम् ४ )

**॥ * ॥ सुप्तमत्तयोरुत्तमः ॥ * ॥**

**( भाष्यम् ) सुप्तमत्तयोरुत्तम इति वक्तव्यम् । सुप्तोहं किल विललाप । मत्तोहं किल विललाप । सुप्तोन्वहं किल विललाप । मत्तोन्वहं किल विललाप ॥**

( प्रदीपः ) सुप्तमत्तयोरिति । सुप्तमत्तग्रहणं चित्तविक्षेपनिमित्तोपलक्षणम् ॥

( उद्द्योतः ) अचित्तव्याक्षेपस्थले उत्तमासिद्धाविष्टापत्तिं सूचयन् चित्तव्याक्षेपे तदुदाहरणमाह—सुप्तेति ॥

( परोक्षत्वाङ्गीकारभाष्यम् )

**अथ वा भवति वै कश्चिज्जाग्रदपि वर्तमानं कालं नोपलभते । तद्यथा वैयाकरणानां शाकटायनो रथमार्गे आसीनः शकटसार्थं यान्तं नोपलेभे ।**

**किं पुनः कारणं कश्चिज्जाग्रदपि वर्तमानकालं नोपलभते ? ।**

**मनसा प्रयुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति, मनसोऽसांनिध्यात् ।**

( प्रदीपः ) असान्निध्यादिति । विषयान्तरेणाकृष्टत्वान्मदाद्यभिभवाद्वेति भावः ॥

( उद्द्योतः ) जागरेऽमत्तत्वेऽपि पारोक्ष्यं दर्शयति—अथ वेति । वैयाकरणानां शाकटायन इत्यनेन तस्यामत्ततोक्ताऽन्यचित्तता च ॥ भाष्ये वर्तमानकालमिति । वर्तमानकालं वस्त्वित्यर्थः ॥ मनसा इति । यद्यपि पातञ्जलानामन्तःकरणं व्यापकं तथापि तत्परिणामविशेषो मनश्चिरस्थायी, मध्यमपरिमाणं संकोचविकासशालि ज्ञानकारणमिति भावः ॥ अत एव सदा न ज्ञानयौगपद्यं कदाचिद्यौगपद्यमपि इति दिक् ॥

( ३००९ लिड्विधिवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ परोक्षे लिडत्यन्तापह्नवे च ॥ * ॥**

**(भाष्यम्) "परोक्षे लिट्" इत्यत्र "अत्यन्तापह्नवे च" इति वक्तव्यम् । नो खण्डिकान् जगाम । नो कलिङ्गाञ्जगाम । न कारिसोमं प्रपपावग्ने, न दार्वेजस्य प्रतिजग्राह, को मे मनुष्यः प्रहरेद्दधाय ॥**

**परो भावः परस्याक्षे परोक्षे लिटि दृश्यताम् ।**
**उत्वं वादेः परादक्षः सिद्धं वासान्निपातनात् ॥**
**परोक्षे लिट् ॥ ११५ ॥**

( प्रदीपः ) अत्यन्तापह्नवे चेति । न केवलं तद्देशस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भोजनादेरपह्नवः, यावत्तद्देशगमनादेरपि, यदि भवतीत्यर्थः ॥ खण्डिका नाम जनपदः। त्वया 'अयाज्यो याजित' इत्युक्तः कश्चिदाह 'नकारिस्सोमम्' इति । कारी याजक ऋत्विगुच्यते । तस्य सोमं नाहं पपौ । ऋत्विग्भूत्वा सोमं म पीतवान्। अपि तु यजमान एव भूत्वेत्यर्थः । ऋत्वित्क्रमेवापह्नुते । तथा 'प्रतिग्रहस्त्वयाऽयोग्याद् गृहीतः' इत्युक्त आह—न दार्वैजस्येति । दार्वो नाम जनपदविशेषः । तत्र जातस्याहं न प्रतिजग्राहेति सर्वथा प्रतिग्रहीतृत्वमपह्नुते ॥ को मे मनुष्य इति । को मनुष्यो वधाय ममासत्यारोपणेन प्रहरेदित्यर्थः११५

(उद्द्योतः) जनपद इति । कलिङ्गखण्डिकादिषु त्वया भुक्तमिति पृष्टे तत्कारणीभूतगमनप्रतिषेधादत्यन्तापह्नवोऽत्रेति बोध्यम् ॥ तस्य सोममिति । तदंशभूतं सोममित्यर्थः ॥ फलितमाह—ऋत्विग्भूत्वेति ॥ त्वयाऽयोग्यादिति । दार्वदेशीयादिति शेषः ॥ को मनुष्य इति । यतोऽहं न प्रतिजग्राह अत इत्यादिः ॥ परेतु 'मरुतस्त्वयि प्रहरिष्यन्ति' इत्यग्निनोक्ते इन्द्रस्येदं वाक्यम्—खण्डिकादिषु भोजनवतः अयाज्यऋत्विक्कर्मकृतवतोऽसतोदार्वजात्प्रतिग्रहीतुर्वा मनुष्य(स्य)प्रहारो न मम, तद्देशे गमनस्यैवाभावात् । ऋत्विक्त्वस्यैवाकरणात् दार्वजतः प्रतिग्रहस्यैवाग्रहणान्मयि तस्य न प्रहारे सामर्थ्यमित्यर्थमाहुः ॥ ११५ ॥

( ५१६ लङ्प्रत्ययविधिसूत्रम् ॥ ३ । २ । २ आ. १४ )

## ८८५ लट् स्मे ॥ ३ । २ । ११८ ॥

( ३०१०-११ वार्तिकद्वयम् ॥ १ ॥ )

### ॥ * ॥ 'स्मपुरा भूतमात्रे' 'न स्मपुराद्यतने' ॥ * ॥

( भाष्यम् ) 'स्मपुरा भूतमात्रे' 'न स्मपुराद्यतन' इति वक्तव्यम् ।

( प्रदीपः ) लट् स्मे ॥ ११८ ॥ इत आरभ्य पञ्चसूत्र्यां कालविभागप्रतिपादनाय वार्तिकद्वयम्—'स्मपुराभूतमात्रे' '*न स्म पुराद्यतन*' इति । तस्यायमर्थः—प्रथमे वार्तिके स्मपुराशब्दाभ्यामाद्यन्ताभ्यां पञ्चसूत्री लक्ष्यते । तत्र भूतमात्रे प्रत्ययो भवति । स्मपुरालक्षणस्तु प्रत्ययोऽद्यतने न भवति ॥ एतदुक्तं भवति—'लट् स्मे' 'अपरोक्षे च' 'पुरि लुङ् चास्मे' इति सूत्रत्रयेणानद्यतने भूतविशेषे प्रत्ययो भवति । 'ननौ पृष्टप्रतिवचने' 'नन्वोर्विभाषे'त्येताभ्यां तु भूतमात्रे प्रत्ययः । तत्र स्मपुरेति वार्तिकद्वये विधिप्रतिषेधयोरुपादानाद्भूतमात्रस्य विधानात्तस्यैव चाद्यतननिषेधद्वारेणानद्यतनलक्षणविशेषप्रतिपादनेन निषेधादेकस्मिन्विषय एकस्य विधिप्रतिषेधयोरत्यन्तविरोधात् पूर्वोक्तविषयविभाग आश्रीयते ॥

( उद्द्योतः ) लट् स्मे ॥ ११८ ॥ प्रथमे वार्तिके इति । यद्यप्युपसंजातविरोधाद् द्वितीयवार्तिके लक्षणा युक्ता तथापि लक्ष्यानुरोधादग्रिमभाष्याच्चात्रैव लक्षणेति भावः ॥ तत्र लक्षणाश्रयणे बीजमाह—तत्र स्मेति ॥ भूतमात्रस्य विधानादिति । आद्ये वार्तिके इति भावः ॥ निषेधादिति । अनद्यतनलक्षणविशेषप्रतिपादने निषेधतात्पर्यादित्यर्थः । एकस्मिन्विषये–'लट्स्मे' 'अपरोक्षे च' 'पुरि लुङि' इति सूत्रत्रयविषये ॥ भूतमात्रविधि अद्यतननिषेधयोर्विरोधः ॥ पूर्वोक्तेति । आद्ये पञ्चसूत्री लक्षणरूपः ॥

( आक्षेपभाष्यम् )

किमयं स्मादिविधिः पुरान्तोऽविशेषेण भूतमात्रे भवति । तत्र वक्तव्यं 'स्मलक्षणः पुरालक्षणश्चाद्यतने न भवत' इति ॥

आहोस्वित् 'स्मलक्षणः पुरालक्षणश्चाविशेषेण भूतमात्रे भवतः' इति । तत्र स्माद्यर्थं 'न स्मपुराद्यतन' इति वक्तव्यम् ? ।

( प्रदीपः ) किमयमिति । स्मपुराभूतमात्र इत्यत्र वार्तिके स्मपुराशब्दाभ्यां यदि पञ्चसूत्री लक्ष्यते तदा मध्यमौ योगौ भूतमात्रे भवतो, न स्मपुराद्यतन इति वचनाच्च स्मपुरालक्षणो विधिरनद्यतन एव ।

अथ स्मपुराभूतमात्र इत्यनेन स्मपुरालक्षणस्यैव विधेर्भूतमात्रं निर्दिश्यते । न स्मपुराद्यतन इत्यत्र वार्तिके स्मपुराशब्दाभ्यां मध्यमौ योगौ लक्ष्येते तदा 'ननौ पृष्टप्रतिवचने' 'नन्वोर्विभाषे'त्येताभ्यां योगाभ्यामनद्यतन एव विधिना भवितव्यमिति प्रश्नः ।

( उद्द्योतः ) मध्यमौ योगौ लक्ष्येते इति । आद्यन्ताभ्यां पञ्चसूत्रीग्रहणेऽपि सूत्रत्रये भूतमात्र इति विशेषोक्तेर्मध्यमयोरेवैतत्फलमित्याशयेनेदमुक्तम् । ननाविति नन्वोरिति च मध्यमौ योगौ ॥ इति प्रश्न इति । तत्र विनिगमकाभावादिति भावः ॥ भाष्ये स्माद्यर्थमित्यतद्गुणसंविज्ञानो बहुव्रीहिरिति बोध्यम् ॥

( भाष्यम् ) किं चातः ? ।

( प्रदीपः ) किं चात इति । एकतरस्मिन् वार्तिके स्मपुराशब्दावुपलक्षणत्वेनाश्रयणीयौ तत्र पूर्वस्मिन् परस्मिन् वा विशेषमपश्यन् पृच्छति ।

(उद्द्योतः) विशेषमपश्यन्निति । अक्षरलाघवगौरवरूपं विनिगमकमित्यर्थः । अन्यथा फलविशेषस्य स्पष्टतया तदसंगतिः स्पष्टैव ॥

( ३०१२ पूर्ववार्तिकप्रत्याख्यानवार्तिकम् २ )

### ॥ * ॥ स्मादिविधिः पुरान्तो यद्यविशेषेण किं कृतं भवति न स्मपुराद्यतन इति ब्रुवता कात्यायनेनेह ॥ * ॥

( भाष्यम् ) स्मादिविधिः पुरान्तो यद्यविशेषेण भवति, किं वार्तिककारः प्रतिषेधेन करोति—न स्मपुराद्यतन इति ॥

---

१ यदि तद्देशगमनादिर्भवति तदा तद्देशगमनादेरपि यावदपह्नव इति योजना । ( र. ना. )

२ भागमिति शेषः । ( र. ना. )

३ 'लट्स्मे' (११८) 'अपरोक्षे च' (११९) 'ननौ पृष्टप्रतिवचने' (१२०) 'नन्वोर्विभाषा' (१२१) 'पुरि लुङ् चास्मे' (१२२) इति पञ्चसूत्री ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रदीपः ) इतरो वार्तिकप्रत्याख्यानाय मया विकल्पितमेतदित्याह—स्मादिविधिरिति । लट् स्मे । अपरोक्षे च । पुरि लुङ् चास्मे । इत्येतेषु योगेष्वनद्यतनग्रहणानुवृत्त्येष्टसार्थस्य सिद्धत्वान्न स्म पुराद्यतन इति वार्तिकं न कर्तव्यमित्यर्थः ॥

( ३०१३ वार्तिकम् ॥ २ ॥ )

**॥ * ॥ अनुवृत्तिरनद्यतनस्य लट् स्म इति तत्र नास्ति नञ्कार्यम् ॥ * ॥**

( भाष्यम् ) "लट् स्मे" इत्यत्रानद्यतन इत्येतदनुवर्तिष्यते ॥

( ३०१४ वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अपरोक्षानद्यतनौ ननौ च नन्वोश्च विनिवृत्तौ ॥ 'न पुराद्यतन' इति भवेदेतद्वाच्यम् ॥ * ॥**

( भाष्यम् ) तत्रैतावद्वक्तव्यं स्याद्—*'न पुराद्यतन'*इति ॥

( प्रदीपः ) अपरोक्षानद्यतनाविति । तेन भूतमात्रे एताभ्यां योगाभ्यां विधिरित्यर्थः ॥ पुरि लुङ् चास्म इत्यत्राप्यनद्यतनग्रहणनिवृत्तौ भूतमात्रे विधिः प्राप्नोतीत्याह—न पुरेति ॥

( ३०१५ वार्तिकम् ॥ ४ ॥ )

**॥ * ॥ तत्र चापि लुङ्ग्रहणम् ॥ * ॥**

( भाष्यम् ) तत्र चापि लुङ्ग्रहणं ज्ञापकम्—न पुरालक्षणोऽद्यतने भवतीति ॥

( प्रदीपः ) तत्रेति । पुरि लुङ् चास्म इत्यत्रानद्यतनग्रहणमनुवर्तेत इत्येतल्लुङ्ग्रहणेन ज्ञाप्यते । यदि तु भूतमात्रेऽयं विधिः स्यात्तदा नन्वोर्विभाषेत्यतो विभाषाग्रहणानुवृत्त्या विकल्पेन लटो विधानात् पक्षे लुङ् भविष्यति किं लुङ् ग्रहणेन । अनद्यतनानुवृत्तौ तु लुङ् ग्रहणमन्तरेण पक्षे लुङ् न लभ्यते लङा बाधितत्वाद् इति भावः ॥

( उद्द्योतः ) अपरोक्षानद्यतनावितीति । अपरोक्षे चेति सूत्रस्थमपरोक्षग्रहणमिति बोध्यम् । एवं च तन्निवृत्तेरिवानद्यतन इत्यस्यापि निवृत्तिर्भविष्यतीति निषेधवार्तिकं व्यर्थमित्याशयः ॥ ज्ञापकमुपपादयति—यदि त्विति ।

( भाष्यम् ) अथ बुद्धिरियम् 'अविशेषेण स्मपुरा हेतू' इति, तत्र चापि शृणुभूयः ॥

**अपरोक्षे चेत्येष प्राक् पुरिसंशब्दनादविनिवृत्तः ।**
**सर्वैञ्नानद्यतनस्तथासति नञा किमिह कार्यम् ॥**

( प्रदीपः ) अथ बुद्धिरिति । 'लट्स्मे' 'पुरि लुङ् चास्मे' एतावाद्यन्तौ योगौ यदि भूतमात्रे भवत इत्यर्थः ॥ स्मपुराहेतू इति । स्मपुराशब्दौ प्रत्ययोत्पत्तेर्निमित्ते इत्यर्थः ॥ तत्र चापीति । अयमर्थः—*न स्म पुराद्यतने* इत्ययं निषेधो यद्याद्यन्तोपलक्षितमध्यमयोगविषयस्तदा न कर्तव्य एव । अपरोक्षग्रहणं ननौ पृष्टप्रतिवचने 'नन्वोर्विभाषे'—त्यत्रानुवर्तिष्यते । तदनुवृत्त्याऽनद्यतनग्रहणानुवृत्तिरनुमास्यते । यस्मात्परोक्षानद्यतनयोः प्रकृतत्वेऽन्यतरनिवृत्तिर्यत्नेन क्रियमाणा द्वितीयस्यानुवृत्तिमनुमापयति । अपरोक्षग्रहणेन हि परोक्षाधिकारो निवर्त्यते, यथा–अद्वन्द्वग्रहणं द्वन्द्वाधिकारग्रहणनिवृत्त्यर्थमित्युक्तम् ॥

( उद्द्योतः ) द्वितीयपक्षेऽपि वैयर्थ्यमुपपादयति—भाष्ये अथ बुद्धिरिति । भूतमात्रे लटः स–पुराशब्दौ हेतू इत्यर्थः ॥ निवर्त्यते इति । लट् स्मे इत्यत्र परोक्षानद्यतनयोर्निवृत्त्या स भूतमात्रे सिद्धः । एवं चापरोक्षे इत्यस्यायमर्थः—उत्तरसूत्रद्वये परोक्ष इति निवृत्तमिति । तेन तत्रानद्यतनानुवृत्तिर्भवतीति उत्तरवार्तिकं व्यर्थमेवेति भावः ॥

( अपरोक्षे च इत्यस्य प्रत्याख्यानभाष्यम् )

**स्मादावपरोक्षे चेत्यकार्यमपि शक्यमेतदिति विद्धि ।**

**शक्यं हि निवर्तयितुं परोक्ष इति लट् स्म इत्यत्र ॥**

( प्रदीपः ) इदानीमपरोक्षे चेत्येतत् सूत्रं प्रत्याख्यातुमाह—स्मादाविति । स्मादिग्रहणेन 'स्मादिविधिः पुरान्त' इत्येष पक्षो लक्ष्यते । लट् स्म इत्यादिसूत्रेषु परोक्षग्रहणस्य निवृत्तत्वाद् अपरोक्षे चेत्येतत्सूत्रं न कर्तव्यमित्यर्थः ॥

( उद्द्योतः ) प्रत्याख्यातुमाहेति । प्रथमपक्ष इति शेषः ॥ प्रथमपक्षे लाघवेन स एव पक्षः परिग्राह्य इति बोधयितुमिति भावः ॥

( सूत्रसमर्थनभाष्यम् )

**स्यादेषा तव बुद्धिः स्मलक्षणेप्येवमेव सिद्धमिति ।**

**लट् स्म इति भवेन्नार्थस्तस्मात्कार्यं परार्थं तु ॥**

एवं तर्हि ज्ञापयत्याचार्यः—'स्मलक्षणः पुरालक्षणश्चानद्यतने भवतः' इति ॥ लट् स्मे ॥ ११८ ॥

( प्रदीपः ) इदानीमाचार्यः सूत्रं समर्थयितुमाह—स्यादेषेति । यदि त्वं मन्यसे लट् स्म इत्यत्र परोक्षग्रहणनिवृत्तौ सत्यां परोक्षे चापरोक्षे च लट् भविष्यतीति नार्थोऽपरोक्षे चेत्येतत्सूत्रेणेति । तन्न ।[2] यस्मादपरोक्षग्रहणमनद्यतनानुवृत्तिज्ञापनार्थं कर्तव्यम् । लट्स्म इत्ययं योगः परोक्षानद्यतने वर्तते । यदि ह्यत्र परोक्षग्रहणं निवर्तेत तदा तत्संबद्धमनद्यतनग्रहणमपि निवर्तेत तस्मादपरोक्षे चेतिसूत्रारम्भात् लट्स्मे इत्ययं योगः परोक्षानद्यतनविषयः, अपरोक्षे चेत्ययमपरोक्षानद्यतन[...]

---

१ परोक्षनिवृत्तिरित्यर्थः । द्वितीयस्य, अपरोक्षग्रहणस्येत्यर्थः । ( र. ना. )

२ लट्स्म इति सूत्रेण अपरोक्षे च इत्यस्यार्थः प्रयोजनं न भवेत्, तस्मात्परा[...] र्थम् अनद्यतनानुवृत्तिज्ञापनार्थम्, अपरोक्षे चेति सूत्रं कार्यमित्यर्थः । (र. ना.)



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यतनविषयः। पुरि लुङ् चास्मे इत्ययं तु लुङ्ग्रहणादनद्यतनविषयः। मध्यमौ तु भूतमात्रविषयाविति सूत्रेणैव व्यवस्थायाः सिद्धत्वात्तार्थो वार्तिकारम्भेणेत्यर्थः। ननौ पृष्टप्रतिवचन इत्ययं योगो येन नाप्राप्तिन्यायेन लुङो बाधकः, परत्वेन लड्लिटोः॥ ११८॥

(उद्द्योतः) इदानीमिति। तत्पक्षस्यैव ज्ञापकतया सूत्रं समर्थयितुमित्यर्थः॥ मध्यमौ त्विति। परोक्षग्रहणस्यापरोक्षग्रहणस्य च निवृत्त्या तत्सहचरितानद्यतनग्रहणस्यापि निवृत्तेरिति भावः॥ भाष्ये एवं तर्हि ज्ञापयत्याचार्यः स्मलक्षणश्चानद्यतने इति। तत्र स्मग्रहणे इदं ज्ञापकं, पुराग्रहणे तु लुङ् ग्रहणमिति विवेको बोध्यः॥ नन्वेवं ननुयोगेऽनद्यतने लड्लिटौ स्यातां ताभ्यां येन नाप्राप्त्यभावेन तद्बाधायोगादत आह—ननाविति॥ ११८॥

(५१७ लड्विधिसूत्रम्॥ ३। २। २ आ. १५)

## ८८७ ननौ पृष्टप्रतिवचने॥ ३।२।१२०॥

(३०१६ वार्तिकम्॥ १॥)

### ॥ * ॥ ननौ पृष्टप्रतिवचन इत्यशिष्यं क्रियासमाप्तेर्विवक्षितत्वात्॥ * ॥

(भाष्यम्) ननौ पृष्टप्रतिवचन इति अशिष्यो लट्। किं कारणम्? । क्रियासमाप्तेर्विवक्षितत्वात्। क्रियाया अत्र असमाप्तिर्विवक्षिता। एष एव न्याय्यो वर्तमानः कालः यत्र क्रियाया असमाप्तिर्भवति तत्र "वर्तमाने लट्" इत्येव सिद्धम्॥

(प्रदीपः) ननौ पृष्ट॥ १२०॥ असमाप्तिरिति। निवृत्तायामपि पाकादिक्रियायां तत्कृतस्य श्रमादेरनुवर्तनात्तस्या एवासमाप्तिविवक्षायां लट् सिद्ध इत्यर्थः॥

(उद्द्योतः) ननौ पृष्ट॥ १२०॥ असमाप्तिविवक्षायां हेतुमाह—तत्कृतस्य श्रमादेरिति॥

(दूषणभाष्यम्)

यदि "वर्तमाने लट्" इत्येव लड् भवति। शतृशानचौ च प्राप्नुतः॥

(इष्टापत्तिभाष्यम्)

इष्येते शतृशानचौ—ननु मां कुर्वन्तं पश्य, ननु मां कुर्वाणं पश्येति॥ ननौ पृष्ट०॥ १२०॥

(प्रदीपः) इष्येते इत्यनेन प्रत्याख्यानं द्रढयति॥ यदि हि भूताश्रयो लट् क्रियेत तदा वर्तमानाधिकाराद्वर्तमाने विहितस्य लटो विधीयमानौ शतृशानचावस्य लटो न स्याताम्॥ अथ पृष्टग्रहणं किमर्थम्। यावता प्रश्नपूर्वकमेव प्रतिवचनं भवति॥ नैतदस्ति—विरुद्धमपि वचनं वचनाभिमुख्यमपि तथा[1]। वचनं वचनं प्रति प्रतिवचनमित्यनेकार्थसंभवात् पृष्टग्रहणं कर्तव्यम्॥ १२०॥

[1] तथा, प्रतिवचनमित्यर्थः। (र. ना.)

(उद्द्योतः) प्रत्याख्यानमिति। सत्यारम्भे इष्टासिद्धेरिति भावः॥ ननुशब्दयोगे लुङ्लङ्लिटामनभिधानमाश्रयणीयमिति तात्पर्यम्॥ १२०॥

(५१८ लुङ्लड्विधिसूत्रम्॥ ३। २। २ आ० १६)

## ८८९ पुरि लुङ् चास्मे॥ ३। २। १२२॥

(३०१७ वार्तिकम्॥ १॥)

### ॥ * ॥ हशश्वद्भ्यां पुरा॥ * ॥

(भाष्यम्) हशश्वल्लक्षणात्पुरालक्षणो भवति विप्रतिषेधेन। हशश्वल्लक्षणस्यावकाशः—इति हाकरोत् इति ह चकार,—शश्वदकरोत् शश्वच्चकार। पुरालक्षणस्यावकाशो—रथेनायं पुरा याति रथेनायं पुरायासीत्। इहोभयं प्राप्नोति—रथेन ह शश्वत्पुरा याति रथेन हशश्वत्पुरायासीत्। पुरालक्षणो भवति विप्रतिषेधेन॥

(३०१८ वार्तिकम्॥ २॥)

### ॥ * ॥ स्मः सर्वेभ्यो विप्रतिषेधेन॥ * ॥

(भाष्यम्) स्मलक्षणः सर्वेभ्यो भवति विप्रतिषेधेन। हशश्वल्लक्षणात्पुरालक्षणाच्च। हशश्वल्लक्षणस्यावकाशः—इति हाकरोत्=इति ह चकार। शश्वदकरोत् शश्वच्चकार। पुरालक्षणस्यावकाशः—रथेनायं पुरा याति=रथेनायं पुरायासीत्। स्मलक्षणस्यावकाशः—धर्मेण स्म कुरवो युध्यन्ते। इह सर्वं प्राप्नोति—'न ह स्म वै पुरा शश्वदग्निरपरशुवृक्णं दहति'। स्मलक्षणो लड् भवति विप्रतिषेधेन॥ पुरि लुङ्॥ १२२॥

(प्रदीपः) पुरि लुङ्॥ १२२॥ स्मः सर्वेभ्य इति। परविप्रतिषेधेन पूर्वविप्रतिषेधेन च। ततश्च पुरिलुङ् चास्मे [इति[2] अस्म] इति न वक्तव्यं भवतीति भावः।

(उद्द्योतः) पुरि लुङ्॥ १२२॥ पूर्वविप्रतिषेधेनेति। पुरिलुङ् चास्मे इत्यतः स्मे लडिति पूर्वं इति भावः॥ नन्वस्मे इत्युक्ते स्मयोगे पुरि लुङित्यस्याप्राप्तेः कथं विप्रतिषेधोऽत आह—ततश्चेति॥ १२२॥

(इति भूताधिकारः)

[2] 'इत्यस्मे'॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( अथ वर्तमानकालाधिकारः )

( ५१९ लट्प्रत्ययविधिसूत्रम् ॥ ३ । २ । २ आ. १७ )

## ८९० वर्तमाने लट् ॥ ३ । २ । १२३ ॥

( ३०१९ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वात् ॥ * ॥

(भाष्यम्) प्रवृत्तस्याविरामे शासितव्या भवन्ती । इहाधीमहे, इह वसामः, इह पुष्यमित्रं याजयाम इति ॥ किं पुनः कारणं न सिध्यति ? । अवर्तमानत्वात् ॥

( प्रदीपः ) वर्तमा ॥ १२३ ॥ प्रवृत्तस्येति । इहाधीमह इत्यध्ययनं प्रवृत्तं प्रारब्धं, न च तद्विरतम् । यदा च भोजनादिकां क्रियां कुर्वन्तो नाधीयते तदाऽधीमह इति प्रयोगो न प्राप्नोति इति वचनम् ॥ भवन्तीति । लटः पूर्वाचार्यसंज्ञा ।

( उद्द्योतः ) वर्तमाने लट् ॥ १२३ ॥ ननु प्रवृत्तं न च विरतं अथ च न वर्तमानमिति विरुद्धमत आह—इहेत्यादि । न च तद्विरतमिति । सर्वथा न समाप्तमित्यर्थः ॥

( ३०२० आक्षेपवार्तिकम् ॥ २ ॥ )

### ॥*॥ नित्यप्रवृत्ते च कालाविभागात् ॥*॥

( भाष्यम् ) नित्यप्रवृत्ते च शासितव्या भवन्ती । तिष्ठन्ति पर्वताः, स्रवन्ति नद्य इति ॥ किं पुनः कारणं न सिध्यति ? । कालाविभागात् । इह भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानः कालः । न चात्र भूतभविष्यन्तौ कालौ स्तः ॥

( प्रदीपः ) नित्यप्रवृत्ते चेति । पर्वतास्तिष्ठन्तीत्यादौ स्थानादेः[1] सर्वदा सद्भावात् साध्यत्वाभावात् क्रियारूपत्वाभावात्तद्धर्मस्य वर्तमानत्वस्याप्यभाव इति भावः ॥ भूतेति । साध्यसार्थस्यानित्यत्वादवश्यं भविष्यत्त्वेन भाव्यम् । उत्पन्नस्यापि नाशाद्भूतत्वेन भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानो धात्वर्थो, नित्यप्रवृत्तस्य भूतभविष्यत्त्वाभावाद्वर्तमानत्वाभावः क्रियारूपत्वाभावश्चेत्यर्थः ॥

( उद्द्योतः ) क्रियारूपत्वाभावादिति । भूतभविष्यद्वर्तमानव्यवहारविषयत्वस्वभावत्वात्तस्या इति भावः । त्रिविधव्यवहारविषय एव हि साध्यत्वमित्यभिमानेः[2] ॥ ननु विद्यमानकालसंबन्धित्वरूपं वर्तमानत्वमसाध्यस्यापि संभवतीत्यतो—भाष्ये भूतेत्यादि ॥ तद्व्याचष्टे—साध्यस्येति । अनित्यत्वात् वर्तमानप्रागभावप्रतियोगित्वात् । उत्पन्नस्यापि । भावस्येति शेषः । तेन ध्वंसव्यावृत्तिरिति केचित् । वस्तुतो ध्वंसस्यापि प्रलयेऽदर्शनरूपो नाशोस्त्येव । न ह्यभावनाशः प्रतियोगिरूप एवेति नियमः । अधिकरणरूपत्वादिति परे ॥ प्रतिद्वन्द्व इति । प्रतियोगिसत्ताकाले तयोरसंभवात्तद्विरोधिवर्तमानत्वमिति भावः । वर्तमानत्वाभाव इति । भूतादिविरोधिवर्तमानत्वाभाव इत्यर्थः । तादृशमेव वर्तमानत्वं सूत्रे विवक्षितम्, पूर्वं भूते इत्युक्तेरग्रे च भविष्यतीति वक्ष्यमाणत्वादिति भावः । क्रियारूपत्वाभावश्चेति । यतो भूतभविष्यद्विरोधि वर्तमानत्वाभावोऽतः क्रियात्वाभाव इत्यर्थः । तदुक्तम्—

क्रिया भेदाय कालस्तु[3] सङ्ख्या सर्वस्य भेदिकेति ।

( ३०२१ प्रथमाक्षेपबाधकवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ न्याय्या त्वारम्भानपवर्गात् ॥ * ॥

( भाष्यम् ) न्याय्या त्वेषा वर्तमानकालता । कुतः ? । आरम्भानपवर्गात् । आरम्भोऽत्रानपवृक्तः । एष एव च नाम न्याय्यो वर्तमानकालो यत्रारम्भोऽनपवृक्तः ॥

( ३०२२ वार्तिकम् ॥ ४ ॥ )

### ॥*॥ अस्ति च मुक्तसंशये विरामः ॥*॥

( भाष्यम् ) यं खल्वपि भवान्मुक्तसंशयं वर्तमानकालं न्याय्यं मन्यते 'भुङ्क्ते देवदत्त' इति । तेनैतत्तुल्यम् । सोपि ह्यवश्यं भुञ्जानो हसति वा जल्पति वा पानीयं वा पिबति । यद्यत्र युक्ता वर्तमानकालता दृश्यते । इहापि युक्ता दृश्यताम् ॥

( प्रदीपः ) न्याय्यात्विति । अध्ययनं यदा प्रवृत्तं, न चोपरतं तदा तस्य भोजनादिक्रियानान्तरीयकत्वादव्यवधायिका । अथ वाध्ययनस्यैवावयवक्रियेति भावः । तदुक्तं हरिणा—

> 'व्यवधानमिवोपैति निवृत्त इव दृश्यते ।
> क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभिः ॥
> न च विच्छिन्नरूपोपि सोऽविरामान्निवर्तते ।
> सर्वैव हि क्रियान्येन संकीर्णेवोपलभ्यते ॥
> तदन्तरालदृष्टा वा सर्वैवावयवक्रिया ।
> सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यते' इति ॥

( उद्द्योतः ) भाष्ये आरम्भोत्रेति । कर्मणि घञ् । आरब्ध इत्यर्थः ॥ अथवाध्ययनस्यैवेति । भोजनादिकं विना तदनिर्वाहात्–तदवयवत्वेनैव तस्या ग्रह इति भावः ॥

व्यवधानमिवेति । अव्यवधायकोपि व्यवधानमिव प्राप्नोति, अनिवृत्तोऽपि निवृत्त इव दृश्यते इत्यर्थः ॥ अन्तरालप्रवृत्तिभिः । हास्यादिभिः ॥ अविरामात् । फलानिर्वृत्त्या विरामाभावात् ॥ विच्छिन्नरूपोपि । विच्छिन्न इव भासमानोऽपि ॥ [अविरामात्] फलानिर्वृत्तेः न निवर्तते, सर्वथा न निवर्तते इत्यर्थः । सर्वैवेति । तथा च नान्तरीयकत्वात्तासां न व्यवधायकत्वमिति भावः॥ पक्षान्तरमाह—तदिति । तन्मध्यदृष्टा सर्वा तदवयवक्रियैवेत्यन्वयः॥ एवं च स्वावयवक्रिया यथा स्वस्य न व्यवधायिकास्तथा इमा अपीत्यर्थः ॥

१ स्थानादेरित्यस्य स्थित्यादेरित्यर्थः । ( र. ना. )

२ अभिमानोक्तिबीजं तु क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकधर्मरूपं साध्यत्वं त्रिविधव्यवहाराविषयेऽपि नित्ये आत्मसत्तादौ संभवतीति । ( र. ना. )

३ कालस्तु क्रियाभेदायेत्युक्त्या कालः क्रियाविशेषणमिति लब्धमिति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

एवं चात्र पक्षे भोजनाद्यपि अध्ययनशब्दार्थेनाश्रितमिति तात्पर्यम् ॥ ननु कथं तदवयवत्वेन ग्रहोऽत आह—साद्दश्यादिति । तत्फल-निर्वाहकत्वेनेत्यर्थः ॥ सति भेदेत्विति । तुरप्यर्थे । अत्यन्तभिन्नाया अपि क्रियाया मध्यपातितया तदङ्गत्वेन ग्रहात्स्वाङ्गं न व्यवधायक-मिति भावः ॥

( ३०२३ द्वितीयाक्षेपबाधकवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सन्ति च कालविभागाः ॥ * ॥

(भाष्यम्) सन्ति च खल्वपि कालविभागाः तिष्ठन्ति पर्वताः, स्थास्यन्ति पर्वताः, तस्थुः पर्वता इति ।

( आक्षेपभाष्यम् )

[१]किं शक्यन्त एते शब्दाः प्रयोक्तुमिस्यतः सन्ति कालविभागाः ? ।

( समाधानभाष्यम् )

नावश्यं प्रयोगादेव । इह हि भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियास्ताः तिष्ठतेरधिकरणम् । इह ता-वत् 'तिष्ठन्ति पर्वताः' इति, संप्रति ये राजानस्तेषां याः क्रियास्तासु वर्तमानासु । 'स्थास्यन्ति पर्वताः' इति । इत उत्तरं ये राजानो भविष्यन्ति तेषां याः क्रियास्तासु भविष्यन्तीषु । 'तस्थुः पर्वताः' इति, इह हि ये राजानो बभूवुस्तेषां याः क्रियास्तास्वति-क्रान्तासु ॥

(प्रदीपः) निरुप्रवृत्ते चेत्यस्योत्तरं सन्तीति । इहेति । 'प्रसिद्धपरिमाणा क्रियैव क्रियान्तरपरिच्छेदात्काल' इत्युक्तम् ॥ तत्र राज्ञां स्थितिर्भूतादिभेदेन भिन्ना पर्वतादिस्थित्यादेर्भेदिकेति क्रियारूपत्वं कालत्रययोगश्चोपपन्न इत्यर्थः ॥ उक्तञ्च हरिणा—

'परतो भिद्यते सर्वमात्मा तु न विकल्पते ।
पर्वतादिस्थितिस्तस्मात्पररूपेण भिद्यते ॥
प्रसिद्धभेदा व्यापारा विरूपावयवक्रियाः ।
साहचर्येण भिद्यन्ते सरूपावयवक्रियाः ॥ इति ॥

ता इति । तासामेव कालरूपत्वात् कालस्य च क्रियाधि-करणत्वादिति भावः ॥

(उद्द्योतः) भाष्ये नावश्यमिति । किं त्वर्थसत्त्वादपीत्यर्थः ॥ ननु कालः क्रियाधिकरणं न तु क्रियाऽत आह—प्रसिद्धेति । वस्तुतोऽनवस्थापत्त्या चिन्त्यमिदम् ॥ भाष्ये क्रियापदेन तदधि-करणकालो लक्ष्यत इति वक्तुं युक्तम् ॥ तिष्ठतेरिति । तत्तत्क्रिया-विशिष्टतिष्ठतेरित्यर्थः ॥ क्रियारूपत्वमिति । तत्तद्राजक्रियासमाना-धिकरणपर्वतादिस्थित्यादेरित्यर्थः । यतः कालत्रययोगोऽतः क्रिया-रूपत्वमित्यर्थः ॥

आत्मा, द्रव्यम् । न विकल्पते इति । न स्वरूपेण भिन्न इत्यर्थः । विरूपावयवक्रियाः व्यापाराः प्रसिद्धभेदाः । न तु साध्यभेदा इत्यर्थः । सरूपावयवक्रियास्तु गिरिस्थित्यादयो राज-क्रियादेः साहचर्येण[३] भिद्यन्त इत्यर्थः । साहचर्यमत्र कालघटितं बोध्यम् ॥

तासामेवेति । अत्र यद्वक्तव्यं तदुक्तम् ॥ क्रियाकारणत्वा-दिति । आधारतयेति भावः ॥ क्वचित्क्रियाधिकरणत्वादित्येव पाठः ॥

( आक्षेपभाष्यम् )

अपर आहुः—'नास्ति वर्तमानः काल' इति ॥ अपि चात्र श्लोकानुदाहरन्ति—

(भाष्यम्) 'न वर्तते चक्रमिषुर्न[४] पात्यते ।
न स्यन्दन्ते सरितः सागराय ।
कूटस्थोऽयं लोको न विचेष्टितास्ति ।
यो ह्येवं पश्यति सोऽप्यनन्धः ॥
मीमांसको मन्यमानो युवा मेधाविसंमतः ।
काकं स्मेहानुपृच्छति 'किं ते पतितलक्षणम्' ॥
अनागते न पतसि अतिक्रान्ते च काक न ।
यदि संप्रति पतसि सर्वो लोकः पतत्ययम् ॥
हिमवानपि गच्छति ॥
अनागतमतिक्रान्तं वर्तमानमिति त्रयम् ।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते ॥

(प्रदीपः) नास्तीति । निष्पन्नस्यार्थस्य भूतत्वादनिष्प-न्नस्य भावित्वान्निष्पन्नानिष्पन्नव्यतिरेकेण रूपान्तरस्याभावः ॥ न वर्तत इति । परिवर्तनक्रियाया वर्तमानाया अभावादिति भावः ॥ कूटस्थ इति । स्वरूपस्थो न तु वर्तमानक्रिया-विशिष्ट इत्यर्थः ॥ अत एवाह—न विचेष्टितेति । व्यापारस्य न कर्तेत्यर्थः । एवं यो वेत्ति सोऽप्यनन्धः किं पुनर्योऽनुष्ठाता योगीत्यर्थः । स ह्यविकृतमात्मतत्त्वं भावयन् प्रत्यक्षीकरोति । तथा चोक्तं भगवता—

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ इति ॥

मीमांसक इति । विचारकः ॥ युवेत्यनेन प्रज्ञायां पाटवं दर्शयति—मेधाविसंमत इति । मेधावी चासौ सम्मतश्चेति विशेषणसमासः ॥ षष्ठीसमासस्य तु क्तेन च पूजायामिति निषेधात् ॥ पतितलक्षणमिति । पातः पतितं तस्य किं रूपम् । नास्त्येव पतनक्रियेत्यर्थः ॥ अनागत इति । अनागतत्वादेवासत्त्वात् पातक्रियायाः पतसीति व्यप-देशोऽनुपपन्न इत्यर्थः ॥ अतिक्रान्त इति । तथैव क्रियाया असत्त्वात् ॥ सर्वो लोक इति । क्रियाया वर्तमानत्वाभावेऽपि

---

१ वर्तमानत्वादिपदार्थसत्त्वादपीत्यर्थः । ( र. ना. )
२ पष्ठ्यर्थे बहुव्रीहिः । ( र. ना. )
३ साहचर्येण, सामानाधिकरण्येन, तत्तद्राजक्रियाद्यधिकरणकालवृत्तित्वरूपेणेत्यर्थः । ( र. ना. )
४ इषुर्न पात्यते इति । वर्तमानायाः पातनक्रियाया अभावादित्येवात्रापि हेतु-रेवमेवाग्रेऽपि । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

यदि पतसीति व्यपदेशस्तदा विशेषाभावात् पर्वतादावपि पतसीति व्यपदेशप्रसङ्ग इत्यर्थः। **अनागतमिति**। एक एव क्षण उपलभ्यते नातीतो नाप्यनागतो न चैकस्य क्षणस्य गमनादिक्रियावेशः सम्भवतीति भावः। **सर्वत्रेति**। कालवृत्तित्वाविवक्षायां दाप्रत्ययो न कृतः।

( उद्द्योतः ) इदानीं क्षणभङ्गवादी सूत्रमाक्षिपतीत्याह— **अपर आहुर्नास्तीति**। वर्तमानकाला क्रिया नास्तीत्यर्थः॥ एवं च क्षणभङ्गुरे पदार्थमात्रे क्रियाश्रयत्वासंभवात्क्रियायां भूतभविष्यप्रतिद्वन्द्विवर्तमानत्वाभावेन कालविभागानवगतेर्वर्तमाने लडिति सूत्रमसंगतमिति भावः॥ तद्ध्वनयन्व्याचष्टे—**निष्पन्नस्येति**॥ **रूपान्तरस्याभाव इति**। प्रतिक्षणनश्वरत्वाद्वर्तमानक्रियाश्रयस्याभावेन सर्वथा वर्तमानभाव इति भावः॥ अतीतानागतानां तत्त्वा[2]देव न वर्तमानव्यवहारप्रयोजकता क्रियां प्रति द्रव्यस्य समवायिकारणतयोत्तरक्षणे क्रिया वाच्या तै[3]त्तु न उत्तरक्षणेऽन्यस्यैव भावादिति तात्पर्यम्॥ तदुपपादयति—भाष्ये **अपि चात्रे**त्यादिना॥ **वर्तते चक्र**मित्यादिवर्तमानप्रयोगो निरालम्ब इत्यर्थः॥ तदाह—**परिवर्तनेति**॥ **अत्र विचेष्टिता लोको** नास्तीत्यनेन दृश्यस्य क्षणभङ्गुरतासूचिता॥ यद्यप्ययं श्लोकः, क्रियाश्रयो नात्मा यतोयं कूटस्थोऽपरिणामीत्यर्थः। नापि लोकदृश्यः पदार्थः, यतो दृश्यश्चेष्टाश्रयः स्थिरो नास्ति प्रतिक्षणपरिणामित्वात्पदार्थानामिति संसारानित्यत्वातिशयबोधकः तथाप्यापातार्थमादाय क्षणभङ्गवादिना स्वसाधकत्वेनोपन्यस्तः॥ **एवं यो वेत्तीति**। यथाकथंचिज्जानातीत्यर्थः। अपिद्योत्यमर्थमाह—**किं पुनरिति**। सर्वथा तथाभावनावानित्यर्थः। एवं चक्रादेः क्रियाराहित्यज्ञानवानपि योगितुल्योऽत्यन्तास्थिरत्वस्य दृश्येषु ग्रहात्। आत्मन्यपरिणामित्वस्थिरत्वग्रहाच्चेत्युक्तं भवति। **अविकृतमात्मतत्त्वं**, अपरिणाम्यात्मतत्त्वम्॥ स हि त[4]र्था जडं भावयंस्तत्कारणतया अविकृतमात्मतत्त्वं प्रत्यक्षीकरोतीत्यन्वयः॥ अत्रैवार्थे संमतिमाह—**तथा चेति**। प्रकृतिपुरुषविवेकादेव हि तथा साक्षात्कार इति योगसांख्ययोः सिद्धान्तः॥ अथ पदार्थानां स्थिरत्वेऽपि वर्तमानकालाभावमुपपादयति—भाष्ये **मीमांसक इति**। **मन्यमानः**। आत्मानं विचारकं मन्यमान इत्यर्थः॥ **संमतश्चेतीति**। अर्थान्मेधाविनामेवेति गम्यते॥ **पृच्छति स्म** पप्रच्छ॥ **लट् स्मे** इति लट्॥ भाष्ये—**अतिक्रान्ते च न पतसी**त्यन्वयः॥ काकपर्याय का[5]केनशब्दस्य काकनेति संबोधनम्॥ **संप्रति** प्रयोगकाले॥ **वर्तमानत्वाभावेपीति**। क्रियाया वर्तमानत्वाभावेऽपि यदि पतसीति व्यवहारस्तदायं सर्वो लोकः पततीति व्यवहारविषयः स्यादित्यर्थः। तदाह—**हिमवानपी**त्यादिभाष्यस्य व्यवहारः स्यादिति शेषः॥ अयं भावः—त्रिक्षणस्थायिन्या अपि क्रियाया अतिसूक्ष्मकालावच्छिन्नत्वरूपदोषवशाज्ज्ञानासंभवेनाज्ञातेन च व्यवहारासंभवोऽज्ञातेन च व्यवहारेऽतिप्रसङ्ग इति॥ उक्तमेवार्थं दार्ढ्यायाह—**अनागतमिति**। एक एव क्षण उपलभ्यत इति। उपलम्भयोग्यो भवितुमर्हतीत्यर्थः॥ **न चैकस्येति**। ए[6]कक्षणवर्ती पदार्थगतः क्रियावेशज्ञानयोग्यः संभवतीत्यर्थः॥ ननु कालवाचकत्वात्सदेति भाव्यमत आह—**कालेति**॥ भाष्ये **सर्वत्रे**त्यस्य काल इति शेषः। **सर्वत्रगतिर्नास्ती**त्यस्योपलब्धियोग्या नास्तीत्यर्थः॥ अनुपलब्धिप्रमाणाच्च तदभावनिश्चय इति भावः। क्षणभङ्गवाद्येवात्र वक्तेति तु न युक्तं, तस्य मेधाविसंमत इति विशेषणानुपपत्तेः। यदि संप्रतीत्यादेस्तन्मते। उक्तिसंभवाभावाच्च॥

( आक्षेपपरिहारभाष्यम् )

**क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम् । तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन् ॥**

( प्रदीपः ) **क्रियाप्रवृत्ताविति**। परिहारः। **हेतुः** प्रयोजनं गमनस्य देशान्तरप्राप्तिस्तदर्थं फलार्थमित्यर्थः। इह प्रत्यभिज्ञानात् क्षणभङ्गनिरासे देवदत्तस्य देशान्तरप्राप्तिर्निर्हेतुका न संभवतीति गमनक्रियैव तस्या निमित्तम्। तदालम्बनश्च गच्छतीति प्रत्ययोऽबाधित उत्पद्यत इति सत्त्वं तावदवगम्यते क्रियायाः। वर्तमानत्वाभावे च भूतभविष्यतोरप्यभावप्रसङ्गो, वर्तमानो हि भूतत्वं भविष्यत्त्वं च प्रतिपद्यते। तत्रानेकक्षणसमूहात्मकं क्रियाप्रबन्धरूपं बुद्ध्या संकलय्य गच्छतीत्यादि प्रयुज्यत इत्यर्थः॥ **अविचारयन्निति**। कुविकल्पकलङ्करहितमित्यर्थः॥

( उद्द्योतः ) इदानीं सिद्धान्तमाह—**क्रियाप्रवृत्ताविति** भाष्ये क्रियारम्भे यो हेतुः प्रयोजकः फलं तदर्थं यद्विचेष्टितं क्रियासमूहस्तं तदनुकूलत्वेन समीक्ष्य बुद्धिविर्पयीकृत्य[8] बौद्धसमूहस्य बौद्धं वर्तमानत्वमादाय गच्छतीति प्रयोगोपपत्तिरित्यर्थः॥ क्षणभङ्गवादे बुद्धेरप्येकस्या अभावादाह—**इहेति**। कदाप्यवर्तमानस्य शशविषाणादितुल्यस्य भूतभविष्यत्त्वे अपि त्वत्संमते न संभवत इति गच्छतीत्यबाधितप्रत्ययस्तत्सत्तायां मानमिति भावः॥ **गच्छतीति प्रत्ययोऽबाधित उत्पद्यत इति सत्त्वं तावदवगम्यत इति**। एतेनावयवशोपि अप्रत्यक्षत्वं सूचितम्। अन्यथावयवगतस्य समूहे आरोप इत्येव वदेत्॥ ननु अवयवानामभावे समूहोऽसंभवी तत्राह—**तत्रानेकेति**। बौद्धो वैकल्पिक एवायं समूह इत्यर्थः। शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति पातञ्जलोक्तेः॥ समूहस्य वर्तमानत्वं तु प्रारब्धापरिसमाप्तत्वमुक्तमेव। तदपि बौद्धमेव। तत्रानेकक्षणसमूहात्मकं तदात्मकत्वेन प्रसिद्धं। क्रियाप्रबन्धरूपं तत्त्वेन च प्रसिद्धमविचारणीयमेव बुद्ध्याविषयीकृत्येत्यर्थः। अन्यथा पूर्वं सर्वथा वर्तमानकालाभावस्योक्तत्वेन तं[10]साध्यैवेदृशोक्तेरसङ्गत्यापत्तेः।

( मतान्तरेणाक्षेपपरिहारभाष्यम् )

**अपर आह—अस्ति वर्तमानः काल इति। आ-**

---

१ 'पततीति' इति युक्तं प्रतीयते॥

२ अतीतानागतत्वादेवेत्यर्थः। ( र. ना. )

३ तद्द्रव्यं तु उत्तरक्षणे नास्तीत्यर्थः। तत्र हेतुः, अन्यस्यैव भावादिति। (र. ना.)

४ तथेति। अविकृतत्वेनेत्यर्थः। ( र. ना. )

५ न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।' इत्यत्रैव नञः पुनरुक्तिमजानानस्येदं कल्पनं वृथैवेति दाधिमथाः॥

६ एकक्षणवर्तिपदार्थगतः क्रियावेशो न ज्ञानयोग्यः संभवतीत्यर्थ इति पाठः साधुर्भाति। ( र. ना. )

७ पूर्वं त्वयि पतनाभाव इदानीं पतनमित्युक्तौ युष्मत्पदार्थस्य स्थिरत्वापत्त्या क्षणभङ्गवादहानिः स्यादिति तन्मते एतदुक्तेः संभवाभावादिति भावः। (र. ना.)

८ बुद्धिविषयीकृत्येत्यस्य व्याख्यानम् 'आदाये'त्यन्तो ग्रन्थः। ( र. ना. )

९ वर्तमानत्वस्येति शेषः। ( र. ना. )

१० वर्तमानकालमसाध्यैवेत्यर्थः। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

दित्यगतिवन्नोपलभ्यत इति ॥ अपि चात्रश्लोकमुदाहरन्ति—

विसस्य वाला इव दह्यमाना ।
न लक्ष्यते विकृतिः सन्निपाते ।
अस्तीति तां वेदयन्ते त्रिभावाः ।
सूक्ष्मो हि भावोऽनुमितेन[१] गम्यः ॥ इति ॥

वर्तमाने लट् ॥ १२३ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

(प्रदीपः) **विसस्येति** । विसस्य वाला विसे दह्यमाने दह्यमाना अपि न प्रत्यक्षं दह्यमानत्वेनावसीयन्ते । किं तर्ह्यनुमानेन विसान्तर्गतत्वात्तद्दाहे तेषामपि दाहः प्रतीयते । तथा कारकसंनिपात एकैकक्षणग्रहणे क्रियावेशलक्षणाविकृतिः प्रत्यक्षेण न लक्ष्यते । तां तु त्रिभावा अस्तीति निश्चिन्वन्ति । त्रिषु कालेषु भावो भावना येषां ते त्रिभावा योगिनो ये भावनावशेन त्रीनपि कालान् योगिप्रत्यक्षेण विदन्ति ॥ **सूक्ष्म इति** । अनेकक्षणसमूहात्मकस्य धातुवाच्यस्य अर्थस्य[२] क्रियारूपस्य युगपदसंनिधानादनुमीयत इत्यर्थः ॥ १२३ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

(उद्द्योतः) एवं वास्तववर्तमानक्रियाभावमङ्गीकृत्यानुमितबौद्धसमूहरूपक्रियां तद्वर्तमानत्वं च बौद्धमाश्रित्य प्रयोगानुपपाद्येदानीं वास्तववर्तमानक्रियां तत्तत्क्षणवर्तिनीं योगिप्रत्यक्षप्रमाणिकामाश्रित्य समाधत्ते अपर आह—अस्ति वर्तमानः काल इति । क्रियाणां त्रिक्षणावस्थायित्वादिति भावः ॥ आदित्यगतिवन्नोपलभ्यते प्रत्यक्षेणेति शेषः । क्रियाप्रत्यक्षत्वाभिमानिनो यथातिदूरत्ववशात्तद्गतिरनुमेया तथातिसूक्ष्मकालावच्छिन्नत्वादेकैकक्षणावच्छिन्ना क्रियाप्यनुमेयैवेति भावः । ननु कार्येणोत्तरदेशसंयोगादिना एकैकक्षणवर्त्यतिसूक्ष्मवर्तमानक्रियायाः कथमनुमानगत आह—भाष्ये अपि चेति । विसदाहे वालदाहवत्कारकसंनिपाते विकृतिः एकैका क्रिया यद्यपि न लक्ष्यते तथापि त्रिभावा योगिनस्तामस्तीति वेदयन्त इत्यर्थः । अनेन योगिप्रत्यक्षं प्रमाणं दर्शितम् ॥ नन्वसदादिव्यवहारः कथमत आह—सूक्ष्मो हीति । समूहान्यथानुपपत्तिर्वर्तमाने लडिति शास्त्रं च तदनुमापकमिति भावः । एकैकक्षणग्रहणे एकैकक्षणस्य वर्तमानग्रहणेन ग्रहणे तत्क्षणावच्छेदेन क्रियावेशलक्षणा विकृतिः प्रत्यक्षेण न लक्ष्यत इति अक्षरार्थः । नन्वेकैकक्षणस्य सूक्ष्मत्वेऽपि समूहः प्रत्यक्षः स्यादत आह—अनेकेति । एवं चावयवरूपा समुदायरूपा च क्रियाऽनुमानगम्यैवेति तात्पर्यम् ॥ अत्र पक्षेऽनुमितैकैकक्षणवर्तिक्रियायां धात्वर्थसमूहरूपारोपेण वर्तमानप्रयोग इत्याशय इति दिक् ॥ १२३ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते व्याकरणमहाभाष्यप्रदीपोद्द्योते तृतीयस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

[१] अनुमितेन, अनुमानेन, नपुंसके भावे क्तः । (र. ना.)
[२] वर्तमानकालविशिष्टो धातुवाच्योऽर्थ इति शेषः । (र. ना.)

## तृतीयाध्यायस्य द्वितीये पादे तृतीयमाह्निकम् ॥

(५२० लटः शतृशानज्विधिसूत्रम् ॥ ३ । २ । ३ आ. १)

## ८९१ लटः शतृशानचावप्रथमासमानाधिकरणे ॥ ३ । २ । १२४ ॥

(आदेशोपपादनाधिकरणम्)

(३०२४ आदेशानुपपत्तिवार्तिकम् ॥ १ ॥)

### ॥ * ॥ लस्याप्रथमासमानाधिकरणेनायोगादादेशानुपपत्तिर्यथान्यत्र ॥ * ॥

(भाष्यम्) लस्य अप्रथमासमानाधिकरणेनायोगादादेशयोरनुपपत्तिर्यथान्यत्र । तद्यथा—अन्यत्रापि लस्याप्रथमासमानाधिकरणेन योगो न भवति । कान्यत्र? । लङि—अपचदोदनं देवदत्त इति ॥

(प्रदीपः) **लटः शतृ** ॥ १२४ ॥ **लस्येति** । इहायं लकारो लः कर्मणि च भावे चेत्यनेन कर्तृकर्मणोर्विधीयमानो गुणभूते क्रियां प्रति कर्तृकर्मणी प्रतिपादयति । तथा च पचत्योदनं देवदत्तः, ओदनः पच्यते देवदत्तेनेति क्रियाप्रधानत्वात् क्रियान्तरयोगाभावाच्छक्त्यन्तरावेशाभावः । अन्ये तु कृतः प्राधान्येन कर्त्रादीनि प्रतिपादयन्ति । तथा च क्रियान्तरयोगे शक्त्यन्तरावेशो भवति । पाचकं पश्य पक्त्रेन तृप्त इति । ततश्च लङादिवल्लटोपि क्रियान्तरयोगाभावाद् द्वितीयाद्युत्पत्तावप्रथमान्तेन सामानाधिकरण्यं नोपपद्यत इत्यर्थः ॥

(उद्द्योतः) लटः शतृशानचौ ॥ १२४ ॥ भाष्ये लस्येत्यादि । समानाधिकरणेनाप्रथमान्तेन लवाच्यस्य कारकस्यायोगादित्यर्थः । ननु पचन्तं देवदत्तं पश्येत्यादौ तत्सामानाधिकरण्यमस्त्येवेत्यत आह—इहेति ॥ गुणभूते इति । क्रियाप्रधानमाख्यातमिति सिद्धान्तादिति भावः ॥ इति क्रियेति । इत्यस्य क्रियाप्रधानत्वादित्यर्थः ॥ क्रियान्तरयोगाभावादिति । एकत्र विशेषणत्वेनान्वितस्य कारकस्यान्यत्र तथान्वयायोगात्कर्तृत्वाद्यतिरिक्तानभिहितशक्त्यन्तरावेशाभावेन नियमेन प्रथमान्तेनैव सामानाधिकरण्यादिति भावः ॥ प्राधान्येनेति । सत्त्वप्रधानानि नामानीत्युक्तेः ॥ लङादिवदिति । लङादिवाच्यकारकसमानाधिकरणवल्लड्वाच्यकारकसमानाधिकरणस्येत्यर्थः ॥ अप्रथमान्तेन । तदर्थेन ॥

[३] सूर्यगतिरित्यर्थः । (र. ना.)
[४] इदं त्र क्रियान्तरयोगाभावादित्यनेनान्वेति । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ३०२५ अन्यथा दूषणापत्तिवार्तिकम् ॥ २ ॥ )

**॥ * ॥ योग इति चेदन्यत्रापि योगः स्यात् ॥ * ॥**

( भाष्यम् ) अथ मतमेतत्—'भवति योग'इति । अन्यत्रापि योगः स्यात् ॥ क्वान्यत्र ? । लङि—अपचदोदनं देवदत्त इति ॥

( प्रदीपः ) अपचदिति । तथा चापचदोदनं देवदत्तं पश्येत्यादिप्रसज्येतेत्यर्थः ।

( उद्द्योतः ) इत्यादिप्रसज्येतेति । शतरीव लङ्यपि लकारार्थकर्तुः प्राधान्यं स्यादिति भावः ॥ यद्यप्यन्तरङ्गा प्रथमा तथापि प्रधानानुरोधित्वेन बलवती द्वितीयैव स्यादित्यर्थः ॥

( अनुपपत्तिपरिहारभाष्यम् )

न क्वचिद्योग इति कृत्वातः सर्वत्र योगेन भवितव्यम् । क्वचिद्वाऽयोग इति कृत्वा सर्वत्रायोगेन ॥ तद्यथा—समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते, अपरे न । न चेदानीं 'कश्चिदर्थवान्' इति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, 'कश्चिद्वानर्थक' इति सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुं यल्लटोऽप्रथमासमानाधिकरणेन योगो भवति, लङो न भवति, स्वाभाविकमेतत् ॥

( प्रदीपः ) न क्वचिदिति । तिङ्भाविनो लकारस्य गुणभूतकर्त्राद्यभिधानम्[1] । शत्रादिविषयस्य[2] तु क्रियोपसर्जनकर्त्राद्यभिधानम् । तथा च क्रियान्तरनिमित्त[3]द्वितीयादिसामानाधिकरण्योपपत्तिरित्यर्थः ॥ शक्यं कर्तुमिति । प्रतिपत्तुमित्यर्थः ।

(उद्द्योतः) कर्त्राद्यभिधानमिति । तदभिधानशक्तिरित्यर्थः ॥ द्वितीयादीति । द्वितीयाद्यन्तार्थेत्यर्थः ॥ प्रतिपत्तुमित्यर्थ इति । लड्वाच्यस्याप्रथमान्तसामानाधिकरण्यं न भवति, लड्वाच्यस्य भवति यत्तत्र किं कारणं प्रतिपत्तुं शक्यम्, स्वभावातिरिक्तं न किमपीति भाष्यार्थ इति भावः ॥ ततश्च शत्रादिविषयलटोऽस्त्येव शतृविधायकशास्त्रबललब्ध[4]स्वभावादप्रथमासामानाधिकरण्यमिति न दोष इति तात्पर्यम् ॥

( परिहारान्तरभाष्यम् )

अथ वाऽऽदेशेन सामानाधिकरण्यं दृष्ट्वाऽनुमानाद्गन्तव्यं 'प्रकृतेरपि सामानाधिकरण्यं भवति' इति । तद्यथा—धूमं दृष्ट्वा 'अग्निरत्र'इति गम्यते । त्रिविष्टब्धकं[5] दृष्ट्वा 'परिव्राजक'इति ।

( प्रदीपः ) अथ वेति । सिद्धानां शब्दानामिदमन्वाख्यानं प्रवृत्तम् । तत्र पचन्तं देवदत्तं पश्येत्यादिप्रयोगदर्शनात् स्थानिनोपि लटः प्रक्रियार्थं विहितस्याप्रथमासामानाधिकरण्यमनुमीयत इत्यर्थः ।

( उद्द्योतः ) ननु लस्य क्वापि प्रयोगाभावेन कथमीदृशस्वभावावगतिरतः पक्षान्तरमाह—भाष्ये अथवेति ॥ ननु यावदप्रथमासामानाधिकरण्यं न निर्णीतं तावदादेश एव न, आदेशेन चानुमानमित्यन्योन्याश्रयग्रस्तमत आह—सिद्धानामिति । नित्यानामित्यर्थः ॥ प्रक्रियार्थं विहितस्येति । अनेन प्रक्रियार्थं कल्पितानामबोधकत्वं दर्शयति ॥

( परिहारान्तरासंभवभाष्यम् )

विषम उपन्यासः—प्रत्यक्षस्तेनाग्निधूमयोरभिसंबन्धः कृतो भवति, त्रिविष्टब्धकपरिव्राजकयोश्च । ननु तद्विदेशस्थमपि दृष्ट्वाध्यवस्यति 'अग्निरत्र' परिव्राजकोत्रेति ।

( प्रदीपः ) विषम इति । अग्निधूमयोर्हि प्रत्यक्षेण सम्बन्धो गृह्यते । लकारस्य तु प्रयोगाभावादप्रथमासामानाधिकरण्यं न क्वचिदुपलब्धमिति भावः ।

( उद्द्योतः ) विषमउपन्यास इति वदन्प्रष्टव्यः—'किं प्रत्यक्षेण बाधनिश्चयादनुमानं न, उत व्याप्तिग्रहणाभावादिति ।

( प्रत्यक्षस्यानुमानाबाधकताभाष्यम् )

भवति वै प्रत्यक्षादप्यनुमानबलीयस्त्वम् । तद्यथाऽलातचक्रं प्रत्यक्षं दृश्यते, अनुमानाच्च गम्यते 'नैतदस्ति'इति ॥

( प्रदीपः ) भवतीति । यद्यपि लटोऽप्रयोगादप्रथमासामानाधिकरण्याभावः प्रत्यक्षेण निश्चीयते तथापि प्रत्यक्षस्यान्यथासिद्धत्वाल्लकाराप्रयोग[6]निमित्तत्वादभावग्राहिणो बाध्यत्वम्, अनन्यथासिद्धेन तु सामान्यतो दृष्टे नानुमानेन लटोऽप्रथमासामानाधिकरण्यावगमो । "नह्यन्यथादेशस्य तदुपपद्यते इति भावः ॥" तद्यथेति । आशुसञ्चाराच्चक्रभ्रान्तिरुत्पद्यते । रूपसहचारिणस्तु स्पर्शस्यानेकदिक्कस्य युगपदग्रहणादनन्यथासिद्धानुमानेन प्रत्यक्षाभासो बाध्यते । तदुक्तं हरिणा—

'स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्ततः ।
न तथालातचक्रस्य विच्छिन्नं स्पृश्यते हि तद्' इति॥

( उद्द्योतः ) तत्राद्ये आह—यद्यपीति । प्रत्यक्षस्तेनाग्नीत्यादिग्रन्थेनापि भाष्ये तत्र बाधनिश्चयाभावः प्रतिपाद्यते इति बोध्यम् ॥ प्रत्यक्षेण तत्राभिसंबन्ध एव पुरुषेण कृतो गृहीतो न तु बाधः । प्रकृते तु विपरीत[7]मित्यर्थात् । लकाराप्रयोगनिमित्तकत्वेनान्यथासिद्धत्वादभावग्राहिणः प्रत्यक्षस्य बाध्यत्वमित्यन्वयः ॥ सामान्यतो दृष्टेन कार्यकारणभिन्नलिङ्गकेन ॥ न ह्यन्यथेति ।

---

१ क्रियायामित्यादिः । ( र. ना. )

२ शत्रादिर्विधेयतया विषयो यस्येत्यर्थः । यन्निष्ठोद्देश्यतानिरूपितविधेयताऽस्त्यविषयतावान् शत्रादिस्तस्येति यावत् । ( र. ना. )

३ क्रियान्तरं निमित्तं यस्मिन्निति व्युत्पत्त्या द्वितीयादिविशेषणम् । (र. ना.)

४ लब्धेति । ज्ञातेत्यर्थः । ( र. ना. )

५ त्रयो दण्डाविष्टब्धाः परस्पराश्रयेण विधृता यत्रेति व्युत्पत्त्या योगरूढ्याश्रयणेन त्रिदण्डमित्यर्थः । ( र. ना. )

६ अन्यथासिद्धत्वे हेतुर्लकाराप्रयोगनिमित्तत्वादिति । ( र. ना. )

७ प्रत्यक्षेण बाध एव निश्चीयते न तु अभिसंबन्ध इति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वं च शतृशास्त्रवैयर्थ्यरूपानुकूलतर्कसहितमनुमानम् अन्यथासिद्ध-प्रत्यक्षात्प्रबलमिति भावः ॥ रूपसहचारिणस्त्विति । शुक्लभास्वर-रूपव्यापकस्येत्यर्थः । तमस्तु न तद्रूपवत् ॥ स्पर्शस्योद्भूतस्येति द्रष्टव्यम् । तेन दीपप्रभायाः स्पर्शाग्रहेपि अनेकदिक्करूपस्य युग-पद्ग्रहणेपि न दोषः ॥

( अनुमानसाधकव्याप्तिसाधकभाष्यम् )

कस्यचित्खल्वपि सकृत्कृतोभिसंबन्धोऽत्यन्ताय कृतो भवति । तद्यथा—वृक्षपर्णयोः—'अयं वृक्षः, इदं पर्णम्' इति । स तद्विदेशस्थमपि दृष्ट्वा जानाति 'वृक्षस्येदं पर्णम्' इति ॥

( प्रदीपः ) कस्यचिदिति । न भूयोदर्शनेनैव सम्ब-न्धग्रहणम्, अपि तु सकृद्दर्शनेनापीत्यर्थः ॥ वृक्षपर्णयो-रिति । भाष्यकारवचनप्रामाण्याज्जातिरप्राणिनामित्येकव-द्भावो न कृतः ॥

( उद्योतः ) व्याप्तिग्रहणाभावं समाधत्ते—भाष्ये—कस्य-चिदिति । तद्व्याचष्टे—न भूय इति । ननु 'लट् अप्रथमान्तसामा-नाधिकरण्यवान्, तदनुवादेन विहितादेशस्थानित्वात्' इत्यनुमानम् । तत्र दृष्टान्ताभावेन कथं व्याप्तिग्रह इति चेन्न । यः स्थानी, स आदेश-समानधर्मेति सामान्यतो व्याप्त्यैव सहकारिविशेषबलाद्विशेषानु-मितिः ॥ अत्रापि शतृविधायकशास्त्रमेवानुकूलस्तर्क इत्याहुः ॥ वृक्षपर्णयोर्जातित्वादेकवद्भावः स्यादत आह—भाष्यकारेति । व्यक्तिप्राधान्यविवक्षणादिति भावः ॥

( आक्षेपभाष्यम् )

किं पुनरयं पर्युदासो यदन्यत्प्रथमासमानाधि-करणादिति, आहो स्वित् प्रसज्यप्रतिषेधः प्रथमा-समानाधिकरणेनेति ।

( प्रदीपः ) किं पुनरिति । यद्यपि प्रसज्यप्रतिषेधे वा-क्यभेदाद् गौरवप्रसङ्गस्तथापि लक्ष्यसिद्धये शास्त्रे क्वचिदप्य-वशीकृत इति विचार्यते ॥

( उद्योतः ) भाष्ये यदन्यत्प्रथमासमानाधिकरणादिति । तत्रावध्यवधिमतोः साजात्यादन्यत्किञ्चित्समानाधिकरणमेव गृह्यते । तेनाप्रथमान्तेन समानाधिकरणस्य लट इति फलति । यथाश्रुते तु कौर्वत इत्यादौ दोषापादनासंगतिः स्पष्टैव ।

( प्रत्याक्षेपभाष्यम् )

कश्चात्र विशेषः ।

( ३०२६ पर्युदासे दूषणवार्तिकम् ॥ ३ ॥ )

॥ * ॥ लटः शतृशानचावप्रथमासमाना-धिकरणे इति चेत्प्रत्ययोत्तरपदयो-रुपसंख्यानम् ॥ * ॥

( भाष्यम् ) लटः शतृशानचावप्रथमासमानाधि-करण इति चेत् प्रत्ययोत्तरपदयोरुपसंख्यानं कर्त-व्यम् । कौर्वतः, पाचतः, कुर्वद्भक्तिः, पचतभक्तिः, कुर्वाणभक्तिः, पचमानभक्तिरिति ।

( प्रदीपः ) कौर्वत इति । कुर्वतो देवदत्तस्यापत्यमित्यत्र सापेक्षत्वात्तद्धितो नोत्पद्यते । पदान्तरनिरपेक्षे च पदान्तरेण सामानाधिकरण्याभावादादेशाप्रसङ्ग इति भावः । कुर्वद्भक्ति-रिति । षष्ठी समासः । समानाधिकरणसमासे तु प्रसज्यप्रति-षेधेपि दोषः । स च वक्ष्यत एव ॥

( उद्योतः ) नन्वत्रापि कुर्वतो देवदत्तस्येत्यादि पदान्तर-सामानाधिकरण्यमस्त्येवेत्यत आह—कुर्वत इति । वृत्तिघटकाति-रिक्तविशेष्यापेक्षमपि सापेक्षमिति भावः ॥ पदान्तरेति । देवदत्त-स्येत्यादिलर्थः ॥

( प्रसज्यप्रतिषेधाङ्गीकारभाष्यम् )

अस्तु तर्हि प्रसज्यप्रतिषेधः प्रथमासमानाधि-करणे नेति ।

( ३०२७ प्रसज्यप्रतिषेधदूषणवार्तिकम् ॥ ४ ॥ )

॥ * ॥ प्रथमाप्रतिषेधे उत्तरपदे आदे-शानुपपत्तिः ॥ * ॥

( भाष्यम् ) प्रथमाप्रतिषेधे उत्तरपदे आदेशा-योरनुपपत्तिः कुर्वती चासौ भक्तिश्च कुर्वद्भक्तिः, पचद्भक्तिः, कुर्वाणभक्तिः, पचमानभक्तिरिति । ये चाप्येते समानाधिकरणवृत्तयस्तद्धितास्तेषु शतृ-शानचौ न प्राप्नुतः । कुर्वत्तरः, पचत्तरः, कुर्वाण-तरः, पचमानतरः कुर्वद्रूपः, पचद्रूपः, कुर्वाणरूपः, पचमानरूपः, कुर्वत्कल्पः, पचत्कल्पः, कुर्वाणकल्पः, पचमानकल्प इति ।

( प्रदीपः ) कुर्वत्तर इति । अत्र देवदत्तादिना पदा-न्तरेण सामानाधिकरण्यादादेशाप्रसङ्गः । पूर्वस्मिन्नपि पक्षे एष दोषः ॥

( उद्योतः ) देवदत्तादिना पदान्तरेणेति । प्रथमान्तेनेति शेषः पूर्वस्मिन्नपीति । सामानाधिकरणसमासरूपः कुर्वद्भक्तिरि-त्यादिः । कुर्वत्तर इत्यादिश्च ॥ कुर्वद्भक्तौ पुंवत्कर्मधारयेति पुंवत् ।

( ३०२८ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम्? । 'प्रत्ययोत्तर-पदयोश्च शतृशानचौ भवतः' इति वक्तव्यम् ।

( प्रदीपः ) सिद्धं त्विति । लक्षणशेषः कर्तव्य इत्यर्थः । पृथगुत्तरपदग्रहणमन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बा-धत इति लुकि कृते प्रत्ययलक्षणप्रतिषेधादप्रत्ययपरत्वार्थम् ॥

( उद्योतः ) ननु लक्षणान्तरे 'अपचत्कल्पं देवदत्तः' इत्यादौ

१ प्रथमा समानाधिकरणप्रतिषेध इत्यर्थः । ( र. ना. )

२ इतः पूर्वम् 'एषः' इति मतीकपाठो लेखकप्रमादात्त्रुटितः प्रतीयते ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

स्यादत आह—लक्षणशेष इति ॥ अन्तर्वर्तिसुपा प्रत्ययपरत्वेनैव सिद्धे किमुत्तरपदग्रहणेनेत्यत आह—पृथगिति ।

( ३०२९ समाधानदूषणप्रत्ययाप्रसिद्धिवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ तत्र प्रत्ययस्यादेशनिमित्तत्वादप्रसिद्धिः ॥ * ॥**

( भाष्यम् ) तत्र प्रत्ययस्यादेशनिमित्तत्वादप्रसिद्धिः । आदेशनिमित्तः प्रत्ययः प्रत्ययनिमित्तश्चादेशः तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ॥

( उद्द्योतः ) भाष्ये आदेशनिमित्त इति । तस्मिन्हि प्रातिपदिकत्वे सुबन्तत्वे च तद्धितोत्पत्तेरिति भावः ।

( ३०३० समाधानदूषणोत्तरपदाप्रसिद्धिवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः ॥ * ॥**

( भाष्यम् ) उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः । उत्तरपदनिमित्तः सुप् सुबन्तनिमित्तं चोत्तरपदम् । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ।

(प्रदीपः) उत्तरपदनिमित्त इति । सत्युत्तरपदे शतृशानचौ भवतः तयोश्च कृत्त्वात् सुबुत्पत्तिः, सुन्निमित्तः समासः समासनिमित्तं चोत्तरपदमित्यर्थः ।

( उद्द्योतः ) सुप उत्तरपदनिमित्तत्वम्, उत्तरपदस्य च सुबन्तनिमित्तत्वं दर्शयति—सत्युत्तरपद इति ।

( ३०३१ प्रत्ययप्रसिद्धिसमाधानवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ न वा लकारस्य कृत्त्वात् प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम् ॥ * ॥**

( भाष्यम् ) न वा एष दोषः । किं कारणम् ? । लकारस्य कृत्त्वात् प्रातिपदिकत्वम् । 'लकारः कृत्' । कृत् प्रातिपदिकमिति प्रातिपदिकसंज्ञा । तदाश्रयं प्रत्ययविधानम् । प्रातिपदिकाश्रया स्वाद्युत्पत्तिर्भविष्यति ॥

( प्रदीपः ) न वेति । लस्य कृत्त्वात् सुबुत्पत्तौ सत्यामणादिषु तरबादिषु चोत्पन्नेष्वादेशविधानमिति नास्तीतरेतराश्रयदोष इत्यर्थः ।

( ३०३२ उत्तरपदप्रसिद्धिसमाधानवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ तिङादेशात् सुबुत्पत्तिः ॥ * ॥**

( भाष्यम् ) तिङादेशः क्रियतां सुबुत्पत्तिरिति । परत्वात्सुबुत्पत्तिर्भविष्यति ।

( ३०३३ वार्तिकशेषवार्तिकम् ॥ १० ॥ )

**॥ * ॥ तस्मादुत्तरपदप्रसिद्धिः ॥ * ॥**

( भाष्यम् ) तस्मादुत्तरपदस्य प्रसिद्धिर्भविष्यति । उत्तरपदे प्रसिद्धे 'उत्तरपद' इति शतृशानचौ भविष्यतः ॥

( प्रदीपः ) उत्तरपदे इतरेतराश्रयं परिहरति—तिङादेशादिति ।

( उद्द्योतः ) तिङादेशादिति । तिङ्रूपादेशादित्यर्थः । एवं च पचलृ इत्यत्र तिङो बाधित्वा सुपि समास उत्तरपदे शत्रादि तिङां बाधकमिति भावः ।

( समाधानदूषणभाष्यम् )

इहापि तर्हि तिङादेशात्सुबुत्पत्तिः स्यात्—पचति पठतीति ॥

( दूषणपरिहारभाष्यम् )

अस्त्यत्र विशेषः, नित्योऽत्र तिङादेशः । उत्पन्नेऽपि सुपि प्राप्नोत्यनुत्पन्नेऽपि प्राप्नोति । नित्यत्वात् तिङादेशे कृते सुबुत्पत्तिर्न भविष्यति ॥

( दूषणभाष्यम् )

इहापि तर्हि नित्यत्वात्तिङादेशः स्यात् । कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिः पचमानभक्तिरिति ।

( दूषणपरिहारभाष्यम् )

अस्त्यत्र विशेषः । शतृशानचौ तिङपवादौ तौ चात्र निमित्तवन्तौ । न चापवादविषये उत्सर्गोऽभिनिविशते । "पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः" । "प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते" । न तावदत्र कदाचित् तिङ् भवति । अपवादौ शतृशानचौ प्रतीक्षते ॥

( उद्द्योतः ) निमित्तवन्ताविति । उत्तरपदरूपनिमित्तस्य संपन्नत्वादपवादत्वेन शतृशानचावेवेति भावः ॥

( दूषणपरिहारदूषणभाष्यम् )

तदेतत् क सिद्धं भवति । यत्र सामान्यादुत्पत्तिः । यत्र हि विशेषाद् "अत इञ्"इति इतरेतराश्रयमेव तत्र भवति । वीक्षमाणस्यापत्यं वैक्षमाणिरिति । इह च शतृशानचौ प्राप्नुतः पचतितरां जल्पतितरां पचतिरूपं जल्पतिरूपं पचतिकल्पं जल्पतिकल्पं पचति पठतीति ॥

( प्रदीपः ) वीक्षमाणस्येति । अत्राकृते शानच्यकारान्तत्वाभावादिञोऽप्रसङ्ग इत्यर्थः । पचतितरामिति । तिङश्चेत्येतत्तु लकारान्तरार्थं स्यादपचत्तरामिति ॥ पचतीति । अत्रापि लस्य कृत्त्वात् सुप्युत्पन्ने प्रत्यये विधीयमान आदेशः स्यादित्यर्थः । तिङां तु लिङादयोवकाशाः ।

(उद्द्योतः) ननु पचतीत्यादौ प्रत्ययोत्तरपदयोरभावात्कथमादेशप्रसक्तिरत आह—अत्रापीति । सुबेव प्रत्यय इति भावः ॥१२४॥

( प्रश्नभाष्यम् )

तदेतत्कथं कृत्वा सिद्धं भवति ? ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ३०३४ समाधानवार्तिकम् ॥ ११ ॥ )

॥ * ॥ शतृशानचौ यदि लटो वा ॥ * ॥

( भाष्यम् ) यदि लटः शतृशानचौ वा भवतः। व्यवस्थितविभाषा च। तेनेह च भविष्यतः—कौर्वतः पाचतः कुर्वद्भक्तिः पचद्भक्तिः कुर्वाणभक्तिः पचमानभक्तिः कुर्वत्तरः पचत्तरः कुर्वाणतरः पचमानतरः कुर्वद्रूपः पचद्रूपः कुर्वाणरूपः पचमानरूपः कुर्वत्कल्पः पचत्कल्पः कुर्वाणकल्पः पचमानकल्पः पचन्पठन्निति च लटः शतृशानचौ। इह च न भविष्यतः—पचतितरां जल्पतितरां पचतिरूपं जल्पतिरूपं पचतिकल्पं जल्पतिकल्पं पचति पठतीति च लटः शतृशानचौ ॥

( प्रदीपः ) तदेतदिति। व्यवस्थितविभाषाविज्ञानाच्च यथेष्टं प्रयोगसिद्धिः ॥

( प्रश्नभाष्यम् )

तत्तर्हि वावचनं कर्तव्यम् ॥

( समाधानभाष्यम् )

न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्?। "नन्वोर्विभाषा" इति ॥

( आक्षेपभाष्यम् )

यदि तदनुवर्तते "वर्तमाने लट्" इति लडपि विभाषा प्राप्नोति ॥

( समाधानभाष्यम् )

संबन्धमनुवर्तिष्यते। "नन्वोर्विभाषा। "पुरि लुङ्चास्मे" विभाषा। "वर्तमाने लट्" "पुरि लुङ् चास्मे" "विभाषा"। "लटः शतृशानचौ" विभाषा। 'पुरि लुङ् चास्म' इति निवृत्तम् ॥

( प्रश्नभाष्यम् )

न तर्हीदानीमप्रथमासमानाधिकरण इति वक्तव्यम्?।

( प्रदीपः ) न तर्हीति। व्यवस्थितविभाषयैव सिद्धत्वान्नित्ययोरादेशयोरिति भावः।

( समाधानभाष्यम् )

वक्तव्यं च। किं प्रयोजनम्?। नित्यार्थम्। अप्रथमासमानाधिकरणे नित्यौ शतृशानचौ यथा स्याताम् ॥

( आक्षेपभाष्यम् )

क्व तर्हीदानीं विभाषा?।

( समाधानभाष्यम् )

प्रथमासमानाधिकरणे पचन् पचतीति पचमानः पचते इति ॥ लटः शतृ ॥ १२४ ॥

( प्रदीपः ) नित्यार्थमिति। लटः शतृशानचाविसेको योगः क्रियते तत्र विभाषेति वर्तते। ततोऽप्रथमासमानाधिकरण इति द्वितीयो योगो नित्यार्थः। व्यवस्थितविभाषाश्रयेण तु विस्पष्टा प्रतिपत्तिर्न स्यादिति तदर्थो द्वितीयो योगः ॥ १२४ ॥

( ५२१ शतृशानज्विधिसूत्रम् ॥ ३।२।३ आ. २ )

## ८९३ लक्षणहेत्वोः क्रियायाः ॥ ३ । २ । १२६ ॥

( ३०३५ वार्तिकम् ॥ १ ॥ )

॥ * ॥ लक्षणहेत्वोः क्रियायाः गुण उपसंख्यानम् ॥ * ॥

( भाष्यम् ) लक्षणहेत्वोः क्रियाया गुण उपसंख्यानं कर्तव्यम्। तिष्ठन्मूत्रयति गच्छन्भक्षयतीति।

( प्रदीपः ) लक्षण ॥ १२६ ॥ गुण इति ॥ गुणशब्देनात्र साधनमुच्यते। तिष्ठन् मूत्रयतीत्यादौ यदा स्थानादिना मूत्रादिक्रिया लक्ष्यते तदा सूत्रेणैवादेशसिद्धिः। यदा तु कारकं लक्ष्यते तदर्थमिदं वचनम्। बहुषु मूत्रयत्सु को देवदत्त इत्युक्ते यस्तिष्ठन्मूत्रयतीति प्रतिवचनेन देवदत्तो लक्ष्यते। अथ वा अशोचादिगुणो गृह्यते ॥

( उद्योतः ) लक्षणहेत्वोः ॥ १२६ ॥ भाष्ये क्रियाया गुणे इति। क्रियायाः कारके इत्यर्थः। कारकनिरूपितं पदलक्षणत्वं धात्वर्थस्य तदर्थमिदं तदाह—गुणशब्देनेति ॥ यदास्थानादिनेति। 'कथमयं मूत्रयती'त्यादि प्रश्ने यदेदमुत्तरं तदा तया सा लक्ष्या भवतीति बोध्यम्। यदात्विति। यदा क्रियया कारकं लक्ष्यते तदा तदर्थमिदमित्यर्थः ॥ देवदत्तो लक्ष्यत इति। सूत्रणसमानकालिकस्थानक्रिययेत्यर्थः ॥ गृह्यत इति। गुणशब्देनेत्यर्थः। अत्र पक्षेऽशुचित्वादिगुणस्येदं लक्षणं न तु क्रियाया इति भावः। अत्र पक्षे लक्षणहेत्वोः क्रियाया इति सूत्रे गुणे लक्ष्ये उपसंख्यानं कार्यमित्यर्थः।

( ३०३६ शतृशानज्विधिवार्तिकम् ॥ २ ॥ )

॥ * ॥ कर्तुश्च लक्षणयोः पर्यायेणाचयोगे ॥ * ॥

( भाष्यम् ) कर्तुश्च लक्षणयोः पर्यायेणाचयोग उपसंख्यानं कर्तव्यम्। योधीयान आस्ते स देवदत्त इति। आसीनोधीते स देवदत्त इति ॥

( प्रश्नभाष्यम् )

अचयोग इति किमर्थम्?।

( प्रत्युदाहरणभाष्यम् )

य आस्ते चाधीते च, स चैत्रः।

१ स्थितिक्रियादिनेत्यर्थः। ( र. ना. )

२ लक्षणहेत्वोरिति सूत्रेणैवेत्यर्थः। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रदीपः) कर्तुश्चेति। यदा पूर्ववाक्ये गुणः साधनं गृह्यते तदा तेनैव सिद्धे पर्यायार्थः। यदा त्वशौचादेर्गुणस्य तत्र तत्र ग्रहणं तदा विध्यर्थः॥

(उद्योतः) भाष्ये कर्तुश्चेति। कर्तुर्लक्षणभूतयोः क्रिययोर्वाचकाभ्यां पर्यायेणेत्यर्थः॥

(३०३७ शतृशानज्विधिवार्तिकम्॥ ३॥)

॥ * ॥ तत्त्वाख्याने च ॥ * ॥

(भाष्यम्) तत्त्वाख्याने चोपसंख्यानं कर्तव्यम्। शयाना वर्धते दूर्वा, आसीनं वर्धते बिसमिति॥

(प्रदीपः) तत्त्वाख्यान इति। स्वभावाख्याने विनापि लक्ष्यलक्षणभावेनेत्यर्थः। नह्यासनं वृद्धेर्लक्षणं किं तर्हि? स्वभावमात्रकथनम् आसीनं बिसमिति॥

(३०३८ विकल्पवार्तिकम्॥ ४॥)

॥ * ॥ सदादयश्च बहुलम्॥ * ॥

(भाष्यम्) सदादयश्च बहुलमिति वक्तव्यम्। सन् ब्राह्मणः। अस्ति ब्राह्मणः। विद्यते ब्राह्मणः। विद्यमानो ब्राह्मण इति॥

(प्रदीपः) सदादयश्चेति। वाग्रहणस्यायं प्रपञ्चः।

(उद्योतः) सदादयश्चेति। प्रथमासमानाधिकरणार्थमिदम्॥ वाग्रहणस्यायमिति। लटः शतृशानचाविति विभक्तसूत्रेऽनुवर्तमानवाग्रहणस्य सदादयश्चेत्यादिवचनसमुदाय इत्यर्थः॥

(३०३९ विकल्पवार्तिकम्॥ ५॥)

॥ * ॥ इङ्जुहोत्योर्वावचनम्॥ * ॥

(भाष्यम्) इङ्जुहोत्योर्वेति वक्तव्यम्। अधीते, अधीयानः। जुहोति, जुह्वत्।

(प्रदीपः) सच्छब्दो विद्यमानवाचीति सत्सदृशाः सदादिशब्देनोपात्ता नान्ये इत्याह इङ्जुहोत्योर्वेति॥

(३०४० शतृशानज्विधिवार्तिकम्॥ ६॥)

॥ * ॥ माङ्याक्रोशे॥ * ॥

(भाष्यम्) माङ्याक्रोश इति वक्तव्यम्। मा पचन्। मा पचमानः॥

(प्रदीपः) माङ्याक्रोश इति। लुङि प्राप्तेऽस्मादेवादेशविधानाल्लङनुमीयते॥

(प्रश्नभाष्यम्)

तत्तर्हि वक्तव्यम्॥

(समाधानभाष्यम्)

न वक्तव्यम्। "लक्षणहेत्वोः क्रियायाः" इत्येव सिद्धम्। इह तावत्तिष्ठन् मूत्रयतीति, तिष्ठतिक्रिया मूत्रयतिक्रियाया लक्षणम्। गच्छन्भक्षयतीति, गच्छतिक्रिया भक्षयतिक्रियाया लक्षणम्। योधीयान आस्ते स देवदत्त इति, अध्ययनक्रिया आसनक्रियाया लक्षणम्। य आसीनोधीते स देवदत्त इति आसिक्रियाऽध्ययनक्रियाया लक्षणम्॥

(प्रदीपः) तिष्ठतिक्रियेति। स्थितिक्रियालक्षिता तु मूत्रणक्रिया यस्तिष्ठन्मूत्रयति स देवदत्त इति सर्वनामपरामर्शे देवदत्तस्य लक्षणं तद्गतस्य वाऽशौचादेरिति भावः॥

(उद्योतः) ननु क्रिययोरेव लक्ष्यलक्षणभावे 'को देवदत्त' इति प्रश्ने इदमुत्तरं न स्यादत आह—स्थितिक्रियेति॥ सर्वनामपरामर्शे इति। यत्तद्रूपसर्वनामपरामृष्टदेवदत्तस्य लक्षणमिति फलितम्। अन्यथा वचनान्तरारम्भेपि तिष्ठतेः शत्रनापत्तिः। न हि तद्वाच्या क्रिया देवदत्तस्य लक्षणं किं तु तद्रूपलक्षितमूत्रणक्रियेति बोध्यम्॥

(प्रयोजनभाष्यम्)

इदं तर्हि प्रयोजनम्—'अचयोग' इति वक्ष्यामीति। इह मा भूत्—य आस्ते चाधीते च स चैत्र इति।

(प्रयोजननिराकरणभाष्यम्)

नैतदस्ति प्रयोजनम्। नैतत् क्रियालक्षणम्। किं तर्हि? कर्तृलक्षणमेतत्—शयाना वर्धते दूर्वेति शेतिक्रिया वृद्धिक्रियाया लक्षणं भवति। आसीनं वर्धते बिसमिति आसिक्रिया वृद्धिक्रियाया लक्षणमिति॥ *"सदादयश्च बहुलम्*"। *"इङ्जुहोत्योर्वा*। *माङ्याक्रोश* इत्येतद्वक्तव्यमेव"॥ लक्षणहेत्वोः॥ १२६॥

(प्रदीपः) नैतदिति। समुच्चीयमानं क्रियाद्वयं परस्परस्यालक्षणं कर्तृविशेषस्य लक्षणमित्यर्थः॥ शेतिक्रियेति। तत्त्वाख्यानमपि लक्षणं भवति। यथा चैतन्यलक्षणः पुरुष इति भावः॥ १२६॥

(उद्योतः) समुच्चीयमानमिति। परस्परलक्षणतामनापन्नं समुच्चीयमानं सत्कर्तृविशेषस्य लक्षणमित्यन्वयः॥ यथा चैतन्येति। तत्स्वरूपत्वात्पुरुषस्य यथा तत्र लक्षणत्वारोपेण शब्दप्रयोगस्तथाऽत्रापि तदारोपेण प्रत्यय इति भावः॥ भाष्ये इति वक्तव्यमेवेति। लक्षणहेत्वोरित्यनेनासिद्धेः। यथास्थितसूत्रन्यासे सूत्रे वाग्रहणानुवृत्तेरभावाच्चेत्यभिमानः[2]॥ १२६॥

(५२२ सत्संज्ञासूत्रम्॥ ३। २। ३ आ. ३)

## ८९४ तौ सत्॥ ३। २। १२७॥

(आक्षेपभाष्यम्)

तौग्रहणं किमर्थम्?।

(प्रदीपः) तौ सत्॥ १२७॥ तौग्रहणमिति। शतृशानचोरनुवर्तनादेव संज्ञा भविष्यतीति प्रश्नः॥

१ शतृशानजादय इत्यर्थः। (र. ना.)

२ अभिमानोक्तिर्बीजं तु वाग्रहणानुवृत्तेः पूर्वत्र दर्शितत्वादिति। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रयोजनभाष्यम् )

**शतृशानचौ प्रतिनिर्दिश्येते ॥**

( प्रयोजननिरासभाष्यम् )

**नैतदस्ति प्रयोजनम्। प्रकृतौ शतृशानचावनुवर्तिष्येते। क प्रकृतौ ?। "लटः शतृशानचावप्रथमासमानाधिकरणे" इति।**

( प्रदीपः ) शतृशानचाविति। असति तौग्रहणे प्रत्ययविधिरयं स्याद् न तु संज्ञाविधिरिति भावः ॥

( उद्योतः ) तौ सत् ॥ १२७ ॥ प्रत्ययविधिरिति। सदित्यस्य प्रत्ययस्य विधिरित्यर्थः। भाष्ये प्रकृताविति। एवं च प्रत्ययविधौ शतृशानचावित्यस्यानन्वयापत्त्या संज्ञाविधिरेवेति भावः।

( समाधानभाष्यम् )

**अत उत्तरं पठति।**

( ३०४१ समाधानवार्तिकम् ॥ १ ॥ )

## ॥*॥ तौ सदिति वचनमसंसर्गार्थम् ॥*॥

( भाष्यम् ) **तौ ग्रहणं क्रियते। [ किमर्थम् ?। ] असंसर्गार्थम्। असंसक्तयोरेतैर्विशेषैः शतृशानचोः सत्संज्ञा यथा स्यादिति ॥**

( प्रदीपः ) तौ सदिति। तच्छब्देन शतृशानचो रूपमात्रं परामृश्यत इति लडादेशानिकत्वादिधर्मासंबद्धयोरपि संज्ञा भवतीत्यर्थः ॥

( उद्योतः ) धर्मासंबद्धयोरपीति। लटः सद्वेत्यादिविहितयोरित्यर्थः ॥

( आक्षेपभाष्यम् )

**ननु चैते विशेषा निवर्तन्ते।**

( प्रदीपः ) ननु चेति। अस्वरितत्वादनपेक्षणाच्चेति भावः ॥

( समाधानभाष्यम् )

**यद्यप्येते विशेषा निवर्तन्ते। अयं तु खलु वर्तमानः कालोऽवश्यमुत्तरार्थोऽनुवर्त्यः। तस्मिन्ननुवर्तमाने वर्तमानकालविहितयोरेव शतृशानचोः सत्संज्ञा स्यात्। भूतभविष्यत्कालविहितयोर्न स्यात् ॥**

( प्रदीपः ) भूतेति। वर्तमानसामीप्ये वर्तमानवद्वेति वचनाद् भूतेपि शतृशानचौ भवतः।

( उद्योतः ) ननु भूते शतृशानचोर्विष्यदर्शनादाह—वर्तमानसामीप्ये इति।

( आक्षेपभाष्यम् )

**किं पुनर्भूतभविष्यत्कालविहितयोः सत्संज्ञावचने प्रयोजनम् ?।**

( प्रदीपः ) किं पुनरिति। अतिदेशाद् भूते शतृशानचौ भविष्यतः। लृटः सद्वेति वचनाद्भविष्यत्यपीति प्रश्नः॥

( उद्योतः ) अतिदेशादिति। तेन प्रत्ययवत्संज्ञाप्यतिदेशेनैव सिद्धा। तस्या अपि वर्तमानाधिकारे विहितत्वात् लृटः सद्वेति वचनादेवभविष्यदर्थयोरपि सा सिद्धेत्यर्थः ॥ शतृशानचावित्यस्य सत्संज्ञा इति शेषः ॥

( ३०४२ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ प्रयोजनं पूरणगुणसुहितार्थसदिति ॥ * ॥

( भाष्यम् ) **ब्राह्मणस्य पक्ष्यन्। ब्राह्मणस्य पक्ष्यमाणः ॥**

( प्रदीपः ) पूरणेति। वर्तमानवदित्यतिदेशाद्विधानमेव भूते शतृशानचोः स्याद् न तु संज्ञा। प्रत्ययाधिकाराद्धि प्रत्यय एवातिदिश्यते न तु संज्ञा। तथा लृटः सद्वेति सत्संज्ञकप्रतिरूपकविधानं स्यात्। यथा 'पिष्टपिण्डाः सिंहाः क्रियन्ता' मिति तदाकाराः क्रियन्ते। विहितयोस्तु तयोः सत्संज्ञानिबन्धनकार्याप्रसङ्गः ॥

( उद्योतः ) ननूक्तरीत्या सत्संज्ञासिद्धिरत आह—वर्तमानवदित्यादि ॥ न तु संज्ञेति। अनधिकारादिति भावः ॥ ननु लृटः सद्वेत्यनेन सच्छब्देन विधानात्तद्विहितयोः सा सिद्धेत्यत आह–तथा लृट इति ॥ भाष्ये ब्राह्मणस्य पक्ष्यन्निति। यद्यपि पूरणेति सूत्रे अत्रासामर्थ्यात्समासो नेति भाष्ये उक्तम्, तथापि तत्रत्यसिद्धान्तोदाहरणस्य ब्राह्मणस्य द्वेक्ष्यन् इत्यस्योपलक्षणमिदम् ॥

( आक्षेपभाष्यम् )

**अथ क्रियमाणेपि तौग्रहणे कथमेवासंसक्तयोरेतैर्विशेषैः सत्संज्ञा लभ्या ?।**

( प्रदीपः ) अथेति। संनिहितस्यैव वस्तुनः सर्वनाम्ना परामर्शादिति प्रश्नः। यद्यप्यनुवृत्त्या प्रकृतयोः संज्ञासिद्धौ तौग्रहणं क्रियते तथापि 'न प्रयोजनानुवर्ति'प्रमाणमपि तु प्रमाणानुवर्ति प्रयोजनमिति क्रियमाणमपि तौग्रहणं प्रयोजनसंपादनाय नालमिति भावः ॥

( उद्योतः ) संनिहितस्यैवेति। संनिहितगुणविशिष्टस्यैवेत्यर्थः। तादृशस्यैव तत्र बुद्धिस्थत्वादिति भावः ॥ नालमिति। वाच्यवृत्त्या तदर्थाप्रतीतेरिति तात्पर्यम् ॥

( समाधानभाष्यम् )

**लभ्येत्याह। कथम् ?। ताविति शब्दतः। "सद्" इति योगे क्रियमाणे "तौ" ग्रहणं योगाङ्गमुपजायते। सति च योगाङ्गे योगविभागः करिष्यते। "तौ" तावेतौ शतृशानचौ धातुमात्रात्परस्य प्रत्य-**

---

१ 'निवर्तेरन्' ॥

२ इतः पूर्वं 'भूतभविष्यत्कालविहितयोः शतृशानचोः सत्संज्ञावचने प्रयोजनं "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" इति समासनिषेधो यथा स्यात्' इति भाष्ये पाठो लेखकप्रमादात् त्रुटितो भवेत् ॥

३ ब्राह्मणस्य तण्डुलं पक्ष्यन्नित्यर्थः। तत्र ब्राह्मणस्य तण्डुलेन संबन्धो न तु पक्ष्यन्नित्यनेनेति सामर्थ्याभावः स्पष्टः। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

यस्य भवतः । ततः "सत्" । सत्संज्ञौ भवतः शतृशानचाविति ॥

(प्रदीपः) ताविति शब्दत इति । शब्देनैवाभिमतोर्थः सति योगविभागे लभ्यत इत्यर्थः । तावेताविति । पूर्वसूत्रे तयोरादेशत्वादिहाप्यादेशयोरेव विधानमिति भावः ॥

(उद्द्योतः) शब्देनैवेति । योगविभागबोधनद्वारा बोध्यत इत्यर्थः ॥ शब्दत इति भाष्ये आद्यादित्वात्तृतीयान्तात्तसिरिति भावः ॥ भाष्ये सदिति योग इति । सदित्येव सूत्रे इत्यर्थः ॥ योगाङ्गमिति । योगः सूत्रसमुदायरूपाष्टाध्यायी तदङ्गं सूत्रत्वेन ॥ तच्च योगविभागे सतीत्यर्थः ॥ ननु स्थानिनिर्देशाभावात्प्रत्ययाधिकाराच्च आदेशत्वं कथं, प्रत्ययस्येति च कथं लब्धमत आह—पूर्वसूत्रे इति । प्रत्ययप्रकरणाच्च प्रत्ययस्येति लब्धमिति भावः ॥ अनुवर्तमानप्रत्ययपदं[1] पष्ठ्या विपरिणम्यत इति बोध्यम् ॥

(आक्षेपभाष्यम्)

इहापि तर्हि प्राप्नुतः कारको हारक इति ।

(प्रदीपः) कारक इति । तृजादीनां विधानसामर्थ्याच्छतृशानचौ न भविष्यतः क्विबादीनामपि लोपविधानसामर्थ्यादिति यः प्रत्यय आदेशेन निवर्त्यते तस्य तदादेशापवादौ शतृशानचौ प्राप्नुत इत्यभिप्रायेण ण्वुलुदाहृतः । एवं च नन्दनाद्यप्युदाहार्यम् । युवोरनाकाविती त्यस्य तु तद्धितोऽवकाशः ॥

(उद्द्योतः) ननु धातोरित्यधिकारात्तृतीयधात्वधिकारविहितानामादेशेपि तव्यादीनामपि प्रसंगः कस्मान्नोक्तोत आह—तृजादीनामिति ॥ लोपविधानसामर्थ्यान्न भविष्यत इत्यनुषङ्गः ॥ ण्वुलः विधानं त्वादेशप्रवृत्तये एव स्यात् । न हि स क्वचित्प्रयोगे श्रूयते इत्यभिमानः[2] ॥

(३०४३ वार्तिकम् ॥ ३ ॥)

॥ * ॥ अवधारणं[3] लृटि विधानम् ॥ * ॥

(भाष्यम्) "लृटः सद्वेत्येतन्नियमार्थं भविष्यति । लृट एव धातुमात्रात्परस्य नान्यस्येति ॥

(नियमार्थत्वानुपपत्तिभाष्यम्)

कैमर्थक्यान्नियमो भवति । "विधेयं नास्ति"इति कृत्वा । इह चास्ति विधेयम् ॥ किम् ? । नित्यौ शतृशानचौ प्राप्तौ तौ विभाषाविधेयौ । तत्रापूर्वो विधिरस्तु नियमोस्त्विवति अपूर्व एव विधिः स्यान्न नियमः ॥

(३०४४ नियमार्थत्वोपपत्तिवार्तिकम् ॥ ४ ॥)

॥ * ॥ योगविभागतश्च विहितं सत् ॥ * ॥

(भाष्यम्) एवं तर्हि योगविभागः करिष्यते— "लृटः सत्" । लृटः सत्संज्ञकौ भवतः । किमर्थमिदम् ? । नियमार्थम् । लृट एव धातुमात्रात्परस्य नान्यस्येति ॥ ततो "वा" । वा च लृटः शतृशानचौ सत्संज्ञौ भवतः ॥ तत्रायमप्यर्थः—"सद्विधिर्नित्यमप्रथमासमानाधिकरणे" इति वक्ष्यति, तन्न वक्तव्यं भवति ॥

(प्रदीपः) तन्न वक्तव्यमिति । कथमिति चेदुच्यते । तावित्यत्र योगे प्रथमासमानाधिकरणादीन् विशेषाननुवर्त्य शतृशानचौ विधीयेते तावेव च लृटः सदित्यनेन नियम्येते । वेत्यनेन तु प्रथमासमानाधिकरणादौ लट इव विकल्पेन विधीयेते ।

(उद्द्योतः) नियमं साधयति—भाष्ये—योगविभागतश्चेति ॥ ताविति योगविभागेन यतः सत्संज्ञकं विहितमतो लृटः सदिति योगविभागेन नियम उपपद्यत इत्यर्थः ॥ तद्व्याचष्टे—एवं तर्हीत्यादि ॥ तावेवेति । तावित्यनेन पुनर्विहितौ सदित्यनेन च प्रक्रान्तत्वाविशेषात्सर्वेषामपि संज्ञा ॥ नन्वेवमपि द्विषोऽमित्र इत्यादि विहितशतुः संज्ञा न स्यादिति चेन्न । लृटः सद्वेति ज्ञापकात्तच्छब्देन शतृत्वशानच्त्वाभ्यामेव परामर्शो न तु लट्स्थानिकत्वादिविशेषस्याप्याश्रयणमित्याशयात् ॥ लट इवेति । पूर्वविहितशतृशानज्मात्रानुवादेन विकल्पोऽनेन विधीयत इत्यर्थः । एवं च लट् लृटोरुभयोरपि प्रथमासामानाधिकरण्ये आदेशविकल्पसिद्धिरिति भावः ॥ एवं च यथान्यासेप्ययं विकल्पः प्रथमासामानाधिकरण्यविषय एवेति ध्वनितम् ॥

(आक्षेपभाष्यम्)

अथ यावेतावुत्तरौ शत्रानौ किमेतौ लादेशौ, आहोस्विदलादेशौ ।

(प्रत्याक्षेपभाष्यम्)

कश्चात्र विशेषः? ॥

(प्रदीपः) शत्रानाविति । 'इङ्धार्योः शत्रकृच्छ्रिणि' 'पूङ्यजोः शानन्' 'ताच्छील्यवयोवचनशक्तिषु चानशि'ति प्रत्ययानां ग्रहणं तत्र लटोनुवृत्त्यननुवृत्तिभ्यां पक्षद्वयसंभवः ॥

(३०४५ लादेशपक्षे दूषणवार्तिकम् ॥ ५ ॥)

॥ * ॥ उत्तरयोर्लादेशे वावचनम् ॥ * ॥

(भाष्यम्) उत्तरयोर्लादेशे वावचनं कर्तव्यम् । पचमानः यजमानः । पचते यजत इत्यपि यथा स्यात् ॥

(प्रदीपः) उत्तरयोरिति । लादेशेषु वासरूपविधिर्नास्तीत्युक्तत्वादिति भावः ।

(उद्द्योतः) लादेशेष्विति । वासरूपन्यायस्य अनादेशप्रत्ययविषयत्वादिति भावः ॥

---

१ अधिकृतं प्रथमान्तं प्रत्ययपदमित्यर्थः । इदं च प्रत्ययस्येत्यस्य लाभे उपायान्तरं बोध्यम् । (र. ना.)

२ अभिमानोक्तिबीजं तु ण्वुल्विधानमकादेशश्रवणार्थमित्यस्य वक्तुं शक्यत्वमिति । (र. ना.)

३ लृटि विधानमवधारणं नियामकं भविष्यतीत्यर्थः । अवधारणपदे करणे ल्युट् । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( ३०४६ दूषणान्तरवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ साधनाभिधानं च ॥ * ॥

( भाष्यम् ) साधनाभिधानं च प्राप्नोति "लः कर्मणि च भावे चाकर्मकेभ्य" इति भावकर्मणोरपि प्राप्नुतः ॥

( प्रदीपः ) साधनाभिधानं चेति । तदानिष्टस्यापि साधनस्याभिधानं प्राप्नोति कर्तुरेव चेष्यते ॥

( उद्योतः ) साधनाभिधानस्येष्टत्वादाह—अनिष्टस्यापीति ।

( ३०४७ दूषणवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ स्वरः ॥ * ॥

( भाष्यम् ) स्वरश्च साध्यः । कतीह पचमानाः । 'अदुपदेशाल्लसार्वधातुकमनुदात्तं भवती'त्येष स्वरः प्राप्नोति ॥

( प्रदीपः ) स्वर इति । चित्करणं तु निघ्नाना इत्यादौ सावकाशम् ।

( उद्योतः ) निघ्नाना इत्यादाविति । अदुपदेशात्परत्वाभावादिति भावः ॥ १२७ ॥

( ३०४८ दूषणवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ उपग्रहप्रतिषेधश्च ॥ * ॥

( भाष्यम् ) उपग्रहस्य च प्रतिषेधो वक्तव्यः । कतीह निघ्नानाः "तङानावात्मनेपदम्" इत्यात्मनेपदसंज्ञा प्राप्नोति ॥

( प्रदीपः ) उपग्रहस्येति । आत्मनेपदसंज्ञाया इत्यर्थः । अन्यथा परस्मैपदिभ्यश्चानश् न स्यात् ॥ १२७ ॥

( अलादेशपक्षाङ्गीकारभाष्यम् )

स्तां तर्हि अलादेशौ ।

( ३०४९ दूषणवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ अलादेशे षष्ठीप्रतिषेधः ॥ * ॥

( भाष्यम् ) अलादेशे षष्ठीप्रतिषेधो वक्तव्यः । सोमं पवमानः । नडमाघ्नानः । अधीयन्पारायणम् । लप्रयोगे नेति प्रतिषेधो न प्राप्नोति ॥

( दूषणवारणभाष्यम् )

मा भूदेवम् तृन्नित्येवं भविष्यति । कथम् ? । तृन्निति नेदं प्रत्ययग्रहणम् किं तर्हि ? ॥ प्रत्याहारग्रहणम् ॥

( प्रश्नभाष्यम् )

क्व संनिविष्टानां प्रत्याहारः ? ।

( समाधानभाष्यम् )

"लटः शतृ" इत्यत आरभ्यातृनो नकारात् ।

( दूषणभाष्यम् )

यदि प्रत्याहारग्रहणं चोरस्य द्विषन् वृषलस्य द्विषन् अत्रापि प्राप्नोति ॥

( ३०५० समाधानवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ द्विषः शतुर्वावचनम् ॥ * ॥

( भाष्यम् ) द्विषः शतुर्वेति वक्तव्यम् । तच्चावश्यं वक्तव्यम् । प्रत्ययग्रहणे सति प्रतिषेधार्थम् । तदेव प्रत्याहारग्रहणे सति विभ्यर्थं भविष्यतीति ॥ तौ सत् ॥ १२७ ॥

---

( अथ ताच्छीलिकप्रकरणम् )

( ५२३ तृन्प्रत्ययविधिसूत्रम् ॥ ३ । २ । ३ आ. ४ )

# ९०२ तृन् ॥ ३ । २ । १३५ ॥

( ३०५१ वार्तिकम् ॥ १ ॥ )

## ॥*॥ तृन्विधावृत्विक्षु चानुपसर्गस्य ॥*॥

( भाष्यम् ) तृन्विधौ ऋत्विक्षु चानुपसर्गस्येति वक्तव्यम् । होता पोता ॥

( आक्षेपभाष्यम् )

अनुपसर्गस्येति किमर्थम् ? ।

( प्रदीपः ) तृन् ॥ १३५ ॥ तृन्विधाविति ॥ अताच्छील्यार्थमिदम् ॥

( उद्योतः ) तृन् ॥ १३५ ॥ अताच्छील्यार्थमिति । अनुपसर्गस्येति विशेषं वक्तुमित्यन्ये ॥

( प्रत्युदाहरणभाष्यम् )

प्रशास्ता प्रतिहर्ता ॥

( प्रदीपः ) प्रशास्तेति । तृजेव भवति । तृंस्तृचौ शास्तिक्षदादिभ्यः संज्ञायां चानिटावित्यनेन । स्वरे च विशेषः । तृनि तादौ च निति कृत्यताविति गतेः प्रकृतिस्वरो भवति । तृचि कृत्स्वरः ॥

( उद्योतः ) तृन् भावे कथं प्रशास्तेत्यत आह—तृजेवेति । नन्वेवं प्रशासितेति स्यादत आह—तृंस्तृचाविति । शंसिक्षदादिभ्य इति हरदत्तोक्तपाठे तु वृद्धिनलोपौ दुर्लभौ ॥ नन्वत्र गतिसमासे उभयथाप्यव्ययपूर्वपदप्रकृतिस्वर एवेति कथं स्वरे विशेषोऽत आह—तादौ चेत्यादि ॥

( ३०५२ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ नयतेः षुक् च ॥ * ॥

( भाष्यम् ) नयतेः षुग्वक्तव्यः । तृंश्च प्रत्ययो वक्तव्यः । नेष्टा ॥

( ३०५३ प्रत्याख्यानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ न वा धात्वन्यत्वात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः । किं कारणम् ? । धात्वन्यत्वात् । धात्वन्तरं नेषतिः ॥

---

१ तृनि तृचि चेति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

(प्रश्नभाष्यम्)

कथं ज्ञायते? ॥

(३०५४ प्रत्याख्यानहेतुवार्तिकम् ॥ ४ ॥)

॥ * ॥ नेषतुनेष्टादिति दर्शनात् ॥ * ॥

(भाष्यम्) नेषतुनेष्टादिति हि प्रयोगो दृश्यते। इन्द्रो वस्तेन नेषतु। गावो नेष्टात् ॥

(प्रदीपः) नवेति। नयतेस्तु पुकि गुणो न स्यात्। नेषतेस्तु ऋत्विजि तृनि वक्ष्यमाणादनिड्वचनात्सर्वोपसंख्याने शेषादिड्भावः ॥

(उद्द्योतः) पुकीति। प्रत्ययसंनियोगशिष्टतयाऽन्तरङ्गत्वाद्गुणात्पूर्वमेव पुक् स्यादिति भावः ॥ ननु नेषतेरिड् दुर्वारोऽत आह—नेषतेस्त्विति ॥

(३०५५ वार्तिकम् ॥ ५ ॥)

॥ * ॥ त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च ॥ * ॥

(भाष्यम्) त्विषेर्देवतायां तृन्वक्तव्यः। अकारश्चोपधायाः। अनिट्त्वं च वक्तव्यम्। त्वष्टा ॥

(प्रश्नभाष्यम्)

किं पुनरिदं त्विषेरेवानिट्त्वम्।

(समाधानभाष्यम्)

नेत्याह। यच्चानुक्रान्तं यच्चानुक्रंस्यते सर्वस्यैष शेषोऽनिट्त्वं चेति ॥

(प्रदीपः) नेत्याहेति। त्विषेः स्वत एवानिट्त्वादिति भावः ॥

(उद्द्योतः) त्विषेरिति। तथा च तत्रानुपयोगात्सर्वशेष इति भावः ॥

(३०५६ वार्तिकम् ॥ ६ ॥)

॥ * ॥ क्षदेश्च युक्ते ॥ * ॥

(भाष्यम्) क्षदेश्च युक्ते तृन्वक्तव्यः। क्षत्ता ॥

(उद्द्योतः) भाष्ये—क्षत्तेति। द्वाराधिकृतो रथसूतश्चेत्याहुः ॥ १३५ ॥

(३०५७ वार्तिकम् ॥ ७ ॥)

॥ * ॥ छन्दसि तृच ॥ * ॥

(भाष्यम्) छन्दसि तृच तृश्च वक्तव्यः ॥ क्षत्तृभ्यः संग्रहीतृभ्यः। क्षत्तृभ्यः संग्रहीतृभ्यः ॥ तृन् ॥१३५॥

---

१ अयमर्थः 'सिद्धबहुलम्' इत्यत्रापि लिखित इति बोध्यम् ॥

२ अङ्गस्येगन्तत्वाभावाल्लघूपधत्वाभावाच्चेति भावः। (र. ना.)

(५२४ क्नुप्रत्ययविधिसूत्रम् ॥ ३। २। ३ आ. ५)

## ९०६ ग्लाजिस्थश्च क्स्नुः ॥ ३।२।१३९ ॥

(प्रत्ययस्य गित्त्वनिर्णयाधिकरणम्)

(३०५८ किस्त्वे दूषणवार्तिकम् ॥ १ ॥)

॥*॥ स्थोः कित्त्वे स्थ ईकारप्रतिषेधः ॥*॥

(भाष्यम्) स्नोः कित्त्वे स्थ ईकारस्य प्रतिषेधो वक्तव्यः। स्थास्नुरिति। "घुमास्था-" इतीत्त्वं प्राप्नोति ॥

(प्रदीपः) ग्लाजि। क्स्नुरिति श्रवणात् कित्त्वं निश्चित्याह—क्स्नोः कित्त्व इति ॥

(अकिदङ्गीकारभाष्यम्)

एवं तर्ह्यकित्करिष्यते ॥

(प्रदीपः) एवं तर्हीति। गकारस्य चर्त्वेन निर्देशो व्याख्यास्यत इत्यर्थः ॥

(३०५९ अकिदङ्गीकारे दूषणवार्तिकम् ॥ २ ॥)

॥ * ॥ अकिति गुणप्रतिषेधः ॥ * ॥

(भाष्यम्) यद्यकित् क्रियते, गुणप्रतिषेधो वक्तव्यः। जिष्णुरिति।

(३०६० दूषणान्तरवार्तिकम् ॥ ३ ॥)

॥ * ॥ भुव इट् प्रतिषेधश्च ॥ * ॥

(भाष्यम्) भुव इट्प्रतिषेधश्च वक्तव्यः।

किं चान्यत्?।

गुणप्रतिषेधश्च। भूष्णुरिति ॥

(किदङ्गीकारभाष्यम्)

अस्तु तर्हि कित्।

(दूषणस्मारणभाष्यम्)

ननु चोक्तम् *स्नोः कित्त्वे ईकारप्रतिषेध* इति।

(दूषणोद्धारभाष्यम्)

नैष दोषः।

(३०६१ स्नुविधिवार्तिकम् ॥ ४ ॥)

॥ * ॥ स्थादंशिभ्यां स्नुश्छन्दसि ॥ * ॥

(भाष्यम्) स्थादंशिभ्यां स्नुश्छन्दसि वक्तव्यः। 'स्थास्नु जङ्गमम् दङ्क्ष्णवः पशवः' इति। स इदानीं स्थः स्नुरविशेषेण विधास्यते ॥

(आक्षेपभाष्यम्)

सिध्यति। सूत्रं तर्हि भिद्यते ॥

(सिद्धान्तिभाष्यम्)

यथान्यासमेवास्तु।

---

३ पाणिन्युच्चारितककारसंगतये वक्ष्यमाणसिद्धान्तश्रयणमिति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( दूषणसारणभाष्यम् )

ननु चोक्तं स्नोः कित्वे स्थ ईकारप्रतिषेध इति ॥

( समाधानभाष्यम् )

एवं तर्हि गित्करिष्यते ॥

( ३०६२ वार्तिकम् ॥ ५ ॥ )

**॥ * ॥ स्नोर्गित्वान्न स्थ ईकारः ॥ * ॥**

( भाष्यम् ) स्नोर्गित्वात् स्थ ईकारो न भविष्यति। किं कारणम् ? ।

( ३०६३ हेतुवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ क्ङितोरीत्वशासनात् ॥ * ॥**

( भाष्यम् ) क्ङितोरीत्वं शिष्यते ॥

( आक्षेपभाष्यम् )

इह तर्हि जिष्णुरिति गुणः प्राप्नोति ।

( ३०६४ समाधानवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ गुणाभावस्त्रिषु स्मार्यः ॥ * ॥**

( भाष्यम् ) गुणाभावस्त्रिषु स्मर्तव्यः । गिति किति ङिति चेति ॥

( प्रश्नभाष्यम् )

तन्नकारग्रहणं कर्तव्यम् ॥

( समाधानभाष्यम् )

न कर्तव्यम् । क्रियते न्यास एव । ककारे गकारश्चर्त्वभूतो निर्दिश्यते—क्क्ङति चेति ।

(प्रदीपः) ककार इति । परभूत इत्यर्थः । एतच्च लक्ष्यमूलाद्व्याख्यानाल्लभ्यते ।

( उद्योतः ) ग्लाजि ॥ १३९ ॥ [१]न ककारद्वयमुपलभ्यतेऽत आह—लक्ष्येति ॥

( आक्षेपभाष्यम् )

इह तर्हि भूष्णुरिति "श्र्युकः किति" इतीट्प्रतिषेधो न प्राप्नोति ॥

( ३०६५ समाधानवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ श्र्युकोनिट्त्वं गकोरितोः ॥ * ॥**

( भाष्यम् ) श्र्युकोनिट्त्वं गकारककारयोरिति वक्तव्यम् ॥

( प्रश्नभाष्यम् )

तन्नकारग्रहणं कर्तव्यम् ॥

( समाधानभाष्यम् )

न कर्तव्यम् । क्रियते न्यास एव । ककारे गकारश्चर्त्वभूतो निर्दिश्यते "श्र्युकः क्कि्ती"ति ॥

( आक्षेपभाष्यम् )

यद्येवं चर्त्वस्यासिद्धत्वाद् "हशि च"इत्युत्वं प्राप्नोति ॥

( समाधानभाष्यम् )

सौत्रो निर्देशः ॥ अथवाऽसंहितया निर्देशः करिष्यते—श्र्युकः क्कितीति ॥

( प्रदीपः ) सौत्र इति । तेन असिद्धत्वाभावादुत्वाभावे विसर्जनीयो भवतीत्यर्थः ॥ अथवेति । संहितायामुत्वविधानात् । इह तु तदभावादवसानविषयत्वाद्विसर्जनीयो भवति ॥ १३९ ॥

( उद्योतः ) [२]तेनेति । निर्देशेनासिद्धत्वं बाध्यत इत्यर्थः ॥ तदभावादिति । [३]असंहिताकृतार्धमात्राकालेन विच्छिदादवसानविषयत्वमिति भावः ॥ ननु संहिताया अविवक्षायां विसर्गोऽपि कथं, तत्रापि संहिताधिकारादिति स्पष्टमष्टमे भाष्य इति चेन्न । पूर्वेण संहिताया एवावसानकार्यनिमित्तत्वादिति भावः ॥ १३९ ॥

**स्नोर्गित्वान्न स्थ ईकारः क्ङितोरीत्वशासनात्। गुणाभावस्त्रिषु स्मार्यः श्र्युकोनिट्त्वं गकोरितोः ग्लाजिस्थश्च ॥ १३९ ॥**

( ५२५ घिनुणप्रत्ययविधिसूत्रम् ॥ ३ । २ । ३ आ. ६ )

## ९०८ शमित्यष्टाभ्यो घिनुण्

## ॥ ३ । २ । १४१ ॥

( आक्षेपभाष्यम् )

घिनणयं वक्तव्यः । घिनुणि हि सति शमिनौ शमिनः तमिनौ तमिन इति "उगिदचां सर्वनामस्थान" इति नुम्प्रसज्येत ।

( घिनुण्वादिभाष्यम् )

नैष दोषः । झल्ग्रहणं तत्र चोदयिष्यति ।

( घिनण्वाद्याक्षेपभाष्यम् )

इह तर्हि शमिनितरा शमिनीतरा तमिनितरा तमिनीतरा । 'उगितो घादिषु नद्या अन्यतरस्यां ह्रस्वो भवती'त्यन्यतरस्यां ह्रस्वत्वं प्रसज्येत ।

---

१ 'न धातुलोप आर्धधातुके क्क्ङति च' इत्येवं पाणिनेः संहितापाठे ककारद्वयसत्त्वेपि सूत्रविभागकर्तृपूर्वपक्षिणा ककारद्वयस्य 'अनचि च' इति द्वित्वनिष्पन्नत्वमवगत्य व्यस्तपाठे द्वित्वाप्राप्त्या ककारद्वयस्यासंभवादेकककार एव पाठोऽङ्गीकृतः । तदभिप्रायेणेदमिति बोध्यम् ॥

२ पाणिनिना "झरो झरि" इति कृतं लोपमजानानः 'एकककार एव पाणिनिना 'श्र्युकः किति' इति न्यासः कृतः' इति जानानः आक्षेप्ता भूष्णुरित्यत्रेट् प्रतिषेधाप्राप्तिमाक्षिप्तवान् ॥ सिद्धान्ती तु लोपेनैकककारपाठे उपलभ्यमानेऽपि वास्तवमत्र ककारद्वयमिति जानात्येवेति बोध्यम् ॥

३ 'असिद्धत्वबाधात्' इत्यनुक्त्वा 'असिद्धत्वाभावात्' इति वदतः कैयटस्याशयस्तु—'सौत्रो निर्देशः' इत्यस्य 'सौत्रं निपातनम्' इत्यर्थेन नात्र 'खरि च' इत्यनेन चर्त्वम् यस्यासिद्धत्वमाशङ्क्यते । किंत्वनेन निपातनेनेति अस्य त्रैपादिकत्वाभावेन नैवासिद्धत्वम् । येन 'हशि च' इत्युत्वमापद्येत इति ॥ इति दाधिमथानां रहस्यम् ॥

४ असंहिता कृतार्धमात्राधिककालेनेति पाठो भाति । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तस्माद् घिनणयं वक्तव्यः।

(प्रदीपः) शमित्य ॥ १४१ ॥ घिनणयमिति। उकारे हि सति कार्यार्थत्वसंभवात्तस्योच्चारणार्थत्वं न स्यादिति भावः॥

(उद्द्योतः) शमित्य ॥ १४१ ॥ उच्चारणार्थत्वमिति। केवलोच्चारणार्थत्वमित्यर्थः॥ शमिनीतरेति। ननु ह्रस्वाभावे तसिलादिष्विति पुंवत्त्वं युक्तमिति कथं दीर्घप्रयोग इति चेन्न। ताच्छीलिकानां प्रायेण रूढितुल्यतया भगवतोक्तत्वेन संज्ञात्वात्संज्ञापूरण्योश्चेति निषेधादित्याहुः॥ १४१॥

(घिनुणवादिभाष्यम्)

इष्यत एव ह्रस्वत्वम्॥

(३०६६ वार्तिकम्॥ १॥)

॥ * ॥ घिनुणकर्मकाणाम्॥ * ॥

(भाष्यम्) घिनुणकर्मकाणामिति वक्तव्यम्। इह मा भूत्—संपृणक्ति शाकमिति॥

(३०६७ वार्तिकप्रत्याख्यानम्॥ २॥)

॥ * ॥ उक्तं वा॥ * ॥

(भाष्यम्) किमुक्तम्?। अनभिधानादिति॥ शमित्यष्टा॥ १४१॥

(प्रदीपः) इष्यत इति। विकल्पेनैव ह्रस्वत्वमिष्यते न तु नित्यमित्युकार उगित्कार्यार्थ इति स्थितम्।

---

(५२६ वुञ्प्रत्ययविधिसूत्रम्॥ ३। २। ३ आ. ७)

## ९१३ निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्॥३।२।१४६॥

(आक्षेपभाष्यम्)

किमर्थं निन्दादिभ्यो वुञ्विधीयते। न ण्वुलैव सिद्धम्। नह्यस्ति विशेषः। निन्दादिभ्यो ण्वुलो वा वुञो वा। तदेवरूपं स एव स्वरः॥

(३०६८ वार्तिकम्॥ १॥)

॥ * ॥ वुञमनेकाचः॥ * ॥

(भाष्यम्) वुञमनेकाचः प्रयोजयन्ति। असूयकः।

(प्रदीपः) निन्द॥ १४६॥ वुञमनेकाच इति। जातौ बहुवचनम्। असूयशब्दस्यैकस्यैव प्रयोजकत्वात्।

(उद्द्योतः) निन्दहिंस॥ १४६॥ जातौ बहुवचनमिति। तत्र बहुवचनस्य भगवता प्रत्याख्यानादेकव्यक्तिविषये जात्याश्रयणे फलाभावाच्चेदं चिन्त्यम्॥ प्रयोगबहुत्वाश्रयं बहुवचनमिति परे॥ १४६॥

(आक्षेपभाष्यम्)

अथ ये ऽत्रैकाचः पठ्यन्ते। तेषां ग्रहणं किमर्थम्। न तेषां ण्वुलैव सिद्धम्।

(आक्षेपबाधकभाष्यम्)

न सिध्यति। अयं तच्छीलादिष्वर्थेषु तृन्विधीयते स विशेषविहितः सामान्यविहितं ण्वुलं बाधेत।

(आक्षेपसाधकभाष्यम्)

वाऽसरूपेण न्यायेन ण्वुलपि भविष्यति।

(समाधानभाष्यम्)

अत उत्तरं पठति—

(३०६९ समाधानवार्तिकम्॥ २॥)

॥ * ॥ निन्दादिभ्यो वुञ्वचनमन्येभ्यो ण्वुलः प्रतिषेधार्थम्॥ * ॥

(भाष्यम्) निन्दादिभ्यो वुञ्वचनं क्रियते[किमर्थम्?]ज्ञापकार्थम्। किं ज्ञाप्यम्?। एतज्ज्ञापयत्याचार्यः 'तच्छीलादिषु वासरूपन्यायेनान्येभ्यो ण्वुल् न भवतीति'।

(३०७० वार्तिकम्॥ १॥)

॥ * ॥ तृजादिप्रतिषेधार्थं वा एके॥ * ॥

(भाष्यम्) अथ वा एके मन्यन्ते—एतज्ज्ञापयत्याचार्यः 'ताच्छीलिकेषु सर्वे एव तृजादयो वासरूपेण न भवन्तीति' निन्दहिंस॥ १४६॥

(प्रदीपः) तृजादिप्रतिषेधार्थं वेति। प्रत्ययसामान्यापेक्षं च ज्ञापकमाश्रीयते, न तु ण्वुलभावार्थमेव॥ १४६॥

---

(युच्प्रत्ययप्रकरणम्)

(५२७ युच्प्रत्ययविधिसूत्रम्॥ ३। २। ३ आ० ८)

## ९२७ जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः॥ ३। २। १५०॥

(३०७१ वार्तिकम्॥ १॥)

॥ * ॥ पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरिति सिद्धत्वात्॥ * ॥

(भाष्यम्) पदिग्रहणमनर्थकम्। किं कारणम्?। "अनुदात्तेतश्च हलादेः।" इति सिद्धत्वात्। "अनुदात्तेतश्च हलादेः" इत्येवात्र युच् सिद्धः।

(प्रदीपः) जुचङ्क्र॥ १५०॥ पदिग्रहणमिति। न च सकर्मकार्थं पदिग्रहणमनभिधानाद् अनेन सकर्मकादविधानात्॥ १५०॥

(उद्द्योतः) जुचङ्क्रम्य॥ १५०॥ सकर्मकार्थमिति।

---

१ तस्य उकारस्येत्यर्थः। (र. ना.)



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनुदात्तेतश्चेति सूत्रे चलनशब्दार्थादित्यतोऽकर्मकादित्यनुवर्तते । तत्त्वं च सोपसर्गत्वेनान्तर्भावितण्यर्थत्वेन वेति बोध्यम् ॥

(भाष्यम्) न सिध्यति। अयं पदेरुकञ् विधीयते— "लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्" इति । स विशेषविहितः सामान्यविहितं युचं बाधेत ॥ वासरूपन्यायेन युजपि भविष्यति ॥

( ३०७२ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ असरूपनिवृत्त्यर्थं तु ॥ * ॥

( भाष्यम् ) असरूपनिवृत्त्यर्थं तर्हि पदिग्रहणं क्रियते ।

एतज् ज्ञापयत्याचार्यः ताच्छीलिकेषु ताच्छीलिका वासरूपेण न भवन्तीति ॥

( आक्षेपभाष्यम् )

यद्येतज् ज्ञाप्यते "सूददीपदीक्षश्च" इति दीपिग्रहणमनर्थकम् । अयं दीपे रो विधीयते—"नमिकम्पिस्म्यजसकमहिंसदीपो र" इति । स विशेषविहितः सामान्यविहितं युचं बाधिष्यते ॥

( उद्द्योतः ) सूददीपेति । युज्निषेधकम् ॥ १५० ॥

( समाधानभाष्यम् )

एवं तर्हि सिद्धे सति यद् दीपिग्रहणं करोति । तज् ज्ञापयत्याचार्यः 'भवति युचो रेण समावेश' इति ॥

( प्रश्नभाष्यम् )

किमेतस्य ज्ञापने प्रयोजनम् ? ।

( समाधानभाष्यम् )

कम्रा कन्या कमना कन्येत्येतत्सिद्धं भवति ॥ जुचंक्रम्य ॥ १५० ॥

---

( ५२८ आलुच्प्रत्ययविधिसूत्रम् ॥ ३ । २ । ३ आ. ९ )

## ९३५ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥३।२।१५८॥

( आक्षेपभाष्यम् )

किमर्थमालुज्विधीयते, न लुशेवोच्यत।

( प्रश्नभाष्यम् )

का रूपसिद्धिः ? । स्पृहयालुः दयालुः ।

( उत्तरभाष्यम् )

शपि कृते "अतो दीर्घो यञी"ति दीर्घो भविष्यति ।

( प्रदीपः ) स्पृहि ॥ १५८ ॥ शपि कृत इति । तुरुस्तुशम्यम इत्यतस्तत्र सार्वधातुकग्रहणमनुवर्तते न तु तिङ्ग्रहणमिति भावः ॥

( उद्द्योतः ) स्पृहिगृ ॥ १५८ ॥ ननु अतो दीर्घ इत्यत्र तिङीत्यनुवृत्त्या कथमत्र दीर्घ इत्यत आह—तुरुस्तु इति । अत एव ज्ञाजनोर्जेति दीर्घविधानस्याङ्गवृत्तपरिभाषाज्ञापकत्वं संगच्छते ॥

( समाधानभाष्यम् )

एवं तर्हि । सिद्धे सति यदालुचं शास्ति, तज् ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति ।

किमेतस्य ज्ञापने प्रयोजनम् ? ।

आलुचि शीङ्ग्रहणं चोदयिष्यति । तन्न कर्तव्यं भवति ।

( ३०७३ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ आलुचि शीङ्ग्रहणम् ॥ * ॥

( भाष्यम् ) आलुचि शीङ्ग्रहणं कर्तव्यम् । शयालुः ॥ स्पृहिगृहि ॥ १५८ ॥

( प्रदीपः ) एवं तर्हीति । ननु लुशि सति लकारस्येत्संज्ञा प्राप्नोति, श्रद्धालुश्च न सिध्यति श्रद्धुरिति प्राप्नोतीत्याहुः ॥ नैष दोषः । यादित्वादित्संज्ञा न भविष्यति । यकारश्च लुप्तनिर्दिष्टः । प्रयोजनाभावाद्वा । नह्यत्र लित्स्वरप्रत्ययस्वरयोर्विशेषोस्ति । उभयत्रैकादेश उदात्तेनेत्युदात्तत्वस्य भावात् । श्रद्धालुशब्दस्याप्यनेकार्थत्वाद्धातूनामत्र विषये दधात्यर्थे वर्तमानस्य धेटो भविष्यति ॥ ननु शिदाश्रयोऽशितीत्यात्त्वप्रतिषेधः प्राप्नोति ॥ एवं तर्हि श्रद्धा आश्रद्धेत्याकारप्रश्लेषादात्वं भविष्यति । अथवा दधातेरेव संज्ञापूर्वको विधिरनित्य इति द्विर्वचनं न प्रवर्तिष्यते ॥ १५८ ॥

(उद्द्योतः) प्रयोजनाभावाद्वेति । नेत्संज्ञेति शेषः । उभयत्रैकादेश इति । लित्स्वरे प्रत्ययस्वरे चाकृते उकारेण गुणरूपे एकादेशे इत्यर्थः । एवं चेत्त्वे लकारोच्चारणवैयर्थ्येन सामर्थ्यानैत्त्वमिति भावः ॥ न चैवमपि श्रद्धालुरिति स्यादत आह—श्रद्धालुशब्दस्यापीति सिद्धिरिति शेषः । धेट इति । करणस्य शेषत्वविवक्षायां षष्ठी । तस्य च भौवादिकत्वात् श्लोरभावेन द्वित्वाभाव इति भावः ॥ शिदाश्रय इति । शबाश्रय इति भावः ॥ अथ वेति । संज्ञापूर्वकतया श्लोरभावेन द्वित्वं नेत्यर्थः । द्वित्वं तु न संज्ञापूर्वकं, विधेयकोटौ संज्ञापूर्वकस्यैव तेनानित्यत्वबोधनादित्याहुः ॥ भाष्यानुक्तत्वेन संज्ञापूर्वक इत्यस्याप्रामाणिकत्वे तु इदं चिन्त्यम् ॥ परे तु अजेसव्यथिभ्यामिवात्रापि[२] श्रद्धेति समुदायात्प्रत्यय इति न काचिच्छङ्केत्याहुः ॥ दयेर्यङ्[३] लुङ्नास्त्यनभिधानादिति बोध्यम् ॥१५८॥

---

१ श्रद्धेत्यत्राकारप्रश्लेषसामर्थ्यात् शित्यप्यात्त्वं भविष्यतीति भावः । (र.ना.)

२ अजसम्, अव्यथा, इत्यत्र यथा समुदायादेव प्रत्ययस्तथाऽत्रापीति भावः । (र.ना.)

३ ननु प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणाद् दयेर्यङ्लुकि अप्यालुच् स्यादत आह–दयेरित्यादि । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ५२९ किकिनूप्रत्ययविधिसूत्रम् ॥ ३ । २ । ३ आ. १० )

## ९४८ आदृगमहनजनः किकिनौ लिट् च ॥ ३ । २ । १७१ ॥

( आक्षेपभाष्यम् )

किमर्थं किकिनोः कित्त्वं क्रियते । न "असंयोगाल्लिट् कित्" इत्येव सिद्धम् ।

( ३०७४ आक्षेपबाधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ किकिनोः कित्त्वमृकारगुणप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) किकिनोः कित्करणं क्रियते । [ किमर्थम् ? ] ऋकारस्य गुणप्रतिषेधार्थम् । अयमृकारान्तानां लिटि गुणः प्रतिषेधविषये आरभ्यते "ऋच्छत्यृताम्" इति । स यथेह भवति आतस्तरतुरातस्तरुरिति । एवमिहापि प्रसज्येत—मित्रावरुणौ ततुरिः, दूरे अध्वा जगुरिरिति । स पुनः कित्त्वेन बाध्यते ।

( प्रदीपः ) आदृग ॥ १७ ॥ दकारो सुखसुखार्थोऽसंदेहार्थो वा । तकारे तु सति तादपि परस्तपर इत्यकारस्य तपरत्वाद् ऋकारग्रहणं न स्यात् । ऋकारगुणनिषेधार्थोच किकिनोः कित्वाद् ऋकारनिर्देशावसायः ।

( उद्द्योतः ) आद ॥ १७१ ॥ ऋकारगुणनिषेधार्थादिति । ऋधातोः किकिनोर्गुणनिषेधानिषेधयोः फले विशेषाभावः । आरिरिति रूपमेव गुणे, तन्निषेधेऽपि अत आदेरिति दीर्घे यणि च तदेवेति भावः ॥ ऋकारनिर्देशेति । दीर्घग्रहणेनेत्यर्थः ॥ जगुरिरित्यादौ कित्वाद्गुणाभावे ओष्ठ्यपूर्वत्वाभावेपि छान्दसत्वादुत्वम् ॥

( ३०७५ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् ॥ * ॥

( भाष्यम् ) उत्सर्गश्छन्दसि किकिनौ वक्तव्यौ । किं प्रयोजनम् ? । सदादिभ्यो दर्शनात् । सदादिभ्यो हि किकिनौ दृश्येते । सदिरसिनमिमनिविचीनां सेदिः, रेमिः, मेनिः, नेमिश्चक्रमिवाभवत् । विविचिं रत्नधातमम् ।

( ३०७६ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ भाषायां धाञ्कृसृजनिनमिभ्यः ॥ * ॥

( भाष्यम् ) भाषायां धाञ्कृसृजनिनमिभ्यः किकिनौ वक्तव्यौ । धाञ्—दधिः । कृ—चक्रिः । सृ—सस्त्रिः । जनि—जज्ञिः । नमि—नेमिः ।

( ३०७७ वार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ सासहिवावहिचाचलिपापतीनां निपातनम् ॥ * ॥

( भाष्यम् ) सासहिवावहिचाचलिपापतीनां निपातनं कर्तव्यम् । वृषा सहमानं सासहिः । वावहिः चाचलिः पापतिः ॥

अपर आह—

( ३०७८ वार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ ॥ * ॥

(भाष्यम्) तान्येवोदाहरणानि ॥ आदृगम ॥१७१॥

( प्रदीपः ) सासहीति । पापतीति । निपातनाद्यङ्‌लुगभावः । विधौ तु भाष्यकारवचनप्रामाण्यात् । तेनाप्युक्तं तान्येवोदाहरणानीति ॥ अथ लिड्वद्भावे किकिनोः परस्मैपदसंज्ञा कस्मान्न भवति । तथा चात्मनेपदिभ्यो देङ्वक्षादिभ्यो न प्राप्नुतः । नैष दोषः । लादेशानां परस्मैपदसंज्ञा न तु लकारस्य ॥ भावकर्मकर्तृषु तर्हि लिड्वत् किकिनौ प्राप्नुतः । एषोप्यदोषः । उत्पन्नयोः कार्यातिदेशात् । उत्पत्तिश्च कर्तरि कृदित्यनेनास्यैकवाक्यत्वात्कर्तरि तयोर्भवति । वर्तमानाधिकाराच्च वर्तमान इति भूतकालतापि विरोधान्नातिदिश्यते । स्वरूपाबाधेन च कार्याण्यतिदिश्यन्त इति क्वसुकानचावपि किकिनोर्न भवतः ॥ १७१ ॥

( उद्द्योतः ) भाष्यकारवचनेति । श्वसादिवद्गुसहचरितस्यैव पतेस्तत्र ग्रहणमित्यन्यविकरणस्य तदभावः । यद्वा प्रसिद्धस्य पतेर्ग्रहणं न दैवादिकस्य, तस्य वेदं रूपम् ॥ १७१ ॥

---

(५३० क्रुक्लुकनूप्रत्ययविधिसूत्रम् ॥३।२।३ आ. ११)

## ९५१ भियः क्रुक्लुकनौ ॥ ३।२।१७४ ॥

( ३०७९ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ भियः क्रुकन्नपि ॥ * ॥

-( भाष्यम् ) भियः क्रुकन्नपि वक्तव्यः । भीरुकः ॥ भियः क्रु ॥ १७४ ॥

---

१ छन्दसि किकिनौ वक्तव्यौ इत्ययमुत्सर्गो विधिरित्यर्थः । तथाचादृगमहनेत्यनुक्त्वा छन्दसि धातुमात्रात् किकिनौ वाच्याविति भावः । ( र. ना. )

२ किकिन्विधावित्यर्थः । ( र. ना. )

३ लिटः स्वरूपाबाधेन यानि कार्याणि तान्यतिदिश्यन्ते क्वसुकानचौ तु न तथेति तौ किकिनोर्न भवत इति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( ५३१ क्विप्प्रत्ययविधिसूत्रम् ॥ ३ । २ । ३ आ० १२ )

## ९५५ अन्येभ्योपि दृश्यते ॥३।२।१७८॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते । न "क्विप् चान्येभ्योपि दृश्यते" इत्येव सिद्धम् ।

( ३०८० वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ क्विब्विधिरनुपपदार्थः ॥ * ॥

( भाष्यम् ) अनुपपदार्थोयमारम्भः । पचेः पक् । भिदेः भित् । छिदेः छित् ।

( प्रदीपः ) अन्येभ्योपि ॥ १७८ ॥ क्विब्विधिरिति क्विप् चेत्यत्र सुप्युपसर्गेपीति च वर्तेत इति भावः ॥

( आक्षेपभाष्यम् )

अथ योत्र सोपपदस्तस्य ग्रहणं किमर्थम् । न तेनैव सिद्धम् ।

( प्रदीपः ) अथेति । पूर्वसूत्रे ग्रावस्तुशब्द इत्यर्थः ॥

( उद्योतः ) अन्येभ्योपि ॥ १७८ ॥ ग्रावस्तु इति । विद्युतोपि उपलक्षणम् ।

( समाधानभाष्यम् )

न सिध्यति । इह केचिद् "आ केः" इति सूत्रं पठन्ति । केचित् "प्राक् केः" इति । तत्र ये 'आकेः' इति पठन्ति तैः क्विबप्याक्षिप्तो भवति । तत्र तच्छीलादिष्वर्थेषु क्विब् यथा स्यात् ।

( प्रदीपः ) आकेरिति । अभिविधावाकारः ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । य एवासावविशेषविहितः स तच्छीलादिषु भविष्यति । अन्यत्र च ॥

( समाधानसाधकभाष्यम् )

न सिध्यति । अयं तच्छीलादिष्वर्थेषु तृन्विधीयते स विशेषविहितः सामान्यविहितं क्विपं बाधेत ॥

( बाधकभाष्यम् )

वासरूपेण क्विबपि भविष्यति ॥

( समाधानसाधकभाष्यम् )

न सिध्यति । इदानीमेव ह्युक्तम्—'तच्छीलादिष्वर्थेषु वासरूपेण तृजादयो न भवन्ति' इति । क्विप्चापि तृजादिः ॥

( ३०८१ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च ॥ * ॥

( भाष्यम् ) वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घत्वं च वक्तव्यम् । क्विप्च ॥ वचि—वाक् ॥ प्रच्छि—शब्दप्राट् । आयतस्तु—आयतस्तूः । कटप्रु—कटप्रूः । जु—जूः । श्रि—श्रीः ॥

( मुन्यन्तरवाक्यम् )

अपर आह—

*वचिप्रच्छ्योरसम्प्रसारणं चेति वक्तव्यम् ।

( प्रश्नभाष्यम् )

तत्तर्हि वक्तव्यम् ।

( समाधानभाष्यम् )

न वक्तव्यम् । दीर्घवचनसामर्थ्यात्सम्प्रसारणं न भविष्यति । इदमिह सम्प्रधार्यम् । दीर्घत्वं क्रियतां सम्प्रसारणमिति । किमत्र कर्तव्यम्? । परत्वात्सम्प्रसारणम् । अन्तरङ्गं दीर्घत्वम् । का अन्तरङ्गता? । प्रत्ययोत्पत्तिसन्नियोगेन दीर्घत्वमुच्यते । उत्पन्ने प्रत्यये सम्प्रसारणम् । तत्रान्तरङ्गत्वाद्दीर्घत्वे कृते सम्प्रसारणम् । सम्प्रसारणपूर्वत्वे कृते कार्यकृतत्वात्पुनर्दीर्घत्वं न स्यात् । तस्मात् सुष्ठूच्यते । दीर्घवचनसामर्थ्यात् सम्प्रसारणं न भवतीति ।

( प्रदीपः ) दीर्घवचनसामर्थ्यादिति । दीर्घश्रुत्याऽच्परिभाषोपस्थानाद्वचिप्रच्छ्योरचो दीर्घत्वेन भाव्यं तत्र कृते संप्रसारणे पूर्वैकादेशे च दीर्घविधानमनर्थकं स्यादिति भावः ॥ न स्यादिति । संभावने लिङ् । पूर्वमेव प्रवृत्तत्वात् पुनर्दीर्घो न प्रवर्तेत इत्यर्थः ॥

( उद्योतः ) तत्र कृते इति । प्रत्ययसंनियोगशिष्टतयान्तरङ्गत्वाद्दीर्घत्वे कृते इत्यर्थः ॥ ननु दीर्घत्वं न स्यादित्ययुक्तम्, अस्यानुवादत्वेन विधिलिङोऽसंभवादत आह—संभावने इति । दीर्घत्वं संभवेदिति नेत्यर्थः । यद्यपि दीर्घवचनसामर्थ्याल्लक्ष्ये लक्षणस्येति न्यायबाधेन पुनर्दीर्घप्रवृत्तिरेव वक्तुं युक्ता तथापीष्टानुरोधात्संप्रसारणाभाव एव भाष्यकृतोक्तः ॥ भाष्ये कार्यकृतत्वादिति । विकारकृतलक्ष्यभेदस्तु नात्र न्याये आश्रीयते एतद्भाष्यप्रामाण्यात् ॥ वचिप्रच्छ्योरत्र वार्तिके सूत्रेणैव क्विपि सिद्धे दीर्घत्वार्थमेव ग्रहणमिति बोध्यम् ।

( ३०८२ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ द्युतिगमिजुहोतीनां द्वे च ॥ * ॥

(भाष्यम्) द्युतिगमिजुहोतीनां द्वे चेति वक्तव्यम् । दिद्युत् । गमि । जगत् ॥ जुहोतेर्दीर्घश्च । जुहूः ॥

( प्रदीपः ) दिद्युदिति । द्युतिस्वाप्योरित्यभ्यासस्य संप्रसारणम् ॥ जगदिति । गमः क्वाविति मलोपः ॥ जुहूरिति । दीर्घे समुच्चीयमाने दीर्घश्रुत्याऽच्परिभाषोपस्थानादचा च तदन्तविध्याश्रयणाद् जुहोतेरेवाजन्तत्वसंभवाद्भवति १७८

( उद्योतः ) चेन दीर्घसमुच्चये दिद्युदादेरपि स्यात् । असमुच्चये जुहूर्न सिद्ध्येदत आह—दीर्घं इति । द्युतिगमिभ्यामन्वये वैयधिकरण्यापत्तिभिया ताभ्यामसंबन्धो दीर्घस्येत्यर्थः ॥

---

१ 'अयं'

२ 'प्रवर्तेत' इति पाठो भवेत् 'संभावने लिङ्' इत्युक्तेः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ३०८३ वार्तिकम् ॥ ४ ॥ )

[॥*॥ दृणातेर्ह्रस्वश्च द्वे च क्विप् च॥*॥]

(भाष्यम्) दृणातेर्ह्रस्वश्च द्वे च क्विप्चेति वक्तव्यम्। दद्दत् ॥

( धात्वन्तरसाधनभाष्यम् )

जुहूर्जुहोतेर्ह्वयतेर्वा । दद्दत् दृणातेर्दीर्यतेर्वा ॥ जूः ज्वरतेर्जीर्यतेर्वा ।

(उद्योतः) भाष्ये दीर्यतेर्वेति । एतद्भाष्यप्रामाण्यादेव दृधातुर्दिवादावपि बोध्यः ॥ जीर्यतेर्वेति । अत्र पक्षे उत्वं चेन विधेयम् ॥

( ३०८४ वार्तिकम् ॥ ५ ॥ )

॥ * ॥ ध्यायतेः सम्प्रसारणं च ॥ * ॥

[1]( भाष्यम् ) ध्यायतेः सम्प्रसारणं च क्विप्च वक्तव्यः ॥ धीः ॥

( धात्वन्तरसाधनभाष्यम् )

धीर्ध्यायतेर्दधातेर्वा ॥ अन्येभ्यो ॥ १७८ ॥

(उद्योतः) दधातेर्वेति । घुमास्थेतीत्त्वम् । ईत्वमवकारादाविति वचनं तु भगवता प्रत्याख्यास्यते ॥ [ वस्तुतोऽस्मात्क्विबेव[2] नेतीदमेकदेश्युक्तिरिति बोध्यम् । वस्तुतो दृशिसमुच्चेयमपूर्वमीत्वं भगवदभिमतम्, पूर्वत्र पक्षेऽपूर्वोत्ववदिति बोध्यम् ] ॥ ११८ ॥

---

( ५३२ डुप्रत्ययविधिसूत्रम् ॥ ३ । २ । ३ आ. १३ )

## ९५७ विप्रसंभ्यो ड्वसंज्ञायाम्

## ॥ ३ । २ । १८० ॥

( ३०८५ वार्तिकम् ॥ १ ॥ )

॥ * ॥ डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानं धातुविधितुक्प्रतिषेधार्थम् ॥ * ॥

(भाष्यम्) डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानं कर्तव्यम्। किं प्रयोजनम्? । धातुविधितुक्प्रतिषेधार्थम् । धातुविधेस्तुकश्च प्रतिषेधो यथा स्यात्। मितद्रुः मितद्रू मितद्रवः । "अचिश्नुधातुभ्रुवाम्" इत्युवङादेशो मा भूत् । इह च मितद्र्वा । मितद्र्वे-"नोङ्धात्वोः" इति प्रतिषेधो मा भूत् ॥ तुग्विधि—मितद्रुः । "ह्रस्वस्य पिति कृति तुग्" इति तुङ् मा भूदिति ॥ विप्रसंभ्यो० ॥ १८० ॥

( प्रदीपः ) विप्रसम् ॥ १८० ॥ किं प्रयोजनमिति । क्विपा सिद्धिं मन्यमानस्य प्रश्नः ॥ १८० ॥

---

( ५३३ कर्तरि क्तप्रत्ययविधिसूत्रम् ॥ ३।२।३ आ. १४ )

## ९६५ मतिबुद्धिपूजार्थेभ्यश्च

## ॥ ३ । २ । १८८ ॥

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथाक्रान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ॥
न म्रियन्ते अमृताः ॥ मतिबुद्धि ॥ १८८ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य द्वितीये पादे तृतीयमाह्निकम् ॥ पादश्च समाप्तः ॥

( प्रदीपः ) मतिबुद्धि ॥ १८८ ॥ क्तस्य मत्याद्यर्थेभ्यः परस्य भूतविषयतापि वर्तमानविषयतया तक्रकौण्डिन्यन्यायेन बाध्यते ॥ ज्ञातमिति[3] तु भूतेपि भवति । तेनेत्यधिकारात् तृतीयान्तादुपज्ञातेऽर्थेऽण्प्रत्ययविधानात् । वर्तमाने हि क्तस्य च वर्तमान इति षष्ठ्या भाव्यम् ॥ १८८ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य द्वितीये पादे तृतीयमाह्निकम् ॥

(उद्योतः) मतिबुद्धि ॥ १८८ ॥ प्रत्ययविधानादिति । तेन हि विधेयविषयेऽयं न्यायो न तु बाधविषय इति ज्ञाप्यते । कालस्त्वनुवाद्य इति भावः ॥ तेन पूजितो यः सुरासुरैरित्यपि सिद्धम् ॥ भाष्ये शीलित इत्यादि । अनुक्तसमुच्चयार्थेन चेनैषां संग्रह इति भावः ॥ कष्टं भविष्यतीत्यर्थे कष्टशब्द इत्यर्थः ॥ पूर्ववत् शीलिताद्युद्यतान्तवत् ॥ वर्तमाने इत्यर्थस्तदाह—न म्रियन्ते इति ॥ १८८ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते व्याकरणमहाभाष्यप्रदीपोद्योते तृतीयस्य द्वितीये पादे तृतीयमाह्निकम् ॥

पादश्चायं द्वितीयः समाप्तः ॥

---

१ अयं कोष्ठकान्तर्गतो वार्तिकपाठो नैव क्वाप्युपलभ्यते ॥
२ अयं कोष्ठकान्तर्गतः पाठो नैकस्मिन्पुस्तके समुपलभ्यते ॥
३ 'मिलितन्तु' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

| | प्राक्तनयोगः | अस्मिन् पादे सूत्रवार्तिकसंख्या चक्रमिदम् ॥ | | | | सर्वयोगः |
|---|---|---|---|---|---|---|
| | | १ माह्निके | २ याह्निके | ३ याह्निके | समुदितयोगः | |
| व्याख्यातसूत्राणि | | | | | | ५३३ |
| अव्याख्यातसूत्राणि | | | | | | ४३२ |
| समुदितसूत्राणि | | | | | १८८ | ९६५ |
| वार्तिकानि | | | | | | |

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्रीदधिमती(थी) जयति ॥

# तृतीयाध्यायस्य तृतीयपादे प्रथममाह्निकम् ॥

( ५३४ उणादीनामपि स्वीकारसूत्रम् ॥ ३।३।१ आ. १ )

## ९६६ उणादयो बहुलम् ॥ ३ । ३ । १ ॥

( आक्षेपभाष्यम् )

**बहुलवचनं किमर्थम्?।**

( प्रदीपः ) उणादयो बहुलम् ॥ १ ॥ बहुलवचनमिति । उणादय इत्येव सूत्रमुणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थमस्त्विति भावः ॥

( उद्द्योतः ) उणादयो ॥ १ ॥ शास्त्रान्तरेति । व्याकरणान्तरेत्यर्थः ॥ साधुत्वेति । वर्तमानकाले तत्त्वार्थमिति भावः ॥

( ३०८६ वार्तिकम् ॥ १ ॥ )

**॥ * ॥ बाहुलकं प्रकृतेस्तनुदृष्टेः ॥ * ॥**

( भाष्यम् ) तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते न सर्वाभ्यो दृश्यन्ते ।

( ३०८७ वार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्रायसमुच्चयनादपि तेषाम् ॥ * ॥**

( भाष्यम् ) प्रायेण खल्वपि ते समुच्चिता न सर्वे समुच्चिताः ।

( ३०८८ वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ कार्यसशेषविधेश्च तदुक्तम् ॥ * ॥**

( भाष्यम् ) कार्याणि खल्वपि सशेषाणि कृतानि न सर्वाणि लक्षणेन परिसमाप्तानि ।

( प्रदीपः ) बाहुलकमिति । प्रकृतेरिति जातावेकवचनम् । तनुशब्दोऽत्र वृत्तिविषये गुणमात्रवचनः प्रकृतीनां तानवं दृष्ट्वा बाहुलकं बहुलशब्दप्रवृत्तिनिमित्तं बह्वर्थादानमुक्तम् । तेनापठिताभ्योपि प्रकृतिभ्य उणादयो भवन्ति । यथा हृषेरुलच् शकेरपि भवति शङ्कुलेति । तथा तेषामुणादीनां प्रायेण समुच्चयनं कृतम्, न तु साकल्येनेति बहुलवचनादविहिता अपि भवन्ति । यथा—अर्तेः फिडफिड्डौ भवतः ऋफिड ऋफिड्ड इति । सशेषाणि च कार्याणि उणादिषु विहितानि न तु निःशेषाणि । बहुलवचनात्त्वविहितान्यपि भवन्ति तेन षण्ड इत्यत्र सत्वाभावः[1] सकारस्य वा षत्वं भवति ।

( उद्द्योतः ) प्रकृतेरित्यस्य तन्वीभ्य इति व्याख्यानमननुगुणमत आह—जाताविति । ननु तनुशब्दस्य प्रकृतेरिति विशेषणतया कथं समासोऽत आह—तनुशब्द इति । तथा च गमकत्वात्समास इति भावः ॥ तानवमिति । व्याकरणान्तरे तासामल्पत्वं दृष्ट्वा इत्यर्थः ॥ बाहुलकमिति । बहूनर्थाल्लातीत्यर्थकबहुलशब्दाद्भावे वुञा सिद्धमिति बोध्यम् ॥ बहवोऽर्थाश्च प्रवृत्तिनिवृत्त्यादयो वृद्धैरुक्ताः[2] ॥ बह्वर्थादानमिति । बह्वर्थग्रहणरूपं प्रवृत्तिनिमित्तमित्यर्थः ॥ तेनापठिताभ्य इति । व्याकरणान्तरे पठिताभ्य इत्यर्थः ॥ भाष्ये उणादयो दृश्यन्त इत्यादेर्व्याकरणान्तरे इति शेषः । तदाह—यथा हृषेरुलजित्यादि ॥ प्रायेण समुच्चयनमिति । व्याकरणान्तरे इत्यर्थः ॥

( आक्षेपभाष्यम् )

**किं पुनः कारणं तन्वीभ्यः प्रकृतिभ्य उणादयो दृश्यन्ते न सर्वाभ्यः?। किं च कारणं प्रायेण समुच्चिता न सर्वे समुच्चिताः?। किं च कारणं कार्याणि सशेषाणि कृतानि न सर्वाणि लक्षणेन परिसमाप्तानि?।**

( प्रदीपः ) किं पुनरिति । यावत्यः प्रकृतयः यावन्तश्च प्रत्ययाः यावन्ति च कार्याणि तावन्त्येव भवन्त्विति प्रश्नः ॥

( उद्द्योतः ) ननु स्वतन्त्राणामृषीणामेवं न्यूनं शास्त्रं कृतमिति पर्यनुयोगोऽयुक्तोऽत आह तावत्येव भवत्विति प्रश्न इति ॥ ननु प्रकृतीनां निर्देशोऽन्नेत्यादि त्वया केन मानेन ज्ञातमिति भाष्याक्षरार्थः ॥

( ३०८९ समाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ नैगमरूढिभवं हि सुसाधु ॥ * ॥**

( भाष्यम् ) नैगमाश्च रूढिभवाश्चौणादिकाः सुसाधवः कथं स्युः ।

( प्रदीपः ) नैगमेति । निगमश्छन्दस्तत्र भवा इत्यणृगयनादिभ्य इत्यण् ॥ रूढिः प्रसिद्धिस्तत्र भवाः संज्ञाशब्दा इत्यर्थः । ते[3] सुष्ठु साधवो यथा स्युरित्येवमर्थमपरिपूर्णत्वं प्रकृत्यादीनामुच्यते । अपरिपूर्णानां हि पूर्णत्वं बहुलग्रहणेन क्रियत इति नैगमरूढिभवानां व्याकरणेस्मिन् व्युत्पादनादसंदिग्धं साधुत्वमवगम्यत इत्यर्थः ॥

( उद्द्योतः ) तदिति । नैगमरूढिभवमित्यर्थः । जातावेकवचनमिति । साधव इत्यनेन नान्वयः । ते सुष्ठ्विति पाठस्तु सम्यगेव ॥ तेस्य[4] चाशेषेण संग्रहोऽशक्यस्तस्य साधुत्वं च सर्वसंमतम्, अतो ज्ञायते—प्रकृतेस्तनुदृष्टेरित्यादीति भाष्यार्थः । सुसाधवः कथं स्युरिति भाष्यस्य—अतो बाहुलकमिति शेषः ॥ ते पाणिनिना बोधितसाधुत्वकाः । कथं स्युरित्यर्थः । पाणिनिना बोधितसाधुत्वमेव सुसाधुत्वम्, संप्रति प्रयोगार्हत्वात् । तदाह—अपरिपूर्णानामिति । सर्वाभ्यः प्रकृतिभ्यः सर्वप्रत्ययानां तत्तद्रूपेण विधानं तु ब्रह्मणापि दुरुपपादमिति भावः ॥

---

१ षहेः षस्येति शेषः । ( र. ना. )

२ 'क्वचित् प्रवृत्तिः, क्वचिदप्रवृत्तिः, क्वचिद् विभाषा, क्वचिदन्यदेव, विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥'

३ 'तद्'इत्येवं पाठो नागेशभट्टैरवलोकितः ।

४ नैगमरूढिभवस्येत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ३०९० वार्तिकम् ॥ ५ ॥ )

॥*॥ नाम च धातुजमाह निरुक्ते ॥ * ॥

(भाष्यम्) नाम खल्वपि धातुजमेवमाहुर्नैरुक्ताः॥

( ३०९१ वार्तिकम् ॥ ६ ॥ )

॥*॥ व्याकरणे शकटस्य च तोकम्॥*॥

( भाष्यम् ) वैयाकरणानां च शाकटायन आह- 'धातुजं नामे'ति ॥

( प्रदीपः ) अन्यैरप्याचार्यैः शब्दानां प्रकृत्यादिविभागेन व्युत्पादनमभ्युपगतमित्याह—नामेति ॥ तोकमित्यपत्यमित्यर्थः ॥

( उद्योतः ) ननु तेषामेवं व्युत्पादनं कैर्वैयाकरणैः कृतमित्याशङ्क्याह—भाष्ये नाम चेत्यादि । तद् व्याचष्टे—नाम खल्वपीति । नाम धातुजमित्येवमाहुर्नैरुक्ता इत्यक्षरार्थः । तदाह—अन्यैरित्यादिना । पाणिनेस्तु तान्यव्युत्पन्नान्येवेति भावः । इदं चायनैर्वीनीतिसूत्रे भाष्ये स्पष्टम् ॥ एवं च कृवापेत्युणादि सूत्राणि शाकटायनस्येति सूचितम् ॥ धातुजं नामेति । निरुक्ते आह—निरुक्तकारः । शाकटायनश्च स्वकृते व्याकरणे आह—धातुजं नामेति भाष्येऽन्वयः ॥

( आक्षेपभाष्यम् )

अथ यस्य विशेषपदार्थो न समुत्थितः कथं तत्र भवितव्यम् ।

( ३०९२ समाधानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥ * ॥

( भाष्यम् ) प्रकृतिं दृष्ट्वा प्रत्यय ऊहितव्यः । प्रत्ययं च दृष्ट्वा प्रकृतिरूहितव्या ॥

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ उणाद्यो ॥ १ ॥

( प्रदीपः ) यन्नेति । पदमर्थः प्रयोजनं यस्य व्युत्पाद्यत्वेन स पदार्थः प्रकृत्यादिविशेषश्चासौ पदार्थस्तस्मात्तन्न समुत्थितं विशिष्टप्रकृतिप्रत्ययोत्पादनेन व्युत्पादितमित्यर्थः ॥ प्रकृतिमिति । प्रसिद्धामर्त्यादिकामित्यर्थः ॥ प्रत्यय इति । फिडादिकः ॥ प्रत्ययं चेति । प्रत्ययत्वेन प्रसिद्धमित्यर्थः ॥ तेन हृषेरुलजिति प्रत्ययं दृष्ट्वा शकि प्रकृतिरूह्यते । तेन सिद्धे शङ्कुलेति ॥

न सर्वत्र ऊहः कर्तव्यः । किं तर्हि साधुत्वेनाभिमतासु संज्ञास्विति प्रदर्शयति—संज्ञास्विति ॥ १ ॥

( उद्योतः ) पदार्थ इत्यत्रार्थशब्दः प्रयोजनवाचीत्याह—अर्थः प्रयोजनमिति ॥ विशेषश्चासाविति । उक्तप्रकृतिप्रत्ययादेर्यन्न समुत्थितं विशिष्टाया उक्तायाः प्रकृतेरुक्तप्रत्ययोत्पादनेन न व्युत्पादितमित्यर्थः ॥ संज्ञासु धातुरूपाणीत्यवतारयति—न सर्वत्रेत्यादि । संज्ञासु प्रसिद्धसंज्ञाशब्देषु ॥ १ ॥

1 'धातुजमेव'।

( भविष्यत्कालाधिकारः )

(५३५ भविष्यति गम्यादीनां साधकसूत्रम् ॥ ३।३।१ आ०२)

# ९६८ भविष्यति गम्यादयः ॥ ३।३।३ ॥

( ३०९३ दूषणवार्तिकम् ॥ १ ॥ )

॥ * ॥ भविष्यतीत्यनद्यतन उपसंख्यानम् ॥ * ॥

( भाष्यम् ) भविष्यतीत्यनद्यतन उपसंख्यानं कर्तव्यम् । श्वो ग्रामं गमी ॥

किं पुनः कारणं न सिध्यति ? ।

लृटायं निर्देशः क्रियते । लृट् चानद्यतने लुटा बाध्यते । तेन लृट एव विषये एते प्रत्ययाः स्युः लुटो विषये न स्युः ।

( प्रदीपः ) भविष्यति ॥ ३ ॥ अनद्यतन इति । भविष्यच्छब्दो भविष्यन्मात्रे वर्तते न तु तद्विशेषेऽनद्यतने तस्य लुड्विषयत्वात् । ततश्च गम्यादयो भविष्यच्छब्दार्थेनव्याख्यायमाना अनद्यतने न सिध्यन्तीति वार्तिकारम्भः ॥

( ३०९४ दूषणान्तरवार्तिकम् ॥ २ ॥ )

॥ * ॥ इतरेतराश्रयं च ॥ * ॥

( भाष्यम् ) इतरेतराश्रयं च भवति । का इतरेतराश्रयता ? । भविष्यत्कालेन अयं निर्देशः क्रियते, निर्देशोत्तरकाला च भविष्यत्कालता । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ॥

( प्रदीपः ) इतरेतराश्रयं चेति । एतद्भूते इत्यत्र व्याख्यातं तत एवावधारणीयम् ।

( ३०९५ समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) किमुक्तम् ? ॥ एवं तावदुक्तम्—*न वाऽपवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम्* इति ॥

( प्रदीपः ) न वेति । विशेषे यत्सामान्यमस्ति तदाश्रयेण गम्यादयः प्रयुज्यन्ते इत्यर्थः । विशेषविवक्षायां चापवादविप्रतिषेधाल्लुडेव भवति श्वो गन्ता ग्राममिति । वासरूपवचनाल्लृडपि भवति । तेन गमिष्यति भविष्यतीत्यादयः प्रयोगा उपपद्यन्ते ।

( उद्योतः ) भविष्यति ग ॥ ३ ॥ विशेष इति । सत्यपि वास्तवे विशेषे तस्याऽविवक्षितत्वात्सामान्यस्यैव विवक्षामाश्रित्य तदा-

२ "आशंसायांभूतवच्च" इति (१११७) सूत्रभाष्ये वार्तिकमिदमिति बोध्यम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्वो गिनिः । अनद्यतनाख्यस्तु विशेषः पश्चात् श्वःशब्दमहिम्ना गम्यते इति भावः ॥ विशेषवीति । प्रथमत एव विशेषविवक्षायामित्यर्थः ॥ अपवादेति । लटो हि द्वावपवादौ गिनिर्लृट् च[1] ॥ नन्वेवं श्वो गमिष्यतीत्यादिप्रयोगानापत्तिर्गिनिना बाधादत आह— वासरूपेति । सामान्यविवक्षायामिति भावः ।

( शेषभाष्यम् )

**अपरमप्युक्तम्—*अव्ययनिर्देशात्सिद्धम्*इति । अव्ययवता शब्देन निर्देशः कर्तव्यः । अवर्तमाने भूत इति ।**

**स तथा निर्देशः कर्तव्यः ।**

**न कर्तव्यः । अव्ययमेष भविष्यतिशब्दः । नैष अवर्तेर्लट् ॥**

**कथमव्ययसंज्ञा ? । "विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा" 'निपातोऽव्ययम्' इत्यव्ययसंज्ञा । अथापि भवतेर्लट्, एवमप्यव्ययमेव । कथम् ? । न व्येतीत्यव्ययमिति । क्व पुनर्न व्येति । एतौ कालविशेषौ भूतवर्तमानौ स्वभावतो भविष्यत्येव वर्तेते ॥**

**यदि तर्हि नव्येतीत्यव्ययमिति ।**

**न वा तद्विधानस्यान्यत्राभावात्* । न वा भविष्यदधिकारेणार्थः ॥ किं कारणम् ? । तद्विधानस्यान्यत्राभावात् । येऽपि ह्येते इत उत्तरं प्रत्ययाः शिष्यन्ते, एतेऽप्येतौ कालविशेषौ न वियन्ति भूतवर्तमानौ स्वभावतो भविष्यत्येव वर्तन्ते ॥**

( समाधानभाष्यम् )

**अत उत्तरं पठति ।**

( ३०९६ वार्तिकम् ॥ ४ ॥ )

**॥ * ॥ भविष्यदधिकारस्य प्रयोजनं यावत्पचति पुरापचतीत्यनपशब्दत्वाय ॥ * ॥**

**भविष्यतिग ॥ ३ ॥**

**( प्रदीपः )** यावत्पचतीति । सति भविष्यदधिकारे भविष्यत्येव यावत्पुराशब्दयोगे लटः साधुत्वं भवति । भविष्यत्कालेन वर्तमानकालस्य बाधनात् । असति भविष्यदधिकारे भूतेपि साधुत्वं लटः स्यात् । शब्दोपात्तकाले विशेषविधानाभावे वर्तमानकालस्य बाधो न स्यात् ॥ ३ ॥

**( उद्द्योतः )** भाष्ये पुरा पचतीत्यनपशब्दत्वायेति । भविष्यत्येवानपशब्दत्वं यथा स्याद्भूते तु नेत्येतदर्थमित्यर्थः । तदाह— सतीति । भविष्यद्भूतयोरसाधुत्वप्राप्तौ भविष्यत्येवानेन साधुत्वं क्रियते न तु भूते । वर्तमानकाले साधुत्वाभावे तु न मानम्, भाष्यादलाभात् । कालस्यानुवाद्यतया तक्रकौण्डिन्यन्यायाप्राप्तेश्च । भविष्यत्कालेन वर्तमानकालस्य बाधनादिति कैयटश्चिन्त्यः ॥ भूतेपीति । भविष्यत्पदाभावे यावदिति सूत्रं यत्र विहितो लट् ततोन्यत्रापि यथा स्यादित्यर्थं स्यात् । एवं च भूतेपि साधुत्वं स्यादिति भावः ॥ दूषणान्तरमाह—शब्दोपात्तेति । अनुवाद्यविषये तक्रकौण्डिन्यन्यायाभावादिदं चिन्त्यम्[3] ॥ ३ ॥

( ५३५ लट्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. ३ )

## ९६९ यावत्पुरानिपातयोर्लट् ॥ ३।३।४ ॥

( ३०९७ वार्तिकम् ॥ १ ॥ )

**॥ * ॥ यावत्पुरादिषु लड्विधिर्लुटः पूर्वविप्रतिषिद्धम् ॥ * ॥**

**( भाष्यम् )** यावत्पुरादिषु लड्विधिर्भवति लुटः पूर्वविप्रतिषेधेन । यावत्पुरानिपातयोर्लड्भवतीत्यस्यावकाशः—यावद्भुङ्क्ते । पुराभुङ्क्ते । लुटोवकाशः श्वः कर्ता श्वोऽध्येता । इहोभयं प्राप्नोति— यावत् श्वो भुङ्क्ते । पुरा श्वो भुङ्क्ते । लड् भवति पूर्वविप्रतिषेधेन ॥

**( उद्द्योतः )** यावत्पुरा ॥ ४ ॥ यावत्पुरादि इति भाष्ये आदिना इत आरभ्य तुमुन्सूत्रपर्यन्तसूत्रसन्दर्भसंग्रहः ॥

( प्रश्नभाष्यम् )[4]

**स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ॥**

( समाधानभाष्यम् )

**न वक्तव्यः । "अनद्यतने लुड्" इत्यत्र "यावत्पुरानिपातयोर्लड्" इत्येतदनुवर्तिष्यते ॥यावत्पुरा॥४॥**

**( उद्द्योतः )** लडित्येतदनुवर्तिष्यते इति । इत्यादिसूत्रसंदर्भोपलक्षणमिदम् ॥ ४ ॥

( ५३६ लट्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ० ४ )

## ९७२ लिप्स्यमानसिद्धौ च ॥ ३।३।७ ॥

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते । न लिप्स्यमानसिद्धिरपि लिप्सैव । तत्र किंवृत्ते लिप्सायामित्येव सिद्धम् ॥**

**( उद्द्योतः )** लिप्स्यमान॥ ७ ॥ भाष्ये न लिप्स्यमानसिद्धिरपि लिप्सैवेति । लिप्साव्याप्यैवेत्यर्थः ॥ एवं च लिप्सायास्तत्रापि गम्यमानत्वमस्त्येवेत्याशयः ॥

---

1 तयोर्विप्रतिषेधाल्लुडेवेति योजना ( र. ना. )

2 अस्य वार्तिकत्वे भाष्यं लेखकप्रमादात्त्रुटितम् भाष्यत्वे वार्तिकं वेति सुधीभिः तु विचार्यम् ॥

3 शब्दोपात्तकालविशेषे विधानाभावे इति पाठः शोभनो भाति । ( र.ना. )

4 इयं नगेशोक्तिरेव चिन्त्या स्वरूपेण कालस्य प्रमाणान्तरप्राप्ततयाऽनुवाद्यत्वेऽपि प्रत्ययसंबन्धित्वेन तस्याप्राप्तत्वेन विधेयत्वसंभवादिति । ( र. ना. )

5 लुटः पूर्वविप्रतिषिद्धं पूर्वविप्रतिषेधोऽस्ति तेन यावत्पुरादिषु लड्विधिरिति योजना । ( र. ना. )

6 अनद्यतने लुडित्यादि सूत्रसंदर्भेत्यर्थः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( समाधानभाष्यम् )

अकिंवृत्तार्थोऽयमारम्भः । यो भवतामोदनं ददाति स स्वर्गं लोकं गच्छति । यो भवतामोदनं दास्यति स स्वर्गं लोकं गमिष्यति ॥ लिप्स्यमा० ॥ ७ ॥

( प्रदीपः ) लिप्स्यमान ॥ ७ ॥ अकिंवृत्तार्थं इति । पूर्वत्र तु किंवृत्तग्रहणं लिप्स्यमानसिद्धिरहितायां लिप्सायामकिंवृत्ते लृड्निवृत्त्यर्थम् ॥ ७ ॥

( उद्द्योतः ) सिद्धिरहितायामिति । भवानच ब्राह्मणानामन्नयिष्यतीत्यादौ ॥ सिद्धिविषयोदाहरणं तु यो भक्तं ददाति स स्वर्गं गच्छतीत्यादौ ॥ ७ ॥

---

( ५३७ तुमुन्ण्वुल्प्रत्ययविधिसूत्रम् ॥ ३।३।१ आ. ५ )

## ९७५ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ ३ । २ । १० ॥

( आक्षेपभाष्यम् )

किमर्थं क्रियायामुपपदे क्रियार्थायां ण्वुल्विधीयते, न अविशेषेण विहितः ण्वुल् । स क्रियायां चोपपदे क्रियार्थायामन्यत्र च भविष्यति ॥

( समाधानभाष्यम् )

ण्वुलि सकर्मकग्रहणं चोदितम् । अकर्मकार्थोऽयमारम्भः । आसको व्रजति । शायको व्रजतीति ॥

( समाधानबाधकभाष्यम् )

प्रत्याख्यातं तत् *न वा धातुमात्राद्दर्शनाद् ण्वुलः* इति ॥

( समाधानान्तरभाष्यम् )

एवं तर्हि तृजादिषु वर्तमानकालोपादानं चोदितम् । अवर्तमानकालार्थोऽयमारम्भः ॥

( समाधानबाधकभाष्यम् )

तदपि प्रत्याख्यातम्—*न वा कालमात्रे दर्शनादन्येषाम्* इति ॥

( प्रयोजनान्तरभाष्यम् )

इदं तर्हि प्रयोजनम्—"अकेनोर्भविष्यदाधमर्ण्ययोः" इत्यत्र षष्ठ्याः प्रतिषेध उक्तः । स यथा स्यात् ।

( प्रदीपः ) तुमुन् ॥ १० ॥ अकेनोरिति । सति भविष्यत्काले ण्वुल्विधौ तदनुवादेन षष्ठीनिषेधो विधातुं शक्यते नान्यथेति भावः ॥

( उद्द्योतः ) तुमुन्ण्वु ॥ १० ॥ भाष्ये—इत्यत्र षष्ठ्या इति । अत्र सूत्रे, अकस्य भविष्यतीत्यन्वाख्यानवार्तिके चेत्यर्थः ॥ ननु सामान्यण्वुल्येवायं निषेधोऽस्त्वत आह—सतीति । तदनुवादेन विहितो हि तदर्थको भवतीत्यर्थः ।

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । य एवासावविशेषेण विहितः स यदा भविष्यति[2] तदास्य प्रतिषेधो भविष्यति ।

( उद्द्योतः ) भाष्ये य एवासाविति । भविष्यत्क्रियावाचकप्रकृतिकत्वमेव ण्वुलि भविष्यत्त्वमिति भावः ।

( प्रयोजनभाष्यम् )

एवं तर्हि भविष्यदधिकारविहितस्य प्रतिषेधो यथा स्यात् । इह माभूत्—अङ्ग यजतां लप्स्यन्तेऽस्य याजकाः=य एनं याजयिष्यन्तीति ।

( प्रदीपः ) लप्स्यन्तेऽस्येति । याजकशब्दो भविष्यति वर्तते यस्मात्तं तं याजयिष्यन्ति न तु ते याजितवन्तः तत्र भविष्यदधिकारविधानाभावादस्येति षष्ठी न प्रतिषिध्यते—अस्य याजका इति । एतद्याचष्टे—य एनमिति ।

( प्रयोजननिरासभाष्यम् )

नैष भविष्यत्कालः ॥ कस्तर्हि ? । भूतकालः ॥

कथं तर्हि भविष्यत्कालता गम्यते ? ।

"धातुसंबन्धे प्रत्ययाः" इति ॥

( प्रदीपः ) कस्तर्हि ? भूतकाल इति । शब्दशक्तिस्वाभाव्याद्याजकशब्दस्य भूतकालविषयत्वमिति भावः ॥ धातुसंबन्ध इति । याजकत्वस्यैव भविष्यत्त्वं प्रतीयत इत्यर्थः ॥

( उद्द्योतः ) धातुसंबन्ध इति । लप्स्यन्त इति धात्वर्थसंबन्धोऽत्रेति भावः । न च धातुसंबन्ध इत्यनेनापि कालान्तरे प्रत्यया विधीयन्त इत्यस्यापि भविष्यत्कालत्वमस्त्येवेति वाच्यम् । धातुसंबन्धे इत्यादिना तत्प्रत्याख्यानप्रकारस्मरणेनादोषात् ॥ याजका इत्यस्य तथा व्यवहरिष्यमाणा इत्यर्थात् । तदाह—याजकत्वस्यैवेति । तद्व्यवहारस्यैवेत्यर्थः ।

( आक्षेपभाष्यम् )

यस्तर्हि न धातुसंबन्धः । इमेऽस्य याजकाः । इमेऽस्य लावका इति ॥

( उद्द्योतः ) भाष्ये यस्तर्हीति । तत्र लक्षणायां न प्रमाणमिति तत्र शब्दार्थे एव भविष्यत्त्वमिति भावः ॥

( समाधानभाष्यम् )

एषोऽपि भूतकालः ॥

कथं तर्हि भविष्यत्कालता गम्यते ? ।

संबन्धात् । स च तावत्तैरयाजितो भवति । तस्य च तावत्तैर्यवा अलूना भवन्ति । उच्यते च ॥

( प्रदीपः ) संबन्धादिति । भावियाजकत्वादिकमारोप्य तथाभिधानादित्यर्थः ।

( उद्द्योतः ) तत्रापि प्रकरणाल्लक्षणेत्युत्तरम् ॥ संबन्धशब्देन प्रकरणमुच्यत इत्याह—स च तावदिति ॥ भावियाजकत्वादि-

---

[1] भवतां मध्ये यो मह्यमोदनं ददाति स स्वर्गं लोकं गच्छतीति योजना । ( र. ना. )

[2] अर्थे इति शेषः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

कमारोप्येति। तद्व्यवहारमित्यर्थः॥ ओदनं भोजको व्रजतीत्यादौ च भविष्यत्त्वेनैव धात्वर्थप्रतीतेर्निषेधसिद्धिरिति भावः।

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—अयं क्रियायामुपपदे क्रियार्थायां तुमुन् विधीयते। स विशेषविहितः सामान्यविहितं ण्वुलं बाधेत॥

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम्। भावे तुमुन्विधीयते कर्तरि ण्वुल्। तत्र कः प्रसङ्गो यद्भावे विहितस्तुमुन्कर्तरि विहितं ण्वुलं बाधेत॥

( प्रयोजनभाष्यम् )

लृट् तर्हि बाधेत॥

( प्रयोजननिराकरणभाष्यम् )

वासरूपेण ण्वुलपि भविष्यति॥

( ३०९८ वार्तिकावतरणसमाधानभाष्यम्॥ १॥ )

अत उत्तरं पठति—

( ३०९९ समाधानवार्तिकम्॥ २॥ )

## ॥ * ॥ ण्वुलः क्रियार्थोपपदस्य[1] पुनर्विधानं तृजादिप्रतिषेधार्थम्॥ * ॥

( भाष्यम् ) ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं क्रियते। [ किमर्थम्? ] ज्ञापकार्थम्॥ किं ज्ञाप्यम्?। एतज्ज्ञापयत्याचार्यः—'क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ति' इति। ण्वुलपि तृजादिः॥ तुमुन्ण्वुलौ॥ १०॥

( प्रदीपः ) तृजादिप्रतिषेधार्थमिति। तेन कर्ता व्रजति विक्षिपो व्रजतीत्यादि न प्रयुज्यत इत्यर्थः॥ १०॥

( उद्द्योतः ) कर्ता व्रजतीति। करिष्यामीति व्रजतीत्यर्थं इत्यर्थः॥ १०॥

---

( ५३८ भावार्थकप्रत्ययविधिसूत्रम्॥ ३। ३। १ आ. ६ )

## ९७६ भाववचनाश्च॥ ३। ३। ११॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते, न अविशेषेण भावे ये प्रत्यया विहितास्ते क्रियायामुपपदे क्रियार्थायाम् अन्यत्र च भविष्यन्ति॥

( समाधानवार्तिकावतरणभाष्यम्॥ )

अत उत्तरं पठति—

( ४००० वार्तिकम्॥ १॥ )

## ॥ * ॥ भाववचनानां यथाविहितानां प्रतिपदविध्यर्थम्॥ * ॥

( भाष्यम् ) भाववचनानां च यथाविहितानां प्रतिपदविध्यर्थोऽयमारम्भः।

इदानीमेव ह्युक्तं क्रियार्थायां वाऽसरूपेण तृजादयो न भवन्तीति। भाववचनाश्चापि तृजादयः॥

( प्रदीपः ) भावव॥ ११॥ प्रतिपदविध्यर्थमिति। ज्ञापकेन निराकृतानां पुनः प्रतिपदं साक्षाद्विधानार्थो योग इत्यर्थः॥

( उद्द्योतः ) भाववचनाश्च॥ ११॥ ज्ञापकेनेति। यद्यपि तुमुल्लडर्थो भावोऽसत्वभूतः, घञादिवाच्यस्तु सत्वभूत इति तुमर्थे से से इति सूत्रे भाष्यकैयटयोरुक्तत्वेन तेषां कथं तुमा लटा वा बाधः। तथापि अवान्तरविशेषाविवक्षया भाष्यं बोध्यम्। एकदेश्युक्तिर्वा इदं भाष्यम्॥

अस्ति प्रयोजनमेतत्।

किं तर्हीति।

( ४००१ वार्तिकम्॥ १॥ )

## ॥ * ॥ यथाविहिता इति तु॥ * ॥

( भाष्यम् ) यथाविहिता इति तु वक्तव्यम्। किं प्रयोजनम्?। [ इह[2] ] याभ्यः प्रकृतिभ्यो येन विशेषेण भावे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषेण क्रियायामुपपदे क्रियार्थायां यथा स्युः। व्यतिकरो मा भूदिति।

( प्रदीपः ) यथाविहिता इति। येन प्रकारेण विहिता यथाविहिता इत्यसमस्तं पदद्वयम्। अथ वा यथाविहितं विधानं येषां ते यथाविहिता इति बहुव्रीहिः। अव्ययीभावे तु यथाविहितमिति स्यात्।

( उद्द्योतः ) यथाविहिता इति। सादृश्यद्योतकत्वान्नाव्ययीभावः॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम्॥

( समाधानभाष्यम् )

न वक्तव्यम्। इह भावे प्रत्यया भवन्तीतीयता सिद्धम्। सोयमेवं सिद्धे सति यद्वचनग्रहणं करोति। तस्यैतत्प्रयोजनम्—वाचका यथा स्युरिति। यदि च याभ्यः प्रकृतिभ्यः येन विशेषेण भावे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेन विशेषेण क्रियायामुपपदे क्रियार्थायामपि भवन्ति ततोमी वाचकाः कृताः स्युः। अथ हि धातुमात्राद् वा स्युः, प्रत्य-

---

[1] क्रियार्थोपपदस्येति, ण्वुल इति च व्यधिकरणे षष्ठ्यौ। क्रियार्थोपपदसंबन्धिनो ण्वुल इत्यर्थः। ( र.ना. )

[2] क चिन्तोपलभ्यते॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यमात्रं वा स्यात्, ततो नामी वाचकाः कृताः स्युः ॥ भाववचनाश्च ॥ ११ ॥

( प्रदीपः ) वचनग्रहणमिति । वचनग्रहणेन लोकप्रसिद्धं वाचकत्वमवगम्यत इत्यसामञ्जस्यं न भवति ॥ ११ ॥

( उद्योतः ) लोकप्रसिद्धमिति । यथाविधानं विहितानामेव तथा वाचकत्वमिति भावः ॥ ११ ॥

( ५३९ अण्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. ७ )

## ९७७ अण् कर्मणि च ॥ ३ । २ । १२ ॥

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते, न 'अविशेषेण "कर्मण्यण्" इत्यण्विहितः । स क्रियायामुपपदे क्रियार्थायाम्' अन्यत्र च भविष्यति ।**

( ४००२ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् ) **अणः पुनर्वचनं क्रियते अपवादविषयेऽनिवृत्तिर्यथा स्यात् । गोदायो व्रजति कम्बलदायो व्रजतीति ॥**

( आक्षेपभाष्यम् )

**किमुच्यते—अपवादविषये अनिवृत्त्यर्थमिति, न पुनरुत्सर्गविषये प्रतिपदविध्यर्थं स्यात् ॥**

**इदानीमेव ह्युक्तम्—क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति । अण् चापि तृजादिः ॥**

( समाधानभाष्यम् )

**एवं तर्ह्युभयमनेन क्रियते । अपवादविषये चानिवृत्तिः । उत्सर्गविषये च प्रतिपदविधिः ॥**

**कथं पुनरेकेन यत्नेनोभयं लभ्यम् ? ।**

**लभ्यमित्याह । कथम् ? । कर्मग्रहणसामर्थ्यात् ॥ कथं पुनरन्तरेण कर्मग्रहणं कर्मण्यण् लभ्यः ? ॥**

( प्रदीपः ) अण् कर्म ॥ १२ ॥ कथं पुनरिति । अपूर्वविधानात्प्रतिप्रसवस्य लाघवादुत्सर्गविषय एव ण्वुलं बाधित्वाण् स्यात् । काण्डलावो व्रजतीति । तथा चापवादविषये न स्यादिति प्रश्नः ॥

( उद्योतः ) अण् कर्म ॥ १२ ॥ प्रतिप्रसवस्य लाघवादिति । काण्डलावादौ वासरूपेण ण्वुला बाधितस्याप्यणः प्राप्त्या तृजादयो वासरूपेण न भवन्तीति निषेधनिवृत्तिमात्रेण प्रतिप्रसवत्वं, सिद्धानुवादेन च तन्निषेधनिवृत्तिः । अत एवापूर्वविध्यपेक्षया लाघवम् । अपवादकादिविषये तु परत्वाण्ण्वुलेव स्यात्, नत्वण् ॥ न च परत्वादणूकादीनामपि बाधकः, अपूर्वविधित्वापत्तेरिति भावः ॥

( समाधानभाष्यम् )

**वचनग्रहणमपि प्रकृतमनुवर्तते ।**

( प्रदीपः ) वचनग्रहणमपीति । ततश्च वचनग्रहणात्कर्मण्येवोपपदेऽणि सिद्धे पुनः कर्मग्रहणं कर्ममात्रपरिग्रहार्थमित्यपवादविषयेऽप्यण् सिद्धो भवतीत्यर्थः ॥

( उद्योतः ) ततश्चेति । अण्वचनो वाचको भवतीत्यर्थे कर्मण्युपपद एव तस्य वाचकत्वमिति भावः ॥ कर्ममात्रेति । एवं च तत्सामर्थ्यात्परत्वेनापवादकादिविषयेऽपि प्रतिप्रसवविधित्वमस्येति भावः ॥

**अस्ति प्रयोजनमेतत् ।**

**किं तर्हीति ।**

( ४००३ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अपर्यायेणेति तु ॥ * ॥

( भाष्यम् ) **अपर्यायेणेति तु वक्तव्यम् । कदाचिद्धि कर्मणि स्यात् कदाचित् क्रियायामुपपदे क्रियार्थायामिति ॥**

( प्रश्नभाष्यम् )

**तत्तर्हि वक्तव्यम् ? ।**

( समाधानभाष्यम् )

**न वक्तव्यम् । चेन संनियोगः करिष्यते—'अण् कर्मणि च' ॥ किं च ? । अन्यत्='क्रियायामुपपदे क्रियार्थायामिति ॥**

( प्रदीपः ) कदाचिदिति । वचनं तु भविष्यति कालेऽपवादबाधनार्थं स्यादिति भावः ॥

( उद्योतः ) ननु क्रियार्थोपपदेविधानार्थम्, 'अण्'इत्येवास्तु कर्मग्रहणं व्यर्थं केवलकर्मोपपदे सामान्यसूत्रेण 'कर्मण्य'णित्यनेनैव सिद्धेरत आह—वचनं त्विति । कर्मग्रहणं त्वित्यर्थः ॥ भविष्यति काले क्रियार्थोपपदेऽसत्यपि कम्बलदाय इत्यादौ कादिबाधनार्थमेवं स्यादिति भावः ॥

( दूषणभाष्यम् )

**एवमपि प्रत्येकमुपपदसंज्ञा न प्राप्नोति ॥**

(प्रदीपः) एवमपीति । ततश्च काण्डलावो व्रजतीति केवलस्य कर्मण उपपदसंज्ञाया अभावात्समासो न प्राप्नोतीति भावः ॥

( समाधानभाष्यम् )

**चेनैव संनियोगः करिष्यते । "प्रत्येकं च वाक्यपरिसमाप्तिर्दृष्टेति प्रत्येकमुपपदसंज्ञा भविष्यति ॥ अण् कर्मणि" ॥ १२ ॥**

( प्रदीपः ) प्रत्येकं चेति । कर्मणि क्रियायामिति पृथक्सप्तमीनिर्देशात्प्रत्येकमुपपदसंज्ञा भवति निमित्तसद्भावादित्यर्थः ॥

( उद्योतः ) भाष्ये चेनैवेति । उपपदसंज्ञयोरपि समुच्चय[1] इति भावः ॥ युक्त्यन्तरमाह—प्रत्येकं चेति । तद्व्याचष्टे—कर्मणीति ॥ १२ ॥

[1] चकारेण समुच्चयो बोधिष्यत इत्यर्थः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ५४० लृड्विधिसूत्रम् ॥ ३ । ३ । १ आ० ८ )

## ९७८ लृट् शेषे च ॥ ३ । २ । १३ ॥

( आक्षेपभाष्यम् )

**शेषग्रहणं किमर्थम् ?।**

( प्रदीपः ) लृट् शेषे च ॥ १३ ॥ शेषग्रहणमिति । क्रियायां क्रियार्थायामिति निवर्तिष्यत इति भावः ॥

( उद्द्योतः ) लृट् शे ॥ १३ ॥ क्रियायामिति । तन्निवृत्त्यैवोभयत्र सिद्धिरिति भावः ॥

( ४००४ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ लृटि शेषवचनं क्रियायां प्रतिपद्विध्यर्थम् ॥ * ॥

( भाष्यम् ) लृटि शेषवचनं क्रियते क्रियायां प्रतिपद्विधिर्यथा स्यात् ॥

( ४००५ हेतुवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अविशेषेण विधाने लृटोऽभावः प्रतिषिद्धत्वात् ॥ * ॥

( भाष्यम् ) अविशेषेण हि विधाने सति लृटोऽभावः स्यात् । करिष्यामीति व्रजति ॥ किं कारणम् ? । प्रतिषिद्धत्वात् । इदानीमेव ह्युक्तं क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति । लृट्चापि तृजादिः ॥

**अस्ति प्रयोजनमेतत् । किं तर्हीति ।**

( प्रदीपः ) लृटीति । अयं भावः । लृडित्येतावत्युच्यमाने करिष्यतीत्यादावेव स्यात् करिष्यामीति व्रजतीत्यादौ ण्वुला बाधितत्वान्न स्यात् । शेषग्रहणात्तु क्रियायां क्रियार्थायामित्यस्य संनिधिरनुमीयते इति तत्रापि लृट् सिध्यति शेषे च विषये ॥

( उद्द्योतः ) ण्वुला बाधितत्वादिति । वासरूपन्यायाभावस्य ज्ञापनात् । वासरूपन्यायेन लृडिति हरदत्तस्तु चिन्त्य एव ॥ शेषग्रहणादिति । तत्सामर्थ्याद्योगविभाग इति भावः । सूत्रपाठस्तु 'च'रहित इति तात्पर्यम् । अन्यथा शेषवचनं क्रियार्थक्रियायां प्रतिपद्विध्यर्थमिति भाष्यासंगतिः । चकारसहितस्यायमर्थो न शेषग्रहणस्येति स्पष्टमेव ॥

( पूर्वपक्षभाष्यम् )

**साधीयस्तु खलु शेषग्रहणेन क्रियार्थोपपदाल्लृण्निर्भज्यते । किं कारणम् । अक्रियार्थोपपदत्वात् । शेष इत्युच्यते । शेषश्च कः । यदन्यत् क्रियायाः क्रियार्थायाः ।**

( प्रदीपः ) साधीयस्त्विति । विपर्ययसाधनं प्रत्युत शेषग्रहणमिति भावः ॥

( उद्द्योतः ) ननु तत्सामर्थ्यात्क्रियोपपदेनैलेव कल्पना स्यादिति मत्वा शङ्कते—साधीयस्त्वित्यादि । भाष्ये निर्भज्यते । विभज्यत इत्यर्थः ॥ अक्रियार्थोपपदत्वादिति । क्रियार्थोपपदभिन्नोपपदार्थकत्वादित्यर्थः ॥

( पूर्वोक्तसमाधानवार्तिकाशयप्रदर्शकसमाधानभाष्यम् )

**एवं तर्हि—**

( ४००६ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ लृटि शेषवचनं क्रियायां प्रतिपदविध्यर्थम् ॥ * ॥

( भाष्यम् ) लृटि शेषवचनं क्रियते क्रियायां प्रतिपदविधिर्यथा स्यात् । लृट् शेषे च । करिष्यति हरिष्यतीति । क्व च । क्रियायामुपपदे क्रियार्थायामिति ॥

( प्रदीपः ) एवं तर्हीति । चशब्दसहिताच्छेषग्रहणात् क्रियायामप्युपपदे लृट् सिध्यतीति वार्तिककारस्याशय इत्यर्थः ।

( उद्द्योतः ) स्वाशयं प्रकटयति—एवं तर्हीति । च घटितः पाठः कर्तव्य इति भावः ॥ वार्तिककारस्येति । तेन वार्तिककृत्कृतोऽयं चशब्दघटितो न्यास इति सूचितम् ॥

( प्रश्नभाष्यम् )

**स तर्हि चकारः कर्तव्यः ॥**

( समाधानभाष्यम् )

**न कर्तव्यः । कथम् ? । इह 'लृड् भवति' इतीयता सिद्धम् । सोयमेवं सिद्धे सति यत् शेषग्रहणं करोति तस्यैतत्प्रयोजनम्—योगाङ्गं यथा विज्ञायेत । सति च योगाङ्गे योगविभागः करिष्यते—"लृट्" लृट् भवति क्रियायामुपपदे क्रियार्थायामिति । ततः "शेषे" । शेषे च लृड् भवति इति ॥ लृट् शेषे च ॥ १३ ॥**

( प्रदीपः ) इदानीं योगविभागाश्रयणेन चकारं प्रत्याख्यातुमाह—स तर्हीति ॥ १३ ॥

( उद्द्योतः ) चकारं वार्तिककृदुक्तम् ॥ १३ ॥



१ क्रियार्थायां क्रियायामुपपदे लृड्विधिः प्रतिपदविधिर्यथास्यादित्यर्थः । ( र. ना. )

२ चकारसाहित्येऽपि शेषग्रहणस्य प्राधान्येनैतदर्थकत्वान्न तद्भाष्यासंगतिरिति वयम् । ( र. ना. )

३ क्रियार्थोपपदभिन्नोपपदाद् विधीयमानत्वेनेत्यादौ शेषः । ( र. ना. )

४ शेषग्रहणसामर्थ्यादित्यर्थः । ( र. ना. )

५ शेषग्रहणस्येति शेषः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ५४१ लृटः सदादेशविधिसूत्रम् ॥ ३ । ३ । १ आ. ९ )

## ९८९ लृटः सद्वा ॥ ३ । २ । १४ ॥

( ४००७ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सद्विधिर्नित्यमप्रथमा- समानाधिकरणे ॥ * ॥

( भाष्यम् ) सद्विधिरप्रथमासमानाधिकरणे नित्यमिति वक्तव्यम् । पक्ष्यन्तं पश्य पक्ष्यमाणं पश्य । क्व तर्हीदानीं विभाषा ? ।

प्रथमासमानाधिकरणे । पक्ष्यन्पक्ष्यति । पक्ष्यमाणः पक्ष्यते ॥

( प्रदीपः ) लृटः सद्वा ॥ १४ ॥ सद्विधिरिति । अप्रथमासमानाधिकरणग्रहणमुपलक्षणं सूत्रोपात्तानामर्थानामिति संबोधनं लक्षणं हेतुश्च क्रियाया गृह्यते ॥ १४ ॥

( उद्द्योतः ) लृटः सद्वा ॥ १४ ॥ सूत्रोपात्तानामिति । इदं च वृत्त्यादिव्यवहारात्प्रयोगबलाच्चावसेयम् ॥ १४ ॥



( ५४२ लुड्विधिसूत्रम् ॥ ३ । ३ । १ आ. १० )

## ९९० अनद्यतने लुट् ॥ ३ । २ । १५ ॥

( ४००८ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ योगविभागः ॥ * ॥

( भाष्यम् ) योगविभागः कर्तव्यः—"अनद्यतने"। अनद्यतने लृटः सत्संज्ञौ भवतः । श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन । ततः "लुट्"। लुट् च भवत्यनद्यतने । श्वः कर्ता । श्वोऽध्येता ।

केन विहितस्यानद्यतने लृटः सत्संज्ञाबुच्येते ॥

एतदेव ज्ञापयति—'भवत्यनद्यतने लृड्' इति । यदयमनद्यतने लृटः सत्संज्ञौ शास्ति ॥ एवं च कृत्वा सोऽप्यदोषो भवति । यदुक्तं "भविष्यतीत्यनद्यतन उपसंख्यानम्" इति ।

( प्रदीपः ) अनद्य ॥ १५ ॥ एवं चेति । भविष्यच्छब्दस्यानद्यतनेऽपि वर्तनात्तन्त्रेण एकशेषेण वा द्वयोर्भविष्यच्छब्दयोर्निर्देशादिति भावः ॥

( उद्द्योतः ) अनद्यतने ॥ १५ ॥ अनद्यतनेपीति । लृट्शेषे इति सूत्रेण केवलं भविष्यति ज्ञापकेन अनद्यतने भविष्यतीत्यर्थः ॥ तत्रान्यतरनिर्देशेऽन्यतरस्यिग्रहसादत आह—तन्त्रेणेति । एकशेषेणेति । विभक्त्यन्तैकशेषेणेत्यर्थः॥ एतच्च ज्ञापकं सद्विषयलृट एवेति तिङ्विषयलृटोऽनद्यतनेऽसाधुत्वमेवेति केचित् । सामान्यत एव ज्ञापकमित्यन्ये ॥

( ४००९ वार्तिकम् ॥ ३ ॥ )

### ॥*॥ परिदेवने श्वस्तनीभविष्यन्त्यर्थे ॥*॥

( भाष्यम् ) परिदेवने श्वस्तनीभविष्यन्त्या अर्थे इति वक्तव्यम् । इयं तु कदा गन्ता यैवं पादौ निदधाति । अयं तु कदाध्येता य एवमनभियुक्त इति ।

( प्रदीपः ) भविष्यन्त्यर्थ इति । भविष्यन्तीशब्देन पूर्वाचार्यसंज्ञया लृङुच्यते ॥

( उद्द्योतः ) भाष्ये परिदेवनमनुशोचनम् ॥ श्वस्तनीति लुटः संज्ञा । भविष्यन्त्यर्थे लृडर्थे भविष्यत्सामान्ये इत्यर्थः ॥ यैवमिति । विलम्बितम् ॥ अनभियुक्तः । अभ्यासहीनः ॥ अनद्यतनविषयमेतत्प्रयोगद्वयम् ॥ १५ ॥

( ४०१० वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कालप्रकर्षात्तूपमानम् ॥ * ॥

( भाष्यम् ) कालप्रकर्षात्तूपमानं भविष्यति । गन्तेवेयं गन्ता नेयं गमिष्यति । अध्येतेवायमध्येता नायमध्येष्यते ॥

न वै तिङन्तेनोपमानमस्ति ।

( भाष्यम् ) एवं तर्ह्यनद्यतन इवानद्यतन इति ॥[1] अनद्यतने ॥ १५ ॥

( प्रदीपः ) अनद्यतन इति । प्रयोगदर्शनवशाच्च गौणेऽप्यनद्यतने प्रत्ययो भवति ।

( घञ्प्रत्ययाधिकारः )



( ५४२ घञ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. ११ )

## ९९१ पदरुजविशस्पृशो घञ् ॥३।२।१६॥

( ४०११ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ स्पृश उपतापे ॥ * ॥

( भाष्यम् ) स्पृश उपतापे इति वक्तव्यम् । इह मा भूत्—कम्बलस्पर्श इति । पदरु ॥ १६ ॥

( प्रदीपः ) पदरुज ॥ १६ ॥ स्पृश उपताप इति । उपतापो रोगः । स्पर्शो नाम व्याधिविशेषः ॥ अन्यत्र पचाद्यच् भवति । स्वरे विशेषः ॥ १६ ॥

( उद्द्योतः ) पदरुज ॥ १६ ॥ स्पर्शो नामेत्युदाहरणम् ॥ अन्यत्र व्याध्यतिरिक्ते ॥ १६ ॥



( ५४३ घञ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. १२ )

## ९९२ सृ स्थिरे ॥ ३ । २ । १७ ॥

( ४०१२ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ व्याधिमत्स्यबलेषु ॥ * ॥

( भाष्यम् ) व्याधिमत्स्यबलेष्विति वक्तव्यम् । अतिसारो व्याधिः । विसारो मत्स्यः । बले—शालसारः । खदिरसारः ॥ स्रुस्थिरे ॥ १७ ॥

---

१ अनद्यतन इवेतीति पाठो भाति । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( प्रदीपः ) सुस्थिरे ॥ १७ ॥ स्थिरः कालान्तरस्य प्रापकोर्थं उच्यते ॥ व्याधीति । अस्थिरार्थं वचनम् ॥ १७ ॥

( उद्द्योतः ) सुस्थिरे ॥ १७ ॥ कालान्तरस्य प्रापक इति । प्राप्तिमानित्यर्थः । कालान्तरस्थायीति यावत् ॥ अस्थिरार्थमिति । विसारो मत्स्य इत्यत्रैकदेशस्यस्य कालान्तराप्राप्त्याऽस्थिरत्वम् ॥ वलं दृढांशः ॥ सारो वलमित्यपि शरीरे दृढशुक्रांशस्यैव वलपदार्थत्वादुपपन्नम् न्यायस्यापि दृढत्वादेव तत्रापि सारशब्दः सिद्धः । एवं श्रेष्ठेऽपि ॥ खदिरसारादौ कैयटोक्तस्थिरत्वाभावश्चिन्त्यः । तस्मात्सूत्रस्यैव विषयपरिगणनमिदम् । त्रिष्वेकरूपास्थिरत्वस्य कैयटोक्तस्थिरत्वप्रतिद्वन्द्विनो निरूपयितुमशक्यत्वाच्चेत्यन्ये ॥ १७ ॥

(५४४अधिकारसूत्रम् घञ्प्रत्ययविधिसूत्रम्॥३।३।१आ.१३)

## ९९३ भावे ॥ ३ । ३ । १८ ॥

( ५४५ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥[1] * ॥ भावे सर्वलिङ्गो निर्देशः ॥ * ॥

( भाष्यम् ) भावे सर्वलिङ्गो निर्देशः कर्तव्यः— भूतौ, भवने, भावे, इति ॥ किं प्रयोजनम् ? । सर्वलिङ्गे भावे एते प्रत्यया यथा स्युरिति ॥

किं पुनः कारणं न सिध्यति ? ।

पुल्लिङ्गेनायं निर्देशः क्रियते, एकवचनान्तेन च । तेन पुल्लिङ्गे एव भावे एकवचने चैते प्रत्ययाः स्युः । स्त्रीनपुंसकयोर्द्विवचनबहुवचनयोश्च न स्युः ॥

( प्रदीपः ) भावे ॥ १८ ॥ सर्वलिङ्ग इति । लिङ्गस्योपलक्षणार्थत्वात्सर्वसंख्य इत्यपि बोद्धव्यम् ॥ पुल्लिङ्गेनेति । ततश्च शब्देन योर्थः प्रतिपाद्यते यल्लिङ्गसंख्यायुक्तस्तस्यैवाभिधायकेन भाव्यमिति स्त्रियां भाव इति सामानाधिकरण्येन संबन्धस्यासंभवात् स्त्रियामकर्तरि कारके क्तिन्प्रत्ययः स्यात् । भावे तु पुंसि । एवं नपुंसके भावे क्त इत्यत्राकर्तरि च कारके इत्यस्य निवृत्तत्वान्नपुंसके कर्तरि क्तः स्यात् । भावे तु पुंसि । द्वित्वबहुत्वयोश्च पाकौ पाका इत्यादौ प्रत्यया न स्युरित्यर्थः ॥

( उद्द्योतः ) भावे ॥ १८ ॥ ततश्च शब्देनेति । भाव इतिशब्देनेत्यर्थः ॥ योऽर्थः । सिद्धावस्थः ॥ नन्वेवं स्त्रियां क्तिन्नित्यत्रासंगतिरत आह—स्त्रियां भाव इति ॥ नन्वेवमपि नपुंसके भाव इत्यसंगतं स्यात्तत्रार्थान्तरानुवृत्त्यभावादत आह—एवमिति ॥ कर्तरीति । कर्तरि कृदित्यनेन लब्ध इत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

नात्र निर्देशस्तन्त्रम् ॥

( प्रदीपः ) नात्रेति । सत्त्वभूतोर्थो विना लिङ्गं संख्यां च न निर्देष्टुं शक्यत इति तयोः शब्देनोपादानम् । शब्दसंस्कारमात्रमेव तु तदुपादाने प्रयोजनमित्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

कथं पुनस्तेनैवं[2] च नाम निर्देशः क्रियते । तच्चातन्त्रं स्यात् । तत्कारी च भवांस्तद् द्वेषी च ॥

( आक्षेपबाधकभाष्यम् )

नान्तरीयकत्वादत्र पुल्लिङ्गेन निर्देशः क्रियते, एकवचनेन च । अवश्यं कया चिद्विभक्त्या केन चिल्लिङ्गेन निर्देशः कर्तव्यः । तद्यथा कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति, नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । तथा कश्चिन्मांसार्थी मत्स्यान्सशकला[3]न्सकण्टकानाहरति, नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वात्पुल्लिङ्गेन निर्देशः क्रियते एकवचनान्तेन च । न ह्यत्र निर्देशस्तन्त्रम् । कया चिद्विभक्त्या केनचिच्च लिङ्गेन निर्देशः कर्तव्यः ॥

( प्रदीपः ) नान्तरीयकत्वादिति । अन्तरशब्दो गहादिषु पठ्यते, स च विनार्थे वर्तते । अन्तरे भवं अन्तरीयं तत्र नञ्समासे कृते पृषोदरादित्वाद्भाष्यकारवचनप्रामाण्याद्वा नलोपाभावः । ततः स्वार्थे कन्प्रत्ययः ॥ तुषपलालानीति । तुषसहितानि पलालानीत्युत्तरपदलोपी समासः । द्वन्द्वे तु जातिरप्राणिनामित्येकवद्भावप्रसङ्गः ॥ एवं शकलकण्टकानीति बोद्धव्यम् । कण्टकशब्दश्चोभयलिङ्गः ॥ एवमिहापीति । प्रयोगमूलत्वाद्व्याकरणस्मृतेः प्रयोगे च सर्वलिङ्गसंख्ये भावे प्रत्ययानां दर्शनादिह च लिङ्गसंख्ययोरविवक्षेत्यर्थः ॥

( उद्द्योतः ) लिङ्गसङ्ख्ययोर्नान्तरीयकत्वमुपपादयति—सत्त्वेति । प्रातिपदिकमात्रं निर्दिश्यतामिति वदन्तं प्रत्याह—शब्देति । न केवला प्रकृतिरिति निषेधादिति भावः ॥

भाष्ये कयाचिद्विभक्त्येति । सङ्ख्ययेत्यर्थः ॥ विनार्थे इति । एवं च यद्विना यन्न भवति तन्नान्तरीयकमित्यर्थः ॥ भाष्यकारवचनप्रामाण्याद्वेति । वा शब्दो हेतौ । ततो हेतोः पृषोदरादित्वमित्यर्थः ॥ न लोपाभाव इति । निषेधार्थकोऽननुबन्धको नशब्दो नास्त्येवेति भावः ॥ ननु कण्टकस्य पुंस्त्वात्कण्टकानीत्यनुपपन्नमत आह—कण्टकशब्दश्चेति । अर्द्धर्चादित्वादिति भावः ॥ प्रयोगमूलत्वादिति । अनुवादगतत्वादविवक्षेति तत्त्वम् । नह्यत्रेति भाष्यस्यात्रानुवादे इत्यर्थः ॥

( आक्षेपबाधकयुक्त्यन्तरभाष्यम् )

अथ वा कृभ्वस्तयः क्रियासामान्यवाचिनः, क्रियाविशेषवाचिनः पचादयः । यच्चात्र पचतेर्भवति भवति, न तद् भवतेः पचतिर्भवति । यच्च[4] भवतेः पचतिर्भवति, न तत् पचतेर्भवतिर्भवति ॥

[1] कालैकदेशस्थस्येत्यर्थः । ( र. ना. )।
[2] लिङ्गेन संख्यया चेत्यर्थः ( र. ना. )
[3] शकलमत्र मत्स्यत्वगभिमेता । सशल्कानिति पाठो भाति । ( र. ना. )
[4] 'प्रधान' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



किंच पचतेर्भवतिर्भवति ? ।

सामान्यम् ॥

किं च भवतेः पचतिर्भवति ? ।

विशेषः ॥

तद्यथा—उपाध्यायस्य शिष्यो मातुलस्य भागिनेयं गत्वाह—'उपाध्यायं भवानभिवादयताम्' इति । स गत्वा मातुलमभिवादयते । तथा—मातुलस्य भागिनेय उपाध्यायस्य शिष्यं गत्वाह—'मातुलं भवानभिवादयताम्' इति । स गत्वा उपाध्यायमभिवादयते ॥ एवमिहापि पचतेर्भवतौ यत्तन्निर्दिश्यते ॥ भावे ॥ १८ ॥

(प्रदीपः) अथ वेति । पाकादिषु क्रियाविशेषेषु भिन्नलिङ्गसंख्यानुगतेष्वपि भावशब्दवाच्यं सामान्यं शाबलेयादिष्विव गोत्वं विद्यते, तच्चैकं पुंस्त्वानुगतं चेति तदाश्रित्य प्रत्यया विधास्यन्त इत्यर्थः ॥ यच्चात्रेति । भावः सामान्यमेव पचादयो विशेषा एवेत्यर्थः ॥ भूतिर्भवनमित्यपि पाकादिवत्कर्त्रादिभेदाद्भावविशेष एव भावसामान्यानुगत इति द्रष्टव्यः ॥ तद्यथेति । यथैकस्मिन्वस्तुनि मातुलत्वमुपाध्यायत्वं च भिन्नसंबन्ध्याश्रयं परस्परमबाधेन व्यवस्थितं तथा पाकादिषु विशेषरूपता भावशब्दस्य वाच्यं च सामान्यम् ॥ तदुक्तं हरिणा—

आचार्यो मातुलश्चेति यथैको व्यपदिश्यते ।
संबन्धिभेदादर्थात्मा स विधिः पक्तिभावयोरिति ॥

भवतौ यदिति । भवतौ धातौ वाच्यत्वेनावस्थितं यत्सामान्यं पचादिधातुवाच्यविशेषसमवेतं, तत्प्रत्ययार्थत्वेन निर्दिश्यत इत्यर्थः ॥ तत्र पाक इत्यादौ प्रकृतिभागः साध्यरूपमर्थमाह । प्रत्ययभागस्तु सत्त्वरूपताम् । तदुक्तं हरिणा—

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥

इति ॥ १८ ॥

(उद्द्योतः) किंचिदधिकं वक्तुं विवक्षायामपि न दोष इत्याह—अथ वेति । भाष्ये ऋत्व्योर्दृष्टान्तार्थं ग्रहणम् । घञ्समभिव्याहारे साध्यत्वेन भासमानं सुबोधं इति तस्य सामान्यवाचित्वम् ॥ भिन्नलिङ्गेति । पाकः पक्तिः पचनमित्येवमिति भावः । भिन्नलिङ्गसङ्ख्यानुगतेषु तद्विशिष्टेषु ॥ सामान्यं सत्त्वभावरूपसिद्धत्वाख्यम् ॥ तच्चैकं पुंस्त्वानुगतं चेति । अत एव पक्तिर्भाव इत्याद्युपपद्यते । धर्मपरस्यापि धर्मधर्मिणोरभेदात्सामानाधिकरण्यम् ॥ तदाश्रित्येति । एवं च लिङ्गसङ्ख्ययोर्विवक्षायामपि न दोषः । न चैवं पक्तिरित्यादौ पुंस्त्वापत्तिः । तादृशविशेषगतसामान्यस्य भावशब्दवाच्यस्य सिद्धत्वरूपस्य पुंस्त्वैकत्वयोः सत्त्वेपि तदाश्रयविशेषस्य नानालिङ्गत्वात्स्त्रीत्वाद्युपपत्तिरिति भावः ॥ सामान्यमिति । तद्गतसिद्धत्वाख्यो धर्म इत्यर्थः । विशेषा इति । तदाश्रया व्यक्तय इत्यर्थः ॥ ताश्च भावविहितकृत्प्रत्ययान्तवाच्या अनेकलिङ्गा इति भावः ॥ कर्त्रादिभेदादिति । रुयादिभेदादित्यपि बोध्यम् ॥ क्वचित्तु कैयटे तथैव पाठः । सामान्यानुगत इति । सिद्धत्वरूपसामान्यानुगत इत्यर्थः ॥ स विधिरिति । प्रकार इत्यर्थः । यथा एकस्यैवाचार्यत्वं मातुलत्वं संबन्धिभेदात्तथा एकस्मिन्नेव पाकादिषु साध्यत्वविशिष्ट तत्तत्क्रियात्वरूपविशेषरूपता, भावशब्दवाच्यं सामान्यं चेत्यर्थः ॥ तच्च तत्र यथा निरूपकभेदाद्भिन्नम् । एवं प्रकृतेऽपि वाचकभेदात् कारकनिरूपितं साध्यत्वम्, क्रियान्तरनिरूपितं च सिद्धत्वमिति बोध्यम् ॥

वाच्यत्वेनेति । अनेकार्थत्वाद्धातूनां सिद्धत्वमपि घञन्तभूधातोरर्थ इति भावः ॥ यत्सामान्यमिति । साध्यत्वविशिष्ट तत्तत्क्रियात्वरूपविशेषसत्त्वेपि यत्सिद्धत्वाख्यं सामान्यं पच्याद्यर्थगतं घञन्तं भवति वाच्यं तत्प्रत्ययार्थत्वेन निर्दिश्यत इत्यर्थः ॥ न च तस्यैकत्वात्पुंस्त्वाच्च चिकीर्षा इत्यादौ टाबादिर्न स्यादिति वाच्यम् । तस्य भावस्य सिद्धत्वरूपस्यैकत्वपुंस्त्वविशिष्टस्य विशेषणत्वेन लिङ्गाद्यनियामकत्वात् । विशेषणत्वेन भासमानेनापि तेन स्वाश्रयस्य लिङ्गाद्ययोग्यतापनीयते इति न दोषः ॥ सत्त्वरूपतामिति । एवं च सिद्धत्वसाध्यत्वोभयधर्मविशिष्टो धात्वर्थः पाकादिपदार्थ इति भावः ॥ आख्यातशब्दे । पचतीत्यादौ ॥ भागाभ्यां प्रकृतिप्रत्ययाभ्याम् ॥ साध्यसाधने क्रियाकारके बोध्येते इत्यर्थः ॥ १८ ॥

(५४५अधिकारसूत्रम् घञ्प्रत्ययविधिसूत्रं च॥३।३।१आ.१४)

## ९९४ अकर्तरि च कारके संज्ञायाम् ॥ ३ । ३ । १९ ॥

(आक्षेपभाष्यम्)

कारकग्रहणं किमर्थम् ? ॥

(प्रदीपः) अकर्तरि ॥ १९ ॥ कारकग्रहणं किमर्थमिति । अकर्तरीति पर्युदासपक्षे कर्तृसदृशस्य कारकस्य ग्रहणं विज्ञास्यते । प्रसज्यप्रतिषेधेपि वाक्यभेदेन संज्ञायां घञ् भवति, कर्तरि न भवतीति विधिप्रतिषेधयोर्विधानाद् भावे च पूर्वसूत्रेण विहितत्वात् संज्ञायां घञ् धात्वर्थसंबन्धिनि कारके एव सामर्थ्याद्विज्ञास्यत इति प्रश्नः ॥

(उद्द्योतः) अकर्तरि च ॥ १९ ॥ विधिप्रतिषेधयोरिति ।

---

१ भावशब्दवाच्यं सामान्यं निर्दिश्यत इत्यर्थः । (र. ना.)

२ चित्रगवीवत्सादिष्विवेत्यर्थः । (र. ना.)

३ यथैक एवार्थात्मा संबन्धिभेदाद् आचार्यो मातुलश्चेति व्यपदिश्यते स विधिः प्रकारः पक्तिभावयोरिति योजना । (र. ना.)

४ सामान्यमिति शेषः । (र. ना.)

५ धर्मपरस्यापि भावशब्दस्य धर्मिवाचिना पक्तिशब्देन सामानाधिकरण्यं पक्तिर्भाव इति धर्मधर्मिणोरभेदादिति योजना । (र. ना.)

६ आचार्यत्वं मातुलत्वचेत्यर्थः । निरूपकभेदात्, शिष्यभागिनेयरूपसंबन्धिभेदादित्यर्थः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

पकविषयत्वे विकल्पापत्तेस्तंदितरकारकविषयता विधेरिति भावः ॥ ननु भावविषयत्वमेव स्यादत आह—भावे चेति ॥

( ४०१३ वार्तिकम् ॥ १ ॥ )

॥ * ॥ कारकग्रहणमनादेशे स्वार्थविज्ञानात् ॥ * ॥

( भाष्यम् ) कारकग्रहणं क्रियते । [किं कारणम् ?] अनादेशे स्वार्थविज्ञानात् । अनादेशे अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति—तद्यथा, "गुप्तिज्किद्भ्यः सन्" "यावादिभ्यः कन्" इति । एवमिहाऽपि[1] प्रत्ययाः स्वार्थे स्युः । स्वार्थे मा भूवन्कारके यथा स्युरित्येवमर्थमिदमुच्यते ॥

( प्रदीपः ) स्वार्थे इति । साध्यमानरूपस्वार्थे इत्यर्थः ॥

( उद्द्योतः ) ननु स्वार्थेऽस्य विधानमपि "भावे" इत्येव सिद्धमत आह साध्यमानेति । अकर्तरीति तु सामान्यप्राप्तकर्त्रर्थासंबन्धार्थं स्यादिति भावः ॥

( नियमार्थत्वप्रयोजनभाष्यम् )

नैतदस्ति प्रयोजनम् । विहितः प्रत्ययः स्वार्थे "भावे" घञिति ॥

( प्रदीपः ) विहित इति । भावे भेदमबुध्यमान आह ॥

( उद्द्योतः ) भाष्ये विहित इति । एवं च सामर्थ्यात्कारक एव भविष्यतीति भावः ॥

( नियमखण्डनभाष्यम् )

तेनातिप्रसक्तमिति कृत्वा नियमोयं विज्ञायते—अकर्तरि संज्ञायामेवेति ॥

( उद्द्योतः ) इतर आह—तेनेति । अकर्तरि संज्ञायामेवेति सामान्यतः कर्तरि कृत् इति सूत्रप्राप्तकर्तरि न, किं तु भावे तत्र च संज्ञायामेवेत्यर्थः ॥

( प्रश्नभाष्यम् )

अस्ति चेदानीं कश्चित्संज्ञाभूतो भावो यदर्थो विधिः स्यात् ॥

( उद्द्योतः ) संज्ञाभूत इति । संज्ञात्वं प्राप्त इत्यर्थः ॥ भावः । भावप्रत्ययान्त इत्यर्थः ॥ यदर्थो विधिरिति । नियमविधिरित्यर्थः ॥

( उत्तरभाष्यम् )

अस्तीत्याह । आवाहो विवाह इति ॥

( प्रदीपः ) आवाह इति कन्याया आनयनमुच्यते । विवाहस्तु नयनम् ॥

( नियमखण्डनभाष्यम् )

कैमर्थक्यान्नियमो भवति । विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् ॥ किम् ? । अकर्तरि च कारके संज्ञायां घञ्विधेयः । तत्रापूर्वो विधिरस्तु नियमोस्त्विति । अपूर्व एव विधिर्भविष्यति न नियमः ॥

( प्रदीपः ) तत्रापूर्व इति । अन्यथा भावे संज्ञायामिति एकमेव योगं कुर्यात् । योगविभागात्तु विध्यर्थत्वमस्येत्यर्थः ॥

( उद्द्योतः ) योगविभागास्त्विति । अकर्तरिग्रहणाच्चेत्यपि बोध्यम् । नियमपक्षे तस्यापि वैयर्थ्यादित्याहुः ॥

( समाधानभाष्यम् )

तदेव तर्हि प्रयोजनं स्वार्थे मा भूवन्निति ॥

( दूषणस्मारणभाष्यम् )

ननु चोक्तं विहितः प्रत्ययः स्वार्थे "भावे" घञिति ॥

( दूषणोद्धारभाष्यम् )

अन्यः स भावो बाह्यः प्रकृत्यर्थात् ॥ अनेनेदानीमभ्यन्तरे भावे स्यात् ॥

( प्रदीपः ) अन्य इति । सत्वभावमापन्न इत्यर्थः ॥ अनेनेति । साध्यमानरूपो धातुवाच्य आभ्यन्तरः ॥

( प्रश्नभाष्यम् )

कः पुनरनयोर्भावयोर्विशेषः ? ।

( समाधानभाष्यम् )

उक्तो भावभेदो भाष्ये ॥

( प्रदीपः ) उक्त इति । सार्वधातुके यगित्यत्र भावभेदः प्रतिपादितः ॥

( उद्द्योतः ) उक्तो भावभेदो भाष्ये इति शक्तित्रितिरिक्तस्य छात्रस्य वाक्यमित्येके । भगवत एवेत्यन्ये ॥

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । "नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" । नञ्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते । तद्यथा—'अब्राह्मणमानय' इत्युक्ते ब्राह्मणसदृशं पुरुषमानयति । नासौ लोष्टमानीय कृती भवति । एवमिहापि 'अकर्तरि' इति कर्तृप्रतिषेधादन्यस्मिन्नकर्तरि कर्तृसदृशे कार्यं विज्ञास्यते ।

किं चान्यदकर्तृ कर्तृसदृशम् ? ।

कारकम् ॥

( उद्द्योतः ) भाष्ये नञिवयुक्तमिति । प्रसज्यप्रतिषेधात्पर्युदासो न्याय्य इति भावः ॥

( प्रयोजनभाष्यम् )

उत्तरार्थं तर्हि कारकग्रहणं कर्तव्यम्—"परिमाणाख्यायां सर्वेभ्यः" कारके यथा स्यात् । इह मा भूत्—एका तिलोच्छ्रितिः, द्वे श्रुती इति । *"घञ-

---

१ कर्ता तत्पदार्थः । ( र. ना. )

२ 'मिहापि' ॥

३ कर्तरिकृदितीत्यादिः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


नुक्रमणमज्विषये अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम्"* इति वक्ष्यति। तन्न वक्तव्यं भवति॥

(प्रदीपः) उत्तरार्थमिति। तेन परिमाणाख्यायां सर्वेभ्य इत्यनेन घञ् कारके भवति, न तु भावः इति एको तिलोच्छ्रितिः द्वे श्रुती इत्यत्र भावे घञः प्रसङ्गादेतदर्थं घञनुक्रमणमित्यादि न वक्तव्यं भवति॥ १९॥

(उद्द्योतः) घञनुक्रमणमित्यादीति। परिमाणाख्यायामित्यादि घञ्विधानमजपेरिव बाधकं न तु स्त्रीप्रत्ययानामित्यर्थकं हि तद्वार्तिकमिति भावः॥ ननु परिमाणाख्यायामित्यत्र कारके इत्यनुवृत्तावपि कर्मणि क्तिनं बाधित्वा घञ् मा भूत् इत्यर्थं तैदावश्यकमिति चेन्न। परिमाणाख्यायां भाव एव क्तिनं मन्यते अभिधानस्वाभाव्यादिति न दोषः॥

(प्रयोजननिराकरणभाष्यम्)

एतदपि नास्ति प्रयोजनम्। अत्राप्यकर्तरीत्येवानुवर्तिष्यते॥

(४०१४ संज्ञाग्रहणप्रत्याख्यानवार्तिकम्॥ २॥)

॥ * ॥ संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात्॥ * ॥

(भाष्यम्) संज्ञाग्रहणं चानर्थकम्। किं कारणम्?। सर्वत्र घञो दर्शनात्। असंज्ञायामपि घञ् दृश्यते—'को भवता लाभो लब्धः' 'को भवता दायो दत्तः' इति[1]॥

(आक्षेपभाष्यम्)

यदि संज्ञाग्रहणं न क्रियते, अतिप्रसङ्गो भवति—कृतः कट इत्यत्र 'कारः कटः' इति प्राप्नोति॥

(४०१५ वार्तिकम्॥ ३॥)

॥ * ॥ अतिप्रसङ्ग इति चेदभिधानलक्षणत्वात् प्रत्ययस्य सिद्धम्॥ * ॥

(भाष्यम्) अतिप्रसङ्ग इति चेत्। तन्न। किं कारणम्?। अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम्। अभिधानलक्षणाः कृत्तद्धितसमासाः। अनभिधानाद् न भविष्यन्ति॥ अकर्तरि च॥ १९॥

---

(५४६ घञ्प्रत्ययविधिसूत्रम्॥ ३। ३। १ आ. १५)

९९५ परिमाणाख्यायां सर्वेभ्यः॥ ३। ३। २०॥

(आक्षेपभाष्यम्)

सर्वग्रहणं किमर्थम्।

(आक्षेपनिरासभाष्यम्)

सर्वेभ्यो धातुभ्यो घञ् यथा स्यात्। अजपोरपि विषये—एकस्तण्डुलनिचायः। द्वौ शूर्पनिष्पावौ॥

(प्रदीपः) परिमाणा॥ २०॥ अजपोरपीति। अन्यथा पुरस्तादपवादा इति न्यायेनाचमेव घञ् बाधेत नापमिति भावः। द्वौ शूर्पनिष्पावाविति। यद्यप्यत्र निरभ्योः पूल्वोरिति घञ् सिध्यति तथापि सर्वापवादार्थं सर्वग्रहणोपादानादनेनैव भवितुमर्हतीत्युपन्यासः॥

(३०१६ वार्तिकम्॥ १॥)

॥ * ॥ सर्वग्रहणमनर्थकं परिमाणाख्यायामिति सिद्धत्वात्॥ * ॥

(भाष्यम्) सर्वग्रहणमनर्थकम्। किं कारणम्?। परिमाणाख्यायामिति सिद्धत्वात्। परिमाणाख्यायामित्येव घञ् सिद्धः अजपोरपि विषये, नार्थः सर्वग्रहणेन॥

(प्रदीपः) सर्वग्रहणमिति। बाध्यमात्रापेक्षायां समुदायापेक्षायां वा पुरस्तादपवादन्यायो नास्तीति भावः॥

(आनर्थक्यनिराकरणभाष्यम्)

अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्?। एकः पाको द्वौ पाकौ त्रयः पाका इति।

(प्रदीपः) एकः पाक इति। कर्मण्यपि घञ् भवतीति भावः॥

(उद्द्योतः) परिमाणाख्यायां स॥ २०॥ परिमाणं परिच्छित्तिः। तस्या आख्यानं कथनं तत्रेत्यर्थः। परिच्छित्तिश्च प्रत्यार्थस्येति भावः। सा चैकादिशब्दैरुदाहरणेषु स्पष्टैव। पुनर्विधानादेवाजवविषये भवतीत्यत आह—अन्यथेति॥ उपादानादनेनैवेति। परिमाणाख्यायामित्यनेनैवेत्यर्थः। निरभ्योः पूल्वोरिति च न कार्यमिति भावः॥ निचायनिष्पावौ कर्मणि घञन्तौ। तण्डुलशब्देन शूर्पशब्देन च तत्पुरुषः॥ निचीयते सः। भावसाधनो वा निचायो राशिः। अत्र राशेरेकत्वेन परिच्छेदः। निष्पूयते तुषापनयनेन स निष्पावस्तण्डुलराशिः। अत्रापि संख्यया परिच्छेदः॥ निचाये ग्रहवृ इति अप्प्राप्तिः॥ बाध्यमात्रापेक्षायामिति। सामान्यचिन्तायामिदम्॥ बाध्यविशेषचिन्तायामपि प्रकारविशेषमाह—समुदायापेक्षायां वेति॥ ननु भावे इत्यनेनैव सिद्धमत आह—कर्मण्यपीति। परिमाणज्ञापनार्थं भाष्ये एकादिपदोपादानम्॥

(आनर्थक्यसाधकभाष्यम्)

न पूर्वेणाप्येतत् सिद्धम्।

(आनर्थक्यपरिहारभाष्यम्)

न सिध्यति। "संज्ञायाम्" इति पूर्वो योगः। न चैषा संज्ञा॥

(आनर्थक्यसाधकभाष्यम्)

प्रत्याख्यायते संज्ञाग्रहणम्। अथापि क्रियते।

---

1 वार्तिकस्तत्तदर्थः। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


एवमपि न दोषः । अजपावपि संज्ञायामेव । यथाजातीयक उत्सर्गः तथाजातीयकेनापवादेनापि भवितव्यम् ।

( उद्योतः ) भाष्ये—अथापीति । एवं च पाकादिशब्दानामसंज्ञात्वात् अकर्तरि चेत्यनेन न सिद्धमित्यर्थः । एवं चासंज्ञार्थं परिमाणाख्यायामित्यस्य चारितार्थ्यात् अजपोर्विषये घञर्थं सर्वग्रहणमावश्यकमिति भावः ॥ [1]समाधत्ते—अजपावपीति । एवं च तण्डुलनिचाय इत्यादावप्यसंज्ञात्वादपोऽप्राप्तौ परिमाणाख्यायामित्येव घञ्सिद्ध इति नार्थः सर्वग्रहणेनेत्यर्थः ॥ अजपोः संज्ञाविषयत्वे युक्तिमाह—यथाजातीयक इति । अन्यथाऽसंज्ञायां तयोश्चारितार्थ्येन घञपवादत्वमेव न स्यादिति भावः ॥

( आनर्थक्यपरिहारभाष्यम् )

उत्तरार्थं तर्हि—"इङश्च" । सर्वेभ्योपि यथा स्यात् ॥

( आनर्थक्यभाष्यम् )

[2]ननु चायमिङ् एक एव वण्ठरण्डाकल्पः । वण्ठो मृतभार्यः

( आनर्थक्यपरिहारभाष्यम् )

सर्वेषु साधनेषु यथा स्यात् । उपेत्याधीयते तस्मादित्युपाध्यायः । अस्मिन्नधीयते इत्यध्यायः । "अध्यायन्यायोद्यावसंहाराधारावायाश्च" इत्येतन्निपातनं न कर्तव्यं भवति ॥

( प्रदीपः ) सर्वेष्विति । सर्वेभ्य इति तादर्थ्ये चतुर्थी तेनायमर्थो गृह्यत इति भावः । तेनाधिकरणे घं बाधित्वा घञ् भवति ॥

( उद्योतः ) ननु धातुविशेषणात्सर्वेभ्य इति पञ्चम्यन्तात्सर्वेष्विति कथं लभ्यतेऽत आह—सर्वेभ्य इति ॥ तादर्थ्य इति ॥ नन्वपादानेऽकर्तरि कारके इत्युक्तेः सिद्धमत आह—तेनाधिकरणेति । अपादानं तु दृष्टान्तार्थमिति भावः । तदुदाहरणम्, अधीयतेऽस्मिन्नित्यध्याय इति । स्वाध्यायकाल इत्यर्थः ।

( आनर्थक्यसाधकभाष्यम् )

एतदपि नास्ति प्रयोजनम् । क्रियते न्यास एव ॥

( आनर्थक्यबाधकभाष्यम् )

उत्तरार्थमेव तर्हि वक्तव्यम्—"कर्मव्यतिहारे णच् स्त्रियाम्" इति सर्वेभ्यो यथा स्यात् ॥

( उद्योतः ) भाष्ये णच् स्त्रियामिति सर्वेभ्य इति ॥ व्यावचोरीत्यादौ युजादिविषयेपीत्यर्थः ॥

( आनर्थक्यसाधकभाष्यम् )

एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्–*कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम्* । *पृथक्त्वग्रहणं बाधक बाधनार्थम्* । *व्यावचोरी व्यावचर्च्यर्थम्* । *तत्र व्यतीक्षादिषु दोषः* । सिद्धं तु प्रकृते स्त्रीग्रहणे णज्ग्रहणं णिज्ग्रहणं चेति ॥

( उद्योतः ) भाष्ये कर्मव्यतिहारे इत्यादि । तत्र णिज्विधायके सूत्रे स्त्रीग्रहणं व्यतिपाको वर्तत इत्यत्र णजभावार्थम् ॥ स्त्रियां क्तिन्नित्यतः पृथग्ग्रहणं तु व्यावचोरीत्यादौ ण्यासिति युजादीनां बाधकानां बाधनार्थम् । न च व्यतीक्षादिषु गुरोश्च हल इत्यस्यापि बाधप्रसङ्गः ॥ स्त्रियां क्तिनित्यधिकारे एव कर्मव्यतिहारे णच् ततो णिच इति न्यासेन सिद्धेरिति तद्वार्तिकार्थः ॥

( आनर्थक्यबाधकभाष्यम् )

उत्तरार्थमेव तर्हि—"अभिविधौ भाव इनुण्" सर्वेभ्यो यथा स्यात् । सांराविणम् ॥

( उद्योतः ) इनुण् सर्वेभ्य इति । सांराविणमित्यादौ भावक्तादिविषयेऽपीत्यर्थः ॥

( आनर्थक्यसाधकभाष्यम् )

एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—"अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम् । पृथक्त्व तु ग्रहणं बाधकबाधनार्थं न तु ल्युट" इति ।

( उद्योतः ) अभिविधाविति ॥ शब्दशक्तिस्वभावाद्भाव एवेनुण्सिद्धौ भावग्रहणं वासरूपन्यायेन पक्षप्राप्तक्तादिनिवृत्त्यर्थम् ॥ नपुंसके भाव इत्यनन्तरमेव वक्तव्ये पृथग्ग्रहणं तु क्तस्य बाधकानां खलर्थानामपि बाधनार्थं पूर्वविप्रतिषेधेनेति भावः ॥ क्तवत् ल्युटो बाधस्तु नेष्यते इत्याह—न तु ल्युट इतीति । एतद्वार्तिकार्थः ॥

( आनर्थक्यबाधकभाष्यम् )

इदं तर्हि प्रयोजनम्—प्रकृत्याश्रयो योऽपवादस्तस्य बाधनं यथा स्याद् अर्थाश्रयो योऽपवादस्तस्य बाधनं मा भूदिति । [2]एका तिलोच्छ्रितिः । द्वे श्रुती इति ॥ *घञनुक्रमणमजब्विषये । अवचने हि स्त्री प्रत्ययानामप्यपवादविज्ञानम्* इति चोदयिष्यति । तन्न वक्तव्यं भवति ॥

( प्रदीपः ) प्रकृत्याश्रय इति । सर्वेभ्य इति पञ्चमीनिर्देशादयमर्थो लभ्यत इति भावः ॥ अर्थाश्रय इति । स्त्रियामित्यर्थं निर्दिश्य क्तिनो विधानादर्थाश्रयत्वम् ॥ एकेति । ननु कारकानुवृत्त्याऽत्र भावे घञ् न भविष्यति ॥ नैतदस्ति । उभयाधिकारात् ।

( उद्योतः ) उभयाधिकारादिति । परिमाणाख्यायां भावेऽपीष्टेरिति भावः ॥ उदाहरणयोर्भावे क्तिन् । पूर्वसूत्रस्थभाष्यस्वरसात् ॥

( ४०१७ वार्तिकम् ॥ २ ॥ )

॥ * ॥ घञनुक्रमणमजब्विषये ॥ * ॥

( भाष्यम् ) घञनुक्रमणमजब्विषय इति वक्तव्यम् ।

---

1 एतत्संगतये—'शङ्कते—भाष्ये—अथापीति' इत्येवं पाठो योज्यः ॥

2 एक एवेति । तर्हि सर्वग्रहणस्य न किंचिदपि प्रयोजनमिति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ४०१८ वार्तिकम् ॥ ३ ॥ )

॥ * ॥ अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम् ॥ * ॥

( भाष्यम् ) अनुच्यमाने ह्येतस्मिन् स्त्रीप्रत्ययानामप्यपवादोऽयं विज्ञायेत—एका तिलोच्छ्रितिः, द्वे श्रुती इति ।

( ४०१९ वार्तिकम् ॥ ४ ॥ )

॥ * ॥ दारजारौ कर्तरि णिलुक् च ॥ * ॥

( भाष्यम् ) दारजारौ कर्तरि वक्तव्यौ । णिलुक् च वक्तव्यः । दारयन्तीति दाराः । जरयन्तीति जाराः ॥

( प्रदीपः ) दारजाराविति । णिलोपे सति तस्य स्थानिवत्त्वाद् घञाश्रया वृद्धिर्न स्यादिति णिलुग् विधीयते । तस्य हि अपरनिमित्तकत्वात् क्ङिति चेति प्रतिषेधात् वा स्थानिवत्त्वाभावाज् जारशब्दः सिध्यति ।

( उद्द्योतः ) घञाश्रयेति । ण्याश्रयायां तु जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेति मित्त्वेन जारशब्दे ह्रस्वापत्तिरिति भावः ॥ ननु जॄणातेरपि क्र्यादौ पठ्यते । अत एव तद्व्यावृत्तये जनीजॄषिति गणसूत्रे षकारोच्चारणम् । एवं च तस्य मित्त्वेन तस्मात् घञि णिलोपेनापि सिद्धं जार इतीति चेन्न । मितो जरं इति रूपव्यावृत्त्यर्थत्वात् । दारयतेरर्थपि पचाद्यचा सिद्धं तथाप्यच्कावशक्ताविति स्वरव्यावृत्तये इदम् ॥

( ४०२० वार्तिकम् ॥ ५ ॥ )

॥ * ॥ करणे वा ॥ * ॥

( भाष्यम् ) करणे वा वक्तव्यौ । दीर्यन्ते तैर्दाराः । जीर्यन्ति तैर्जाराः ॥ परिमाणा ॥ २० ॥

( प्रदीपः ) करणे वेति । अण्यन्तयोरेव दृणतिजीर्यत्योः करणे घे प्राप्ते घञेवोच्यत इत्यर्थः ॥ २० ॥

( उद्द्योतः ) करणे घ इति । पुंसि संज्ञायां घ इत्यनेन इदमुपलक्षणं ल्युटोऽपि ॥ २० ॥

( ५४७ घञ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. १६ )

## ९९६ इङश्च ॥ ३ । ३ । २१ ॥

( ४०२१ वार्तिकम् ॥ १ ॥ )

॥ * ॥ इङश्चेत्यपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीप् ॥ * ॥

( भाष्यम् ) इङश्चेत्यत्रापादाने स्त्रियामुपसंख्यानं कर्तव्यं तदन्ताच्च वा ङीष् वक्तव्यः । उपेत्याधीयतेऽस्या उपाध्यायी उपाध्याया ॥

( प्रदीपः ) इङश्च ॥ २१ ॥ प्रकृत्याश्रयस्यैवाचो घञा बाधकेन भाव्यम् । न त्वर्थाश्रयस्यापि क्तिन इति मत्वाह—इङश्चेति ।

( उद्द्योतः ) इङश्च ॥ २१ ॥ ननु सूत्रेणैव सिद्धमत आह—प्रकृत्येति ॥ सजातीयत्वादित्यर्थः । तथाच स्त्रियां क्तिनो बाधनार्थमिदमिति भावः ॥

( ४०२२ वार्तिकम् ॥ २ ॥ )

॥ * ॥ शृवायुवर्णनिवृतेषु ॥ * ॥

( भाष्यम् ) शॄ इत्येतस्माद्वायुवर्णनिवृतेषु घञ् वक्तव्यः । शारो वायुः । शारो वर्णः । गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः ॥ इङश्च ॥ २१ ॥

( प्रदीपः ) शृवायाविति[1] । ॠदोरबिति प्राप्ते वचनम् ॥ आर इति । कर्मणि घञ् ॥ अकृतनीशार इति । अकृताच्छादन इत्यर्थः ॥ २१ ॥

( उद्द्योतः ) कर्मणीति । हरदत्तस्तु करणे इत्याह ॥ निव्रियतेऽनेनेति निवृतमाच्छादनं बाहुलकात्करणे क्तः । तदाह—अकृताच्छादनेति ॥ २१ ॥

( ५४८ ग्रहेर्घञ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. १७ )

## १०११ समि मुष्टौ ॥ ३ । ३ । ३६ ॥

( ४०२३ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ समि मुष्टावित्यनर्थकं वचनं परिमाणाख्यायामिति सिद्धत्वात् ॥ * ॥

( भाष्यम् ) समि मुष्टाविति वचनमनर्थकम् । किं कारणम् ? । परिमाणाख्यायामिति सिद्धत्वात् । "परिमाणाख्यायाम्" इत्येवात्र घञ् सिद्धः ॥

( प्रदीपः ) समि मुष्टौ ॥ ३६ ॥ परिमाणवाचिमुष्टिशब्दाश्रयेण पूर्वः पक्षः ।

( ४०२४ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ अपरिमाणार्थं तु ॥ * ॥

( भाष्यम् ) अपरिमाणार्थोऽयमारम्भः । मल्लस्य संग्राहः । मुष्टिकस्य संग्राह इति ॥

( प्रदीपः ) अङ्गुलिसंनिवेशवाच्याश्रयणेन तु परिहारः ॥ ३६ ॥

( उद्द्योतः ) समि० ॥ ३६ ॥ अङ्गुलीति । दृढमुष्टिता तेनान्वाख्यायते ॥ मुष्टिकस्येति भाष्ये मुष्टौ कुशल इत्यर्थे आकर्षादित्वात्कन् ॥

( ४०२५ निपातनपरिसंख्यावार्तिकम् ॥ ३ ॥ )

॥ * ॥ उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोरर्थयोः ॥ * ॥

( भाष्यम् ) उद्ग्राभो निग्राभ इति इमौ शब्दौ छन्दसि वक्तव्यौ स्रुगुद्यमननिपातनयोरर्थयोः ।

[1] शृवाध्विति पाठो भाति । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

उद्ग्राभं च निग्राभं च ब्रह्मदेवा अवीवृधन् ॥ ससि मुग्धौ ॥ ३६ ॥

( उद्योतः ) निपातनमधः पातनम् ॥ ३६ ॥

( ५४९ णच्प्रत्ययविधिसूत्रम् ॥ ३।३।१ आ. १८ )

## १०१८ कर्मव्यतिहारे णच् स्त्रियाम् ॥ ३ । ३ । ४३ ॥

( आक्षेपभाष्यम् )

स्त्रीग्रहणं किमर्थम् ।

( ४०२६ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम् ॥ * ॥

( भाष्यम् ) कर्मव्यतिहारे स्त्रीग्रहणं क्रियते व्यतिपाकार्थम् । इह मा भूत्—व्यतिपाको वर्तते ।

( उद्योतः ) कर्मव्य ॥ ४३ ॥ भाष्ये व्यतिपाकार्थमिति ॥ पुल्लिङ्गे भावे मा भूदित्यर्थमित्यर्थः ॥ अकर्तृकारके तु नानभिधानादिति भावः ॥

( आक्षेपभाष्यम् )

अथ किमर्थं पृथग्ग्रहणम् ।

( ४०२७ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ पृथग्ग्रहणं बाधकबाधनार्थं व्यावचोरीव्यावचर्च्यर्थम् ॥ * ॥

( भाष्यम् ) पृथग्ग्रहणं क्रियते [किं प्रयोजनम् ?] बाधकबाधनार्थं, ये तस्य बाधकास्तद्बाधनार्थम् । किं प्रयोजनम् ।

व्यावचोरी व्यावचर्च्यर्थम् । व्यावचोरी वर्तते । व्यावचर्ची वर्तते ।

( प्रदीपः ) कर्म ॥ ४३ ॥ पृथग्ग्रहणमिति । प्रकरणोत्कर्षात् क्तिनो बाधकानामप्यनेन बाधनमिति भावः ॥

( उद्योतः ) प्रकरणोत्कर्षादिति ॥ स्त्रियां क्तिन्नित्येतदपेक्षयेति भावः ॥ बाधकानामिति । व्यावचोरीत्यादौ ण्यासेति । युजादीनामित्यर्थः ॥ अत्रेदं बोध्यम् । क्तिनोऽपवादः । अत एव पक्षे वासरूपविधिना सोऽपि ॥ अन्येषां तदपवादानां तु पृथक्पाठेन पूर्वविप्रतिषेधकल्पनया बाधकः । अत एव व्यतीक्षाया असिद्धिः शङ्किता भाष्ये ॥ विप्रतिषेधविषये वासरूपाप्रवृत्तेः ॥

( ४०२८ दूषणवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ तत्र व्यतीक्षादिषु दोषः ॥ * ॥

( भाष्यम् ) तत्र व्यतीक्षादिषु दोषो भवति । व्यतीक्षा वर्तते । व्यतीहा वर्तते ॥

( प्रदीपः ) व्यतीक्षादिष्विति । अप्रत्ययाद् "गुरोश्च हल"–इति अकारस्यापि बाधप्रसङ्गादित्यर्थः ॥

( ४०२९ दूषणोद्धारवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ सिद्धं तु प्रकृते स्त्रीग्रहणे णज्ग्रहणं णिज्ग्रहणं च ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम् । प्रकृत एव स्त्रीग्रहणेऽयं योगः कर्तव्यः—"स्त्रियां क्तिन्" । ततः "कर्मव्यतिहारे णच्" । ततो "णिचः" ॥ कर्मव्यति ॥ ४३ ॥

( प्रदीपः ) सिद्धं त्विति । यद्येवं व्यावक्रुष्टिरिति क्तिन् न प्राप्नोति । व्यात्युक्षी च न सिध्यति । नैष दोषः । कृत्यल्युटो बहुलमिति बहुलवचनाद्यथेष्टलाभप्रयोजनात् ॥ ४३ ॥

( उद्योतः ) णिच्ग्रहणं चेति । इदं व्यावचोरीत्यादौ बाधकबाधनार्थम् ॥ व्यावक्रुष्टिरिति । स्पष्टश्चायं प्रयोगो वासरूपसूत्रे ॥ व्यात्युक्षीति । च माघकाव्ये ॥ क्तिन्नेति । ञ्याधिकारे वासरूपविधेरभावात् व्यात्युक्ष्यामपवादविप्रतिषेधेन गुरोश्चेत्यप्रत्ययप्रसङ्गादिति भावः ॥ एवंच वासरूपसूत्रस्य प्रयोगानुष्ठानरूपभाष्यविरोधात् सिद्धं त्वित्याद्येतत्सूत्रस्य वार्तिकमेवार्तिकदेश्युक्तिरितिभावः ॥ व्यावचोरीव्यतीक्षे बहुलग्रहणात्साध्ये इति तात्पर्यम् । उत्तरं तु स्त्रियामित्यकरणप्रयुक्तलाघवाद्बाहुलकस्य तवाप्यावश्यकत्वाच्च वार्तिकोक्तमेव युक्तमिति ॥ ४३ ॥

( ५५० इनुण्प्रत्ययविधिसूत्रम् ॥ ३। ३ । १ आ. १९ )

## १०१९ अभिविधौ भाव इनुण् ॥ ३ । ३ । ४४ ॥

( आक्षेपभाष्यम् )

भावग्रहणं किमर्थम् ? ।

( प्रदीपः ) अभिविधौ ॥ ४४ ॥ भावे कारक इति द्वयेऽपि प्रकृते शब्दशक्तिस्वाभाव्याद्भाव इवेनुण् भविष्यतीति मत्वाह—भावग्रहणमिति ॥

( उद्योतः ) अभिविधौ भाव ॥ ४४ ॥ द्वयेपि प्रकृत इति । प्रकरण इत्यर्थः । द्वयोरपि प्रकृते इति पाठान्तरम् ॥ भावे इवेति ॥ णच्वदिति भावः ॥

( ४०३० समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् ) अभिविधौ भावग्रहणं क्रियते नपुंसके क्तादिनिवृत्त्यर्थम् । नपुंसकलिङ्गे भावे क्तादयो मा भूवन्निति ।

१ 'परिमाणाख्यायाम्' इति सूत्रेऽपि भाष्यकृतैतद्वार्तिकस्याश्रितत्वाच्चैकदेश्युक्तिः असकृदुक्तस्य सिद्धान्तिस्वाङ्गीकारस्य पूर्वं दर्शितत्वात् ॥ तस्माद् बहुलग्रहणेनैव सर्वानिष्टवारणं करणीयमिति दाधिमथाः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( प्रदीपः ) नपुंसक इति । मध्येपवादाः पूर्वान्विधीन् बाधन्त इति इनुण् घञमेव बाधेत न तु क्तादीन् । भावग्रहणास्त्वधिकविधानार्थात्तानपि बाधत इति भावः ॥

( उद्योतः ) मध्येपवादा इति ॥ बाध्यसामान्यचिन्तयेदं सिद्धमिति वासरूपन्यायेन पक्षे प्राप्तयोरपि तयोर्बाधनार्थं भावग्रहणमिति भाष्याभिप्रायवर्णनमुचितम् ॥

( आक्षेपभाष्यम् )

अथ किमर्थं पृथग्ग्रहणं क्रियते ।

( प्रदीपः ) अथेति । नपुंसके भाव इत्यस्यानन्तरमिदं वक्तव्यमिति भावः ॥

( ४०३१ वार्तिकम् ॥ १ ॥ )

॥*॥ पृथग्ग्रहणं बाधकबाधनार्थम् ॥*॥

( भाष्यम् ) पृथग्ग्रहणं क्रियते बाधकबाधनार्थम् । ये तस्य बाधकास्तद्बाधनार्थम् ॥

( प्रदीपः ) पृथग्ग्रहणमिति । वासरूपो स्त्रियामिति वचनात्पक्षे क्तादयः स्युरिति प्रकरणोत्कर्षेण वासरूपविधिर्बाध्यत इत्यर्थः ॥ ४४ ॥

( उद्योतः ) वासरूप इति ॥ स्त्र्यधिकार एव वासरूपनिषेध इति प्राक् प्रतिपादनादिति भावः ॥ भाष्ये ये तस्येति । कस्य बाधकाः खलर्था इत्यर्थ उचितः । कैयटोक्तार्थे नाक्षरस्वारस्यम् ॥ भावग्रहणफलादविशेषश्च ॥ अत्राप्येवंकरणात्पूर्वंविप्रतिषेधकल्पनेति तात्पर्यम् ॥

( ४०३२ वार्तिकशेषः ॥ २ ॥ )

॥ * ॥ नतु ल्युटः ॥ * ॥

( भाष्यम् ) ल्युटो बाधनं नेष्यते, संकूटनमित्येव भवति ॥ अभिविधौ ॥ ४४ ॥

( उद्योतः ) संकूटनमित्येवेति । संकूटनमिति भवत्येवेत्यन्वयः ॥ अत एव पुंयोगादिति सूत्रस्थः साकूटिनमिति भाष्यप्रयोगः संगच्छते ॥ ४४ ॥

( ५५१ इवर्णान्तादच्प्रत्ययविधिसूत्रम् ॥३।३।१आ.२० )

१०३१ एरच् ॥ ३ । ३ । ५६ ॥

( ४०३३ वार्तिकम् ॥ १ ॥ )

॥*॥ अज्विधौ भयस्योपसंख्यानम् ॥*॥

( भाष्यम् ) अज्विधौ भयस्योपसंख्यानं कर्तव्यम् । भयम् ॥

( उपालम्भभाष्यम् )

अत्यल्पमिदमुच्यते भयस्येति ।

भयादीनामितिं वक्तव्यम् । इहापि यथा स्यात्— भयं, वर्षम् ॥

( प्रश्नभाष्यम् )

किं प्रयोजनम् ? ।

( ४०३४ वार्तिकशेषः ॥ २ ॥ )

॥ * ॥ नपुंसके क्तादिनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् ) नपुंसकलिङ्गे भावे क्तादयो मा भूवन्निति ॥

( प्रदीपः ) एरच् ॥ ४६ ॥ वर्षमिति । वर्षणमित्यपि भवति । वृषभो वर्षणादिति भाष्यकारवचनात् ॥

( उद्योतः ) एरच् ॥ ५६ ॥ भाष्यकारवचनादिति । ततो बाहुलकाल्ल्युडपीति भावः ॥

( ४०३५ वार्तिकम् ॥ ३ ॥ )

॥ * ॥ कल्प्यादिभ्यः प्रतिषेधः ॥ * ॥

( भाष्यम् ) कल्प्यादिभ्यः प्रतिषेधो वक्तव्यः । कल्पः अर्थः मन्त्र इति ॥

( प्रदीपः ) कल्प इति । ण्यन्तेभ्योऽचि प्रतिषिद्धे घञेव भवति । एरजण्यन्तानामिति तु वचनमनार्षम् ॥

( ४०३६ वार्तिकम् ॥ ४ ॥ )

॥ * ॥ जवसवौ छन्दसि ॥ * ॥

( भाष्यम् ) जवसवौ छन्दसि वक्तव्यौ । ऊर्वोरस्तु मे जवः । अयं मे पञ्चौदनः सवः ॥ एरच् ॥ ५६ ॥

( प्रदीपः ) जवसवाविति । अपि प्राप्तेऽज्विधिः । स्वरे विशेषः ॥ ५६ ॥

( उद्योतः ) स्वरे इति । अपि आद्युदात्तम् । अच्यन्तोदात्तमित्यर्थः ॥ ५६ ॥

( ५५२ अप्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. २१ )

१०३२ ग्रहवृदनिश्चिगमश्च ॥३।३।५८॥

( आक्षेपभाष्यम् )

किमर्थं निष्पूर्वाच्चिनोतेरब् विधीयते । नाचैव सिद्धम् । न ह्यस्ति विशेषो निष्पूर्वाच्चिनोतेरपो वा, अचो वा, तदेव रूपम्, स एवास्य स्वरः ॥

( उद्योतः ) ग्रह वृ० ॥ ५८ ॥ भाष्ये स एव च स्वर इति ॥ थाथघञ् इति सूत्रेणेति भावः ॥

( आक्षेपबाधकभाष्यम् )

न सिध्यति । हस्तादाने चौरस्तेये इति घञ् प्राप्नोति तद्बाधनार्थम् ।

( समाधानभाष्यम् )

अत उत्तरं पठति—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ४०३७ प्रयोजननिराकरणवार्तिकम् ॥ १ ॥ )

॥ * ॥ अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात् ॥ * ॥

( भाष्यम् ) अब्विधौ निश्चिग्रहणमनर्थकम् । किं कारणम् ? । स्तेयस्य घञ्विधौ प्रतिषेधात् । स्तेयस्य घञ्विधौ प्रतिषेध उच्यते । निष्पूर्वश्चिनोतिः स्तेये वर्तते ॥

( उद्योतः ) स्तेये वर्तत इति ॥ हस्तादानविषये इति भावः ॥

( प्रयोजनभाष्यम् )

अस्तेयार्थं तर्हीदं वक्तव्यं निष्पूर्वाच्चिनोतेरस्तेये अब् यथा स्यात् ॥

( ४०३८ प्रयोजननिरासवार्तिकम् ॥ २ ॥ )

॥*॥ अस्तेयार्थमिति चेन्नानिष्टत्वात् ॥*॥

( भाष्यम् ) अस्तेयार्थमिति चेत् । तन्न । किं कारणम् ? । अनिष्टत्वात् । नहि निष्पूर्वाच्चिनोतेरस्तेये अबिष्यते । किं तर्हि ? । घञेवेष्यते ॥

( उद्योतः ) किं तर्हि घञेवेति । हस्तादानविषये इत्यर्थः ॥ प्रकृतसूत्रे निश्चिग्रहणं स्तेयार्थं चेत् घञोऽप्राप्तेरचैव सिद्धम् । अस्तेयार्थं चेत् । तन्न निष्पूर्वाच्चिनोतेः पूर्वविप्रतिषेधेन घञ् एवेष्टेरिति भाष्यार्थः ॥ घञ्चेति पाठे च शब्द एवार्थो द्रष्टव्यः ॥

( प्रयोजनभाष्यम् )

एवं तर्हि सिद्धे सति यन्निष्पूर्वाच्चिनोतेरपं शास्ति तज्ज्ञापयत्याचार्यः यत्तद् "अन्तः थाथघक्काजबित्रकाणाम्" इति, तन्निष्पूर्वाच्चिनोतेर्न भवतीति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? । निश्चयः । एष स्वरः सिद्धो भवति ॥

( प्रदीपः ) ग्रहवृ ॥ ५८ ॥ एष स्वर इति । मध्योदात्तत्वं कृत्स्वरेण भवति ।

( उद्योतः ) कृत्स्वरेणेति । गतिकारकोपपदादिति विहितेन ॥ ५८ ॥

( ४०३९ वार्तिकम् ॥ ३ ॥ )

॥ * ॥ वशिरण्योश्चोपसंख्यानम् ॥ * ॥

( भाष्यम् ) वशिरण्योश्चोपसंख्यानं कर्तव्यम् । सवशं सैन्धवम् । धनंजयं रणे रणे ॥

( प्रदीपः ) वशिरण्योरिति । घञि प्राप्ते वचनम् ॥ वशनं वशः । रणन्त्यस्मिन्निति रणः ॥

( ४०४० कविधिवार्तिकम् ॥ ४ ॥ )

॥ * ॥ घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ॥ * ॥

( भाष्यम् ) घञर्थे को विधेयः । किं प्रयोजनम् ? । स्थास्नापाव्यधिहनियुध्यर्थम् । स्था—प्रतिष्ठन्तेऽस्मिन्धान्यानीति प्रस्थः । प्रस्थे हिमवतः शृङ्गे । स्था । स्ना—प्रस्नान्ति अस्मिन्निति प्रस्नः । स्ना । पा—प्रपिबन्त्यस्यामिति प्रपा । पा । व्यधि—आविध्यन्ति तेनाविधः । व्यधि । हनि—विघ्नन्ति तस्मिन्मनांसि विघ्नः । हनि । युधि—आयुध्यन्ते तेनायुधम् ॥ ग्रहवृ ॥ ५८ ॥

( प्रदीपः ) घञर्थ इति । भावः कर्तृवर्जितं च कारकं घञर्थः ॥ ५८ ॥

( ५५३ हनेः कप्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ.२२ )

## १०५८ स्तम्बे क च ॥ ३ । ३ । ८३ ॥

( आक्षेपभाष्यम् )

कसादयं को विधीयते ।

( समाधानभाष्यम् )

हन्तेरित्याह ।

( प्रश्नभाष्यम् )

तद्धन्तिग्रहणं कर्तव्यम् ? ।

( समाधानभाष्यम् )

न कर्तव्यम् ? ।

प्रकृतमनुवर्तते । क्व प्रकृतम् ? । "हनश्च वधः" इति ।

( समाधानबाधकभाष्यम् )

तद्वै अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् ।

( उद्योतः ) स्तम्बे क ॥ ८७ ॥ अनेकेनेति । घनान्तर्घनप्रघणप्रघाणोद्घनापघनरूपेणेत्यर्थः ॥

( समाधानसाधकभाष्यम् )

नैतानि निपातनानि । हन्तेरेते आदेशाः ॥

( समाधानबाधकभाष्यम् )

यद्यादेशाः । घनस्वरो न सिध्यति—"घनः" इति ।

( प्रदीपः ) स्तम्बे क च ॥ ८३ ॥ घनस्वर इति । अन्तोदात्तत्वं न सिध्यति अप्स्वरेणाद्युदात्तत्वप्रसङ्गादित्यर्थः ।

( उद्योतः ) अप्स्वरेणाद्युदात्तेति । निपातने तु निपातनात्फिषोन्त इति सिद्धिरिति भावः ॥

( निपातनाङ्गीकारभाष्यम् )

सन्तु तर्हि निपातनानि ।

( दूषणस्मारणभाष्यम् )

ननु चोक्तम् 'तद्वै अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुमिति' ।

१ विशेषितमित्यर्थः । निपातनानामनुवर्तयितुमशक्यत्वात्तद्विशेषितं हन इत्यप्यनुवर्तयितुमशक्यमित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( दूषणोद्धारभाष्यम् )

संबन्धमनुवर्तिष्यते ।

( आदेशपक्षस्वीकारभाष्यम् )

अथ वा पुनः सन्तु आदेशाः ॥

( दूषणस्मारणभाष्यम् )

ननु चोक्तम् 'स्वरो न सिध्यती'ति ।

( दूषणपरिहारभाष्यम् )

नैष दोषः । अकारान्ता आदेशाः ॥

अकारान्ता इति । तत्रातो लोपे कृते उदात्तनिवृत्तिस्वरेणाप उदात्तत्वं भवतीति भावः ।

( उद्द्योतः ) तत्रातो लोप इति ॥ प्रत्ययसन्नियोगशिष्टतया विधानात् आर्धधातुक इति लोप इति भावः ॥ आदेशाश्च स्थानिस्वरेणान्तरतम्यादन्तोदात्ता इति तात्पर्यम् ॥

( आक्षेपभाष्यम् )

अथ यदा इषीकया स्तम्बो हन्यते कथं तत्र भवितव्यम् ॥

( समाधानभाष्यम् )

केचित्तावदाहुः—स्तम्बघ्नेति भवितव्यम् ॥

(प्रदीपः) स्तम्बघ्नेति । कप्रत्यये रूपं तस्य सर्वापवादत्वादिति भावः ।

( उद्द्योतः ) तस्य सर्वापवादत्वादिति ॥ यद्यपि पुंस्त्वयं चरितार्थस्तथापि बहुलग्रहणादिति भावः ॥

अपर आहुः—स्तम्बहेतिरिति भवितव्यम् । ऊतियूतिजूतिसातिहेतिकीर्तयश्चेतिनिपातनादिति ॥

अपर आहुः—स्तम्बहननीति भवितव्यमिति । वक्ष्यत्येतत्—"अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन" इति ॥ स्तम्बे क च ॥ ८३ ॥

स्तम्बहेतिरिति । निपातनस्य सर्वापवादत्वादिति भावः ॥ ८३ ॥

( उद्द्योतः ) भाष्ये—अजब्भ्यामिति । हेतिरिति निपातनमप्रकरणे चरितार्थमिति भावः ॥ निपातितहेतिशब्दः शस्त्ररूढ इत्यन्ये ॥ ८३ ॥

---

( ५५४ नङ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. २३ सू. )

## १०६५ यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ३ । ३ । ९० ॥

( ४०४१ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेधः ॥ * ॥

( भाष्यम् ) यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेधो वक्तव्यः । प्रश्न इति ॥

( ङकारप्रत्याख्यानभाष्यम् )

एवं तर्हि अङित्करिष्यते ।

( ४०४२ दूषणवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अङिति गुणप्रतिषेधः ॥ * ॥

( भाष्यम् ) यद्यङिद् गुणस्य प्रतिषेधो वक्तव्यः—'विश्न' इति ॥

( दूषणभाष्यम् )

सूत्रं च भिद्यते ।

( समाधानभाष्यम् )

यथान्यासमेवास्तु ।

( दूषणस्मारणभाष्यम् )

ननु चोक्तं यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेध इति ।

( दूषणोद्धारभाष्यम् )

नैष दोषः । निपातनादेतत् सिद्धम् ॥ किं निपातनम् ? । 'प्रश्ने चासन्नकाले' इति ॥ यजयाच ॥९०॥

( स्त्र्यधिकारोक्तप्रत्ययाः )

---

( ५५५ क्तिन्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. २४ )

## १०७९ स्त्रियां क्तिन् ॥ ३ । ३ । ९४ ॥

( ४०४३ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ स्त्रियां क्तिन्नाबादिभ्यश्च ॥ * ॥

( भाष्यम् ) स्त्रियां क्तिनित्यत्र "आबादिभ्यश्च" इति वक्तव्यम् । आप्तिः । राद्धिः । दीप्तिः ॥

( ४०४४ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ निष्ठायां वा सेटोऽकारवचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) अथ वा निष्ठायां सेटः अकारो भवतीति वक्तव्यम् ॥

( आक्षेपभाष्यम् )

यदि निष्ठायां सेटोऽकारो भवतीत्युच्यते । स्रंसा ध्वंसेति न सिध्यति । स्रस्तिः ध्वस्तिरिति प्राप्नोति ।

( प्रत्याक्षेपभाष्यम् )

किं पुनरिदं परिगणनं त्रय एवाबादयः । आहोस्विदुदाहरणमात्रम् । किं चातः ।

( प्रत्याक्षेपसमाधानभाष्यम् )

यदि परिगणनम्, भेदो भवति । अथोदाहरणमात्रम्, नास्ति भेदः ।

---

१ तथात्र धातुस्वरेणान्तोदात्तत्वेऽतोलोपे उदात्तनिवृत्तिस्वरेणापि उदात्तत्वमिति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( समाधानभाष्यम् )

स्रस्तिः ध्वस्तिरित्येव भवितव्यम् ॥ स्त्रियां क्तिन् ॥ ९४ ॥

( प्रदीपः ) स्त्रियां क्तिन् ॥ ९४ ॥ स्रस्तिरिति । संसेति नैव भवतीति भावः ॥ ९४ ॥

( उद्द्योतः ) स्त्रियां क्तिन् ॥ ९४ ॥ क्तिन्नावादिभ्यः इतिवचनं गुरोश्च हल इत्येतत्प्राप्तियोग्यविषयम् । निष्ठायां वा सेटोऽकारवचनादित्यनेन समानयोगक्षेमत्वादित्याहुः ॥ एवं च निष्ठायामनिटस्तत्सूत्रप्राप्तिविषया आबादय इति फलितम् ॥ ९४ ॥

( ५५६ क्तिन्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. २५ )

## १०८० स्थागापापचो भावे ॥३।३।९५॥

( ४०४५ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ स्थादिभ्यः सर्वापवादप्रसङ्गः ॥ * ॥

( भाष्यम् ) स्थादिभ्यः सर्वापवादः क्तिन्प्राप्नोति स यथैवाङं बाधते एवं ण्वुलिञावपि बाधेत—'कां त्वं स्थायिकां कां त्वं स्थायिम् ॥

( प्रदीपः ) स्थागापा ॥ ९५ ॥ स्थादिभ्य इति । बाध्यमात्रापेक्षायां बाध्यसमुदायापेक्षायां वा पुरस्तादपवादन्यायो नास्तीति भावः ॥ ण्वुलिञाविति । विभाषाख्यानपरिप्रश्नयोरित्यनेन विहितौ ॥

( उद्द्योतः ) स्थागापा० ॥ ९५ ॥ बाध्यमात्रेति ॥ बाध्यसामान्यचिन्तेयम् ॥ बाध्यसमुदायेति विशेषचिन्तायामपि प्रकारविशेषः ॥ ९५ ॥

( ४०४६ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सिद्धं तु अङ्विधाने स्थादिप्रतिषेधात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम् । अङ्विधाने एव स्थादीनां प्रतिषेधो वक्तव्यः । प्रतिषिद्धे तस्मिन् क्तिनेव भविष्यति ॥

( दूषणभाष्यम् )

सिध्यति । सूत्रं तर्हि भिद्यते ॥

( सिद्धान्तिसमाधानभाष्यम् )

यथान्यासमेवास्तु ॥

( दूषणस्मारणभाष्यम् )

ननु चोक्तं स्थादिभ्यः सर्वापवादप्रसङ्ग इति ॥

( दूषणोद्धारभाष्यम् )

नैष दोषः । "पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्" इत्येवमयं स्त्रियां क्तिन्नङं बाधिष्यते । ण्वुलिञौ न बाधिष्यते ॥

( प्रदीपः ) पुरस्तादिति । अनन्तरबाधेन लब्धावकाशो विधिः परत्वादुत्तरेण बाध्यत इत्यर्थः ॥

पा० दृ० ३०

( ४०४७ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ श्रुयजिषिस्तुभ्यः करणे ॥ * ॥

( भाष्यम् ) श्रुयजिषिस्तुभ्यः करणे क्तिन्वक्तव्यः । श्रूयतेऽनयेति श्रुतिः । इज्यतेऽनयेति इष्टिः । इष्यतेऽनयेति इष्टिः । स्तूयतेऽनयेति स्तुतिः ॥

( प्रदीपः ) श्रुयजीति । ल्युड्बाधनार्थं वचनम् ॥ ९५ ॥

( ४०४८ वार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ ग्लाम्लाज्याहाभ्यो निः ॥ * ॥

( भाष्यम् ) ग्लाम्लाज्याहाभ्यो निर्वक्तव्यः । ग्लानिः । म्लानिः । ज्यानिः । हानिः ॥ स्थागापा ॥ ९५ ॥

( ५५७ क्यप्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. २६ )

## १०८३ व्रजयजोर्भावे क्यप् ॥ ३ । ३ । ९८ ॥

( ४०४९ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ क्यब्विधिरधिकरणे च ॥ * ॥

( भाष्यम् ) क्यब्विधिरधिकरणे चेति वक्तव्यम् । समजन्ति तस्यां समज्या ॥ व्रजयजो ॥ ९८ ॥

( प्रदीपः ) व्रजयजो ॥ ९८ ॥ क्यब्विधिरिति । उत्तरसूत्रे इति भावः ॥ ९८ ॥

( उद्द्योतः ) व्रजयजो ॥ ९८ ॥ उत्तरेति । भाष्ये तद्विषयोदाहरणदानादिति भावः ॥ ९८ ॥

( ५५८ शक्यप्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. २७ )

## १०८५ कृञः श च ॥ ३ । ३ । १०० ॥

( ४०५० वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कृञः श चेति वावचनम् ॥ * ॥

( भाष्यम् ) कृञः श चेति वावचनं कर्तव्यम् ॥ किं प्रयोजनम् ? । क्तिन्नपि यथा स्यात् । कृतिः ॥ कृञः श ॥ १०० ॥

( प्रदीपः ) कृञः श च ॥ १०० ॥ चकारेणानन्तरस्य क्यप एव समुच्चयो न तु व्यवहितस्य क्तिन इति मत्वाह—वावचनमिति । तेन क्रिया कृत्या कृतिरिति रूपत्रयसिद्धिः ॥ १०० ॥

( उद्द्योतः ) कृञः श च ॥ १०० ॥ वावचनमिति । इदमेव ज्ञापयति वर्णगौरवादपि योगविभागो गरीयान्[ती]ति भावः ॥ १०० ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ५५९ शप्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. २८ )

## १०८६ इच्छा ॥ ३ । ३ । १०१ ॥

( प्रश्नभाष्यम् )

किं निपात्यते [1] ।

( समाधानभाष्यम् )

इषेः शे यगभावः ।

( उद्द्योतः ) इच्छा ॥ १०१ ॥ शे यगभाव इति । भावार्थकत्वाद्यकः प्राप्तिः ॥ १०१ ॥

( आक्षेपभाष्यम् )

अल्पमिदमुच्यते इच्छेति ।

( ४०५१ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इच्छापरिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम् ॥ * ॥

( भाष्यम् ) इच्छापरिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानं कर्तव्यम् ॥

( ४०५२ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ जागर्तेरकारो वा ॥ * ॥

( भाष्यम् ) [ जागर्तेरकारो वा वक्तव्यः । ] जागर्या । जागरा ॥ इच्छा ॥ १०१ ॥

---

( ५६० अङ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. २९ )

## १०८९ षिद्भिदादिभ्योऽङ् ॥ ३।३।१०४॥

( ४०५३ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ भिदा विदारणे ॥ * ॥

( भाष्यम् ) भिदा विदारण इति वक्तव्यम् । भित्तिरन्या ॥

( ४०५४ वार्तिकम् ॥ २ ॥ )

### [ ॥ * ॥ छिदा द्वैधीकरणे ॥ * ॥ ]

( भाष्यम् ) छिदा द्वैधीकरण इति वक्तव्यम् । छित्तिरन्या ।

( ४०५५ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ आरा शस्त्र्याम् ॥ * ॥

( भाष्यम् ) आरा शस्त्र्यामिति वक्तव्यम् । आर्तिरन्या ।

( प्रदीपः ) षिद्भिदादि ॥ आर्तिरिति । आङोऽर्तेश्च उपसर्गादृति धाताविति वृद्धिरेकादेशः ।

( ४०५६ वार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ धारा प्रपाते ॥ * ॥

( भाष्यम् ) धारा प्रपात इति वक्तव्यम् । धृतिरन्या ।

( ४०५७ वार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ गुहा गिर्योषध्योः ॥ * ॥

( भाष्यम् ) गुहा गिर्योषध्योरिति वक्तव्यम् । गूढिरन्या । षिद्भिदा ॥ १०४ ॥

( प्रदीपः ) गुहा गिर्योषध्योरिति । गिरिशब्दोऽत्र गिर्यवयवे वर्तते ॥ १०४ ॥

( उद्द्योतः ) षिद्भिदादि ॥ १०४ ॥ ननु गुहा न गिरिरत आह—गिरिशब्द इति ॥ १०४ ॥

---

( ५६१ युच्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ० ३० )

## १०९२ ण्यासश्रन्थो युच् ॥ ३।३।१०७॥

( आक्षेपभाष्यम् )

किमर्थश्चकारः ॥

( समाधानभाष्यम् )

स्वरार्थः । चितोन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् ।

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम् । उदात्त इति वर्तते "भुवीरा उदात्तः" इति ॥

( आक्षेपभाष्यम् )

यद्युदात्त इति वर्तते—"व्रजयजोर्भावे क्यप्" किमर्थः पकारः ॥

( समाधानभाष्यम् )

तुगर्थः । ह्रस्वस्य पिति कृतीति ॥

( आक्षेपभाष्यम् )

उदात्त इत्येव हि वर्तते ॥

एवमपि कुत एतत्तदन्तस्योदात्तत्वं भविष्यति, न पुनरादेरिति ।

( उद्द्योतः ) ण्यास० ॥ १०७ ॥ भाष्ये न पुनरादेरिति । एवं च पाक्षिकानिष्टप्रसङ्ग इति भावः ॥ यत्तु प्रथमातिक्रमे कारणाभावादादेरेव स्यादिति । तन्न । तन्न्यायस्यात्र शास्त्रेऽनङ्गीकारात् ॥ अत एवाद्युदात्तश्चेति सार्थकम् । अत एव तिस्वरितमिति तव्यादावन्तस्वरितसिद्धिरिति बोध्यम् ॥

( समाधानभाष्यम् )

उदात्त इत्यनुवर्तनसामर्थ्यात् यस्य अप्राप्तः स्वरस्तस्य भवति । कस्य चाप्राप्तः । अन्तस्य [2] ॥

---

1 'नां निपातनं" ॥

2 'अन्तस्य' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( उद्द्योतः ) अन्तस्येति । आदेस्त्वाद्युदात्तश्चेत्यनेन सिद्धेरिति भावः ॥

( प्रयोजनान्तरभाष्यम् )

**सामान्यग्रहणाविघातार्थस्तर्हि ।**
**क्व सामान्यग्रहणाविघातार्थेनार्थः ? ।**
**युवोरनाकाविति ।**

( प्रदीपः ) ण्यासश्रन्थो ॥ १०७ ॥ युवोरिति । अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यान्न तु ल्युडादीनामिति भावः ॥

( प्रयोजनान्तरनिरासभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—*सिद्धं तु युवोरनुनासिकवचनादिति ॥**

( प्रदीपः ) अनुनासिकवचनादिति । तत्र ल्युडादीनामपि अनुनासिकत्वप्रतिज्ञानसामर्थ्याद् ग्रहणं भविष्यतीत्यर्थः ॥ १०७ ॥

( उद्द्योतः ) प्रतिज्ञानसामर्थ्यादिति । इदं च ञित्त्वेऽपि तदनुबन्धकपरिभाषया ल्युटोऽग्रहणशङ्कावारणायावश्यकमिति भावः १०७

( ४०५८ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानम् ॥ * ॥

( भाष्यम् ) **युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानं कर्तव्यम् । घट्टना । वन्दना । वेदना ॥**

( ४०५९ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ इषेरनिच्छार्थस्य ॥ * ॥

( भाष्यम् ) **इषेरनिच्छार्थस्येति वक्तव्यम् । अन्विष्यते अन्वेषणा ॥**

( ४०६० वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ परेर्वा ॥ * ॥

( भाष्यम् ) **परेर्वेति वक्तव्यम् । अन्यां परीष्टिं चर । अन्यां पर्येषणां चर ॥ ण्यासश्रन्थो ॥ १०७ ॥**

( ५६२ ण्वुल्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. ३१ )

## १०९३ रोगाख्यायां ण्वुल्बहुलम् ॥ ३ । ३ । १०८ ॥

( ४०६१ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ धात्वर्थनिर्देशे ण्वुल् ॥ * ॥

( भाष्यम् ) **धात्वर्थनिर्देशे ण्वुल् वक्तव्यः । का नामासिका अन्येष्वीहमानेषु । का नाम शायिका अन्येष्वधीयानेषु ।**

( प्रदीपः ) रोगाख्या ॥ १०८ ॥ धात्वर्थनिर्देश इति । क्रियानिर्देश इत्यर्थः ॥

( उद्द्योतः ) रोगाख्यायाम् ॥ १०८ ॥ धातुकृतोर्थः साधनमिति भ्रमं वारयति—क्रियेति । भावाधिकारेऽपि कारकनिवृत्त्यर्थमिदम् ॥

( ४०६२ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ इक्श्तिपौ धातुनिर्देशे ॥ * ॥

( भाष्यम् ) **इक्श्तिपावित्येतौ प्रत्ययौ धातुनिर्देशे वक्तव्यौ । पचेर्ब्रूहि पचतेर्ब्रूहि ।**

( प्रदीपः ) इक्श्तिपाविति । बहुलवचनाच्च क्वचिन्न भवति । श्तिपः शित्करणादकर्तृवाचिन्यपि तस्मिन् शबादयो भवन्ति । यद्यपि क्वचिद्भवति, यथा [1]विभाषा लीयतेरिति । अत्र हि लीलीङोर्यका श्तिपि निर्देशः कृतः । श्यनि तु लीङ एव ग्रहणं स्याद्, न तु लिनातेः ।

( उद्द्योतः ) इक्श्तिपौ ॥ क्वचिन्नेति । भुवो वुगित्यादौ ॥ शित्करणादिति । शित्करणस्य पिबाद्यादेशविधानेन चारितार्थ्यादिदं [2]चिन्त्यम् । तस्मान्निर्देशैरेव [3]विकरणः साध्यः ॥ भाष्ये पचेरिति । कर्मणः शेषत्वविवक्षया षष्ठी ॥ धात्वर्थनिर्देशेप्येतौ बाहुलकात् । अत एवेक्षतेर्नाशब्दम् । आहौ प्रभूतादिभ्यः ॥ गच्छतौ परदारादिभ्य इति प्रयोगाः सङ्गच्छन्ते ॥

( ४०६३ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ वर्णात्कारः ॥ * ॥

( भाष्यम् ) **वर्णात्कारप्रत्ययो वक्तव्यः । अकारः ॥**

---

१ धातुरूपस्य कृतः कृदन्तस्येत्यर्थः । ( र. ना. )

२ चिन्त्यमिति ॥ शबादय इत्यादिपदेन पिबाद्यादेशानामपि संग्रहान्न्यूनता प्रदीपे । 'न हि घटायोन्मीलितेन चक्षुःपटं न पश्यति' इति न्यायेन शित्करणसामर्थ्याद् 'भवते रः' इत्यादौ शप इव 'पिबतेः' इत्यादौ पिबाद्यादेशानामपि करणे का नो हानिः ॥ किं च इक्श्तिपौ नैव कर्तृवाचकौ 'अकर्तरि' इत्युपादानात् ॥ नापि भाववाचकौ 'धात्वर्थनिर्देशे' इत्यनुवृत्तावपि 'धातुनिर्देशे' इत्युपादानात् । किं तु धातुघटकानुपूर्वीविशिष्टधातुस्वरूपपरतायामेव भवत इति 'पचेर्ब्रूहि' इत्यस्य 'पच्धातोर्ब्रूहि' इत्यर्थे 'रूपाणि' इति शेषः ॥ एवं च 'भवते रः' इत्यत्र भवतिशब्दो भूधातुपर एवेति भावकर्मकर्तृप्रत्यये बभूवे अनुबभूवे बभूव इत्यादिस्थले सर्वत्रैवाकारः सिद्धो भवतीति बोध्यम् ॥

३ निर्देशैरेव विकरणसाधनवत् पिबाद्यादेशसाधने का तव हानिः न हि 'निर्देशैर्विकरणा एव साध्या न पिबाद्यादेशाः' इति प्रभुवाक्यमस्ति ॥ तस्मात् शित्करणात् तन्निमित्तककार्यजातं विकरणरूपमादेशरूपं च साधनीयमिति प्रदीपाशयः सम्यगेव ॥ नागेशभट्टस्तु—

"नवीनेभ्योऽप्युत्तमत्वं प्रायः ख्यापयितुं नवः ।
तदाशयमबुद्ध्वैव खण्डने यतते मृषा" ॥ इति

रीतिमनुसरतीति दाधिमथाः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

(प्रदीपः) वर्णादिति । वर्णवाचिनो वर्णानुकरणादित्यर्थः । बहुलग्रहणात् क्वचिन्न भवति अस्य चाविति यथा । तथा क्वचिद्वर्णसमुदायानुकरणादपि—एवकार इति । कारप्रत्ययस्य ककारस्येत्संज्ञा प्रयोजनाभावान्न भवति ॥ ननु करणं कारः अस्य कारः अकार इत्येवं सिध्यति ॥ नैतदस्ति । एवं हि विज्ञायमानेऽकारकरणमित्यादि न सिध्येत् ॥ कारप्रत्ययस्य कृदतिङिति्यधिकाराद्धातुविहितत्वेऽपि कृत्संज्ञा । ततस्तदन्तस्य प्रातिपदिकत्वाद्विभक्त्युत्पत्तिः ॥

(उद्योतः) कृत्संज्ञेति । बाहुलकादित्यन्ये ॥

(४०६४ वार्तिकम् ॥ ४ ॥)

॥ * ॥ रादिफः ॥ * ॥

(भाष्यम्) रादिफो वक्तव्यः । रेफः ॥

(४०६५ वार्तिकम् ॥ ५ ॥)

॥ * ॥ मत्वर्थाच्छः ॥ * ॥

(भाष्यम्) मत्वर्थाच्छो वक्तव्यः । एवं मत्वर्थीयः ॥

(प्रदीपः) एवं मत्वर्थीय इति । अकारलोपस्त्वत्राभत्वेऽपि भाष्यकारवचनाद्बहुलग्रहणाद्वा ॥

(उद्योतः) एवं मत्वर्थीय इति ॥ प्रातिपदिकत्वाद्विभक्त्युत्पत्तिरित्यनुषङ्गः ॥ आर्धधातुकत्वाभावादतो लोपाप्राप्तेः, स्वादित्वाभावेनाभत्वाद्यस्येति लोपाप्राप्तेश्चाह—भाष्यकारेति ॥ बहुलग्रहणादिति सारम् ॥ तदाश्रयणे भाष्यकारवचनं हेतुः ॥ वृद्धीहेः स्वार्थिकोयं छः ।[1] षष्ठीतत्पुरुषात् गहादित्वाच्छेन कश्चित् साधयति ॥ १०८ ॥

(४०६६ वार्तिकम् ॥ ६ ॥)

॥ * ॥ इणजादिभ्यः ॥ * ॥

(भाष्यम्) इणजादिभ्यो वक्तव्यः । आजिः । आतिः । आदिः ॥

(४०६७ वार्तिकम् ॥ ७ ॥)

॥ * ॥ इञ् वपादिभ्यः ॥ * ॥

(भाष्यम्) इञ् वपादिभ्यो वक्तव्यः । वापिः । वासिः । वादिः ॥

(४०६८ वार्तिकम् ॥ ८ ॥)

॥ * ॥ इक् कृष्यादिभ्यः ॥ * ॥

(भाष्यम्) इक् कृष्यादिभ्यो वक्तव्यः । कृषिः । किरिः । गिरिः ॥

(४०६९ वार्तिकम् ॥ ९ ॥)

॥ * ॥ संपदादिभ्यः क्विप् ॥ * ॥

(भाष्यम्) संपदादिभ्यः क्विब् वक्तव्यः । संपत् । विपत् । प्रतिपत् । आपत् । परिषत् । रोगाख्या १०८

(प्रदीपः) संपदादिभ्य इति । क्तिन्नपि बहुलवचनाद्भवति संपत्तिरिति ॥ १०८ ॥

(५६३ इष्टार्थविधिसूत्रम् ॥ ३ । ३ । १ आ. ३२)

## १०९८ कृत्यल्युटो बहुलम् ॥३।३।११३॥

(४०७० वार्तिकम् ॥ १ ॥)

॥ * ॥ कृतो बहुलं पादहारकाद्यर्थम् ॥ * ॥

(भाष्यम्) कृतो बहुलमिति वक्तव्यम् । [किमर्थम्?] पादहारकाद्यर्थम् । पादाभ्यां ह्रियते पादहारकः । गले चोप्यते गलेचोपकः । श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन ॥ कृत्यल्युटो बहुलम् ॥ ११३ ॥

(प्रदीपः) कृत्य ॥ ११३ ॥ कृत इति । कृत्यग्रहणमपनीय कृद्ग्रहणं व्यापकत्वात्कर्तव्यं तस्मिंश्च कृते ल्युड्ग्रहणं न कर्तव्यं तस्यापि कृत्त्वात् ॥ श्वोऽग्नीनिति । अनद्यतनेपि लृट् भवति ॥ ११३ ॥

(५६४ घप्रत्ययान्तनिपातनसूत्रम् ॥ ३।३।१ आ० ३३)

## ११०४ गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ३ । ३ । ११९ ॥

(४०७१ वार्तिकम् ॥ १ ॥)

॥ * ॥ गोचरादीनामग्रहणं प्रायवचनाद् यथा कषो निकष इति ॥ * ॥

(भाष्यम्) गोचरादीनां ग्रहणं शक्यमकर्तुम् ॥ घञ् कस्मान्न भवति? । प्रायवचनाद् । यथा कषः निकष इति । प्रायवचनाद् घञ् न भवति ॥ गोचरसंचर ॥ ११९ ॥

(प्रदीपः) गोचरसंचर ॥ ११९ ॥ प्रायवचनादिति । हलश्चेत्यत्र प्रायग्रहणानुवर्तनाद् घञः क्वचिदभावाद् घ एव भवतीत्यर्थः ॥ ११९ ॥

---

[1] बहुलग्रहणात्क्वचिन्न भवति यथा 'रदाभ्याम्' 'रपाभ्याम्' 'रपरः' इत्यादिषु ॥ तत्र 'उरण् रपरः' इत्यत्र 'र' इत्यत्र प्रत्याहारत्वस्यैव कैयटेन वर्णितत्वात् वर्णग्रहणाभावेन नैव इफप्रत्ययापत्तिरिति वाच्यम् । तत्र प्रत्याहारत्वे मुनित्रयासंमतेः ॥ अत एव 'लृकारस्य रपरत्वं प्राप्नोति' इत्यनिष्टताबोधकं 'प्राप्नोति' इति पदं संगच्छते । 'अग्रे 'रेफबाधनार्थं भविष्यति' इत्युक्त्या स्पष्टमेव वर्णपरताया एव प्रत्यायनादिति प्रपञ्चितं दाधिमथ्यां सिद्धान्तकौमुदीव्याख्यायाम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ५६५ घञ्प्रत्ययविधिसूत्रम् ॥ ३।३।१ आ. ३४ )

# ११०६ हलश्च ॥ ३ । ३ । १२१ ॥

( ४०७२ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ घञ्विधाववहाराधारावायानामुपसंख्यानम् ॥ * ॥

( भाष्यम् ) घञ्विधौ अवहाराधारावायानामुपसंख्यानं कर्तव्यम् । अवह्रियन्ते अस्मिन्नवहारः । आध्रियन्तेऽस्मिन्नाधारः । एत्यैतस्मिन्वयन्त्यावावायः ॥ हलश्च ॥ १२१ ॥

( प्रदीपः ) हलश्च ॥ १२१ ॥ अध्यायसूत्रे आधारावायशब्दौ वार्तिके दर्शनादभियुक्तैः प्रक्षिप्तौ ॥ १२१ ॥

( उद्द्योतः ) हलश्च ॥ १२१ ॥ भाष्येति । एत्येति । आङोऽर्थप्रदर्शनमिदम् ॥ वेञ आत्वे आतो युगिति युक् ॥ १२१ ॥

( ५६६ घञ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ० ३५ )

# ११०८ उदङ्कोनुदके ॥ ३ । ३ । १२३ ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते । न 'हलश्च' इत्येव सिद्धम् ।

( समाधानभाष्यम् )

अनुदक इति वक्ष्यामीति । इह मा भूत्—उदकोदञ्चनः ॥

( ४०७३ प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ उदङ्कोनुदकग्रहणानर्थक्यं च प्रायवचनाद्यथा गोदोहनः प्रसाधन इति ॥ * ॥

( भाष्यम् ) उदङ्कोनुदकग्रहणं चानर्थकम् ॥ घञ् कस्मान्न भवति ? ।

प्रायवचनाद् घञ् न भवति । यथा गोदोहनः प्रसाधन इति ॥ उदङ्कोऽनु ॥ १२३ ॥

( प्रदीपः ) उदङ्को ॥ १२३ ॥ प्रायवचनादिति । घञ्वद्घोपि न भवतीति ल्युडेव भवति ॥ १२३ ॥

( उद्द्योतः ) उदङ्को ॥ १२३ ॥ घञ्वत् घोऽपीति । सूत्रेऽनुदक इति प्रतिषेधसामर्थ्यात्प्रत्याख्याने प्रायग्रहणादिति भावः ॥ १२३ ॥

( ५६७ घप्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. ३६ )

# १११० खनो घ च ॥ ३ । ३ । १२५ ॥

( ४०७४ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ खनो डडरेकेकवकाः ॥ * ॥

(भाष्यम्) डो वक्तव्यः—आखः ॥ डरो वक्तव्यः—आखरः । इको वक्तव्यः—आखनिकः ॥ इकवको वक्तव्यः—आखनिकवकः ॥ खनो घ च ॥ १२५ ॥

( खलर्थप्रकरणम् )

( ५६८ खल्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. ३७ )

# ११११ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ ३ । ३ । १२६ ॥

( ४०७५ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अजब्भ्यां स्त्रीखलनाः ॥ * ॥

( भाष्यम् ) अजब्भ्यां स्त्रीखलना भवन्ति विप्रतिषेधेन । अजपोरवकाशः—चयः । लवः ॥ स्त्रीप्रत्ययानामवकाशः—कृतिः । हृतिः ॥ इहोभयं प्राप्नोति—चितिः स्तुतिः ॥

खलोवकाशः—ईषद्भेदः । सुभेदः ॥ अजपोः स एव ॥ इहोभयं प्राप्नोति—ईषच्चयः । सुचयः । ईषल्लवः । सुलवः ॥

अनस्यावकाशः—इध्मप्रव्रश्चनः । अजपोः स एव ॥ इहोभयं प्राप्नोति—पलाशचयनः । अविलवनः ॥ स्त्रीखलना भवन्ति विप्रतिषेधेन ॥

( ४०७६ वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ स्त्रियाः खलनौ विप्रतिषेधेन ॥ * ॥

(भाष्यम्) स्त्रियाः खलनौ भवतो विप्रतिषेधेन । स्त्रीप्रत्ययानामवकाशः—कृतिः । हृतिः । खलोवकाशः—ईषद्भेदः । सुभेदः । इहोभयं प्राप्नोति—ईषद्भेदा । सुभेदा ॥

अनस्यावकाशः—इध्मप्रव्रश्चनः ॥ स्त्रीप्रत्ययानां स एव ॥ इहोभयं प्राप्नोति—सक्तुधानी । तिलपीडनी ॥ खलनौ भवतो विप्रतिषेधेन ॥ ईषद्दुःसुषु ॥ १२६ ॥

( ५६९ खल्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ. ३८ )

# १११२ कर्तृकर्मणोश्च भूकृञोः ॥ ३ । ३ । १२७ ॥

( ४०७७ वार्तिकम् ॥ १ ॥ )

## ॥ * ॥ खल् कर्तृकर्मणोश्च्व्यर्थयोः ॥ * ॥

( भाष्यम् ) खल् कर्तृकर्मणोः च्व्यर्थयोरिति वक्तव्यम् । अनाढ्येन भवता ईषदाढ्येन शक्यं भवितुम् ईषदाढ्यंभवं भवता । दुराढ्यंभवम् । स्वाढ्यंभवम् ॥

(प्रदीपः ) कर्तृ ॥ १२७ ॥ च्व्यर्थयोरिति । तेनाभूत-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तद्भावादन्यत्र खल् न भवति—आढ्येन सुभूयत इति । अत्र गतित्वात् सुशब्दस्य धातोः प्राक् प्रयोगः । स्वाढ्यंभवं भवतेत्यादौ खलः खित्करणसामर्थ्याद्धातोरनन्तरं कर्तृकर्मणी प्रयुज्येते ॥

( उद्द्योतः ) कर्तृकर्मणोः ॥ १२७ ॥ खल् न भवतीत्यस्योदाहरणमाह—आढ्येन सुभूयत इति ॥ खित्करणसामर्थ्यादिति । नचकूलमुद्रुज इत्यादिवद्व्यवहितेऽपि कृद्ग्रहणपरिभाषया मुम् प्रवर्तकत्वेन तच्चरितार्थमिति वाच्यम् । भाष्यप्रयोगेणैव व्यवस्थाकल्पनादिति तत्त्वम् ॥ बहुलग्रहणेनेत्यन्ये ॥

( ४०७८ वार्तिकम् ॥ २ ॥ )

॥*॥ कर्तृकर्मग्रहणं चोपपदसंज्ञार्थम् ॥*॥

( भाष्यम् ) कर्तृकर्मग्रहणं चोपपदसंज्ञार्थं द्रष्टव्यम् । तद् द्वेष्यं विजानीयाद् 'अभिधेययोरि'ति । तदाचार्यः सुहृद् भूत्वान्वाचष्टे-'कर्तृकर्मग्रहणं चोपपदसंज्ञार्थमि'ति ॥ कर्तृकर्म ॥ १२७ ॥

( प्रदीपः ) तदाचार्य इति । एतच्च खित्करणादनव्ययस्य मुमर्थाल्लभ्यते । चकारस्य सन्नियोगार्थत्वादीषद्दुस्सवोप्युपपदान्याश्रीयन्ते ॥ १२७ ॥

( उद्द्योतः ) दुःस्सवोप्युपपदानीति ॥ समासस्तु पर्यायेणेति बोध्यम् ॥ १२७ ॥

( ५७० युच्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । १ आ० ३९ )

## १११५ अन्येभ्योपि दृश्यते

## ॥ ३ । ३ । १३० ॥

( ४०७९ वार्तिकम् ॥ १ ॥ )

॥ * ॥ भाषायां शासियुधिदृशिधृषिभ्यो युच् ॥ * ॥

( भाष्यम् ) भाषायां शासियुधिदृशिधृषिभ्यो युज्वक्तव्यः । दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्धर्षणः ॥

( ४०८० वार्तिकम् ॥ २ ॥ )

॥ * ॥ मृषेश्च ॥ * ॥

( भाष्यम् ) मृषेश्चेति वक्तव्यम् । दुर्मर्षणः ।

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

( प्रदीपः ) अन्येभ्यो ॥ १३० ॥ भाषायामिति । छन्दसीत्यधिकाराद् भाषायां न प्राप्नोतीति वचनम् ॥ १३० ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

( उद्द्योतः ) अन्येभ्यो ॥ १३० ॥ छन्दसीत्यधिकारादिति छन्दसि गत्यर्थेभ्य इत्यतः ॥ १३० ॥

इति श्रीशिवभट्टसुतोपाध्यायोपनामकसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्द्योते तृतीयस्य तृतीये पादे प्रथममाह्निकम् ॥

# तृतीयाध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

( ५७१ अतिदेशसूत्रम् ॥ ३ । ३ । २ आ. १ )

## १११६ वर्तमानसामीप्ये वर्तमानवद्वा

## ॥ ३ । ३ । १३१ ॥

( प्रदीपः ) वर्तमान ॥ १३१ ॥ समीपमेव सामीप्यमिति स्वार्थे ष्यञं वर्णयन्ति ॥ अन्ये—समीपस्य भावः सामीप्यम् वर्तमानस्य सामीप्यं वर्तमानसामीप्यमिति व्याचक्षते ॥ ननु भूतभविष्यतोरनेन प्रत्ययानामतिदेशात्तयोरेव सामीप्यसंबन्धो न वर्तमानस्येति समासाप्रसङ्गः ॥ नैष दोषः । पारम्पर्येण संबन्धसद्भावात् ॥ अथास्मिन् पक्षे 'गुणेन ने'ति षष्ठीसमासप्रतिषेधः कस्मान्न भवति ॥ अत्र केचिदाहुः—शौक्ल्यादीनां रूपादिविशेषाणां समासप्रतिषेध इति ॥ अन्येत्वाहुः—अयमेव निर्देशो ज्ञापयति अनित्यः समासप्रतिषेध' इति ॥ अपरे ब्रुवते—गुणशब्दस्य संबन्धिशब्दत्वाद् गुणाक्षिप्तस्य गुणिन एव समासप्रतिषेधः । न च वर्तमानः सामीप्यस्य गुणी । भूतभविष्यतोस्तद्गुणत्वात् ।

( उद्द्योतः ) वर्तमानसामीप्ये० ॥ १३१ ॥ समीपमेवेति । कालप्रकरणात्कालेन सामानाधिकरण्यार्थमिति भावः । अत्रापि पक्षे षष्ठीसमास एव ॥ समासाप्रसङ्ग इति । भूतभविष्यन्निरूपितं वर्तमानस्य यत्सामीप्यं तत्र वर्तमानवत्प्रत्ययातिदेशोऽनर्थकः ॥ ये हि वर्तमाने प्रत्ययास्ते समीपभूतेऽपि तस्मिन् सिद्धा एवातो वर्तमाननिरूपितं भूतभविष्यतोर्यत्सामीप्यं तत्रेत्यर्थः स्वीकार्यः । तथाच वर्तमानपदेन समासाप्रसङ्ग इति भावः ॥ सामीप्यसंबन्ध इति । तृतीयातत्पुरुषः । सामीप्यनिरूपितः संबन्ध इत्यर्थः । सामीप्येनाश्रयतारूपः साक्षात्संबन्धस्तयोरेवेत्यर्थः ॥ पारम्पर्येणेति । तत्र समीपद्वारा सामीप्येन संबन्ध इति भावः ॥ प्रतियोगितासंबन्धेनान्वयः[1] । वर्तमानकालप्रतियोगिकसामीप्ये सतीत्यर्थः इत्यन्ये ॥ भूतादौ वर्तमानसामीप्ये सति वर्तमानवत्प्रत्यया इति वाच्योर्थः ॥ एवंच तत्समीपे भूतादौ फलतीति बोध्यम् ॥ तद्गुणित्वात् । सामीप्यगुणित्वादित्यर्थः । तद्गुणत्वादिति पाठे बहुव्रीहिः । अयमेव युक्तः पाठः ॥

( आक्षेपभाष्यम् )

वत्करणं किमर्थम् ? ।

[1] प्रतियोगितारूपपरम्परासंबन्धसत्त्वादित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( प्रदीपः ) वत्करणमिति । वर्तमान इत्येतावतैव वर्तमानसहचरितानां प्रत्ययानां सिद्धत्वादिति प्रश्नः ॥

(उद्द्योतः) वर्तमान इति प्रथमान्तेन वर्तमाने ये प्रत्यया इत्यर्थः। कथं लभ्यतेऽत आह—सहचरितानामिति । लक्षणयेति भावः ॥

( आक्षेपपरिहारभाष्यम् )

**'वर्तमानसामीप्ये वर्तमाने वा' इतीयत्युच्यमाने-वर्तमाने ये प्रत्यया विहितास्ते वा वर्तमानसामीप्ये धातुमात्रात्स्युः । वत्करणे पुनः क्रियमाणे न दोषो भवति ॥**

(प्रदीपः) धातुमात्रादिति । वर्तमानग्रहणेन साहचर्यात्प्रत्ययानां रूपमात्रमेव लक्ष्येत ततश्च संकरोपि स्यात् । यस्माद्धातोर्वर्तमाने यः प्रत्ययो विहितः स विशेषानुपादानाद्धात्वन्तरादपि स्यादित्यर्थः ॥

( उद्द्योतः ) रूपमात्रमिति । न तूपाधिविशिष्टमित्यर्थः ॥

**( भाष्यम् ) यदि च याभ्यः प्रकृतिभ्यो येन विशेषणेन वर्तमाने प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन वर्तमानसामीप्ये भवन्ति । ततोमी वर्तमानवत्कृताः स्युः ॥ अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यात् । नामी वर्तमानवत्कृताः स्युः ॥**

( आक्षेपभाष्यम् )

**इह 'वर्तमानसामीप्ये वर्तमानवद्वा' इति उक्त्वा लडेवोदाह्रियते । यदि पुनर्वा लड्भवतीत्येवोच्येत ।**

( प्रदीपः ) लडेवेति । वृत्तिष्विति भावः ।

( समाधानवार्तिकावतरणभाष्यम् )

**अत उत्तरं पठति—**

( ४०८१ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ वर्तमानसामीप्ये वर्तमानवद्वचनं शत्राद्यर्थम् ॥ * ॥

**( भाष्यम् ) वर्तमानसामीप्ये वर्तमानवद्वचनं क्रियते ॥ [किं प्रयोजनम् ?] शत्राद्यर्थम् । शत्राद्यर्थोयमारम्भः । एषोस्मि पचन् । एषोस्मि पचमान इति ॥**

(प्रदीपः) शत्राद्यर्थमिति । लटः शतृशानचाविलनेन वर्तमानाधिकाराद्वर्तमानकालविहितस्यैव लटः शतृशानचौ भवतः न तु कालान्तरविहितस्येति भावः ।

( उद्द्योतः ) वत्करणे तु वर्तमानेर्थे यथा भवन्ति तथा सामीप्येपि भवतीत्यर्थान्न दोष इति भावः ॥

( प्रयोजननिरासभाष्यम् )

**नैतदस्ति प्रयोजनम् । लडादेशौ शतृशानचौ । तत्र 'वा लड्भवति' इत्येव सिद्धम् ॥**

( प्रदीपः ) लडादेशाविति । लण्मात्रादेशौ । वर्तमानग्रहणस्य तत्रानपेक्षणादिति भावः ॥

( उद्द्योतः ) लण्मात्रेति । मात्रशब्दः कात्स्न्र्ये ।

( प्रयोजनभाष्यम् )

**यौ तर्ह्यलडादेशौ एषोस्मि पवमानः एषोस्मि यजमान इति ॥**

**यौ चापि लडादेशौ, तावपि प्रयोजयतः ॥ वर्तमानविहितस्य लटः शतृशानचावुच्येते अविशेषविहितश्चायं योगः ॥**

**शत्राद्यर्थमिति खल्वप्युच्यते बहवश्च शत्रादयः । एषोस्मि अलंकरिष्णुः । एषोस्मि प्रजनिष्णुः ॥ वर्तमानसा ॥ १३१ ॥**

( प्रदीपः ) यौ तर्हीति । पूङ्यजोः शानन् । ताच्छील्यवयोवचनशक्तिषु चानश् ॥ इङ्धार्यादिभ्यः शतृप्रत्यय इत्यर्थः ॥ वर्तमानविहितस्येति । लटः स इत्यादिविहितलण्निवृत्त्यर्थमवश्यं तत्र वर्तमानग्रहणमपेक्षणीयमिति भावः ॥ अविशेषविहित इति । वर्तमानलक्षणाद्विशेषादन्यस्मिन्विशेषे विहित इत्यर्थः ॥ १३१ ॥

( उद्द्योतः ) भाष्ये यौ तर्हीति । शत्रानावित्यर्थः ॥ नन्वयमपि वर्तमानसमीपभूतभविष्यतोर्विधीयमानः कथमविशेषविहित इत्यत आह—वर्तमानलक्षणादिति ॥ भाष्येऽयं योग इति । एतद्योगविहित इत्यर्थः ॥

प्रयोजनान्तरमप्याह—भाष्ये शत्राद्यर्थमिति । इष्णुजादयोऽपि वर्तमान एव विधीयन्ते इति भावः ॥ सुद्वैः शतुर्नजिङः चानश्च सर्वकालत्वमुक्तं भूत इति सूत्रे भाष्ये इति चानशुक्तिः कैयटे चिन्त्या[3] ॥ १३१ ॥

( ५७२ अतिदेशसूत्रम् ॥ ३ । ३ । २ आ. २ )

## ११९७ आशंसायां भूतवच्च ॥ ३ । ३ । १३२ ॥

( सूत्रप्रयोजनभाष्यम् )

**आशंसा नाम भविष्यत्काला ॥**

( प्रदीपः ) आशंसायाम् ॥ १३२ ॥ आशंसेति । आशंसा अभिमतार्थवाञ्छा । सा वर्तमानापि विषयस्य भविष्यत्त्वाद्भविष्यत्कालेत्युच्यते । इह चाशंसाऽतिदेशस्य विषयभावेनोपात्ता । आशंसायां विषये आशास्यमानक्रियावचनाद्धातोर्भूतवद्वर्तमानवच्च प्रत्यया भवन्तीत्यर्थः संपद्यते ॥

( उद्द्योतः ) आशंसायां० ॥ १३२ ॥ सूत्रप्रयोजनं दर्शयति—भाष्ये—आशंसानामेति । आशंसायां भविष्यत्कालत्वं

---

१ वर्तमान इति प्रथमान्तेन वर्तमाने ये प्रत्यया इत्यर्थ इत्युद्द्योतदर्शनेन प्रथमान्तपाठ एवात्र प्रतीयते । ( र. ना. )

२ इणो यज्ञसंयोग इति सूत्रेण इणो विहितस्य शतुरित्यर्थः । ( र. ना. )

३ यौ तर्ह्यलडादेशौ, इति भाष्ये वर्तमानकालविहितावित्याशयः, वर्तमानकालविहितलडादेशशत्राद्यर्थोऽयमारम्भ इत्युपक्रमात् । तथा च सर्वकालविहितस्य चानश उक्तिश्चिन्त्येति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कथमत आह—आशंसेति ॥ ननु भविष्यन्त्यामाशंसायामेव प्रत्ययः कस्मान्नेत्यत आह—इह चेति । एवं च कालस्य सर्वत्र लकारप्रकृत्यर्थे एवान्वयस्य क्लृप्तत्वात्राशंसायां तदन्वय इति भावः ॥

( ४०८२ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः ॥ * ॥

( भाष्यम् ) आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधो वक्तव्यः ॥

( ४०८३ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः । किं कारणम् ? । अपवादस्य निमित्ताभावात् । नात्रापवादस्य निमित्तमस्ति । कथम् ? । अनद्यतने हि तयोर्विधानम् । अनद्यतने हि तौ विधीयेते लङ्लिटौ । न चात्रानद्यतनः कालो विवक्षितः । कस्तर्हि ? । भूतकालसामान्यम् ॥

(प्रदीपः) नवेति । अत्र सूत्रे भूतमात्रमुच्यते न तु तद्विशेषोनद्यतनस्तत्र सामान्यातिदेशे विशेषानतिदेश इति न्यायाल्लङ्लिटौ न भवत इत्यर्थः ॥

( उद्योतः ) अपवादस्येति भाष्यस्य अपवादस्य निमित्तमुपादायातिदेशाभावात् इत्यर्थः । तदाह—नात्रापवादस्येति । निमित्तमुपात्तमस्तीत्यर्थः ॥ ततः किमत आह—न चात्रेति ॥

( ४०८४ आक्षेपवार्तिकम् ॥ ३ ॥ )

॥ * ॥ आशंसासंभावनयोरविशेषात्तद्विधानस्याप्राप्तिः ॥ * ॥

( भाष्यम् ) आशंसासंभावनमित्यविशिष्टावेतावर्थौ ॥

आशंसासंभावनयोरविशेषात् ॥ तद्विधानस्याप्राप्तिः ।

आशंसायां ये विधीयन्ते, ते संभावनेऽपि प्राप्नुवन्ति । ये च संभावने विधीयन्ते, ते आशंसायामपि प्राप्नुवन्ति ॥

किं तर्ह्युच्यते—अप्राप्तिरिति ।

न साधीयः प्राप्तिर्भवति । इष्टा व्यवस्था न प्रकल्पेत । न सर्वे सर्वत्रेष्यन्ते ॥

( प्रदीपः ) आशंसासंभावनयोरिति । यद्यविशेषः कथं द्वन्द्वनिर्देश इति चेत् ॥ शब्दस्वरूपाभिधायित्वाददोषः । आशंसासंभावनयोरर्थभेदाभावादविशेष इत्यर्थः ॥ आशंसा अनागतवस्तुवाञ्छा संभावनमपि भाविवस्तूत्प्रेक्षणमिति भावः ।

( उद्योतः ) कथं द्वन्द्वेति । विरूपाणामपि समानार्थानामेकशेषारम्भादिति भावः ॥ शब्देति । तस्य भिन्नत्वाद्भिन्नार्थत्वमिति भावः ॥ उत्प्रेक्षणमिति । तदपीच्छाविशेष एवेत्यभिमानः[3] ।

( ४०८५ समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ न वा संभावनावयवत्वादाशंसायाः ॥ * ॥

( भाष्यम् ) न वा एष दोषः । किं कारणम् ? । संभावनावयवत्वादाशंसायाः । संभावनावयवात्मिका आशंसा ॥ आशंसा नाम प्रधारितोर्थः । अभिनीतश्चानभिनीतश्च ॥ संभावनं नाम प्रधारितोर्थः । अभिनीत एव ॥

( प्रदीपः ) नवेति । अवयवशब्दः पृथग्भाववाची संभावनात् पृथगेवाशंसेत्यर्थः ॥ प्रधारितोर्थ इति । इदं मे भूयादिति मनसा विषयीकृतोर्थः । आशंसाविषयत्वादाशंसाशब्देनात्रोक्तः ॥ अभिनीत इति । कारणयोग्यतावशाच्छक्यप्राप्तिरित्यर्थः । ततोन्योनभिनीत इत्यर्थः ॥ अन्ये त्वप्रधारित इति पठन्ति अनिर्धारितोवश्यंभावितया अनिश्चित इत्यर्थः । संभावनं चासति विधुरप्रत्ययोपनिपाते भवितव्यमनेनार्थेनेति ज्ञानमित्यनयोर्भेदः ॥

( उद्योतः ) नन्वाशंसायाः सम्भावनावयवत्वं बाधितमत आह—अवयवशब्द इति ॥ प्राप्यत्वेन निश्चयविषयत्वरूपप्रधारितत्वस्याशंसाविषयेऽसंभवादाह—मनसेति । संकल्पात्मकेनेत्यर्थः ॥ अनेनेच्छारूपताऽऽशंसाया उक्ता ॥ आशंसायाः प्रधारितार्थत्वासंभवादाह—आशंसाविषयत्वादिति ॥ अनिश्चित इति । अत एवेच्छाविषयः ॥ अनेनेच्छारूपता तस्या उक्ता ॥ विधुरप्रत्ययो विपरीतकारणम् ॥ तेन संभावितस्यार्थस्य शक्यप्राप्तित्वं सूचितम् ॥ संभावनं नामाप्रधारित इति पाठे एककोट्यंशे उत्कटत्वेऽपि अन्यांशेऽनुत्कटज्ञानसत्त्वादनिश्चयरूपज्ञानविषयः तेन ज्ञानरूपतोऽक्ता ॥ प्रधारितोर्थ इति पाठे अंशेऽवश्यभावित्वेन निश्चित इत्यर्थः ॥ अभिनीत एवेति । शक्यप्राप्तिरित्यर्थः ॥ ज्ञानमिति । ज्ञानेच्छयोश्च भेदः स्पष्ट एवेत्यर्थः ॥

( ४०८६ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अर्थासंदेहो वाऽसमर्थत्वात्संभावनस्य ॥ * ॥

( भाष्यम् ) अथ वा अर्थासंदेह एव पुनरस्य ।

---

१ भूतसामान्ये विधीयमानो यो लुङ् तदपवादस्य लङ्लिटो वेत्यर्थः । (र. ना.)

२ तत्रविधानं यस्येति व्यधिकरणबहुव्रीहिः । तत्पदार्थ आशंसासंभावना वा । अप्राप्तिः, इष्टायाः प्राप्तेरभाव इत्यर्थः । ( र. ना. )

३ अभिमानोक्तिबीजं तु तस्योत्कटैककोटिकज्ञानरूपत्वम् इति । ( र. ना. )

४ अवपूर्वकाद् यौतेरमिश्रणार्थकात्पचाद्यच् । अवयौति पृथक् भवतीत्यवयवः । ( र. ना. )

५ 'आप्यत्वेन' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



किं कारणम्? । अलमर्थत्वात्संभावनस्य । संभावने आलमर्थ्यं गम्यते । आशंसायां पुनरनालमर्थ्यम् ॥

( उद्द्योतः ) तयोर्भेदे एकदेश्युक्तयुक्त्यन्तरमाह—भाष्ये अर्थासंदेहोवेति । तयोरर्थाविशेषेप्यालमर्थ्यानालमर्थ्यकृतो भेद इति भावः ॥

( अर्थासंदेहभाष्यम् )

आचार्यप्रवृत्तिर्ज्ञापयति—'संभावनेऽपि नालमर्थ्यं गम्यते' इति । यदयं "संभावनेऽलमिति चेत्" इत्याह । तस्मात्सुष्ठूच्यते—*न वा संभावनावयवत्वादाशंसाया* इति ॥ आशंसायां भूत ॥१३२॥

( प्रदीपः ) यदयमिति । यदि संभावने नियमेनालमर्थो गम्येत तदा व्यभिचाराभावादलमिति विशेषणं नोपाददीतेत्यर्थः ॥ १३२ ॥

( उद्द्योतः ) तद्दूषयति—आचार्येति ॥ नालमर्थ्यमिति । नियमेनालमर्थ्यं न गम्यते इत्यर्थः ॥ १३२ ॥

---

( ५७३ लृड्विधिसूत्रम् ॥ ३ । ३ । २ आ. ३ )

## १११८ क्षिप्रवचने लृट् ॥ ३।३।१३३ ॥

( ४०८७ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ क्षिप्रवचने लृट आशंसावचने लिङ्विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) क्षिप्रवचने लृट आशंसावचने लिङ् भवति विप्रतिषेधेन । क्षिप्रवचने लृड् भवतीत्यस्य अवकाशः—उपाध्यायश्चेदागतः क्षिप्रमध्येष्यामहे। आशंसावचने लिङ् भवतीत्यस्यावकाशः । उपाध्यायश्चेदागतः आशंसे युक्तोधीयीय । इहोभयं प्राप्नोति—उपाध्यायश्चेदागतः आशंसे क्षिप्रमधीयीय । लिङ् भवति विप्रतिषेधेन ॥

( ४०८८ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात् ॥ * ॥

( भाष्यम् ) अनिष्पन्ने निष्पन्नशब्दः शिष्यः शासितव्यः । किं कारणम्? । अनिष्पन्नत्वात् । देवश्चेद् वृष्टो निष्पन्नाः शालयः । तत्र भवितव्यं संपत्स्यन्ते शालय इति ॥

( प्रदीपः ) क्षिप्रवच ॥ १३३ ॥ अनिष्पन्न इति । अनाशंसार्थमिदम् । वृष्टश्चेदित्यादि वस्तुस्वरूपकथनम् ।

( उद्द्योतः ) क्षिप्रवचने ॥ १३३ ॥ भाष्ये अनिष्पन्न इति ॥ भविष्यति भूतप्रत्ययो वक्तव्य इत्यर्थः ॥ अनाशंसार्थमिति । आशंसायां पूर्वेण भूतवदतिदेशाद्भविष्यत्यपि क्तः सिद्ध इति भावः ॥ आशंसाभावं दर्शयति—भाष्ये—देवश्चेद्वृष्ट इति ॥ तदेवाह—वस्तुस्वरूपेति । न त्वस्याशंसाविषयतेति भावः ॥ वृष्टौ जातायामेवं वादो लोकस्य ।

( ४०८९ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ सिद्धं तु भविष्यत्प्रतिषेधात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम्? । भविष्यत्प्रतिषेधात् । यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति ॥ कश्चिदाह—देवश्चेद् वृष्टः संपत्स्यन्ते शालय इति । स उच्यते—'मैवं वोचः', 'संपन्नाः शालयः' इत्येवं ब्रूहि ॥

( प्रदीपः ) सिद्धं त्विति । अप्शालिबीजसंयोग एव निष्पत्तिः शालीनाम् तत्रैव निष्पत्तेर्वर्तनादिति भावः ॥

( उद्द्योतः ) भाष्ये यल्लोक इति । यल्लोको भविष्यत्प्रयोगं न मृष्यति तस्मान्न मुख्या निष्पत्तिर्निष्पदेरर्थः । किं त्वन्य एवेत्यर्थः ॥ तमेवाह—अप्शालीति । अयमेव निष्पत्तिपदार्थोऽभितस्तस्येति भावः ॥ शालीनामिति । पूर्वान्वयि । तत्रैवेति । अप्शालिबीजसंयोगरूपनिष्पत्तावेवात्र प्रायो निष्पूर्वकपदेर्वर्तमानत्वात्तद्वाचकत्वादित्यर्थः ॥ निष्पदेरित्युपलक्षणं संपदेरपि । निष्पत्तेरितिपाठेऽप्ययमेवार्थः । क्तिपानिर्देशाद् श्यंस्तु कर्त्रर्थकत्वाभावान्न कृतः ॥ यद्वा सत्कार्यवादे तत्रैव निष्पत्तेर्वर्तमानत्वम् । आर्थन्याख्यानमेव युक्तम् ॥

( ४०९० वार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ हेतुभूतकालसंप्रेक्षितत्वाद्वा ॥ * ॥

( भाष्यम् ) हेतुभूतकालसंप्रेक्षितत्वाद्वा पुनः सिद्धमेतत् । हेतुभूतकालं वर्षम् । वर्षकाला च क्रिया ।

( प्रदीपः ) हेतुभूतकालसंप्रेक्षितत्वाद्वेति । कारणसंबन्धो कालः कार्यस्य व्यवस्थाप्यते कारणान्तरापेक्षाभावप्रतिपादनायेत्यर्थः । हेतुभूतस्य वर्षादेर्यः कालः स एव कार्ये संप्रेक्षितः कारणस्यैव कार्यरूपतया विवक्षितत्वात् । कार्यकारणयोरभेदाध्यवसायादित्यर्थः । भाष्यकारस्त्वेतदेव च वस्त्वन्यथा व्याचष्टे—हेतुभूतकालवर्षमिति । हेतुभूतस्य

---

१ 'वृष्टश्चेद्देवः' इति पाठः कैयटेन दृष्टो भवेत् ॥

२ 'प्रत्युच्यते' इत्यर्थः ॥

३ न कृत इति ॥ एवं च 'सिध्यतेरपारलौकिके' 'अस्यतितृपोः—' इत्यत्र श्यनः 'भवते र' इत्यत्र शपः 'चिनोति' इत्यत्र 'श्नोः' इत्यादीनां बहूनामुपलभ्यमानानां विकरणानामनुपपत्तिः स्यात् ॥ तस्मात् कर्तृवाचित्वाभावेऽपि शित्करणसामर्थ्याच्छ्यादयो विकरणाः पिवादय आदेशाश्च निराबाधाः ॥ प्रदीपे निष्पत्तिशब्दः क्तिन्नन्त एवासंशयं निश्चेयः । इति दाधिमथाः ॥

४ अप्शालिबीजसंयोग एव निष्पत्तिरिति कैयटस्य व्याख्याद्वयम्—अत्रैव निष्पत्तिपदार्थ इति, सत्कार्यवादेऽन्यत्राप्येष एव निष्पत्तिपदार्थ इति—तत्राद्यव्याख्यानमेव युक्तम् । सत्कार्यवादेऽन्यस्थलेऽभिव्यक्तिरूपनिष्पत्तिपदार्थस्वीकारादिति भावः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हेतुत्वं प्राप्तस्य मेघादेर्यः कालः स एव वर्षस्य । वर्षस्य च यः कालः स एव निष्पत्तिक्रियाया इत्यर्थः ॥

( उद्योतः ) भाष्ये हेतुभूतेति । हेतुभूतस्य कारणत्वं प्राप्तस्य कारणस्य कालं कार्ये आरोप्य प्रयोग इत्यर्थः । तदारोपफलमाह—कारणान्तरेति । तेन चावश्यभावित्वं फलति । कारणस्यैवेति । अपामप्युपादानकारणत्वादिति भावः ॥ अन्यथेति । वृष्टेः—प्रागपि मेघोत्पत्त्यनन्तरमीदृशप्रयोगस्य दर्शनात्तत्र च वृष्टेरपि वास्तवभूतत्वाभावात्तदुपपत्तिमपि दर्शयितुमिति भावः ॥ मेघादेरिति । मेघाद्युत्पत्तेरित्यर्थः ॥

( आक्षेपभाष्यम् )

**यदि तर्हि निष्पन्नोर्थः, किं निष्पन्नकार्याणि न क्रियन्ते? ॥ कानि? । भोजनादीनि ॥**

( उद्योतः ) तत्राद्यपक्षे शङ्कते—भाष्ये—यदि तर्हीति ॥

( समाधानभाष्यम् )

**अन्यदिदानीमेतदुच्यते—'किं निष्पन्नकार्याणि न क्रियन्ते' इति । यत्तु तन्निष्पन्नोर्थो न निष्पन्न इति । स निष्पन्नोर्थः, अवश्यं खल्वपि कोष्ठगतेष्वपि शालिषु अवहननादीनि प्रतीक्ष्याणि ॥ एवमिहापि निष्पन्नोर्थः । अवश्यं तु जननादीनि प्रतीक्ष्याणि ॥**

( प्रदीपः ) जननादीनीति । जननमभिव्यक्तिः । एतदुक्तं भवति—विद्यमानोप्यर्थोऽनभिव्यक्तोर्थक्रियां न करोति । न चैतावता तस्यासत्त्वम् । कारणसामग्र्या कार्योत्पादानुमानात् स्थूलेन तु रूपेणाभिव्यक्तोर्थक्रियां संपादयति ॥

( उद्योतः ) अभिव्यक्तिरिति । स्थूलरूपेणाभिव्यक्तिरित्यर्थः । निष्पत्तिस्त्वत्राप्[२]शालिबीजसंयोग एव । तत्रापि कार्यसत्त्वादिति भावः । तद्दर्शयति—एतदिति ॥ कारणसामग्र्येति ॥ ननु कार्यसमधिगम्यं सामग्रीत्वम् । तथा[३]च कार्यानुमाने इतरेतराश्रय इति चेन्न वृद्धपरम्परया सामग्रीत्वग्रहात् । तेनावश्यभावित्वेन कार्योत्पत्तावनुमितायां तत्र कारणकालारोपेण भूतप्रयोगेऽपि स्थूलरूपेणाभिव्यक्तिरूपमुख्यजननोत्तरमेव क्रियाकारित्वमिति भावः ॥

( ४०९१ वार्तिकम् ॥ ५ ॥ )

**॥ * ॥ अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः कर्तुर्विद्यमानत्वात् ॥*॥**

**( भाष्यम् ) अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः शासितव्याः । कूपोस्ति कूपो भविष्यति कूपो भविता कूपोभूत् कूप आसीत् कूपो बभूवेति ।**

( प्रश्नभाष्यम् )

**कथं पुनर्ज्ञायते भवन्त्या एषोर्थ इति? ।**

**कर्तुर्विद्यमानत्वात् । कर्तात्र विद्यते ॥**

**कथं पुनर्ज्ञायते कर्तात्र विद्यत इति? ।**

**कूपोनेन कदाचिद् दृष्टः । न चास्य कंचिद्व्यपायं पश्यति । स तु तत्र बुद्ध्या नित्यां सत्तामध्यवस्यति कूपोत्रास्तीति ।**

( प्रदीपः ) अस्त्यर्थानामिति । सत्तावाचिनामित्यर्थः ॥ भवन्तीशब्दो लटः पूर्वाचार्यसंज्ञा ॥ कर्तुर्विद्यमानत्वादिति । ततश्च सत्ताया वर्तमानत्वं न तु भूतभविष्यद्रूपत्वमित्यर्थः ॥

( उद्योतः ) नन्वस्त्यर्थानामित्ययुक्तम् । नह्यस्तिः केषांचिद्धातूनामर्थोऽत आह—सत्तेति अस्तेरर्थो येषामित्यर्थं इति भावः ॥ कर्तुर्विद्यमानत्वेपि क्रियायाः कालत्रययोगदर्शनादाह—ततश्च सत्ताया इति । कर्तृसत्त्वयोः समनियतत्वादिति भावः ॥

( ४०९२ समाधानवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ सिद्धं तु यथास्वकालं समुच्चारणात् ॥ * ॥**

**( भाष्यम् ) सिद्धमेतत् । कथम्? । यथास्वकालमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति ॥**

( आक्षेपभाष्यम् )

**कथं पुनर्ज्ञायते यथास्वकालमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति? ।**

( ४०९३ वार्तिकम् ॥ ७ ॥ )

**॥ * ॥ अवात्वात् ॥ * ॥**

**( भाष्यम् ) यत्र वा भाष्यन्ते ॥**

( ४०९४ वार्तिकम् ॥ ८ ॥ )

**॥ * ॥ असिद्धविपर्यासश्च ॥ * ॥**

**(भाष्यम्) असिद्धश्च विपर्यासः । न हीह कश्चित् 'कूपोस्ति' इति प्रयोक्तव्ये कूपोभूदिति प्रयुङ्क्ते ॥**

**किं पुनः कारणं 'न वा भाष्यन्ते' 'असिद्धश्च विपर्यासः' । इह हि किंचिदिन्द्रियकर्म किंचिद् बुद्धिकर्म । इन्द्रियकर्म समासादनम्, बुद्धिकर्म व्यवसायः । एवं हि कश्चित्पाटलिपुत्रं जिगमिषुराह—'योयमध्वा गन्तव्यः आपाटलिपुत्रात्' । एतस्मिन्कूपो भविष्यति । अनद्यतने कूपो भवितेति । समासाद्य कूपोस्तीति समासाद्यातिक्रम्य कूपोभूदिति । समासाद्यातिक्रम्योषित्वा कूप आसीदिति । समासाद्यातिक्रम्योषित्वा विस्मृत्य कूपो बभूवेति । तद्यदेन्द्रियैकर्म तदैता विभक्तयः । यदा**

---

१ सिद्धं तु भविष्यत्प्रतिषेधात्, हेतुभूतकालसंप्रेक्षितत्वाद्वा, इति द्वयोः पक्षयोराद्यपक्ष इत्यर्थः । ( र. ना. )

२ अप्शालिबीजसंयोगसत्त्वेऽपि निष्पन्नाः शालय इति प्रयोगरूपकार्यसत्त्वादिति भावः । ( र. ना. )

३ तथा चेति पाठो भाति । ( र. ना. )

४ समानकालसामानाधिकरण्यादिति फलितार्थः । ( र. ना. )

५ कूपमिति शेषः । एवमग्रेऽपि । ( र. ना. )

६ विवक्षितमिति शेषः । एवमग्रे बुद्धिकर्मेत्यत्रापि । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हि बुद्धिकर्म तदा वर्तमाना भविष्यति ॥ क्षिप्रवचने ॥ १३३ ॥

( प्रदीपः ) अवात्वादिति । अविकल्पितत्वादित्यर्थः ॥ एतदेवाह—यन्न वा भाष्यन्त इति । एतदुक्तं भवति—यदि वचनेन वर्तमाने लडादयो विधीयेरन् तदा लोके विकल्पेन प्रयुज्येरन् । कूपोऽभूदिति प्रयोक्तव्ये कूपोभविष्यतीत्यपि प्रयुज्येत ॥

तदेव दर्शयति—असिद्धविपर्यासश्चेति ॥ इह किंचिदिति । इन्द्रियव्यापारकालस्य कूपसत्त्वं प्रति भेदकत्वेनाश्रयणात् तस्यापि तत्कालत्वमित्यर्थः ॥ तदुक्तं हरिणा—

सतामिन्द्रियसंबन्धात्सैव सत्ता विशिष्यते ।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥
अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते ।
यः समासादनाद्भेदः स तत्र न विवक्षित ।'
इति ॥ १३३ ॥

( उद्द्योतः ) अविकल्पितत्वादिति । प्रयोगे इत्यर्थः ॥ यन्न वेति । प्रयोगे इति शेषः ॥ वचनेन । अस्त्यर्थानामिति वार्तिकेन । असिद्धविपर्यास इति । भाष्येऽपि लोके इति शेषः । चो हेतौ । यतः शिष्टलोकानामसिद्धो विपर्यासो विपरीतः प्रयोगोऽतो न विकल्पेन प्रयुज्यन्तेऽन्यैः अतोत्र यथाकालमेव प्रत्यया इत्यर्थः ॥ किं पुनः कारणमिति ॥ किं पुनः कारणं वा न भाष्यन्ते । किं च कारणं शिष्टानां विपर्यासासिद्धिरिति भावः । वास्तवकालभेदस्याभावाद्वचनेनैव साधने प्राप्तेत्येव विपर्यासादिकमिति भावः ॥ इन्द्रियव्यापारः । तत्प्राप्तिः । इन्द्रियपदेनात्र कर्मेन्द्रियम् ॥ सतां वस्तूनाम् । इन्द्रियसंबन्धात्तत्कृतप्राप्तिसंबन्धात् । एकैव सत्ता कालभेदमापद्यते ॥ वस्त्वन्तरम् इन्द्रियव्यापारः । तदेवाह—यः समासादनादिति । तत्र बुद्धिकर्मण्यव्यवसायविषये ॥ वर्तमानेति । वर्तमानार्थिकेत्यर्थः ॥ १३३ ॥

( ५७४ लङ्लुटोर्निषेधविधिसूत्रम् ॥ ३।३।२ आ. ४ )

## १११९ नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥ ३ । ३ । १३५ ॥

( आक्षेपभाष्यम् )

किमर्थमिमौ द्वौ प्रतिषेधावुच्येते । न 'अद्यतनवत्' इत्येवोच्येत ।

( ४०९५ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ नानद्यतनवत्प्रतिषेधे लङ्लुटोः प्रतिषेधः ॥ * ॥

( भाष्यम् ) नानद्यतनवत् प्रतिषेधे लङ्लुटोः प्रतिषेधो द्रष्टव्यः ।

( ४०९६ हेतुवार्तिकम् ॥ २ ॥ )

॥ * ॥ अद्यतनवद्वचने हि विधानम् ॥ * ॥

( भाष्यम् ) अद्यतनवद्वचने हि सति विधानमिदं विज्ञायेत ॥

तत्र को दोषः ? ।

( ४०९७ दोषदर्शकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ तत्र लड्विधिप्रसङ्गः ॥ * ॥

( भाष्यम् ) तत्र लड्विधिः प्रसज्येत ॥

( ४०९८ दोषान्तरवार्तिकम् ॥ ४ ॥ )

॥ * ॥ लुङ्लटोश्चायथाकालम् ॥ * ॥

( भाष्यम् ) लुङ्लटोश्चायथाकालं प्रयोगः प्रसज्येत । लुङोपि विषये लट् स्यात् । लटश्च विषये लुङ् यथा स्यात् । अद्य पुनरयं द्वौ प्रतिषेधावुक्त्वा तूष्णीमास्ते । यथाप्राप्तमेवाद्यतने भविष्यति ॥ नानद्यतन ॥ १३५ ॥

( प्रदीपः ) नानद्यतन ॥ १३५ ॥ तत्र लड्विधिप्रसङ्ग इति । अपूर्वविधानेऽद्यतने लटो दृष्टत्वाद्भूतभविष्यदनद्यतने प्रसङ्गः ॥ लुङ्लटोश्चेति । ननु वत्करणात्सादृश्यार्थात्संकरो न भविष्यति । नैतदस्ति । अप्राप्तप्रापणार्थत्वादतिदेशस्य भूतभविष्यच्छब्दोपादानेन लुङ्लटोर्विधानेऽप्यद्यतने दृष्टत्वमात्रेणायथाकालमपि प्रसङ्ग उच्यते । वत्करणं तु तदा विस्पष्टार्थमेव स्यात् । प्रतिषेधोपादाने तु वत्करणमनद्यतनविशेषविहितानामपि प्रतिषेधार्थम् । अन्यथा वत्करणमनर्थकं स्याद् 'नानद्यतन' इत्येव ब्रूयात् । तेन 'परोक्षे लिट्' 'हशश्वतोर्लङ् च' 'लट् स्मे' 'पुरि लुङ् चास्मे' इत्येतत्सूत्रविहिता अपि प्रत्ययाः प्रतिषिध्यन्ते ॥ १३५ ॥

( उद्द्योतः ) नानद्य ॥ १३५ ॥ अपूर्वेति । अद्यतनशब्दोपादानेन कस्यापि विध्यभावात्तत्र दृष्टत्वमात्रेणातिदेशो वाच्यः । तथा च भूतादिरूपेऽद्यतने लङपि स्यादिति भावः ॥ भाष्ये लुङ्लटोरिति । भविष्यत्यद्यतने लुङ्, भूताद्यतने लट् स्यादिति भावः ॥ अप्राप्तेति । लुङ्लटौ भूतभविष्यतोरद्यतने दृष्टौ तत्राद्यतनवदित्युच्यमाने तस्मिन्नेवाद्यतने तयोरतिदेशोऽनर्थक इति कश्चिदंशस्त्याज्यः तत्राद्यतनांशत्यागेनातिदेशे भूतानद्यतने लुङ्, भविष्यति तत्र लडिति प्रयोगसिद्धावपि अद्यतनवदिति विरुध्येत । तस्माद्भूतांशपरित्यागेनातिदेशे आश्रीयमाणेऽयथाकालप्रसङ्ग इति भावः । भाष्ये यथा प्राप्तमेवेति । स्वैरेव विधायकैः स्वेषु कालेषु भवन्तीति न संकरप्रसङ्ग इत्यर्थः ॥ तेन परोक्षे इति । परं स्वन्नमानं चिन्त्यम् । भाष्ये लङ्लुटोरित्योपक्रमे उक्तेरिति दिक् ॥ १३५ ॥

१ तथेति पाठो भाति तथासतीत्यर्थकः । ( र. ना. )

२ अद्यत्वं हि भेदघटितम्, तथाच नैकनिष्ठमिति भूताद्यतनभविष्यदद्यतनविहितयोर्लङ्लुटोर्नाद्यतनविहितसादृश्यमिति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( ५७५ लुटो निषेधसूत्रम् ॥ ३ । ३ । २ आ. ५ )

## ११२० भविष्यति मर्यादावचनेऽवरस्मिन् ॥ ३ । ३ । १३६ ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते । न 'नानद्यतनवद्' इत्येव सिद्धम् ? ।

( ४०९९ वार्तिकम् ॥ १ ॥ )

**॥ * ॥ भविष्यति मर्यादावचनेवरस्मिन्नित्यक्रियाप्रबन्धार्थम् ॥ * ॥**

( भाष्यम् ) अक्रियाप्रबन्धार्थोयमारम्भः ॥

(प्रदीपः) भविष्यति म ॥१३६॥ अक्रियाप्रबन्धार्थमिति । एतच्च उपलक्षणं तेन असामीप्यार्थं चेति द्रष्टव्यम् । वचनसामर्थ्याच्च क्रियाप्रबन्धसामीप्ययोरिति निवृत्तम् ।

( आक्षेपभाष्यम् )

किमुच्यते अक्रियाप्रबन्धार्थ इति, न पुनः क्रियाप्रबन्धार्थोऽपि स्यात् ? ।

( ५००० वार्तिकम् ॥ २ ॥ )

**॥ * ॥ क्रियाप्रबन्धार्थमिति चेद् वचनानर्थक्यम् ॥ * ॥**

( भाष्यम् ) क्रियाप्रबन्धार्थमिति चेद् वचनमनर्थकं भवति । सिद्धं क्रियाप्रबन्धे पूर्वेणैव ।

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—'अनहोरात्राणाम्' इति वक्ष्यामि इति । इह मा भूद्—योयं त्रिंशद्रात्र आगामी तस्य योवरः पञ्चदशरात्र इति ।

( प्रदीपः ) अनहोरात्राणामिति । उत्तरसूत्रस्य प्रयोजनमेतत् स्यादिति भावः ।

( उद्द्योतः ) भविष्यति ॥ १३६ ॥ उत्तरसूत्रे सप्रयोजनमेतदिति पाठः ॥ त्रिंशद्रात्र इति । संख्यापूर्वं रात्रं क्लीबमिति त्वस्मादेव भाष्यप्रयोगाल्लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येत्युक्तेश्चानित्यमिति भावः ॥

( ५००१ वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अहोरात्रप्रतिषेधार्थमिति चेन्नानिष्टत्वात् ॥ * ॥**

( भाष्यम् ) अहोरात्रप्रतिषेधार्थमिति चेत् ॥ तन्न । किं कारणम् ? । अनिष्टत्वात् । अत्रापि 'नानद्यतनवत्' इत्येवेष्यते ॥

( प्रदीपः ) अनिष्टत्वादिति । क्रियाप्रबन्धसामीप्ययोरहोरात्रविभागेप्यनद्यतने प्रतिषेध इत्यर्थः ॥

१ तेषामन्येन कालेन विभाग इत्यर्थः । ( र. ना. )

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनं भविष्यतीति वक्ष्यामीति । इह मा भूत्—योयमध्वा गत आपाटलिपुत्रात्तस्य यदवरं साकेतादिति ।

( समाधानभाष्यम् )

नानिष्टत्वात् । अत्रापि 'नानद्यतनवदित्येवेष्यते ॥

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनं मर्यादावचन इति वक्ष्यामीति । इह मा भूत्—योयमध्वा अपरिमाणो गन्तव्यः तस्य यदवरं साकेतादिति ।

नानिष्टत्वात् । अत्रापि नानद्यतनवदित्येवेष्यते ।

( प्रदीपः ) मर्यादावचन इति । नियमार्थमेतत् स्यान्मर्यादावचन एवेति भावः ॥

( उद्द्योतः ) योयमध्वाऽपरिमाण इति । अपरिमाण इति छेदः ॥ नियमार्थमिति । क्रियाप्रबन्धविषय इति भावः ॥

( दूषणोद्धारभाष्यम् )

इदं तर्हि प्रयोजनम् । अवरस्मिन्निति वक्ष्यामीति । इह मा भूत्—योयमध्वा आपाटलिपुत्राद्गन्तव्यस्तस्य यत्परं साकेतादिति ।

नानिष्टत्वात् । अत्रापि नानद्यतनवदित्येवेष्यते । तस्मात्सुष्ठूच्यते भविष्यति मर्यादावचनेवरस्मिन्नित्यक्रियाप्रबन्धार्थम् । क्रियाप्रबन्धार्थमिति चेद्वचनानर्थक्यमिति ॥ भविष्यति म ॥ १३६ ॥

( प्रदीपः ) अत्रापीति । विधिनियमसंभवे विधेर्ज्यायस्त्वात् ॥ १३६ ॥

( उद्द्योतः ) विधीति । अक्रियाप्रबन्धादाविति भावः १३६

---

( ५७६ लुटोनिषेधविधिसूत्रम् ॥ ३ । ३ । २ आ. ६ )

## ११२१ कालविभागे चानहोरात्राणाम् ॥ ३ । ३ । १३७ ॥

( ५००२ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अनहोरात्राणामिति तद्विभागे प्रतिषेधः ॥ * ॥**

( भाष्यम् ) अनहोरात्राणामिति चेत्तद्विभागे प्रतिषेधो वक्तव्यः । योयं त्रिंशद्रात्र आगामी तस्य योवरोर्धमास इति ।

( ५००३ वार्तिकम् ॥ १ ॥ )

**॥ * ॥ तैश्च विभागे ॥ * ॥**

( भाष्यम् ) तैश्च विभागे प्रतिषेधो वक्तव्यः । योयं मास आगामी तस्य योवरः पञ्चदशरात्रः ॥

२ अन्यकालस्येति शेषः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तद् द्वेष्यं विजानीयात्—अहोरात्राणामेवाहोरात्रैर्विभागे प्रतिषेधो भवतीति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे अनहोरात्राणामिति तेषां विभागे तैश्च विभाग इति ॥ कालवि ॥ १३७ ॥

( प्रदीपः ) कालविभा ॥ १३७ ॥ तद्विभाग इति । अनहोरात्राणामिति संबन्धसामान्ये षष्ठी, न कर्मणि नापि कर्तरि ॥ तेन यदाहोरात्राणामन्येन कालेन विभागोऽन्यस्य वा अहोरात्रैरहोरात्राणां वाऽहोरात्रैः सर्वथा प्रतिषेध इत्यर्थः ॥१३७॥

( उद्योतः ) कालवि ॥ १३७ ॥ द्वन्द्वश्च प्राणीत्यादिवत् अहोरात्राणामहोरात्रैर्विभागे एव स्यादतो वार्तिकम्—अनहोरात्राणामिति । तद्याचष्टे—संबन्धसामान्ये इति ॥ १३७ ॥

( ५७७ लुटो विकल्पविधिसूत्रम् ॥ ३ । ३ । २ आ. ७ )

## ११२२ परस्मिन्विभाषा ॥ ३।३।१३८ ॥

( आक्षेपभाष्यम् )

कस्मिन्परस्मिन्? ।

( समाधानभाष्यम् )

कालविभागे ।

कुत एतत्? ।

योगविभागकरणसामर्थ्यात् ॥ परस्मि ॥ १३८ ॥

( प्रदीपः ) परस्मिन् ॥ १३८ ॥ योगविभागकरणसामर्थ्यादिति । इह भविष्यति मर्यादावचनेवरस्मिन्ननहोरात्राणामित्येकयोगे कर्तव्ये पृथग्योगकरणं परस्मिन्विभाषेत्यत्र कालविभागग्रहणसंबन्धार्थमेवेत्यर्थः ॥ १३८ ॥

( उद्योतः ) परस्मिन् विभाषा ॥ १३८ ॥ एकयोग इति । सामर्थ्यात्कालविभागविषय एव निषेधः ॥ न हि देशविभागस्याहोरात्रैः संबन्धोऽस्ति इति भावः ॥ पृथग्योगेति । कालविभागग्रहणसामर्थ्याचेत्यपि बोध्यम् ॥ १३८ ॥

( ५७८ लृङ्विधिसूत्रम् ॥ ३ । ३ । २ आ. ८ )

## ११२४ लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ ३ । ३ । १३९ ॥

( ५००४ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ साधनातिपत्तावपि ॥ * ॥

( भाष्यम् ) साधनातिपत्तावित्यपि वक्तव्यम् । इहापि यथा स्यात् । अभोक्ष्यत भवान्मांसेन यदि मत्समीप आसिष्यतेति ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ॥

( सिद्धान्तिभाष्यम् )

न वक्तव्यम् । नान्तरेण साधनं क्रियायाः प्रवृत्तिरस्तीति । साधनातिपत्तिश्चेत् क्रियातिपत्तिरपि भवति । तत्र क्रियातिपत्तावित्येव सिद्धम् ॥ लिङ्निमित्ते ॥ १३९ ॥

( प्रदीपः ) लिङ्निमि ॥ १३९ ॥ साधनातिपत्ताविति । साधनं मांसादि तस्यातिपत्तौ क्रियानिष्पत्तावपि लृङ् भवतीति भावः ॥ अभोक्ष्यतेति । मांसस्यात्रानिष्पत्तिः । भोजनक्रियायास्तु निष्पत्तिरेव ॥ साधनातिपत्तिश्चेदिति । करणभेदाद्भिन्नैव भोजनक्रिया । तेन मांसातिपत्तौ मांसभोजनक्रियातिपत्तिरेवेत्यर्थः ॥ १३९ ॥

( उद्योतः ) लिङ्निमित्ते ॥ १३९ ॥ कुतश्चिन्निमित्तात्क्रियाया अनिष्पत्तिः क्रियातिपत्तिः । साधनातिपत्तिः साधनविशेषविशिष्टक्रियातिपत्तिरित्यर्थः ॥ १३९ ॥

( ५७९ लृङ्विधिसूत्रम् ॥ ३ । ३ । २ आ० ९ )

## ११२५ भूते च ॥ ३ । ३ । १४० ॥

( ५००५ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ भूते लृङुताप्यादिषु ॥ * ॥

( भाष्यम् ) भूते लृङ् उताप्यादिषु द्रष्टव्यः । उताध्यैष्यत । अप्यध्यैष्यत ॥ भूते ॥ १४० ॥

( प्रदीपः ) भूते च ॥ १४० ॥ भूत इति । वक्ष्यमाणसूत्रार्थपर्यालोचनलभ्यं चैतत् । उताप्योरित्यारभ्य यल्लिङ्निमित्तं तत्र भूते क्रियातिपत्तौ अनेन लृङ्प्रत्ययः प्राक् ततो विकल्प इत्यर्थः ॥ १४० ॥

( ५८० लृङ्विकल्पाधिकारसूत्रम् ॥ ३ । ३ । २ आ. १० )

## ११२६ वोताप्योः ॥ ३ । ३ । १४१ ॥

( ५००६ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ विभाषा गर्हाप्रभृतौ प्रागुतापिभ्याम् ॥ * ॥

( भाष्यम् ) विभाषा गर्हाप्रभृतौ प्रागुतप्यिभ्यामिति वक्तव्यम् । "वोताप्योरि"इति ह्युच्यमाने संदेहः स्यात्—प्राग्वोताप्योर्भ्यां, सह वेति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे—विभाषा गर्हाप्रभृतौ प्रागुतापिभ्यामिति ॥ वोताप्योः ॥ १४१ ॥

( प्रदीपः ) वोताप्योः ॥ १४१ ॥ विभाषेति । गर्हायां लडपि जात्वोरित्यनेन लङ्विधानाल्लिङ्निमित्ताभावा-

---

१ तत्र यथा प्राण्यङ्गानां तैः सहैव तूर्याङ्गाणां तैः सहैवैकवद्भावो नान्यैः सह तत्रेतरेतरयोग एव द्वन्द्व एवमिहापि अहोरात्राणां तैरेव विभागे स्यादिति भावः । ( र. ना. )

२ लृङ् भवतीति नञ्रहितः पाठः साधुः । ( र. ना. )

३ उताप्योः समर्थयोरित्यतः प्राग् विभाषाकथमीत्यादावित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

द्विभाषा कथसि लिङ् चेत्यतः प्रभृति प्रागुताप्योः समर्थयोरित्यतः सूत्राद् यल्लिङ्निमित्तं तत्र लङ्विकल्पः । मर्यादायां ह्यत्राङ्नाभिविधावित्यर्थः । गर्हाप्रभृताविति । गर्हादिविशिष्टे प्रकृत्यर्थ इत्यर्थः ॥ १४१ ॥

( उद्द्योतः ) वोताप्ये ॥ १४१ ॥ भाष्ये विभाषागर्हाप्रभृताविति । गर्हाविशिष्टप्रकृत्यर्थविषयविभाषापदघटितविभाषाकथमिलङ् चेति सूत्रप्रभृतीत्यर्थः ॥ अनन्तरसूत्रत्यागे बीजमाह— गर्हायां लडपीति ॥ १४१ ॥

( ५८१ लङ्विधिसूत्रम् ॥ ३ । ३ । २ आ. ११ )

## ११२७ गर्हायां लडपिजात्वोः ॥ ३ । ३ । १४२ ॥

( ४००७ वार्तिकम् ॥ १ ॥ )

॥ * ॥ गर्हायां लड्विधानानर्थक्यं क्रियाऽसमाप्तेर्विवक्षितत्वात् ॥ * ॥

( भाष्यम् ) गर्हायां लड्विधानमनर्थकम् । किं कारणम् ? । क्रियाया असमाप्तेर्विवक्षितत्वात् । क्रियाया अत्रासमाप्तिर्विवक्षिता । एष एव च नाम न्याय्यो वर्तमानः कालः यत्र क्रिया अपरिसमाप्ता भवति । तत्र "वर्तमाने लड्" इत्येव सिद्धम् ।

( आक्षेपभाष्यम् )

यदि "वर्तमाने लड्" इत्येवमत्र लड् भवति ॥ शतृशानचावपि तर्हि प्राप्नुतः ।

( इष्टापत्तिभाष्यम् )

इष्येते च शतृशानचौ—अपि मां याजयन्तं पश्य । अपि मां याजयमानं पश्य ॥ गर्हायां ल ॥ १४२ ॥

( प्रदीपः ) गर्हायाम् ॥ १४२ ॥ इष्येते इति । तौ च सूत्रारम्भे सत्यवर्तमानकालविहितत्वाल्लटो न प्राप्नुत इति दोषवानेव सूत्रारम्भ इत्यर्थः ॥ १४२ ॥

( उद्द्योतः ) गर्हायां लडपि ॥ १४२ ॥ मां याजयन्तमिति । ताच्छील्यप्रतिपादनेन गर्हा यदनेन क्रियते, तत्सर्वं याजनार्थमिति सर्वदा याजयन्नेवासाविति क्रियायाः समाप्तिरविवक्षितेति भावः ॥ १४२ ॥

( ५८२ लिङ्लृट् लङ्विधिसूत्रम् ॥ ३ । ३ । २ आ. १२ )

## ११३० अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि ॥ ३ । ३ । १४५ ॥

( ५००८ अकिंवृत्तग्रहणानर्थक्यवार्तिकम् ॥ १ ॥ )

॥ * ॥ किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यम् ॥ * ॥

( भाष्यम् ) किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणमनर्थकम् । निवृत्तं 'किंवृत्ते' इति, तस्मिन्निवृत्ते अविशेषेण किंवृत्ते चाकिंवृत्ते च भविष्यति ।

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—उपपदसंज्ञां वक्ष्यामीति ।

( प्रश्नभाष्यम् )

उपपदसंज्ञावचने किं प्रयोजनम् ? ।

( प्रयोजनभाष्यम् )

"उपपदमतिङ्" इति समासो यथा स्यात् ।

( प्रदीपः ) अनव ॥ १४५ ॥ इदं तर्हीति । अकिंवृत्तशब्देन किंवृत्तादन्यत्पदं पर्युदासाश्रयणेन गृह्यते तस्योपपदसंज्ञार्थमकिंवृत्तग्रहणं तेन किंवृत्ताकिंवृत्तयोरुपपदसंज्ञा सिध्यतीति भावः ॥

( उद्द्योतः ) अनवक्लृ ॥ १४५ ॥ ननु किंवृत्तेनेत्यर्थात्कथमुपपदत्वमत आह—अकिं वृत्तेति ॥

( प्रयोजनप्रत्याख्यानभाष्यम् )

अतिङितिप्रतिषेधः प्राप्नोति ।

(प्रदीपः) अतिङितिप्रतिषेध इति । न विद्यते तिङ् यस्मिन् समासे सोऽतिङिति बहुव्रीहिसमासाश्रयणादिति भावः ॥

( प्रयोजनभाष्यम् )

यदा तर्हि लटः सत्संज्ञौ तदोपपदसंज्ञा भविष्यति ।

( प्रदीपः ) उपपदसंज्ञेति । उपपदसंज्ञाकार्यं समास इत्यर्थः ॥

( उद्द्योतः ) उपपदसंज्ञायां अन्यदापि भावात्तदा भविष्यतीत्यनुपपन्नमत आह—उपपदसंज्ञाकार्यमिति ॥ १४५ ॥

( प्रयोजननिराकरणभाष्यम् )

भविष्यदधिकारविहितस्य लटः सत्संज्ञावुच्येते अविशेषविहितश्चायम् ॥ अनवक्लृप्त्य ॥ १४५ ॥

( प्रदीपः ) भविष्यदधिकारविहितस्येति । लटः सद्वेत्यत्र भविष्यतीत्यधिकाराद्भविष्यतीत्येवं विहितस्य लृट् शेषे चेत्यस्य लृट आनन्तर्याद्वा शतृशानचौ ॥ अविशेषेति । कालमात्रे विधानादयं लृट् यद्यपि भविष्यति भवति तथापि भविष्यदधिकारविहितो न भवतीति शतृशानचावस्य न भवतः ॥ १४५ ॥

( ५८३ लिङ्विधिसूत्रम् ॥ ३ । ३ । २ आ. १३ )

## ११३२ जातुयदोर्लिङ् ॥ ३।३।१४७ ॥

( ५००९ वार्तिकम् ॥ १ ॥ )

॥ * ॥ जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानं कर्तव्यम् । यदा भवद्विधः क्षत्रियं याज-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



येत् । यदि भवद्विधः क्षत्रियं याजयेत् ॥ जातुयदोर्लिं ॥ १४७ ॥

( ५८४ लृट्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । २ आ. १४ )

## ११३६ शेषे लृडयदौ ॥ ३ । ३ । १५१ ॥

( ५०१० आदिग्रहणानर्थक्यवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ चित्रीकरणे यदिप्रतिषेधानर्थक्यमर्थान्यत्वात् ॥ * ॥

( भाष्यम् ) चित्रीकरणे यदि प्रतिषेधोनर्थकः । किं कारणम् ? । अर्थान्यत्वात्, नहि यदावुपपदे चित्रीकरणं गम्यते । किं तर्हि ? । संभावनम् ॥ शेषे लृड ॥ १५१ ॥

( प्रदीपः ) शेषेलृ ॥ १५१ ॥ नहि यदाविति । आश्चर्यं यदि स भुञ्जीतेत्यत्र संभावनं तात्पर्येण प्रतीयत इति तन्निमित्त एव लिङ् भविष्यति । संभावनेऽलमिति । चेदित्यनेनेत्यर्थः । संभावने हि यदिशब्दः प्रयुज्यते ॥ १५१ ॥

( उद्द्योतः ) शेषे लृट् ॥ १५१ ॥ संभावनं तात्पर्येणेति । यदि शब्दस्य सभावनार्थत्वेन संभावनं प्रतीयते इत्यर्थः ॥ तदेवाह—संभावने हि यदि शब्द इति । भाष्ये न हि यदाविति । चित्रीकरणं त्वाश्चर्यपदगम्यम् ॥ ननु अन्धो नाम पर्वतमारोक्ष्यतीत्यादावुदाहरण इव तत्समभिव्याहारं विनापि गम्यमिति भावः ॥ १५१ ॥

( ५८५ लिङ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । २ आ. १५ )

## ११४१ हेतुहेतुमतोर्लिङ् ॥ ३।३।१५६ ॥

( ५०११ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ हेतुहेतुमतोर्लिङ् वा ॥ * ॥

(भाष्यम्) हेतुहेतुमतोर्लिङ्वेति वक्तव्यम् । दक्षिणेन चेद्यायात्, न शकटं पर्याभवेत् । दक्षिणेन चेद्यास्यति, न शकटं पर्याभविष्यति ।

( ५०१२ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ भविष्यदधिकारे च ॥ * ॥

( भाष्यम् ) भविष्यदधिकारे इति वक्तव्यम् । इह मा भूत्—वर्षतीति धावति । हन्तीति पलायत इति ॥

( आक्षेपभाष्यम् )

अथेदानीं शतृशानचावत्र कस्मान्न भवतः ? ।

( समाधानभाष्यम् )

देवत्रातो गलो ग्राह इति योगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥
हेतुहेतुमतो ॥ १५६ ॥

( प्रदीपः ) हेतु ॥ १५६ ॥ देवत्रात इति । व्यवस्थितविभाषाश्रयणादिति भावः । तेन देवत्रात इति संज्ञायां भवति, न तु देवत्राण इति ॥ गलशब्दः प्राण्यङ्गे भवति, न तु गर इति । विषे तु गर इति न तु गल इति ॥ जलचरे ग्राह एव, ज्योतिषि ग्रह एव । इतिशब्दप्रयोगे च तत्संज्ञो न प्रवर्तते ॥ गवाक्ष इति । वातायने नित्यमेवावङ् भवति ॥ संशितव्रत इति । व्रतविषये श्यतेर्नित्यमित्वं भवति ॥ मिथ इति । परस्परेण देवत्राणादिभिरेकस्मिन्विषये न विकल्प्यन्त इत्यर्थः । एषु च नुदविदोन्दत्रेति वा नत्वमचि विभाषेति लत्वं विभाषाग्रह इति णप्रत्ययः लक्षणहेत्वोः क्रियाया इति शतृशानचौ नन्वोर्विभाषेत्यतो विभाषानुवर्तनाद्विकल्पितौ । अवङ्स्फोटायनस्येति विभाषाऽवङ् शाच्छोरन्यतरस्यामित्येते विधयः ॥ १५६ ॥

( उद्द्योतः ) हेतुहेतुमतो ॥ १५६ ॥ लक्षणहेत्वोरिति क्रियालक्षणे हेतौ च वर्तमानाद्धातोः कर्तरि शत्रानावित्यर्थः सूत्रस्य । किं च लक्षणत्वादेस्तद्द्योत्यत्वेपि द्योतकसमुच्चयस्य दृष्टत्वादिति शब्देन तद्द्योतनेपि शत्रादिप्राप्तिरिति भावः ॥ १५६ ॥

( ५८६ लिङ्लोट्प्रत्ययविधिसूत्रम् ॥ ३।३।२ आ. १६ )

## ११४२ इच्छार्थेषु लिङ्लोटौ ॥ ३ । ३ । १५७ ॥

( ५०१३ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इच्छार्थेषु लिङ् लोटौ कामप्रवेदने[3] चेत् ॥ * ॥

( भाष्यम् ) कामप्रवेदनं चेद्गम्यत इति वक्तव्यम् । इह मा भूत्—इच्छन् कटं करोतीति ॥ इच्छार्थेषु ॥ १५७ ॥

( उद्द्योतः ) इच्छार्थेषु ॥ १५७ ॥ कामप्रवेदनमिति । प्रयोक्तुः स्वाभिप्रायाविष्करणमित्यर्थः ॥ १५७ ॥

( ५८७ लिङ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । २ आ. १७ )

## ११४६ विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ ३ । ३ । १६१ ॥

( आक्षेपभाष्यम् )

विध्यधीष्टयोः को विशेषः ? ।

( प्रदीपः ) विधिनिमन्त्रणा ॥ १६१ ॥ विध्यधीष्टयोरिति । उभयोरपि नियोगरूपत्वादिति प्रश्नः ॥

( उद्द्योतः ) विधिनिम ॥ १६१ ॥ नियोगेति । नियोगः प्रवर्तना प्रवर्तकनिष्ठः प्रवृत्त्यनुकूलो व्यापारः । एतदेव प्रेषणम् ॥

---

१ आङ्यानर्थको, वाक्यालंकारे । न परिभवेदित्यर्थः । दक्षिणेनेत्यस्य दक्षिणदृक्तेनेत्यर्थः । ( र. ना. )

२ शत्रादि द्योत्यत्वेऽपीत्यर्थः । ( र. ना. )
३ प्रथमान्तपाठः शोभनो भाति । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( समाधानभाष्यम् )

**विधिर्नाम प्रेषणम्। अधीष्टं नाम सत्कारपूर्विका व्यापारणा॥**

( प्रदीपः ) **प्रेषणमिति**। भृत्यादेः कस्याश्चित् क्रियायां नियोजनमित्यर्थः॥ **अधीष्टं नामेति**। गुर्वादेस्तु पूज्यस्य व्यापारणमधीष्टमित्यर्थः॥ प्रपञ्चार्थं न्यायव्युत्पादनार्थं वार्थभेदमाश्रित्य भेदेनोपादानं विधिनिमन्त्रणादीनां कृतम्[1]। विधिरूपता हि सर्वत्रान्वयिनी विद्यते॥

( उद्द्योतः ) भाष्ये व्यापारणेति। प्रवर्तनेत्यर्थः। एतेन नियोग इष्टसाधनताज्ञानमिति परास्तम्॥ हेतुमति चेति सूत्रस्थलिङ्[2] णिचोः पर्यायत्वशङ्कापरभाष्यविरोधापत्तेरित्याहुः॥ न्यायेति। शब्दशक्तिविषयेत्यर्थः॥ अयं भावः—निमन्त्रणादिशब्दानां प्रयोजकनिष्ठव्यापारवाचकत्वस्य सर्वसंमततया विधिशब्दस्यापि प्रयोजकनिष्ठव्यापारवाचित्वं न त्विष्टसाधनत्वादिबोधकत्वमिति॥ सं चात्र प्रयुज्यमानलिङादिरूपः। स च प्रेरणात्वेन लिङ्शक्यः। प्रेरणात्वं चाखण्डोपाधिः। एकस्यैव रूपभेदेन वाच्यवाचकत्वे उपपद्येते[3]। स च लोके पुरुषनिष्ठः॥ वेदे ईश्वरनिष्ठः। वेदस्याकर्तृकत्ववादिनां मते शब्दनिष्ठः॥ शब्दरूपत्वाच्च स शाब्दीभावनेत्युच्यते इति मञ्जूषायां विस्तरः॥ विधिरूपतेति। प्रेरणेत्यर्थः॥

( आक्षेपभाष्यम् )

**अथ निमन्त्रणामन्त्रणयोः को विशेषः?।**

( समाधानभाष्यम् )

**संनिहितेन निमन्त्रणं भवति। असंनिहितेनामन्त्रणम्॥**

( प्रदीपः ) **संनिहितेनेति**। धात्वर्थेनासनादिना। यथा इह भवानासीत इति सन्निहितमासनम्, तदर्थं[4] तु परमार्थं च निमन्त्र्यते॥ **असन्निहितेति**। यथा इह भवान् भुञ्जीत इति भोजनमसन्निहितं तदर्थमामन्त्र्यते॥

( समाधानबाधकभाष्यम् )

**नैषोस्ति विशेषः। असंनिहितेनापि निमन्त्रणं भवति। संनिहितेन चामन्त्रणम्॥**

( सिद्धान्तिसमाधानभाष्यम् )

**एवं तर्हि यन्नियोगतः कर्तव्यं तन्निमन्त्रणम्॥ किं पुनस्तत्?।**

**हव्यं कव्यं च। 'ब्राह्मणेन सिद्धं भुज्यताम्' इत्युक्ते अधर्मः प्रत्याख्यातुः॥ आमन्त्रणे कामचारः।**

( प्रदीपः ) **यन्नियोगत इति**। अवश्यकर्तव्यं नित्यं नैमित्तिकं च तन्निमन्त्रणमिति निमन्त्रणविषयत्वात्तदेव निमन्त्रणम्॥ **अधर्म इति**। यदान्यो ब्राह्मणो भोक्ता[5] न लभ्यते तदा[6] दौहित्रादिर्भोजयितव्यः। तस्य च प्रत्याख्याने अधर्मः इति स्मार्तः समाचारः॥ **आमन्त्रण इति**। काम्यकर्मणि कामनया प्रवृत्तिर्नान्यथा॥

( उद्द्योतः ) यन्नियोगतः कर्तव्यं श्राद्धादि॥ तस्य निमन्त्रणत्वाभावादाह—निमन्त्रणविषयत्वादिति॥ भाष्ये ब्राह्मणेनेति। सिद्धं हव्यं कव्यं वा भुज्यतामिति ब्राह्मणेनोक्तेऽर्थात् ब्राह्मणं प्रति तत्र प्रत्याख्यातुर्ब्राह्मणस्याधर्म इत्यर्थः। ब्राह्मणेनेत्युक्तेरन्यदीय[7]निमन्त्रणप्रत्याख्याने, ब्राह्मणकृतेऽपि हव्यकव्यातिरिक्तविषयामन्त्रणे[8] प्रत्याख्याने नाधर्म इति लभ्यते॥ यदान्य इत्यादिव्याख्याने कैयटकृते वीजं भाष्यानुग्रहश्च चिन्त्यः[9]॥ सामान्यत[10] एव ब्राह्मणस्य श्राद्धादिनिमन्त्रणप्रत्याख्यानेऽधर्मः स्मृतिष्वपि स्मर्यते इति बोध्यम्॥ काम्यकर्मणीति। यत्र भोजनाद्यननुष्ठानेऽपि न प्रत्यवायस्तद्विषया प्रवर्तनाऽऽमन्त्रणमिति तात्पर्यम्॥

( आक्षेपभाष्यम् )

**कथं पुनरिदं विज्ञायते, निमन्त्रणादीनामर्थे[11] इति। आहो स्विन्निमन्त्रणादिषु गम्यमानेष्विति। कश्चात्र विशेषः?।**

( प्रदीपः ) **कथमिति**। किमिह विध्यादयः प्रत्ययस्याभिधेयत्वेन निर्दिष्टाः उत विषय[12]भावेनेति प्रश्नः॥

(उद्द्योतः) उत विषयेति। लिङादयस्तु द्योतका इति भावः॥

---

१ तथा चोक्तम्—

'अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितः कृतम्॥' इति॥

२ विधिश्चेत्यर्थः। ( र. ना. )

३ वस्तुतस्तु प्रेरणादिरूपविधिवाचकत्वाल्लिङादेर्विधित्वव्यवहारः, तथाच नैकस्य वाच्यत्ववाचकत्वे विरुद्धे कल्पनीये इति वयम्। ( र. ना. )

४ आसनमनु परमार्थं बोधनीयं वास्तवं वस्तु भोजनादिकं निमन्त्र्यते बोध्यते इत्यर्थः। ( र. ना. )

५ भोक्तेति॥

'श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः' इत्यादिमन्वादिस्मृत्युपदर्शितः॥

६ तदेति।

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः॥
मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम्।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत्॥ इति मन्वादिस्मृतेः॥

७ क्षत्रियादिनिमन्त्रणेत्यर्थः। ( र. ना. )

८ ब्राह्मणकृतस्यापि हव्यकव्यातिरिक्तविषयामन्त्रणस्य प्रत्याख्याने इत्यर्थः। ( र. ना. )

९ चिन्त्य इति॥ प्राग्दर्शितस्मृतिषु प्रथमकल्पानुकल्पपदकथनरूपस्य बीजस्यैव चिन्तया चिन्ताकाङ्क्षासमाप्तिः करणीयेति दाधिमथाः॥

१० ताः स्मृतयो विशेषपरतया संकोचनीयाः, अनुकल्पस्त्वयं ज्ञेय इत्यादि स्मृतिबलादिति वयम्। ( र. ना. )

११ निमन्त्रणादिनामर्थे लिङिति योजना। ( र. ना. )

१२ अवाच्यत्वेऽपि तत्सन्निधौ प्रतीयमानत्वं तद्विषयत्वम्। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ५०१४ प्रथमाक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वात् ॥ * ॥

( भाष्यम् ) निमन्त्रणादीनामर्थे चेदामन्त्रयै निमन्त्रयै भवन्तमिति प्रत्ययो नोपपद्यते । किं कारणम् ? । प्रकृत्यभिहितत्वात् । प्रकृत्याऽभिहितः सोऽर्थ इति कृत्वा प्रत्ययो न प्राप्नोति ॥

( प्रदीपः ) निमन्त्रणादीनामिति । आदिशब्दस्य प्रकारार्थत्वाद्विधिरपि गृह्यते ॥ प्रकृत्यभिहितत्वादिति । प्रकृत्या योर्थो नाभिधीयते तत्रैव प्रत्ययेन भाव्यं न तु प्रकृत्यभिहितेर्थे । उक्तार्थानामप्रयोग इति न्यायात् । विषयपक्षाश्रये तु प्रकृत्यभिहितेष्वपि विध्यादिषु तत्सत्तामात्राश्रयः प्रत्ययः सिध्यति ॥

( उद्द्योतः ) विध्यादीनामर्थे इति वक्तुमुचितमत आह—आदिशब्दस्येति । प्रेरयै भवन्तमित्यादि तदुदाहरणं बोध्यम् ॥ निमन्त्रणादीनामिति भाष्यस्य निमन्त्रणादिपदानामित्यर्थः । भाष्ये निमन्त्रयै इत्याद्युपलक्षणं निमन्त्रयेदित्यादेरपि ॥

( ५०१५ द्वितीयाक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वात् ॥ * ॥

( भाष्यम् ) द्विवचनबहुवचनयोश्चाप्रसिद्धिः । किं कारणम् ? । एकार्थत्वात् । एकोयमर्थो निमन्त्रणं नाम तस्यैकत्वादेकवचनमेव प्राप्नोति ॥

( प्रदीपः ) द्विवचनेति । नाप्राप्तेषु कर्त्रादिषु विध्यादयोर्था निर्दिश्यमानास्तेषां बाधकाः प्रसज्यन्तीति कर्त्रादिगतायाः संख्याया अभिधानं न प्राप्नोतीति भावः ॥

( उद्द्योतः ) ननु निमन्त्रणस्यैकत्वेऽपि कर्त्रादिसंख्याश्रये द्विवचनबहुवचने भविष्यत इत्यत आह—नाप्राप्तेष्विति । एवं च कर्त्राद्यप्रतीत्यापत्तिरपि दूषणान्तरं बोध्यम् ॥ कर्त्रादिगतायाः संख्याया इति । क्रियायामारोपिताया इति शेषः । वस्तुतः प्रवर्तकनिष्ठप्रेरणायाः प्रयोज्यकर्तृकत्वाभावात्तद्गतसंख्यारोपे न मानम्, वाच्यत्वे च तस्या एव विशेष्यत्वम् । सा चैकैवेति द्विवचनाद्यनापत्तिः । धात्वर्थस्य कर्तृद्वित्वादिना द्वित्वादावपि तस्य विशेषणत्वान्न द्विवचनादिनियामकता । कर्त्रादिबाधस्तु न युक्त इत्यग्रे स्फुटं भविष्यति ॥ अत एव भाष्ये द्विवचनाद्यसिद्धावेकार्थत्वादित्येव हेतुरुक्तः ॥ विवृतं चैकोयमर्थो निमन्त्रणं नाम तस्यैकत्वादिति । अनेकविषयकमपि निमन्त्रणमेकमेवेति तदर्थः ॥ एतेन 'विशेष्यगतसंख्यैकवचनादि बोध्येति सूचितम् । अत एवात्र पक्षे भावकर्त्रादीनां बोधानापत्तिरिति दूषणं नोक्तम् ।

( द्योत्यत्वपक्षाङ्गीकारभाष्यम् )

अस्तु तर्हि निमन्त्रणादिषु गम्यमानेष्विति ॥

( द्योत्यत्वे दूषणभाष्यम् )

इहापि [ तर्हि ] प्राप्नोति-देवदत्तो भवन्तमामन्त्रयते, देवदत्तो भवन्तं निमन्त्रयते इति ॥

( उद्द्योतः ) भाष्ये इहापि प्राप्नोतीति । लडादयस्तेभ्यो न स्युः । अनेन लिङा बाधितत्वादिति भावः ॥

( ५०१६ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सिद्धं तु द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् । कथम् ? । "द्वितीयाकाङ्क्षस्य धातोः प्रकृते प्रत्ययार्थे प्रत्ययो भवति" इति वक्तव्यम् ॥ के पुनः प्रकृता अर्थाः ? । भावकर्मकर्तारः ॥

( प्रदीपः ) सिद्धं त्विति । द्वितीयं विध्यादिकमर्थं यदा धात्वर्थमाकाङ्क्षति तदा लिङ्प्रत्ययः, यदा च धात्वर्थं संपाद्य नियोज्यो नियुज्यते तदा द्वितीयाकाङ्क्षित्वम् । इह तु देवदत्तो भवन्तमामन्त्रयत इति नास्ति धात्वर्थस्य द्वितीयाकाङ्क्षित्वमिति लिङ् न भवति ।

( उद्द्योतः ) द्योतकतापक्षीयदूषणमुद्धर्तुमाह—सिद्धं त्विति । द्वितीयाकाङ्क्षधातोः प्रकृते प्रत्ययार्थे कर्त्रादौ लिङित्यर्थः ॥ कर्त्रादीनामपि द्योत्यत्वपक्षे प्रत्ययार्थे इत्यस्य प्रत्ययद्योत्य इत्यर्थः ॥ नन्वेवं पश्य मृगो धावतीत्यादावपि लिङ् स्यादत आह—द्वितीयं विध्यादिकमिति । द्वितीयशब्देन विध्यादिरेव गृह्यते इति भावः ॥ नियोज्यः प्रेर्यः । नियुज्यते प्रेर्यते । प्रेरणाविषयधात्वर्थे यदा धातोर्लक्षणा तदा प्रकृतेर्थे प्रत्यय इति भावः । प्रकृते प्रत्ययार्थ इत्यनेनामन्त्रणादीनामर्थे इति पक्षेपि तदत्यागः सूचितः, विरोधाभावात् । कर्त्रादयो द्योत्या इति पक्षस्य लुक्मोरिति सूत्रस्थभाष्यसंमततया बाधे मानाभावाच्च । अत एव वाचकत्वपक्षे द्विवचनाद्यसिद्धिरिवतिवाद्यसिद्धिर्नोक्ता ॥ भावकर्मकर्त्रर्थकलस्यैवात्मनेपदपरस्मैपदविभागेन तद्विधानात् । युष्मदस्मच्छेषसामानाधिकरण्याभावेन प्रथमपुरुषाद्यसिद्धिश्च नोक्ता । अनियमश्च नोक्त इति दिक् ॥

( आक्षेपभाष्यम् )

एवमपि भवेत्सिद्धम्—'प्राप्नोतु भवानामन्त्रणम्'—'अनुभवतु भवानामन्त्रणम्' इति यत्र द्वितीय आकाङ्क्ष्यते । इदं तु न सिध्यति—निमन्त्रयै, आमन्त्रयै इति ॥

---

१ प्रयोज्यकर्तृगतेत्यर्थः । ( र. ना. )

२ प्रेरणाया इति शेषः । ( र. ना. )

३ प्रवर्तककर्तृगतद्वित्वादिनेत्यर्थः । तस्य, प्रवर्तककर्तृगतद्वित्वस्य, धात्वर्थप्रेरणाविशेषणत्वादित्यर्थः । ( र. ना. )

४ उद्योतकृता नोपलब्धः, त्यक्तो वा ॥

५ धात्वर्थं आकाङ्क्षतीति प्रथमान्तपाठः शोभनो भाति ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


(प्रदीपः) प्राप्नोत्विति । धात्वर्थस्य प्राप्त्यादेर्भिन्नमामन्त्रणं प्रत्याकाङ्क्षा विद्यत इति भावः ॥ आमन्त्रये इति । आमन्त्रणस्य धात्वर्थत्वात्तस्य चैकत्वाद् भेदपूर्विकाया आकाङ्क्षाया आमन्त्रणं प्रत्यभाव इति भावः ॥

(उद्योतः) भिन्नमामन्त्रणं प्रतीति । धात्वर्थातिरिक्तं प्रेरणारूपव्यापारं प्रतीत्यर्थः । प्राप्नोतु भवानित्यादेरङ्गीकरोतु भवान्= आमन्त्रणाङ्गीकारविषयप्रेरणेत्यर्थः ॥ ननु पाकं पचतीतिवत् प्रवर्तनविशेषरूपामन्त्रणस्यापि तद्विशेषामन्त्रणान्तरविषयकाङ्क्षेत्यत आह— भेदपूर्विकाया इति । तत्र सामान्यविशेषतयाऽभेदान्वयो, न तु तथा प्रकृते इति भावः ॥ आमन्त्रणं प्रतीति । धात्वर्थव्यापारातिरेकेण प्रेरणां प्रतीत्यर्थः । अत्रेदं तत्त्वम्—स्वविषया प्रेरणा तु नात्र प्रत्ययार्थः, स्वेच्छयैव तत्प्रवृत्तिसिद्धेः, प्रवृत्तेः स्वप्रवृत्तेः स्वप्रेरणानपेक्षत्वेन तस्यास्तदर्थत्वाभावात् ॥ इदमेवाभिप्रेत्य 'उत्तमपुरुषो विधिशक्तिप्रतिबन्धकः' इति न्यायविदः ॥ अत एव भगवतोत्तमपुरुषविषये एव शङ्कितम् ॥

(समाधानभाष्यम्)

**अत्रापि द्वितीय आकाङ्क्ष्यते । कः ? । निमन्त्रिरेव । निमन्त्रये निमन्त्रणम्, आमन्त्रये आमन्त्रणमिति ॥**

(प्रदीपः) निमन्त्रये निमन्त्रणमिति । प्रकृतिवाच्यं निमन्त्रणं विशिष्टकर्मकमन्यत् तद्विषयं त्ववश्यकर्तव्यतालक्षणं निमन्त्रणमन्यदिति भिन्नत्वादस्येव द्वितीयाकाङ्क्षितम् । तदयमर्थः—त्वत्कर्मकं भोजनादिषु निमन्त्रणं ममानुष्ठेयम् । ततो भोजनादिषु त्वां निमन्त्रये इति । अत्र चामन्त्रये आमन्त्रणम्, निमन्त्रये निमन्त्रणमिति प्रकृत्यर्थव्यतिरिक्तामन्त्रणसद्भावप्रदर्शनायामन्त्रणनिमन्त्रणशब्दौ प्रयुक्तौ नत्वयं लौकिकः प्रयोगः, लोटैव प्रकृत्यर्थव्यतिरिक्तस्यामन्त्रणादेर्गमितत्वात् । तदयमर्थः— आमन्त्रये आमन्त्रणमिति आमन्त्रये इत्यत्र लोटि प्रयुज्यमाने आमन्त्रणं धात्वर्थविषयमाकाङ्क्ष्यमाणमस्ति ॥

(उद्योतः) विशिष्टकर्मकमिति । संबोध्यकर्मकमित्यर्थः ॥ अवश्यकर्तव्यतालक्षणम् अवश्यानुष्ठेयत्वलक्षणम् ॥ ततो भोजनादिष्विति । तद्बोधनार्थं च निमन्त्रये इत्यादिप्रयोग इति भावः ॥ नन्वेवं 'निमन्त्रये निमन्त्रणम्' इत्यादौ निमन्त्रणादिपदप्रयोगोऽयुक्तो, लोटैव तदर्थप्रत्यायनादत आह—नत्वयं लौकिक इत्यादि ॥ धातूनामनेकार्थत्वात् निमन्त्रणामन्त्रणशब्दावर्हत्वार्थकौ । अर्हत्वं चावश्यकर्तव्यतालक्षणं कैयटोक्तम् । एवं च । 'अर्हे कृत्यतृचश्च' इत्यनेन लिङ् लोटाउत्तमपुरुषविषये इत्युक्तं भवतीति बोध्यम् ॥

(प्रश्नभाष्यम्)

**कथं पुनर्निमन्त्रिर्नाम निमन्त्रणमाकाङ्क्षेत् ॥**

(उद्योतः) भाष्ये कथं पुनरिति । धर्मिणो हि धर्माकाङ्क्षा न तु धर्मस्येति प्रश्नः ॥

(समाधानभाष्यम्)

**दृष्टश्च भावेन भावयोगः । तद्यथा । इषिरिषिणा युज्यते, क्लीत्वं च क्लीत्वेन । यावता चात्रापि द्वितीय आकाङ्क्ष्यते ॥**

(प्रदीपः) इषिरिति । एषितुमिच्छति इति कालसाधनभेदादिच्छयोर्भेदाश्रयो योगः ॥ क्लीत्वमिति । कुमारीत्यादौ क्लीत्वं द्रव्यस्य विशेषणम् । यदा तु तदेव प्राधान्येनाश्रीयते तदा तस्य क्लीत्वादिना योगः क्लीत्वं क्लीतेति ।

(उद्योतः) क्लीत्वं च क्लीत्वेनेत्यस्य क्लीताशब्द उदाहरणम् ॥ प्रवर्तनाविषय एककर्तृकः पाक इति बोधः । अहं पाचयेयमित्यादौ पाकप्रवर्तनाऽवश्यानुष्ठेयेति बोधः ॥ भाष्ये यावता चात्रेति । यैश्चात्रेत्यर्थः ॥

(वाचकत्वपक्षाङ्गीकारभाष्यम्)

**अस्तु तर्हि निमन्त्रणादीनामर्थ इति ।**

(दूषणस्मारणभाष्यम्)

**ननु चोक्तं निमन्त्रणादीनामर्थे चेदामन्त्रये निमन्त्रये भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वादिति ।**

(दूषणोद्धारभाष्यम्)

**नैष दोषः । योसौ द्वितीय आकाङ्क्ष्यते स एव मम प्रत्ययार्थो भविष्यति ॥**

(प्रदीपः) स एव ममेति । निमन्त्रये भवन्तमित्यवश्यकर्तव्यं भवतो भोजनादिषु मया निमन्त्रणमिति । निमन्त्रणस्यावश्यकर्तव्यतालक्षणं निमन्त्रणमिति प्रकृतिप्रत्ययार्थयोर्भेद इत्यर्थः ।

(वाचकत्वपक्षे द्वितीयदूषणस्मारणभाष्यम्)

**अयं तर्हि दोषः—'द्विवचनबहुवचनाप्रसिद्धिरेकार्थत्वादिति ॥**

(दूषणोद्धारभाष्यम्)

**एषोप्यदोषः ।**

(५०१७ वार्तिकम् ॥ ४ ॥)

**॥ * ॥ सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङाम् ॥ * ॥**

(भाष्यम्) **सुपां संख्या चैवार्थः कर्मादयश्च ॥**

---

१ यावतेति येनेति हेत्वर्थकं प्रत्ययार्थोऽविवक्षितः । यावता इषिरिषिणा युज्यते इत्यादि ततोऽत्रापि द्वितीय आकाङ्क्ष्यत इति योजना । (र. ना.)
२ प्रयोग इत्यर्थः । (र. ना.)

३ एवं दत्वाद इति शेषः । (र. ना.)
४ इदं चिन्त्यम् । मद्युक्तव्याख्यायां एव भाष्यसरणिसिद्धत्वात् । (र. ना.)
५ अवश्यकर्तव्यतालक्षणो निमन्त्रणपदार्थः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ५०१८ वार्तिकम् ॥ ५ ॥ )

॥ * ॥ प्रसिद्धो नियमस्तत्र ॥ * ॥

( भाष्यम् ) प्रसिद्धस्तत्र नियमः[1] ।

( ५०१९ वार्तिकम् ॥ ६ ॥ )

॥ * ॥ नियमः प्रकृतेषु वा ॥ * ॥

( भाष्यम् ) अथवा प्रकृतानर्थानपेक्ष्य नियमः ॥ के च प्रकृताः ? । एकत्वादयः । एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु । द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु । बहुष्वेव बहुवचनं नैकस्मिन्न द्वयोरिति ॥ विधिनि० ॥ १६१ ॥

( प्रदीपः ) सुपामिति । विध्यादिभिर्विरोधाभावात् लः कर्मणि चेत्यत्र बहुवचननिर्देशात्सर्वलकारसंग्रहार्थाद्वा[2] उभयार्थानुग्रहाच्च[3] कर्त्रादयो न बाध्यन्त इति कर्तृकर्मगतद्वित्वबहुत्वनिबन्धनानि द्विवचनबहुवचनानि भवन्तीत्यर्थः ॥ १६१ ॥

( उद्द्योतः ) बहुवचनेति । अत एव सर्वलकारान्ते लः कर्मणीत्यकारि । इदं चिन्त्यम् । एतावाँश्च ल इति तत्सूत्रस्थभाष्यस्थग्रन्थाभ्यां ल इत्यस्यैकवचनान्ततया एव लाभात् । सुपां कर्मादय इत्यस्यायं भावः । धात्वर्थक्रियाया इव प्रेरणायाः स्वत एकत्वेऽपि प्रेर्यगतसंख्यायाः स्वनिष्ठधात्वर्थे इव स्वविषयप्रेरणायामप्यारोपाद् द्विवचनादीनि । वस्तुतो यावताचात्रेत्यादिग्रन्थ एकदेशिनः । एतेन प्रत्ययार्थे व्यापारे संख्यान्वयेपि प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिभङ्ग इत्यपास्तम् । एकदेश्युक्तित्वेनाक्षतेः ॥ नन्वेवमपि नियमेन न स्यादधिकार्थस्यापि भानादत आह—प्रसिद्ध इत्यादि । तत्र अर्थे ॥ अत्र द्योतकतापक्षो युक्तः । पचेत्यादावपि तत्प्रतीतेश्च संख्या कालकारकाणामिवास्या अपि द्योत्यतया एवौचित्याच्च । एवं च प्रवर्तनाविषयः पाकः इत्येव बोध इति बोध्यम् ॥ १६१ ॥

( ५८८ कृत्यलिङ्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । २ आ. १८ )

## ११४८ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥ ३ । ३ । १६३ ॥

( आक्षेपभाष्यम् )

किमर्थं प्रैषादिष्वर्थेषु कृत्या विधीयन्ते, न अविशेषेण विहिताः कृत्याः ते प्रैषादिषु भविष्यन्ति, अन्यत्र च ॥

( ५०२० वार्तिकम् ॥ १ ॥ )

॥ * ॥ प्रैषादिषु कृत्यानां वचनं नियमार्थम् ॥ * ॥

( भाष्यम् ) प्रैषादिषु कृत्यानां वचनं क्रियते ॥ किं प्रयोजनम् ? । नियमार्थम् । नियमार्थोयमारम्भः । प्रैषादिष्वेव कृत्या यथा स्युरिति ॥

( ५०२१ वार्तिकम् ॥ २ ॥ )

॥ * ॥ प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत् तदनिष्टम् ॥ * ॥

( भाष्यम् ) प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टं प्राप्नोति । न हि प्रैषादिष्वर्थेष्वेव कृत्या इष्यन्ते । किं तर्हि ? । अविशेषेण । बुसोपेन्ध्यं तृणोपेन्ध्यम् । घनघात्यम् ॥

( ५०२२ वार्तिकम् ॥ ३ ॥ )

॥ * ॥ विध्यर्थं तु स्त्रियाः प्रागिति वचनात् ॥ * ॥

( भाष्यम् ) विध्यर्थं तु प्रैषादिषु कृत्यानां वचनम् । अयं प्रैषादिष्वर्थेषु लिङ्विधीयते स विशेषविहितः सामान्यविहितान् कृत्यान्बाधेत ॥

( कृत्यसाधकभाष्यम् )

वासरूपेण कृत्या अपि[4] भविष्यन्ति ॥

( कृत्यबाधकभाष्यम् )

न स्युः । किं कारणम् ? । स्त्रियाः प्रागिति वचनात् । प्राक् स्त्रियां वाऽसरूपः ॥ प्रैषातिसर्ग॥१६३॥

( प्रदीपः ) प्रैषाति ॥ १६३ ॥ बुसोपेन्ध्यमिति । अग्निस्तोकं[5] बुसेन ज्वलनीयमिति वस्तुस्वरूपकथनं, न तु प्रैषादिप्रतिपत्तिः । घनघात्यमिति । घनेन लोहादिना घात्यमिति कठिनत्वादित्यर्थः ॥ १६३ ॥

(उद्द्योतः) प्रैषा ॥१६३॥ भाष्ये स्त्रियाः प्रागिति । इदमपि ज्ञापकं स्त्र्यधिकारादूर्ध्वं क्वचिद्वाऽसरूपविध्यभावस्येत्यर्थः ॥ १६३ ॥

१ तत्र सुप्तिङ्प्रत्ययेषु नियमः प्रसिद्ध इत्यर्थः । ( र. ना. )
२ इदं बहुवचननिर्देशविशेषणम् । ( र. ना. )
३ लिङा विध्यादीनां कर्त्रादीनां चानुग्रहाद् बोधनरूपादित्यर्थः । ( र. ना. )

४ अपिना आमन्त्र्यै इत्यादिसंग्रहः । तत्प्रतीतेश्च, प्रेरणाप्रतीतेश्चेत्यर्थः । ( र. ना. )
५ अग्नेः स्तोकावयवरूपं वस्तु बुसेन ज्वलनीयमित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ५८९ तुमुन्प्रत्ययविधिसूत्रम् ॥ ३ । ३ । २ आ. १९ )

## ११५२ कालसमयवेलासु तुमुन्

## ॥ ३ । ३ । १६७ ॥

( ५०२३ वार्तिकम् ॥ १ ॥ )

॥ * ॥ प्रथमान्तेषु ॥ * ॥

( भाष्यम् ) प्रथमान्तेष्विति वक्तव्यम् ॥ किं प्रयोजनम् ? । इह मा भूत्—काले भुङ्क्ते ॥

( प्रश्नभाष्यम् )

तत्तर्हि वक्तव्यम् ।

( समाधानभाष्यम् )

न वक्तव्यम् । प्रैषादिष्विति वर्तते । तच्चावश्यं प्रैषादिग्रहणमनुवर्त्यम् । प्रथमान्तेष्विति ह्युच्यमाने इहापि प्रसज्येत 'कालः पचति भूतानि' 'कालः संहरति प्रजाः' इति ॥ कालसमय ॥ १६७ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥

इति श्रीमन्महामहोपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयस्य अध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

पादश्च तृतीयः समाप्तः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्योते तृतीयाध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

पादश्च तृतीयः समाप्तः ॥



| | प्राक्तनयोगः | सूत्रवार्तिकसंख्याचक्रम् अस्मिन् पादे सूत्रवार्तिक | | | सर्वयोगः |
|---|---|---|---|---|---|
| | | १ म आह्निके | २ य आह्निके | आह्निकद्वय-योगः | |
| व्याख्यातसूत्राणि | | | | | ५८८ |
| अव्याख्यातसूत्राणि | | | | | ५७३ |
| समुदितसूत्राणि | | | | १७६ | ११६१ |
| वार्तिकानि | | | | | |

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

श्रीदधिमती(थी) जयति ॥

# तृतीयाध्यायस्य चतुर्थपादे प्रथममाह्निकम् ॥

( ५९० कालान्तरे प्रत्ययविधिसूत्रम् ॥ ३।४।१ आ. १ )

## ११६२ धातुसंबन्धे प्रत्ययाः ॥ ३।४।१ ॥

( प्रदीपः ) धातुसंबन्धे प्रत्ययाः ॥ १ ॥ संबन्धस्य अनेकाधिष्ठानत्वात्[1]सामर्थ्याद् वृत्तावपि संख्याविशेषो द्वित्वमवगम्यते[2] । धात्वोः संबन्धो धातुसंबन्धः । धात्वर्थश्चात्रोपचाराद्धातुशब्देनोच्यते । न हि स्वार्थे गुणीभूतयोर्धात्वोः[3] परस्परेण संबन्ध उपपद्यते । धात्वर्थयोस्तु विशेषणविशेष्यभावलक्षणसंबन्धोपपत्तिः । तत्र धातुसंबन्धे कालान्तरविहितानां प्रत्ययानामन्यस्मिन् काले साधुत्वाभ्यनुज्ञानार्थमिदं सूत्रम् ।

( उद्द्योतः ) धातुसंबन्धे ॥ १ ॥ 'धातोः संबन्धे' इत्यर्थेऽव्यावर्तकमेतत् । धातोः कारकसंबन्धस्य कारकाणां वा धातुसंबन्धस्य सार्वत्रिकत्वात् । धात्वोः संबन्ध इत्यर्थे तु समासो दुरुपपादः । वृत्तौ सङ्ख्याविशेषस्याभावादत आह—संबन्धस्येति । द्वित्वमवगम्यते इति । वस्तुतो द्वित्वावोधेऽपि धातुत्वेनैव धातुद्वयबोध इति वोध्यम् ॥ गुणीभूतयोरिति । स्वार्थप्रतिपादनव्यग्रयोरित्यर्थः ॥ नन्वर्थद्वारकसंबन्धो धात्वोरेवाश्रीयताम् । कर्मत्वसमानकर्तृकत्वादिवदिति चेत् । न । गोमानासीदित्यादौ प्रवृत्त्यनापत्तेः । नह्यप्रयुज्यमानयोरर्थद्वारकोपि संबन्धो वक्तुं शक्य इति भावः ॥ अर्थयोश्च कः संबन्ध इत्यत आह—विशेषणेति । स च प्रत्ययार्थद्वारको वाक्यार्थ इति वोध्यम् ॥ अन्यस्मिन्काले इति । उपपदोपाधिप्रकृत्यर्थानां तु न बाधः । वर्तमानसामीप्य इत्यारभ्य कालान्यत्वस्यैव प्रतिपादनादिति भावः ॥

( आक्षेपभाष्यम् )

**प्रत्यय इति वर्तमाने पुनः प्रत्ययग्रहणं किमर्थम् ।**

( प्रदीपः ) प्रत्यय इति वर्तमान इति । यद्यपि स्वरूपपदार्थकः प्रत्ययशब्दः प्रकृतः । तथापीह संज्ञिनिर्देशाभावात्संज्ञिपदार्थको विज्ञास्यत इति भावः ॥

( समाधानभाष्यम् )

**अधातुप्रत्ययानामपि धातुसंबन्धे साधुत्वं यथा स्यात् । गोमानासीत् । गोमान्भवितेति ॥**

( प्रदीपः ) अधातुप्रत्ययानामपीति । अन्यथा प्रकृतानामेव धातुप्रत्ययानां ग्रहणं स्यात् । प्रत्ययग्रहणात्तु सर्वप्रत्ययपरिग्रहार्थात्तद्धितानामपि कालभेदे साधुत्वं भवति । गोमानासीदिति । तदस्यास्त्यस्मिन्निति मतुप्प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तेऽर्थे विहितः । धातुसंबन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्त्वेऽपि साधुर्भवति ॥

( उद्द्योतः ) प्रकृतानामिति । प्रकरणादिति भावः ॥ वर्तमानसत्तेति । न च तदस्यास्तीत्यत्र संख्यावद्वर्तमानकालोप्यविवक्षित इति वाच्यम् । दण्डिनमानयेत्युक्तेऽतीतदण्डस्याप्यानयनापत्तेः । इदं च तत्रैव भाष्येऽत्र च स्पष्टम् ॥

( प्रश्नभाष्यम् )

**इह पश्यामः भूतकालो भविष्यत्कालेनाभिसंबध्यमानो भविष्यत्कालः संपद्यते । कस्मान्न भविष्यत्कालो भूतकालेनाभिसंबध्यमानो भूतकालः संपद्यते ।**

( प्रदीपः ) इह पश्याम इति । अग्निष्टोमयाज्यस्य पुत्रो जनितेति कालभेदे साधुत्वाभ्यनुज्ञानाय सूत्रम् । तत्र विशेषानुपादानाद्यथा भूतकालपरित्यागेन जनितेत्येतत्संबन्धाद् णिनिर्भविष्यति काले भवति तथा जनितेति लुट्प्रत्ययो भविष्यत्कालत्यागेनाग्निष्टोमयाजीत्येतत्संबन्धाद् भूते कस्मान्न भवतीति प्रश्नः ॥

( उद्द्योतः ) भाष्ये भूतकाल इत्यादयो बहुव्रीहयः ॥

( ५०२४ समाधानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ धातुसंबन्धे प्रत्ययस्य यथाकालविधानात्सिद्धम् ॥ * ॥

( भाष्यम् ) **धातुसंबन्धे यथाकालविहिता एवैते प्रत्ययाः स्वेषु स्वेषु कालेषु प्रयुज्यन्ते ॥**

( प्रदीपः ) यथाकालविधानादिति । सूत्रप्रत्याख्यानेन उत्तरम् । अग्निष्टोमयाजीति भूत एव णिनिर्विधीयते । जनितेत्येतत्संबन्धात्तु भाविव्यपदेशप्रतिपत्तिर्यथास्य सूत्रस्य शाटकं वयेतीत्यर्थः ॥

(उद्द्योतः) भाविव्यपदेशेति । भाविव्यवहारेत्यर्थः ॥ अग्निष्टोमयाजीत्युत्तरम् । इति व्यवहरिष्यमाण इति शेषः । इति भावः ॥

( आक्षेपभाष्यम् )

**कथं तर्हि कालान्यत्वं गम्यते ॥**

( प्रदीपः ) इतरोऽगृहीताभिप्राय आह—कथं तर्हीति । पुत्रोस्य जनिता स चाग्निष्टोमेन यष्टेति तत्र यदि भूते णिनिर्विधीयते तदा यागस्य भविष्यत्तावगमो न प्राप्नोतीति प्रश्नः ।

( उद्द्योतः ) यष्टेतीति । इत्यर्थः प्रतीयत इति शेषः ।

---

१ अनेकाधिष्ठानत्वात्, द्विष्ठत्वादित्यर्थः । ( र. ना. )

२ सामर्थ्यादवगम्यते इत्युक्त्याऽर्थापत्तिलभ्यत्वं द्वित्वे बोध्यते । तेन वृत्तावभेदैकत्वसंख्यामानमेवेति सिद्धान्तविरोधो न । ( र. ना. )

३ शब्दविशिष्टेऽर्थे शब्दानां शक्तिरिति शाब्दिकनये शब्दरूपयोर्धात्वोः स्वार्थयोर्विशेषणत्वेन परस्परान्वये आकाङ्क्षाविरह इति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ५०२५ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ उपपदस्य तु कालान्यत्वम् ॥ * ॥

( भाष्यम् ) उपपदस्यैतत्कालान्यत्वम् ॥

( प्रदीपः ) उपपदस्येति । भाविव्यपदेशविज्ञानाद्विशेषणस्य कालान्यत्वं वाक्यार्थवशादसत्यपि सूत्रारम्भे प्रतीयत इत्यर्थः । विशेष्याया आख्यातादिपदवाच्यायाः क्रियायाः प्राधान्यात् स्वकाल एवावस्थानं, विशेषणभूतायास्तु क्रियाया उपलक्षणभावेनोपादानाद्धाविभूतव्यपदेशविषयताप्रतिपादनात्कालान्यत्वावगम इत्यर्थः ॥

( उद्योतः ) भाविव्यपदेशादिति । भाविव्यवहारविषयादग्निष्टोमयाज्यादिपदादित्यर्थः ॥ वाक्यार्थवशादिति । जनितेत्येतत्समभिव्याहारात्तत्प्रतीतेस्तस्य वाक्यार्थत्वमित्यर्थः । व्यवहारस्य भविष्यत्त्वं विषयभविष्यत्त्वकृतमिति भावः ॥ वैपरीत्यनिवारणाय मूलयुक्तिं दर्शयति—विशेष्याया इति । भाष्ये उपपदस्येत्यस्य गुणभूतस्येत्यर्थः । सूत्रारम्भे तु नायं न्यायः । न्यायेन वचनसंकोचे मानाभावात् । धात्वोः संबन्धे ताभ्यां धातुभ्यां ये प्रत्ययास्तेऽन्यत्रापि काले भवन्तीति वाक्यार्थादित्याशयः ॥

( आक्षेपभाष्यम् )

कुतो नु खल्वेतत्—अग्निष्टोमयाजीत्येतदुपपदं भवति, न पुनर्जनितेति ? ।

( प्रदीपः ) इतरो यथोक्तमभिप्रायमबुद्ध्वा समीपे श्रूयमाणमुपपदमित्यवगम्य चोदयति—कुत इति । ततश्चाग्निष्टोमयाज्यस्य पुत्रो जात इत्ययमपि वाक्यार्थः कस्मान्न भवतीति प्रश्नः ।

( समाधानभाष्यम् )

एवं तर्ह्यस्त्यादिभिर्योगे । अस्त्यादिविषयाः प्रत्ययाः साधव इति वक्ष्यामि ।

( प्रश्नभाष्यम् )

के पुनरस्त्यादयः ? ।

( समाधानभाष्यम् )

अस्तिभूजनयः ॥

( प्रदीपः ) आचार्यदेशीय आह—एवं तर्हीति । धात्वधिकाराद्धातुग्रहणे सिद्धे धातुसंबन्ध इति पुनर्धातुग्रहणं धातुविशेषपरिग्रहार्थं । तेनास्तिभूजनिसंबन्ध एव प्रत्ययानां कालान्तरे साधुत्वमन्वाख्यायत इति सूत्रारम्भे सति विपर्ययो न भवतीत्यर्थः ॥ अस्त्यादिविषया इति । अस्त्यादिविशेषणाय प्रयुक्ता इत्यर्थः ।

( उद्योतः ) सूत्रारम्भ इति । तथा च सूत्रस्य 'धातोरस्त्यादेः संबन्धे सति धातोः प्रत्ययाः कालान्तरे' इत्यर्थ इति भावः ॥

१ अस्य सूत्रस्य शाटकं वयेतिवदिति भावः । ( र. ना. )
२ वाक्यार्थवशात्प्रतीयते इति संबन्धः । ( र. ना. )
३ अप्रधानीभूताया इत्यर्थः । अन्यथोपलक्षणत्वविशेषणत्वयोरेकत्रासंभवाद् संगतिः स्यादिति भावः । ( र. ना. )

नन्वस्त्यादि प्रकृतिकत्वाभावात्कथं तद्विषयत्वमत आह—अस्त्यादिविशेषणायेति ॥

( आक्षेपभाष्यम् )

एवमपि यदास्त्यादीनामेवास्त्यादिभिर्योगस्तदा न ज्ञायते कः कस्य कालमनुवर्तते इति । भाविकृत्यमासीत् । पुत्रो जनिष्यमाण आसीत् ॥

( समाधानभाष्यम् )

एवं तर्हि वाक्यमेवैतदेवंविषयं प्रयुज्यते । अग्निष्टोमयाजीत्येतत्तस्मिन्भविता । कस्मिन्योऽस्य पुत्रो जनिता । कदा । यदानेनाग्निष्टोमेनेष्टं भवति ॥ धातुसंबन्धे ॥ १ ॥

( प्रदीपः ) आचार्यः पूर्वोक्तेनाभिप्रायेण सूत्रप्रत्याख्यानेनैव वाक्यार्थं स्थापयति—एवं तर्हीति । अवश्यं च स्वकाल एव प्रत्ययविधिरेष्टव्यः । भाविकृत्यमासीदित्यत्र भाविशब्दस्य भूतकालत्वे भाव्यासीच्छब्दयोः पर्यायत्वाद् युगपत्प्रयोगो न स्यात् ॥ १ ॥

( उद्योतः ) पूर्वोक्तेनेति । गुणप्रधानभावरूपन्यायाश्रयणाभिप्रायेणेत्यर्थः ॥ भाविशब्दस्येति । यदि यत्कालं भावितया व्यवहृतं तदासीदिति हि तदर्थं उचितः । न तु अतीतमासीदिति । तथा सति पर्यायत्वापत्तिरिति भावः ॥ इत्येतत्तस्मिन्निति । इत्येतत्पदं तस्मिन्भवितेत्यर्थः । एवं प्रत्याख्याते सूत्रे वसन्ददर्शेत्यादौ वर्तमानत्वमारोप्य शता । तत्फलं तु तत्समानकालत्वस्य दर्शने लाभः । शतृस्थले क्रिययोः समानकालत्वप्रतीतेः । यद्वा दर्शनकालिकं वासस्य वर्तमानत्वमाश्रित्य प्रत्ययः । एवमेव । ननु चोत्पत्तैव वचनलोपं चोदितः स्म इति सरूपसूत्रस्थभाष्यप्रयोगोपपत्तिः । गोमानासीदित्यत्र देवदत्तस्य विद्यमानत्वेऽपि गोर्मद्गुपस्यातीतत्वाद्भूते प्रत्ययः । तत्रार्थाद्गवामप्यतीतत्वप्रतीतिरिति दिक् ॥

४ वर्तमानकालार्थे मतुपो विहितत्वात्कथं गोमद्गुपस्यातीतत्वमिति चिन्त्यम् । ( र. ना. )

---

( ५९१ कालान्तरे लोड्विधिसूत्रम् ॥ ३ । ४ । १ आ. २ )

## ११६३ क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥ ३।४।२ ॥

( ५०२६ वार्तिकम् ॥ १ ॥ )

॥ * ॥ हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम् । हिः परस्मैपदानां यथा स्यात्स्व आत्मनेपदानामिति ॥ किं प्रयोजनम् ? । लादेशप्रतिषेधार्थम् । लादेशौ हिस्वौ मा भूतामिति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

(प्रदीपः) क्रियासम ॥ २ ॥ हिस्वयोरिति । सामान्यविहितानां तिङां शतृशानज्भ्यामिव हिस्वाभ्यां बाधः प्राप्नोतीति स्थानिनिर्देशार्थं परस्मैपदात्मनेपदग्रहणं कर्तव्यमित्यर्थः ॥

(उद्द्योतः) क्रियासमभि ॥ २ ॥ भाष्ये हिस्वयोरिति । तद्विधायके इत्यर्थः ॥ ननु परत्वात्तिङ्षु कृतेषु तेषामेवैतौ भविष्यत इत्यत आह—सामान्येति ।

(प्रश्नभाष्यम्)

किं च स्यात्—यदि लादेशौ हिस्वौ स्याताम् ।

(समाधानभाष्यम्)

तिङन्तं पदमिति पदसंज्ञा न स्यात् ॥

(समाधानबाधकभाष्यम्)

मा भूदेवम् । सुबन्तं पदमिति पदसंज्ञा भविष्यति ।

(आक्षेपभाष्यम्)

कथं स्वाद्युत्पत्तिः ।

(५०२७ समाधानवार्तिकम् ॥ २ ॥)

॥ * ॥ लकारस्य कृत्त्वात्प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम् ॥ * ॥

(भाष्यम्) लकारः कृत् तस्य कृत्त्वात् कृत्प्रातिपदिकमिति प्रातिपदिकसंज्ञा तदाश्रया प्रातिपदिकाश्रया स्वाद्युत्पत्तिरपि भविष्यति ॥

(प्रदीपः) लकारः कृदिति । तत्र स्थानिवद्भावाद् हिस्वयोरपि कृत्त्वात्तदन्तस्य प्रातिपदिकत्वात् स्वाद्युत्पत्तिर्भवतीत्यर्थः ॥

(उद्द्योतः) लस्य कृत्त्वेऽपि हिस्वयोः किमायातमित्यत आह—तत्रेति ॥

(आक्षेपभाष्यम्)

यदि स्वाद्युत्पत्तिः, सुपां श्रवणं प्राप्नोति ।

(आक्षेपबाधकभाष्यम्)

अव्ययादिति सुब्लुक् भविष्यति ॥

कथमव्ययत्वम् ? ।

विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा । निपातोऽव्ययमिति अव्ययसंज्ञा ॥

(प्रदीपः) विभक्तीति । विभक्तिसंज्ञकहिस्वसदृशत्वादनयोर्हिस्वयोरव्ययत्वमित्यर्थः ॥

(उद्द्योतः) अव्ययत्वमिति । तदन्तस्य विभक्त्यन्तप्रतिरूपकत्वादव्ययत्वमिति भावः ॥

(दूषणभाष्यम्)

इह तर्हि 'स भवान् लुनीहि लुनीहीत्येवायं लुनाति' "तिङतिङः" इति निघातो न प्राप्नोति ।

(५०२८ प्रयोजनवार्तिकम् ॥ ३ ॥)

॥ * ॥ समसंख्यार्थं च ॥ * ॥

(भाष्यम्) समसंख्यार्थं च हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम् । हिः परस्मैपदानां यथा स्यात् । स्व आत्मनेपदानाम् । व्यतिकरो मा भूदिति ।

(प्रदीपः) व्यतिकरो मा भूदिति । यदि लकारस्यैव स्थाने हिस्वौ विधीयेयातां तदा लः परस्मैपदमिति द्वयोरपि परस्मैपदसंज्ञा स्यात् । ततश्च द्वावपि परस्मैपदिभ्य एव स्यातामित्ययं व्यतिकरः स्यादित्यर्थः ॥

(उद्द्योतः) हिस्वयोरित्यस्य हिस्वौ तयोरित्यर्थः ॥ ननु व्यतिकरो नामात्मनेपदिभ्योपि हिः, परस्मैपदिभ्योपि स्व इत्याकारः । स चानुपपन्नः आत्मनेपदसंज्ञाऽभावेन लादेशत्वेन परस्मैपदसंज्ञासत्त्वेन चात्मनेपदिभ्यो विधानानुपपत्तेरत आह—यदीति ॥

(५०२९ प्रथमवार्तिकोक्तदूषणवारकवार्तिकम् ॥ ४ ॥)

॥ * ॥ न वा तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य ॥ * ॥

(भाष्यम्) न वा हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम् ॥ किं कारणम् ? । तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य । यदयं "वा च तध्वमोः" इत्याह तज्ज्ञापयत्याचार्यः—'पदादेशौ हिस्वौ' इति ॥

(प्रदीपः) न वेति । यदि लस्यैव हिस्वौ स्यातां तदा तध्वमोर्लोट्स्थानिकयोरभावाद्वा च तध्वमोरिति स्थानित्वेनोपादानमनुपपन्नं स्यादिति तध्वमोः स्थानित्वेनोपादानाल्लोट्शब्देन लोडादेशानां परस्मैपदात्मनेपदानां स्थानित्वमवसीयत इत्यर्थः ॥ पदादेशस्येति । पदशब्देन पदसंज्ञानिमित्तानि तिङ उच्यन्ते । अथ वा सर्वे सर्वपदादेशा इति न्यायात्तिङन्तस्य हिस्वान्तादेशप्रवृत्तिः ॥

(उद्द्योतः) ननु तिङो हिस्वौ, न च तावन्मात्रं पदं तद-

१ 'स भवान् लुनीहि लुनीहि लुनाति' इत्येवमेव प्रयोगोऽभिमतः । तत्रैव 'निघातो न प्राप्नोति' इति संगच्छते ॥ मध्ये 'इत्येवायम्' इत्यस्य प्रयोगे वास्तविके तु अयमित्यस्यातिङन्तत्वे निघातः सिध्यत्येवेति न प्राप्नोतीत्यसंगतं स्यात् ॥ अनुप्रयोगशब्दस्य व्यवहिताव्यवहितसाधारणे शक्तिरिति दर्शयितुमेव भाष्यकृता मध्ये 'इत्येवायम्' इति प्रयुक्तम् ॥ इति दाधिमथाः ॥

२ लुनीहीत्यस्योत्तरं त्वा सुबन्तत्वेन पदत्वेऽपि तिङन्तत्वाभावेन तिङन्तोद्देश्यकनिघातो न स्यादिति भगवदभिप्रेतम् अनुप्रयुज्यमानस्य तिङन्तत्वे न किञ्चिद् बाधकं नापि सिद्धान्ते तस्य निघातत्वमिष्टं तिङन्तात्परत्वादिति चिन्त्या दाधिमथाः । (र. ना.)

३ 'हिस्वान्तयोः' इत्यर्थकरणे बीजं चिन्त्यम् । 'लः परस्मैपदम्' इत्यनेनैव लादेशान्तानां परस्मैपदसंज्ञा क्रियते । तथा सति क्राम्यति अचैषीत् इत्यादिषु कस्य परस्मैपदत्वम्, कस्य चाङ्गत्वमिति भूयाननुपप्लवः स्यात् ॥

४ प्रदीपे हिस्वयोरव्ययत्वमित्युक्तं तच्च सङ्गतं तयोः केवलयोरप्रयोगेण तन्मात्रयोरव्ययत्वानुपपत्तेरतस्तदन्तपरत्वेनोद्द्योते व्याख्यातमिति अतएवाग्रे ननु तिङो हिस्वौ न च तावन्मात्रं पदमित्युद्द्योतग्रन्थोऽपि सङ्गच्छत इति चिन्त्या दाधिमथाः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्तस्य पदत्वादिति पदादेशस्येत्ययुक्तमत आह—पदशब्देनेति ॥ निमित्तानीति । निमित्तशब्दो नित्यनपुंसक इति भावः ॥ केचित्तु नामैकदेशग्रहणेन परस्मैपदात्मनेपदे पदशब्देन भाष्ये उच्येते इत्याहुः ।

( ५०३० आक्षेपवार्तिकम् ॥ ५ ॥ )

॥ * ॥ तत्र पदादेशे पित्त्वाटोः प्रतिषेधः ॥ * ॥

( भाष्यम् ) तत्र पदादेशे पित्त्वस्याटश्च प्रतिषेधो वक्तव्यः । पित्त्वस्य तावत्—स भवान्लुनीहि लुनीहीत्येवायं लुनाति । आटः खल्वपि—सोहं लुनीहि लुनीहीत्येवं लुनामि ।

( प्रदीपः ) पित्त्वस्येति । तिप्सिब्मिपां स्थाने विधीयमानो हिः स्थानिवद्भावात्पित्स्यात् ततश्च ङित्त्वाभावाल्लुनीहीतीत्वं न स्यात् । अनुदात्तत्वं च हेः प्रसज्येत लुनीहि लुनीहि स भवानित्यादौ, परस्य लुनीहिशब्दस्य तस्य 'परमाम्रेडितम्' 'अनुदात्तं चे'त्यनुदात्तत्वं भवति ॥

( उद्द्योतः ) स्थानिवद्भावादिति । न च सार्वधातुकमपिदित्यतिदेशान् ङित्त्वं स्यात् परत्वादिति वाच्यम् । एतद्विषयेऽपि स्थानिवद्भावप्रवृत्त्यातिदेशिकपित्त्वमादायापिदिति निषेधप्रवृत्तेः । अन्यथा एतु अकरवमित्यादौ गुणानापत्तिरिति दिक् ॥ स भवानित्यादाविति । आदिखण्डे इति शेषः । तद्ध्वनयन्नाह—परस्येति ।

( पित्त्वप्रतिषेधानावश्यकत्वभाष्यम् )

पित्त्वस्य तावन्न वक्तव्यः । पित्त्वप्रतिषेधे योगविभागः करिष्यते । इह "सेर्हि" सेर्हिर्भवति । ततः "अपिच्च" अपिच्च भवति यावान् हिर्नामेति ।

( प्रदीपः ) यावानिति । योगविभागकरणसामर्थ्यादानन्तर्यं नापेक्ष्यत इत्यर्थः ॥

( उद्द्योतः ) नन्वनन्तरस्येति न्यायात् यावानित्यसंगतमत आह—योगविभागेति ।

( आट्प्रतिषेधानावश्यकत्वभाष्यम् )

आटश्चापि प्रतिषेधो न वक्तव्यः । आटि कृते साट्कस्यादेशो भविष्यति । इदमिह संप्रधार्यम् । आट् क्रियताम्, आदेश इति । किमत्र कर्तव्यम् ? । परत्वादाडागमः ॥

नित्य आदेशः । कृतेप्याटि प्राप्नोत्यकृतेपि प्राप्नोति ॥

आडपि नित्यः । कृतेप्यादेशे प्राप्नोत्यकृतेपि ॥

अनित्य आट् । अन्यस्य कृतेप्यादेशे प्राप्नोत्यन्यस्याकृतेपि प्राप्नोति "शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति" ॥

आदेशोप्यनित्यः । अन्यस्य कृते आटि प्राप्नोति अन्यस्याकृते प्राप्नोति । "शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति" । उभयोरनित्ययोः परत्वादाडागमः ॥ आटि कृते साट्कस्यादेशो भविष्यति ॥

( आक्षेपभाष्यम् )

इदं तर्हि भुङ्क्ष्व भुङ्क्ष्व इत्येवं भुनजै इति "श्नसोरल्लोपः" इत्यकारलोपो न प्राप्नोति ।

( प्रदीपः ) भुङ्क्ष्व भुङ्क्ष्वेति । परत्वादाटि कृते उत्तमस्य पित्त्वे स्वादेशः स्थानिवद्भावात्पित्स्यादिति ङित्त्वाभावाल्लोपाप्रसङ्गः ॥

( उद्द्योतः ) भाष्ये भुङ्क्ष्वेत्यस्यानुप्रयोगे 'भुनजै' इति पाठः ॥ पित्त्वेन स्वादेश इति पाठः कैयटे ॥

( आक्षेपपरिहारस्मारणभाष्यम् )

समसंख्यार्थत्वं चाप्यपरिहृतमेव ।

( प्रदीपः ) समसंख्यार्थत्वमिति । सर्वेषां तिङां द्वावपि पर्यायेण स्यातामित्यर्थः ।

( उद्द्योतः ) सर्वेषां तिङामिति । तिङादेशत्वे ज्ञापितेप्ययं दोष इत्यर्थः ॥

( ५०३१ समाधानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ सिद्धं तु लोण्मध्यमपुरुषस्यैकवचनस्य क्रियासमभिहारे द्विर्वचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? । लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्वे भवतः । इति वक्तव्यम् ॥

( आक्षेपभाष्यम् )

केन विहितस्य क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनमुच्यते ? ।

( समाधानभाष्यम् )

एतदेव ज्ञापयत्याचार्यो 'भवति क्रियासमभिहारे लोट्' इति । यदयं क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनं शास्ति ॥

( प्रदीपः ) एतदेवेति । वृद्धकुमारीवरन्यायेन क्रियासमभिहारविषयो लोडनुमीयत इत्यर्थः ।

( उद्द्योतः ) वृद्धकुमारीति । एतद्भाष्यवार्तिकस्वरसात् क्रियासमभिहार इति वार्तिकं लोडन्तविषयकमेव द्रष्टव्यम् । अन्यथा तस्येतोभिन्नवचनत्वे गौरवं स्यात् इत्याहुः ।

( ज्ञापकत्वनिरासभाष्यम् )

कुतो न खल्वेतत्—ज्ञापकादत्र लोड् भविष्यति । न पुनरयं एवासावविशेषविहितः स यदा क्रियासमभिहारे भवति तदा तस्य द्विर्वचनं भवतीति ॥

---

१ आडुत्तमस्य पिच्चेति विहितस्येत्यर्थः । ( र. ना. )

२ वृद्धकुमार्य्या वरसंयोगमन्त रागर्भाधानासम्भवाद्वरसंयोगोऽनुमीयते तथेहापि क्रियासमभिहारलोटमन्तरा तदन्तस्य वचनेन द्विर्वचनासम्भवात्तदर्थं लोट् विधानमनुमीयते इति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( प्रदीपः ) कुतो न्विति । ज्ञापकं विघटयति ॥ विध्यादिविषयस्य लोटो विद्यमानत्वात् क्रियासमभिहारविषयस्य तस्यैवादेशयोर्द्विर्वचनार्थं ग्रहणं स्यादित्यर्थः ॥

( दूषणान्तरभाष्यम् )

लोण्मध्यमपुरुषैकवचन एव खल्वपि सिद्धं स्यात् । इमौ चान्यौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषां वचनानामिष्येते ।

( प्रदीपः ) सर्वेषामिति । प्रसङ्ग इति शेषः ॥

( उद्द्योतः ) दोषान्तरमप्याह—भाष्ये लोट्मध्यमेति । ननु सर्वेषां स्थाने इत्यर्थेऽसंभवः परस्मैपदादिग्रहणाभावादत आह—प्रसङ्ग इति शेष इति ।

( दूषणभाष्यम् )

सूत्रं च भिद्यते ।

( उद्द्योतः ) दोषान्तरमप्याह—भाष्ये सूत्रं चेति ।

( समाधानभाष्यम् )

यथान्यासमेवास्तु ।

( आक्षेपसारणभाष्यम् )

ननु चोक्तं हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थं समसंख्यार्थं चेति ।

( समाधानभाष्यम् )

नैष दोषः ।

( ५०३२ वार्तिकम् ॥ ६ ॥ )

॥ * ॥ योगविभागात्सिद्धम् ॥ * ॥

( भाष्यम् ) योगविभागः करिष्यते—"क्रियासमभिहारे लोट्" क्रियासमभिहारे लोड् भवति । ततो "लोटो हिस्वौ" लोटो हिस्वौ भवतः । लोडित्येवानुवर्तते लोटौ यौ हिस्वाविति ॥ कथम् "वा च तध्वमोः" इति ? । वा च तध्वंभाविनो लोट इत्येवमेतद् विज्ञायते ॥ क्रियासमभिहारे ॥ २ ॥

( प्रदीपः ) लोटौ याविति । लोडादेशौ यौ हिस्वौ दृष्टौ तत्तुल्यावनेन हिस्वौ भवत इत्यर्थः । तेन तदीयकार्यातिदेशात्परस्मैपदात्मनेपदसंज्ञे हिस्वयोर्भवतः । तेन परस्मैपदिभ्यो हिरात्मनेपदिभ्यस्तु स्वो भवति । हिशब्दस्य कर्ता वाच्यः, स्वशब्दस्य भावकर्मकर्तारः । तिङ्त्वं च भवतीति तिङ्ङतिङ इत्यादि कार्यं भवति ॥ पुरुषैकवचनसंज्ञे तु सामर्थ्यान्न भवतः ॥ यदि हि ते अपि स्यातां हिस्वयोरनेन विधानमनर्थकं स्याद् वचनान्तरेण तयोः सिद्धत्वात् ॥ तध्वंभाविन इति । मुख्यार्थासंभवे गौणो कल्पनाश्रीयते । ततश्च तध्वंभावित्वाल्लोडेव तध्वंशब्दाभ्यामुच्यत इति भावः ।

( उद्द्योतः ) लोडादेशाविति । लोडित्यस्य च लोड्वदित्यर्थः ॥ स्थानिवत्त्वेनैव लोड्धर्मातिदेशस्य सिद्धेः पुनर्लोड्वदितिवचनं लोट्स्थानिकहिस्ववदतिदेशार्थमिति भावः ॥ अतिदेशफलमाह—तेनेति ॥ वचनान्तरेणेति । पुरुषादिसंज्ञायां युष्मत्सामानाधिकरण्ये एकत्वे च भाव्यं तत्र च व्यर्थस्तयोर्विधिरिति भावः ॥ २ ॥

( ५९२ अनुप्रयोगविधिसूत्रम् ॥ ३ । ४ । १ आ. ३ )

## ११६५ यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ३ । ४ । ४ ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ।

( प्रयोजनभाष्यम् )

अनुप्रयोगो यथा स्यात् ॥

( प्रयोजननिरासभाष्यम् )

नैतदस्ति प्रयोजनम् । हिस्वान्तमव्यक्तपदार्थकम् तेनापरिसमाप्तोर्थ इति कृत्वा अनुप्रयोगो भविष्यति ॥

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम् 'यथाविधीति वक्ष्यामीति ॥

( प्रदीपः ) यथावि ॥ ४ ॥ हिस्वान्तमिति । संख्याकालपुरुषाणामनभिव्यक्तत्वात् ॥

( उद्द्योतः ) यथाविध्य ॥ ४ ॥ ननु क्रियारूपार्थप्रतीतेः कथमनभिव्यक्तपदार्थकत्वमत आह—संख्येति ॥

( प्रयोजननिरासभाष्यम् )

एतदपि नास्ति प्रयोजनम् । "समुच्चये सामान्यवचनस्य" इति वक्ष्यति । तत्रान्तरेण वचनं यथाविध्यनुप्रयोगो भविष्यति ॥ यथाविध्य ॥ ४ ॥

( प्रदीपः ) एतदपीति । समुच्चय एव धात्वन्तरस्यानुप्रयोग इति नियमात् क्रियासमभिहारे यथाविध्यनुप्रयोगो भविष्यति ॥ ननु समुच्चये सामान्यवचनस्यैवेति नियमः स्यात् । ततश्च धात्वन्तरस्यापि लोट्प्रकृतिसमानार्थस्य क्रियासमभिहारेऽनुप्रयोगः स्यात् । नैतदस्ति—नह्येकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्याश्च तृतीयस्याश्च भवतीति न्यायाल्लोट्प्रकृतिरेवानुप्रयोक्ष्यते । पूर्वव्यवहितप्रयोगनिवृत्तिरपि नेष्टा, यतस्तदर्थो योगः स्यात् ॥ ४ ॥

( उद्द्योतः ) नह्येकस्या इति । एतेन 'समुच्चय एव सामान्यवचनस्येति नियमेऽपि प्रकृतेन पर्यायव्यावृत्तिरित्यपास्तम् ॥ समुच्चयविषये सामान्यवचनस्येति वचनान्न्यायैर्बाधेऽपि प्रकृतविषये तन्न्यायबाधे मानाभावाद्विनापि वचनं सिद्धमिति भाष्याक्षरार्थः ॥ नेष्टेति । अत एव लुनीहि लुनीहि इत्येवायं लुनातीति भाष्ये व्यवहितप्रयोगः संगच्छते । तेनानुप्रयोगशब्दार्थव्यभिचार उक्तः ॥

१ प्रथमान्तमनुवर्तमानं लोट् पदं लोडादेशपरं तद्वचातिदिश्यत इति भावः । ( र. ना. )

२ युष्मत्सामानाधिकरण्येनैकत्वेन च भाव्यमिति शोभनः पाठो भाति । ( र. ना. )

३ नह्येकस्या इति न्यायबाधेऽपीत्यर्थः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वप्रयोगस्तु यदि नेष्टस्तदानभिधानाद्वारणीयः ॥ यद्वेष्ट एव स इत्याहुः ॥ ४ ॥

( ५९३ अनुप्रयोगविधिसूत्रम् ॥ ३ । ४ । १ आ. ४ )

## ११६६ समुच्चये सामान्यवचनस्य ॥ ३ । ४ । ५ ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ।

( प्रयोजनभाष्यम् )

अनुप्रयोगो यथा स्यात् ।

( प्रयोजननिरासभाष्यम् )

नैतदस्ति प्रयोजनम् । हिस्वान्तमनभिव्यक्तपदार्थकं तेनापरिसमाप्तोर्थ इति कृत्वानुप्रयोगो भविष्यति ।

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनं सामान्यवचनस्येति वक्ष्यामीति ॥

( प्रयोजननिरासभाष्यम् )

एतदपि नास्ति प्रयोजनम् । सामान्यवचनस्यानुप्रयोगोस्तु विशेषवचनस्येति । सामान्यवचनस्यैवानुप्रयोगो भविष्यति । लघुत्वात् ॥ समुच्चये सा ॥५॥

(प्रदीपः) समुच्चये ॥५॥ लघुत्वादिति । एतच्च लाघवं क्वचिदेव विषये शिष्टप्रयोगदर्शनादाद्रियते, न सर्वत्र; अन्यथा तरुद्रुमादीनामेव प्रयोगः स्यान्न वनस्पत्यादिशब्दानाम् ॥ ५ ॥

( उद्योतः ) समुच्चये सामा ॥५॥ भाष्ये लघुत्वादिति । सर्वविशेषानुगतैकसामान्यवाचकानुप्रयोगे सामान्यस्य संनिहितविशेषपर्यवसानात्सर्वेषां कालाद्यभिव्यक्तौ सिद्धायां विशेषवाचकनानाधातुप्रयोगे गौरवादिति भावः ॥ क्वचिदेवेति ॥ अपर्यायविषये इत्यर्थः । एवं च तरुद्रुमवनस्पत्यादिषु पर्यायेषु लाघवगौरवानादरात् न दोषः ॥ इहत्वपर्यायत्वं स्पष्टमेवेत्याहुः ॥ ५ ॥

( ५९४ लेट्प्रत्ययविधिसूत्रम् ॥ ३ । ४ । १ आ. ५ )

## ११६९ उपसंवादाशङ्कयोश्च ॥ ३।४।८ ॥

( ५०३३ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ उपसंवादाशङ्कयोर्वचनानर्थक्यं लिङर्थत्वात् ॥ * ॥

(भाष्यम्) उपसंवादाशङ्कयोर्वचनमनर्थकम् । किं कारणम् ? । लिङर्थत्वात् । "लिङर्थे लेट्" इत्येव सिद्धम् ॥ कः पुनर्लिङर्थः ? । केचित्तावदाहुः— "हेतुहेतुमतोर्लिङ्" इति । अपर आहुः—वक्तव्य एवैतस्मिन्विशेषे लिङ् । प्रयुज्यते हि लोके 'यदि मे भवानिदं कुर्याद्, अहमपि त इदं दद्यामिति ॥ उपसंवादा ॥ ८ ॥

( प्रदीपः ) उपसंवा ॥ ८ ॥ उपसंवादेति । नित्यार्थमिदमिति चेच्छन्दसि नित्योत्र लेड् दृश्यत इत्यत्र प्रमाणाभावः । व्यवस्थितविभाषया वा नित्यं लेड् भविष्यति ॥ हेतुहेतुमतोरिति । उपसंवादः कर्तव्ये पणबन्धः । यदि मे भवानिदं कुर्यात् अहमपि ते इदं दद्यामिति । तत्र करणं हेतुर्दानं हेतुमत् ॥ आशङ्कापि कारणात्कार्योत्प्रेक्षेति हेतुहेतुमद्भावः ॥ अपर इति । करणमवधिर्दानमवधिमदित्यत्रध्यवधिमद्भाव उपसंवादे प्रतीयते न तु हेतुहेतुमद्भावः । आशङ्कायामपि निश्चितो हेतुहेतुमद्भावो नास्तीति भावः । लिङ्प्रयोगसिद्धये अवश्यवक्तव्यो लिङ् न तु सूत्रप्रत्याख्यानायैव ॥ ८ ॥

( उद्योतः ) उपसंवादा ॥ ८ ॥ इदं नित्यं लेड्विधानार्थं तदाह—नित्यार्थमिति । पूर्वसूत्रे हि लिङर्थे लेडित्यत्रान्यतरस्यां ग्रहणमनुवर्तत इति भावः ॥ व्यवस्थितेति । वेदे आपाद्यरूपाभावात्सर्वविधीनां छन्दसि वैकल्पिकत्वाददोष इत्यन्ये । करणं हेतुरिति । तदुत्तरकालत्वाद्दानस्येति भावः ॥ करणमवधिरिति । तद्वस्तुदानस्य तत्करणाभावेऽपि बहुशो दृष्टत्वात्तत्करणे सत्यपि बहुशस्तद्दानाभावाच्च व्यक्तिविशेषयोः सत्यपि पूर्ववार्तिकोत्तरवर्तित्वे नियमघटितकारणत्वस्य नैतच्छब्दतो भानम् । किं त्ववध्यवधिमद्भावस्यैवेति भावः ॥ भाष्ये इदमेवाशङ्काया अप्युदाहरणम् । संभावनापरत्वेन तद्व्याख्यानस्य संभवात् ॥ संभावनैव चात्राशङ्का तदाह—आशङ्कायामपीति । अकारणादकार्योत्प्रेक्षाया अपि दर्शनादित्यपि बोध्यम् ॥ लिङ्प्रयोगेति । लोकेपीत्यर्थः । एवं च अनयोरपि लिङर्थत्वाल्लिङर्थे लेडित्येव सिद्धे इदं न कार्यमिति भावः ॥ ८ ॥

( अथाव्ययसंज्ञककृत्प्रकरणम् )

( ५९५ सेप्रभृतिप्रत्ययविधिसूत्रम् ॥ ३ । ४ । १ आ० ६ )

## ११७० तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥ ३ । ४ । ९ ॥

( आक्षेपभाष्यम् )

तुमर्थे इत्युच्यते कस्तुमर्थो नाम ।

---

१ एतच्च लाघवं क्वचिदेव विषये आद्रियते शिष्टप्रयोगदर्शनान्न सर्वत्रेति योजना । ( र. ना. )

२ वस्तुतस्तु क्वचिदेवेति भाष्यस्थपदस्य शिष्टप्रयोगविषय एवेत्यर्थः । वनस्पत्यादिशब्दानां तरुद्रुमादिपर्यायत्वं तु न किन्तु विशेषवाचित्वमेव । अत एव 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद् वनस्पतिरि'त्यमरः । ( र. ना. )

३ तदाशङ्कयाहेत्यर्थः । ( र. ना. )

४ इदं कुर्याद् इदं दद्यामिति शब्दत इत्यर्थः । ( र. ना. )

५ अकरणादिति पाठः साधुः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

 Digitized by Arya Samaj Foundation Chennai and eGangotri 

( समाधानभाष्यम् )

कर्ता तुमर्थः ।

( समाधाननिरासभाष्यम् )

यद्येवं नार्थस्तुमर्थग्रहणेन । येनैव खल्वपि हेतुना कर्तरि तुमुन्भवति तेनैव हेतुना खयादयोपि भविष्यन्ति ॥

( समाधानसाधकभाष्यम् )

एवं तर्हि सिद्धे सति यत्तुमर्थग्रहणं करोति तज्ज्ञापयत्याचार्यः 'अस्त्यन्यः कर्तुस्तुमुनोर्थः' इति ॥ कः पुनरसौ ? । भावः ॥

( आक्षेपभाष्यम् )

कुतो नु खल्वेतद् । भावे तुमुन् भविष्यति, न पुनः कर्मादिषु कारकेषु स्यादिति ॥

( प्रदीपः ) तुमर्थे सेसे ॥ ९ ॥ कुतोन्विति । क्रियया कर्मादीनामाक्षेपात्तेष्वेव तुमुन् स्यादिति भावः ॥

( उद्द्योतः ) तुमर्थे ॥ ९ ॥ ननु कर्मादिपदानुपादानात्कथं तेषु प्रसक्तिरत आह—क्रिययेति ॥

( समाधानभाष्यम् )

ज्ञापकात्तावदयं कर्तुरपकृष्यते । न चान्यस्मिन्नर्थे आदिश्यते[1] । "अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ती"ति स्वार्थे भविष्यति । तद्यथा । "गुप्तिज्किद्भ्यः सन्" "यावादिभ्यः कन्" इति । सोऽसौ स्वार्थे भवन् भावे भविष्यति । किमेतस्य ज्ञापने प्रयोजनम्—"अव्ययकृतो भावे भवन्ति" इत्येतन्न वक्तव्यं भवति ॥ तुमर्थे से ॥ ९ ॥

(प्रदीपः) न वक्तव्यमिति । तुमर्थग्रहणानुवृत्त्या क्त्वादीनां भावे सिद्धत्वात्साध्यमानरूपश्च भावः क्त्वादीनामर्थः । स एव च धात्वर्थः । घञादीनां तु धात्वर्थव्यतिरिक्तः सिद्धरूपो वाच्यः ॥९॥

(उद्द्योतः) ननु अव्ययकृतो भावे इत्येतत्सत्त्वे घञादिवत्सिद्धे भावे तुमुनादयः स्युः । स्वार्थे विधाने तु साध्ये भावे इति विशेषोऽत आह—साध्यमानेति[2] । वार्तिकेपि भावशब्देन साध्यभावग्रहणमिति भावः । तुमर्थे इत्यनुवादाच्च तुमोऽपि भावे सिद्धिरिति बोध्यम् ॥९॥

( ५९६ क्त्वाप्रत्ययविधिसूत्रम् ॥ ३ । ४ । १ आ. ७ )

## ११८० उदीचां माङो व्यतीहारे ॥ ३ । ४ । १९ ॥

( 'नानुबन्धकृतमनेजन्तत्वम्' इति परिभाषाज्ञापनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं मेङः सानुबन्धकस्यात्वभूतस्य ग्रहणं क्रियते । न 'उदीचां मेङः' इत्येवोच्येत । तत्रायमप्यर्थः—'उदीचां मेङः' इति व्यतीहारग्रहणं न कर्तव्यं भवति । किं कारणम् । तद्विषयो हि सः । व्यतीहारविषयै एव मयतिः[3] ॥

( समाधानभाष्यम् )

एवं तर्हि सिद्धे सति यन्मेङः सानुबन्धकस्यात्वभूतस्य ग्रहणं करोति तज्ज्ञापयत्याचार्यः "नानुबन्धकृतमनेजन्तत्वं भवति" इति ॥

( आक्षेपभाष्यम् )

किमेतस्य ज्ञापने प्रयोजनम् ? ।

( समाधानभाष्यम् )

*तत्रासरूपसर्वादेशदाप्प्रतिषेधेषु "पृथक्त्वनिर्देशोऽनाकारान्तत्वात्"[4] इत्युक्तम्, तन्न वक्तव्यं भवति ॥

( प्रदीपः ) उदीचाम् ॥ १९ ॥ नानुबन्धकृतमिति । एतच्च ज्ञापनमनुबन्धानामेकान्तत्वे उपयुज्यते । अनेकान्तत्वे स्वत एव एजन्तत्वाज् ज्ञापनप्रयोजनाभावः ॥ पृथक्त्वनिर्देशोऽनाकारान्तत्वादित्येतद् दाप्प्रतिषेधग्रहणेनैव संबध्यते । दाधाघ्वदाबित्यत्र दपोपि पृथक् प्रतिषेधो वक्तव्यः अनाकारान्तत्वाद्दाग्रूपत्वाभावादित्यर्थः ॥

( उद्द्योतः ) उदीचां माङो ॥ १९ ॥ नानुबन्धेति । तेनानुबन्धविशिष्टस्याप्यात्त्वमिति भावः ॥ एकान्तत्वे इति । अयमेव पक्षो न्याय्य इति तस्य लोप इति सूत्रे भाष्ये ॥ १९ ॥

( आक्षेपभाष्यम् )

किमर्थं पुनरिदमुच्यते, न "समानकर्तृकयोः पूर्वकाले" इत्येव सिद्धम् ।

( समाधानभाष्यम् )

अपूर्वकालार्थोयमारम्भः । पूर्वं ह्यसौ याचते पश्चादपमयते ॥ उदीचां माङो व्यतीहारे ॥ १९ ॥

( प्रदीपः ) अपमयत इति । वस्त्रादिकं परिवर्तयतीत्यर्थः ॥ १९ ॥

( ५९७ क्त्वाप्रत्ययविधिसूत्रम् ॥ ३ । ४ । १ आ० ८ )

## ११८२ समानकर्तृकयोः पूर्वकाले ॥ ३ । ४ । २१ ॥

( प्रदीपः ) समान ॥ २१ ॥ समानशब्द एकवाची शक्तिशक्तिमतोश्चाभेदविवक्षया क्रिययोरेककर्तृकत्वम् ॥

( उद्द्योतः ) समानकर्तृकयोः ॥ २१ ॥ ननु कर्तृशब्देन शक्तेरभिधानात्तस्याश्च क्रियाद्वयविषयाया भेदान्नैककर्तृकत्वं युक्तं

---

1 आदिश्यते, उपदिश्यत इत्यर्थः । तुमुधिति शेषः । ( र. ना. )

2 साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना । सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धन इत्यभियुक्तोक्तेरिति भावः । ( र. ना. )

3 माङ् तु मेङो निष्पन्नो व्यतिहारेऽन्योऽन्यतिहार इति माङ इति निर्देशे व्यतिहारग्रहणं कर्तव्यं भवति । ( र. ना. )

4 पृथक्त्वनिर्देश इत्यस्य पृथक्त्वेन निर्देशः कर्तव्यः प्रतिषेधार्थमित्यर्थः । स्वीकारेणायमर्थः फलति । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्रिययोरत आह—शक्तीति ॥ शक्तिमद्भेदेऽप्येकत्वस्य शक्त्योरारोपणेनैककर्तृकत्वोपपत्तिरिति भावः ॥

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति पूर्वं भुङ्क्ते पश्चाद् व्रजतीति ॥**

( समाधानभाष्यम् )

**स्वशब्देनोक्तत्वान्न भवति ॥**

( प्रदीपः ) स्वशब्देनेति । पौर्वकाल्ये द्योत्ये क्त्वादिर्विधीयते न तु विषय इति भावः । पूर्वशब्दस्यात्र क्रियापौर्वकाल्यवाचित्वादग्रादिसूत्रेणापि न भवति । अग्रादीनां साधनपौर्वकाल्यविषयाणां तत्र ग्रहणात् ।

( उद्योतः ) भाष्ये स्वशब्देनेति । नात्र धातोः पूर्वकालविशिष्टक्रियावृत्तिता, किं तु स्वार्थमात्रवृत्तितेति भावः ॥ पूर्वकालश्च क्त्वाद्योत्यस्तदाह—पौर्वकाल्ये द्योत्य इति । न तूक्तार्थानामिति न्यायस्य विषयोऽयं द्योतकस्थले प्रायशस्तदप्रवृत्तेः । तद्ध्वनयन्—वक्ष्यति—इह कस्मान्न भवति आस्यते भोक्तुमिति । अन्यथा तत्र तुमुनासिक्रियानिष्ठपूर्वकालस्य द्योतितत्वात्तदसंगतिः स्पष्टैवेति दिक् ॥ भाष्ये स्वशब्देनेति । पूर्वशब्देनेत्यर्थः ॥ नन्वत्र विभाषाग्रे इति सूत्रेण भवत्येव क्त्वाऽत आह—पूर्वशब्दस्येति । तत्र ग्रहणादिति । अत्र चेदमेव भाष्यं मानम् ।

( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—पूर्वं भुक्त्वा ततो व्रजतीति ।**

( समाधानभाष्यम् )

**नैतत् क्रियापौर्वकाल्यम् । किं तर्हि ? । कर्तृपौर्वकाल्यमेतत् । पूर्वं ह्यसौ भुक्तवान्येभ्यो भोक्तृभ्यः ततः पश्चाद् व्रजति अन्येभ्यो व्रजितृभ्यः ।**

( प्रदीपः ) नैतदिति । द्विविधात्र भुजेः पूर्वकालता व्रजिक्रियापेक्षा तस्यां क्त्वाप्रत्ययः । भोक्त्रन्तरसाध्यभुजिक्रियापेक्षा च तां पूर्वशब्द उपादत्ते । ततश्चाग्रादिसूत्रेणात्र क्त्वाणमुलौ भवत इति भावः । कर्तृपौर्वकाल्यं च क्रियाद्वारकमेव बोद्धव्यम् । क्रियाविषयत्वात् कालव्यवहारस्य ।

( उद्योतः ) भोक्त्रन्तरेति । कर्तृपौर्वकाल्यमित्यस्य कर्त्रन्तरसाध्यस्वजातीयक्रियापेक्षपौर्वकाल्यमित्यर्थं इति भावस्तद्ध्वनयन्नाह—कर्तृपौर्वेति ॥

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति । आस्यते भोक्तुमिति ॥ कुतः कस्मान्न भवति ? । किमासेः आहो स्विद् भुजेः ॥**

( आक्षेपभाष्यम् )

**भुजेः कस्मान्न भवति,**

( समाधानभाष्यम् )

**अपूर्वकालत्वात् ।**

( आक्षेपभाष्यम् )

**आसेस्तर्हि कस्मान्न भवति ।**

( समाधानभाष्यम् )

**यस्मादत्र लड् भवति ।**

( आक्षेपभाष्यम् )

**एतदत्र प्रष्टव्यं लडत्र कथं भवतीति ।**

( समाधानभाष्यम् )

**लट् चात्र वासरूपेण भविष्यति ।**

( प्रदीपः ) आस्यत इति । आसेः पूर्वकालत्वाद्भावस्य च प्रतिपाद्यत्वात् आसित्वा भोक्तुमिति प्राप्नोतीति भावः ॥

लट् चात्रेति । वासरूपोऽस्त्रियामित्यत्र स्त्रियाः प्रागिति पक्षो नाश्रितः । किं तर्हि ? स्त्र्यधिकारे वासरूपविधिर्नेति । यदा त्वासेः क्त्वा भवति तदा भुजेः तुमुन्न भवति अनभिधानात् । न ह्यासित्वा भोक्तुमित्याद्यभिधानमस्ति । तस्माल्लडादय एव भुजेर्भवन्ति आसित्वा भुङ्क्ते इति ॥

( उद्योतः ) पूर्वकालत्वादिति । तत्र भोजनफलकं पूर्वकालमासनमिति बोध इति भावः । तुमुन्समभिव्याहारे[1] समभिव्याहृतक्रियायां[2] पूर्वकालत्वं तुमुन्द्योत्यं प्रतीयते । एवं च तत्र क्त्वा स्यादिति तात्पर्यम् । एवं च यत्र धातोः पूर्वकालविशिष्टक्रियावाचकत्वं तत्र क्त्वा । तदाह—भाष्ये लट्चात्र वासरूपेणेति । अन्यथास्य पूर्वकालार्थकत्वाभावेन कथं वाऽसरूपेण सः, समानार्थत्वे हि तत्सूत्रप्रवृत्तेः । एवं च भुक्त्वा व्रजतीत्यादौ पूर्वकालभोजनकर्तृकं व्रजनमिति बोधः ॥ ननु स्त्र्यधिकारात्परतोऽपि वाऽसरूपविधेरभावात्कथमत्र तेन लडित्यत आह—वासरूप इति । तदूर्ध्वं वाऽसरूपविध्यभावस्तु कात्स्न्येन इति भावः ॥ ननु वाऽसरूपेण लटः सिद्धावपि कदाचित्तुमुन्नपि स्यादत आह—यदा त्विति ॥ न हीति । तुमुन्नन्तार्थस्य स्वार्थफलकक्रियां प्रति विशेषणत्वनियमात् क्त्वान्तार्थस्य च स्वोत्तरकालक्रियां प्रति विशेषणत्वनियमात् । न चैतदुभयं युगपत्संभवतीति भावः ॥

( ५०३४ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ समानकर्तृकयोरिति बहुष्वप्राप्तिः [ द्विवचननिर्देशात् ] ॥ * ॥

( भाष्यम् ) **समानकर्तृकयोरिति बहुषु क्त्वा न प्राप्नोति । स्नात्वा भुक्त्वा पीत्वा व्रजतीति ॥**

**किं पुनः कारणं न सिध्यति ? ।**

**द्विवचननिर्देशात् ।**

**द्विवचनेनायं निर्देशः क्रियते । तेन द्वयोरेव पौर्वकाल्ये स्याद् बहूनां न स्यात् ॥**

( ५०३५ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं तु क्रियाप्रधानत्वात् ॥ * ॥

( भाष्यम् ) **सिद्धमेतत् । कथम् ? । क्रियाप्रधान-**

१ विषये इति । वाच्य इत्यर्थः । ( र. ना. )

२ कस्माद्धातोः कस्मात्कारणान्न भवतीत्यर्थः । ( र. ना. )

१ तुमुन्नन्तसमभिव्याहार इत्यर्थः । ( र. ना. )

२ आसनक्रियायामित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

त्वात् । क्रियाप्रधानोयं निर्देशः । नात्र निर्देशस्तन्त्रम् ॥

( प्रश्नभाष्यम् )

कथं पुनस्तेनैव निर्देशः क्रियते तच्चातन्त्रं स्यात् । तत्कारी च भवान् तद्द्वेषी च ॥

( उत्तरभाष्यम् )

नान्तरीयकत्वादत्र द्विवचनेन निर्देशः क्रियते । अवश्यं कयाचिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्यः । तद्यथा—कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात्, स यावदादेयं तावदादाय तुषपलालान्युत्सृजति । तथा—कश्चित् मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति नान्तरीयकत्वात्स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वाद् द्विवचनेन निर्देशः क्रियते । न ह्यत्र निर्देशस्तन्त्रम् ॥

( प्रदीपः ) क्रियाप्रधानत्वादिति । समानकर्तृकक्रियान्तरापेक्षपौर्वकाल्यक्रियाप्रतिपादनपरत्वान्निर्देशस्य नान्तरीयकत्वादुपात्तं द्वित्वमत्राविवक्षितमित्यर्थः ॥

( उद्द्योतः ) समानकर्तृकेति । समानकर्तृकक्रियान्तरापेक्षं पौर्वकाल्यं यस्मात्तत्प्रतिपादनपरत्वादित्यर्थः ॥ निर्धारणे षष्ठी । तत्र द्विवचनबहुवचनान्यतरावश्यकत्वेनैकतरोपादानेऽन्यत्र न स्यादिति साधुत्वार्थमेव तत् न तु विवक्षितमिति तात्पर्यम् । 'इमौ चेद् व्याधितौ स्यातां देयं स्यादिदमौषधम्' इत्यादौ लोके द्वित्वस्याप्यविवक्षादर्शनात् ॥

( समाधानबाधकभाष्यम् )

एवमपि लोकविज्ञानान्न सिध्यति । तद्यथा—लोके ब्राह्मणानां पूर्वं आनीयतामित्युक्ते सर्वपूर्व आनीयते एवमिहापि सर्वपूर्वायाः क्रियायाः प्राप्नोति ॥

( प्रदीपः ) लोकविज्ञानादिति । अमीषां ब्राह्मणानां पूर्वमानयेत्युक्ते पङ्क्तौ यः सर्वेषामादिः स एवानीयते तथेहापि स्नात्वा भुक्त्वा पीत्वा व्रजतीति स्नानस्यैव पूर्वत्वात् स्नातेरेव प्रत्ययेन भाव्यं न तु भुजिपिबतिभ्यामित्यर्थः ।

( ५०३६ समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अनन्त्यवचनात्तु सिद्धम् ॥ * ॥

( भाष्यम् ) समानकर्तृकयोरनन्त्यस्येति वक्तव्यम् ॥

( आक्षेपभाष्यम् )

सिध्यति सूत्रं तर्हि भिद्यते ॥

( समाधानभाष्यम् )

यथान्यासमेवास्तु ।

( दूषणस्मारणभाष्यम् )

ननु चोक्तं *समानकर्तृकयोरिति बहुत्वप्राप्तिः* इति ।

( परिहारस्मारणभाष्यम् )

परिहृतमेतत्—*सिद्धं तु क्रियाप्रधानत्वाद्* इति ॥

( परिहारासंभवभाष्यम् )

ननु चोक्तम्—'एवमपि लोकविज्ञानान्न सिध्यतीति' इति ।

( परिहारसंभवभाष्यम् )

नैष दोषः । सर्वेषामत्र व्रजिक्रियां प्रति पौर्वकाल्यम् । स्नात्वा व्रजति भुक्त्वा व्रजति पीत्वा व्रजतीति । एवं च कृत्वा प्रयोगोऽप्यनियतो भवति । स्नात्वा भुक्त्वा पीत्वा व्रजति । पीत्वा भुक्त्वा स्नात्वा व्रजति ॥

( प्रदीपः ) सर्वेषामिति । आख्यातवाच्यायाः क्रियायाः विशेष्यत्वात्प्राधान्यात्तां प्रति सर्वासां विशेषणत्वात्परस्परेणासम्बन्धः । यथोक्तम्—गुणानां च परार्थत्वादसंबन्धः समत्वादिति ।

( उद्द्योतः ) गुणानां चेति । प्रधानक्रियान्वये संभवति गुणभूतक्रियान्त्रयोऽनुचित इति भावः ॥ प्रत्येकानन्तर्यविवक्षायामिष्टासिद्धिमप्याह—भाष्ये एवं च कृत्वेति । तेन प्रत्येकानन्तर्यविवक्षायां क्त्वा न साधुरित्याहुः ॥ २१ ॥

( ५०३७ आक्षेपवार्तिकम् ॥ ४ ॥ )

॥ * ॥ व्यादाय स्वपितीत्युपसंख्यानमपूर्वकालत्वात् ॥ * ॥

( भाष्यम् ) व्यादाय स्वपितीत्युपसंख्यानं कर्तव्यम् । किं पुनः कारणं न सिध्यति । अपूर्वकालत्वात् । पूर्वं ह्यसौ स्वपिति पश्चाद्व्याददाति ।

( ५०३८ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ न वा स्वप्नस्यापरकालत्वात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यम् । किं कारणम् । स्वप्नस्यापरकालत्वात् । अपरकालः स्वप्नः । अवश्यमसौ व्यादाय मुहूर्तमपि स्वपिति ॥ समानकर्तृक ॥ २१ ॥

( प्रदीपः ) अपरकाल इति । यद्यपि स्वप्नक्षणानां व्यादानात् पूर्वकालता तथापि व्यादानानन्तरभाविस्वप्नक्रियापेक्षं व्यादानस्य पूर्वकालत्वमस्तीत्यर्थः ॥ २१ ॥

---

१ ओसुरूपद्विवचननिर्देशो न विवक्षित इत्यर्थः । ( र. ना. )

२ समानकर्तृकयोरित्यत्रेत्यर्थः । ( र. ना. )

३ एकस्यापि व्याधितत्वे औषधदानादिति भावः । ( र. ना. )

४ पूर्वकाले इत्यपहायानन्त्यस्येति वक्तव्यमित्यर्थः । अनन्त्यस्येति च पञ्चम्यर्थे षष्ठी । ( र. ना. )

५ केषांचिदिति शेषः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ५९७ क्त्वाणमुल्प्रत्ययविधिसूत्रम् ॥ ३।४।१ आ. ९ )

# ११८५ विभाषाग्रे प्रथमपूर्वेषु

## ॥ ३। ४। २४ ॥

( प्रदीपः ) विभाषाग्रे ॥ २४ ॥ इहाग्रादयः साधनपौर्वकाल्यविषया गृह्यन्ते न तु क्रियापौर्वकाल्यविषयाः। तेषां हि क्रियापौर्वकाल्यविषयत्वे तैरेव पौर्वकाल्यस्योक्तत्वात् क्त्वाणमुलोर्गतार्थत्वादुत्पत्त्या न भाव्यम्। न चैतत् सूत्रारम्भादुक्तेपि पौर्वकाल्ये तयोरुत्पत्तिरिति शक्यते वक्तुम्। अस्य साधनपौर्वकाल्यविषयाग्राद्युपपदत्वे चरितार्थत्वात् भाष्यकारेण च समानादिसूत्रे पूर्वशब्देन क्रियापौर्वकाल्ये उक्ते क्त्वाप्रत्ययस्यानुत्पत्तेः प्रतिपादितत्वात्। यदि चात्र अग्रादयः क्रियापौर्वकाल्यविषया गृह्येरन् तदा अप्राप्तविभाषैव निःसंदेहा स्यादिति किमियं प्राप्ते विभाषेति संशयो नैवोपपद्येत। यस्मादाभीक्ष्ण्ये णमुल्चेति क्त्वाणमुलौ क्रियापौर्वकाल्ये एव विधीयेते। तच्चेदग्रादिभिरुच्यते तदाभीक्ष्ण्यग्रहणानुवृत्तावप्यप्राप्तविभाषैव स्यात्। आभीक्ष्ण्यं च द्विर्वचनमनन्तरेण क्त्वाणमुल्भ्यां न द्योत्यत इति तद्द्योतनायापि तयोर्विधानं नोपपद्यते। तस्मात्साधनपौर्वकाल्यविषयां इहाग्रादय इति स्थितम्। यद्यपि देशविशेषवचनोऽग्रशब्दोऽस्ति ग्रामोरग्रे भुङ्क्ते इति तथापि पूर्वप्रथमसाहचर्यात्कालविशेषवृत्तिरेव गृह्यते ॥

( उद्द्योतः ) विभाषाग्रे ॥ २४ ॥ साधनेति। साधनान्तरजन्यसजातीयक्रियापेक्षपौर्वकाल्यविषया इत्यर्थः ॥ न तु क्रियेति। एककर्तृकभिन्नक्रियानिरूपितपौर्वकाल्यविषया इत्यर्थः ॥ साधनपौर्वकाल्यविषयाणामेव ग्रहणे प्रमाणमाह—तेषां हीति। पूर्वादीनामित्यर्थः ॥ मानान्तरमप्याह—भाष्यकारेण चेति। प्रकृतसूत्रभाष्यपर्यालोचनयाऽप्येवमेवेत्याह—यदि चेति ॥ निःसंदेहा। संदेहान्निष्क्रान्तेति समासः ॥ संशयानुपपत्तिं दर्शयति—यस्मादिति। तदाभीक्ष्ण्येति। उक्तार्थत्वेन क्त्वाणमुलोरप्राप्तेरिति भावः ॥ ननु पौर्वकाल्योक्तावपि आभीक्ष्ण्यप्रतिपादनाय तयोः प्राप्तिरत आह—आभीक्ष्ण्यं चेति। एवं चावश्यकद्विर्वचनेनैव तद्द्योतनसंभवेनास्य तत्राप्यप्राप्तिरिति भावः ॥ तयोर्विधानं तयोः प्राप्तिः ॥ पूर्वप्रथमेति। यद्यपि पूर्वशब्दो देशवाच्यपि तथापि प्रथमसाहचर्यं नियामकमिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**किमयं प्राप्ते विभाषा आहोस्विदप्राप्ते ॥**

( प्रत्याक्षेपभाष्यम् )

**कथं च प्राप्ते, कथं चाप्राप्ते।**

( प्रत्याक्षेपसमाधानभाष्यम् )

**आभीक्ष्ण्य इति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते॥ किं चातः?।**

( प्राप्तविभाषायां दूषणम् )

**यदि प्राप्ते। आभीक्ष्ण्येऽनिष्टा विभाषा प्राप्नोति। अन्यत्र चेष्टा न सिध्यति।**

( प्रदीपः ) अनिष्टाविभाषेति। आभीक्ष्ण्ये नित्यौ क्त्वाणमुलौ इष्येते अग्रे भुक्त्वा भुक्त्वा व्रजतीति। लडादयस्तु नैवेष्यन्ते अग्रे भुङ्क्ते भुङ्क्ते ततो व्रजतीति भावः ॥ अन्यत्र चेति। आभीक्ष्ण्यग्रहणानुवृत्तौ सत्यामनाभीक्ष्ण्ये क्त्वाणमुलौ न स्यातामित्यर्थः ॥

( अप्राप्तविभाषायां दूषणभाष्यम् )

**अथाप्राप्ते—**

( ५०३९ अप्राप्तविभाषायां दूषणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अग्रादिष्वप्राप्तविधेः समासप्रतिषेधः ॥ * ॥

**अग्रादिषु अप्राप्तविधेः समासस्य प्रतिषेधो वक्तव्यः ॥**

( प्रदीपः ) अप्राप्तविधेरिति। अप्राप्तविभाषायामग्रादीनां प्रत्ययोत्पत्तिं प्रति निमित्तत्वान्निमित्तस्य चोपपदसंज्ञाविधानादुपपदसमासः प्रतिषेध्यः। प्राप्तविभाषायां त्वग्रादीनां पक्षे प्रत्ययनिवृत्तौ निमित्तत्वं नतु प्रत्ययोत्पत्तौ प्रत्यययोराभीक्ष्ण्ये णमुल्चेत्यनेनाविशेषेण विहितत्वादिति भावः ॥

( उद्द्योतः ) निमित्तस्य चेति। उपपदमिति महासंज्ञया प्रत्ययनिमित्तस्योपपदत्वम्, न हि अभावस्योपपदत्वमिति वक्तुं शक्यमिति भावः ॥

( प्रश्नभाष्यम् )

**स तर्हि प्रतिषेधो वक्तव्यः।**

( समाधानभाष्यम् )

**न वक्तव्यः।**

( ५०४० भाष्यवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ उक्तं च ॥ * ॥

( भाष्यम् ) **उक्तमेतत्। अमैवाव्ययेनेत्यत्र एवकारकरणस्य प्रयोजनम्—'अमैवाव्ययेन यत्तुल्यविधानमुपपदं तत्र समासो यथा स्याद्, अमा चान्येन च यत्तुल्यविधानमुपपदं तत्र मा भूदिति॥ विभाषाग्रे॥ २४॥**

( प्रदीपः ) न वक्तव्य इति। अप्राप्तविभाषात्वमनेन द्रढयति ॥ पूर्वनिप्रतिषेधाचाग्रादिष्वाभीक्ष्ण्ये नित्याभ्यां क्त्वाणमुल्भ्यां भाव्यमित्युभयत्र विभाषा चेयं न भवति ॥ ननु च णमुल्यप्राप्ते क्त्वाप्रत्यये तु समानादिसूत्रेण प्राप्ते सत्यारम्भादुभयत्र विभाषेयं युक्ता ॥ नैतदस्ति। समानादिसूत्रे विहितं क्त्वां प्रति विभाषाग्रहणमनर्थकमेव, वाऽसरूप इत्यनेनैव पक्षे लडादीनां सिद्धत्वात् ॥ कः पुनरस्य क्त्वः समानादि-

१ वस्तुतो विधानशब्दस्य दधातेरर्थेऽपि न क्षतिरिति बोध्यम्। (र. ना.)

२ अग्रादिषु समासस्य प्रतिषेधो वक्तव्यः, अप्राप्तविधेः, अप्राप्तविधित्वादित्यर्थः। भावप्रधानो निर्देशः। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सूत्रविहिताद्विशेष इति चेद्। णमुल्सहितत्वमेव विशेषः। णमुल्सहितक्त्वाविधौ विभाषाश्रुतिरिहोपादीयमाना ज्ञापकार्था संपद्यते—क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्न भवतीति। तेनाभीक्ष्ण्ये पौर्वकाल्ये ल्डादयो न भवन्तीति। तत्र यदि केवलो णमुल् विधीयेत विभाषाश्रुतिरभिमतमर्थं ज्ञापयितुं न क्षमेतेति क्त्वोप्यनुवादः कर्तव्यः ॥ २४ ॥

( उद्द्योतः ) भाष्ये न वक्तव्य इत्युक्त अवचने हेतुमाह—उक्तं चेति। चो हेतौ। यत उक्तम् अतो न वक्तव्य इत्यर्थः। उक्तं वेति पाठेपि वाशब्दोत्र चार्थे एव बोध्यः। अवचने वैकल्पिकहेत्वन्तरानुक्तेः ॥ नन्वननुवृत्तावपि आभीक्ष्ण्ये परत्वादिदमेवोचितमित्युभयत्रविभाषात्वमुचितमित्यत आह—पूर्वविप्रतिषेधादिति ॥ ननु चेति। साधनपौर्वकाल्यविषये क्रियापौर्वकाल्यस्यापि सत्त्वादिति भावः ॥ वाऽसरूपेण ल्डादीनां सिद्धत्वाद्विभाषाग्रहणं किमर्थमिति शङ्कायामपि ज्ञापकार्थमित्युत्तरं बोध्यम् ॥ वासरूपन्यायेन ल्डादिसिद्धेर्व्यर्थमेतदिति शङ्कते—कः पुनरिति। वक्ष्यमाणरीत्या ज्ञापकार्थेत्युत्तरम्। एवं च प्रकृतसूत्रविषये ल्डादिसिद्ध्यर्थं विभाषाग्रहणम् ॥ ज्ञापनफलं तु पूर्वसूत्रे, यदि तु णमुल्विषये वाऽसरूपो नास्तीत्येव ज्ञाप्यते तदोत्तरसूत्रविषयेपि क्त्वाल्डादयो न स्युः ॥ तद्ध्वनयन्नाह—तत्र यदीति। आभीक्ष्ण्य[1] इति सूत्रे इत्यर्थः ॥ अभिमतमर्थं यत्र सह विधीयेते इत्येवंरूपमित्यर्थः ॥ २४ ॥

( ५९८ णमुल्प्रत्ययविधिसूत्रम् ॥ ३ । ४ । १ आ० १० )

## ११८७ स्वादुमि णमुल् ॥ ३।४।२६ ॥

( आक्षेपभाष्यम् )

किमर्थं स्वादुमि मकारान्तनिपातनं क्रियते। न, खमुञ्प्रकृतः सोऽनुवर्तिष्यते?।

( ५०४१ प्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ स्वादुमि मान्तनिपातनमीकाराभावार्थम् ॥ * ॥

( भाष्यम् ) स्वादुमि मान्तनिपातनं क्रियते ईकाराभावार्थम्। ईकारो मा भूदिति। स्वाद्वीं कृत्वा यवागूं भुङ्क्ते। स्वादुंकारं यवागूं भुङ्क्त इति ॥

( ५०४२ प्रयोजनान्तरवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ च्व्यन्तस्य च मकारान्तार्थम् ॥ * ॥

( भाष्यम् ) च्व्यन्तस्य च मकारान्तत्वं यथा स्यात्। अस्वादु स्वादु कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते ॥

( प्रदीपः ) स्वादुमि ॥२६॥ ईकाराभावार्थमिति। मान्तत्वे भाविप्रत्ययविषये निपात्यमाने विहतनिमित्तत्वाद्वोतो[3] गुणवचनादिति ङीष् न भवतीत्यर्थः ॥ च्व्यन्तस्य चेति। खमुञ्यपि सर्वत्र मुम् न सिध्यति। अनव्ययस्येत्यधिकारादिति भावः ॥ यद्येवं मान्तत्वमेव निपात्यतां प्रत्ययस्तु खमुञेव विधेयः। नैतदस्ति। अव्ययार्थमेव मान्तनिपातनं स्यादिति ङीष् स्यादेव। णमुलि तु मान्तत्वमपूर्वं विधीयमानमीकाराभावार्थं च्व्यन्तस्य च मकारान्तार्थं विज्ञायते। अवश्यं चोत्तरार्थो णमुल् विधेय इति लाघवाभावादिहैव विहितः ॥

( उद्द्योतः ) स्वादुमि ॥ २६ ॥ भाविप्रत्ययविषयेति। णमुलविषयेत्यर्थः। स्वादुमीत्यनूद्य प्रत्ययविधानात्प्रत्यये भाविनि सति पूर्वमेव निपात्यते इति भावः। भावप्रत्ययविषयेति पाठेप्ययमेवार्थः। यत्तु एवं पाठं दृष्ट्वा भावप्रत्ययमात्रविषयं निपातनं तेन क्त्वायोगेपीति ॥ तन्न, 'स्वाद्वीं' कृत्वा यवागूं भुङ्क्ते 'अस्वादु स्वादु' कृत्वा भुङ्क्ते इति भाष्यप्रयोगविरोधात्। स्वाद्वीं कृत्वेतिवत्स्वादुंकारमित्यत्रापीकारः स्यात्तदभावाय निपातनमित्यर्थो भाष्यस्य ॥ विहतेति। उकारान्तत्वाभावादित्यर्थः। अव्ययार्थमेवेति। अपूर्वविधानात्प्रतिप्रसवस्य लघुत्वादिति भावः ॥

( ५०४३ आक्षेपवार्तिकम् ॥ ३ ॥ )

### ॥*॥ आच्च तुमुनः समानाधिकरणे ॥*॥

( भाष्यम् ) आच्च तुमुनः प्रत्ययाः समानाधिकरणे भवन्तीति वक्तव्यम् ॥ केन?। अनुप्रयोगेण ॥ किं प्रयोजनम्?। स्वादुंकारं यवागूर्भुज्यते देवदत्तेनेति देवदत्ते तृतीया यथा स्यात् ॥

( आक्षेपभाष्यम् )

किं च कारणं न स्यात्?।

( कारणप्रदर्शनभाष्यम् )

णमुलाभिहितः कर्तेति ॥

( प्रदीपः ) आच्च तुमुन इति। पूर्वोक्तवाक्यार्थापेक्षया समुच्चयप्रतिपादनार्थश्चशब्दः। न केवलं स्वादुमि मान्तनिपातनमपि तु इदमपि वक्तव्यमित्यर्थः। शकधृषादिसूत्रविहितस्तुमुन् गृह्यते अभिविधौ चायमाकारः ॥ णमुलेति। असत्यस्मिन्वचने कर्तरि कृदिति णमुला कर्तरि भाव्यमिति भावः ॥

( उद्द्योतः ) आच्च तुमुन् इत्यत्र चकारः किमपेक्ष इत्यत आह—पूर्वोक्तेति। मान्तनिपातनम् इत्यस्य वक्तव्यम् इति शेषः ॥ अभिविधौ चेति। एवं च तुमुन्नन्तधातुसंबन्धाधिकारविहिता[4] अव्ययकृत इत्यर्थः। तुमुन्त्वसामान्यात्तुमुन्ण्वुलावित्यस्यापि ग्रहणं बोध्यम् ॥ अत एवाग्रे भोक्तुमोदनः पच्यत इत्युदाहरणं संगच्छते ॥ भाष्ये समानाधिकरण इति। स्वान्वयि[5]समभिव्याहृताख्यातवाच्यकारक इत्यर्थः। भाष्येऽनुप्रयोगशब्देनेदमेवोच्यते। समानाधिकरणे कारके वर्तमानाद्धातोरित्यर्थस्तेन तस्य[6] धात्वर्थं प्रति

[1] आभीक्ष्ण्ये इत्यर्थः। ( र. ना. )
[2] खिदन्तोत्तरपदत्वादरुर्द्विषदिति मुम्स्यादिति भावः। ( र. ना. )
[3] निपातेन मान्तत्वे उदन्तत्वाभावेन वोत इति ङीष् नेति भावः। ( र. ना. )
[4] तुमुन्नन्तपदस्य विहितान्तेन कर्मधारयः। ( र. ना. )
[5] स्वान्वयित्वमाख्यातविशेषणम्। ( र. ना. )
[6] तुमुन्नन्तस्य तिङन्तधात्वर्थं प्रतीत्यर्थः। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विशेषणत्वमेवेति न बोधे वैषम्यम् ॥ नन्नु सत्यन्यस्मिन्कारके कर्तैव क्त्वादभिधीयतेऽत आह—असत्यस्मिन्निति ॥

( तृतीयासाधकभाष्यम् )

नन्नु च भुजिप्रत्ययेन अनभिहितः कर्तेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया ।

( प्रदीपः ) अनभिहिताश्रय इति । अनभिहित इति पर्युदास आश्रीयते न तु प्रसज्यप्रतिषेध इति भावः ॥

( उद्द्योतः ) नन्वभिहिते प्रतिषेधात्कथमनभिहिताश्रयो विधिरत आह—पर्युदास इति ॥

( द्वितीयापत्तिभाष्यम् )

यदि सत्यभिधाने चानभिधाने च कुतश्चिदभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भवति तृतीया । यवाग्वां द्वितीया प्राप्नोति । किं कारणम् । णमुलानभिहितं कर्मेति ॥

( द्वितीयाबाधकभाष्यम् )

यदि पुनरयं कर्मणि विज्ञायेत[1] ।

( प्रदीपः ) यदि पुनरिति । अव्ययकृतः कर्मणीति वचनं यदि क्रियत इति भावः ॥

( द्वितीयानुपपत्तिभाष्यम् )

नैवं शक्यम् । इह हि स्वादुंकारं यवागूं भुङ्क्ते देवदत्त इति यवाग्वां द्वितीया न स्यात् । किं कारणम् । णमुलाभिहितं कर्मेति ।

( द्वितीयोपपत्तिभाष्यम् )

नन्नु च भुजिप्रत्ययेनानभिहितं कर्मेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति द्वितीया ।

( तृतीयोपपत्तिभाष्यम् )

यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति द्वितीया देवदत्ते तृतीया प्राप्नोति । किं कारणम् ? । णमुलानभिहितः कर्तेति ।

( प्रश्नभाष्यम् )

अथानेन क्त्वायामर्थः । पक्त्वौदनो भुज्यते देवदत्तेनेति ॥

( प्रदीपः ) अथानेनेति । आचंतुमुन इत्यनेन वचनेनेत्यर्थः । अनेकप्रयोजनत्वमस्य वचनस्य प्रश्नद्वारेण दर्शयति ।

( उत्तरभाष्यम् )

बाढमर्थः । देवदत्ते तृतीया यथा स्यात् । किं च कारणं न स्यात् ? । क्त्वयाभिहितः कर्तेति ॥

( तृतीयासाधकभाष्यम् )

नन्नु च भुजिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया ॥

( द्वितीयापत्तिभाष्यम् )

यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया । ओदने द्वितीया प्राप्नोति ॥ किं कारणम् ? । क्त्वयानभिहितं कर्मेति ॥

( द्वितीयापत्तिवारणभाष्यम् )

यदि पुनरयं कर्मणि विज्ञायेत ॥

( द्वितीयानुपपत्तिभाष्यम् )

नैवं शक्यम् । इह हि पक्त्वा ओदनं भुङ्क्ते देवदत्त इति ओदने द्वितीया न स्यात् ॥

किं च कारणं न स्यात् ? ।

क्त्वयाऽभिहितं कर्मेति ॥

( द्वितीयोपपत्तिभाष्यम् )

नन्नु च भुजिप्रत्ययेन अनभिहितं कर्मेति कृत्वा अनभिहिताश्रया विभक्तिर्भविष्यति द्वितीया ॥

( तृतीयापत्तिभाष्यम् )

यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया । देवदत्ते तृतीया प्राप्नोति किं कारणम् ? । क्त्वयानभिहितः कर्तेति ॥

( प्रश्नभाष्यम् )

अथानेन तुमुन्यर्थः । भोक्तुमोदनः पच्यते देवदत्तेनेति ॥

( उत्तरभाष्यम् )

बाढमर्थः । देवदत्ते तृतीया यथा स्यात् ॥

किं च कारणं न स्यात् ? । तुमुनाभिहितः कर्तेति ॥

( तृतीयोपपत्तिभाष्यम् )

नन्नु च पचिप्रत्ययेनानभिहितः कर्तेति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया ॥

( द्वितीयापत्तिभाष्यम् )

यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति तृतीया । ओदने द्वितीया प्राप्नोति । किं कारणम् ? । तुमुनानभिहितं कर्मेति कृत्वा ॥

( द्वितीयावारणभाष्यम् )

यदि पुनरयं कर्मणि विज्ञायेत ॥

१ णमुल् कर्मणि विज्ञायेतेत्यर्थः । तथा च णमुलाऽभिहितं कर्मेति द्वितीया न प्राप्नोतीति भावः । ( र. ना. )

२ भावे इत्यपहायेति भावः । ( र. ना. )

३ स्वादुंकारं यवागूर्भुज्यते देवदत्तेनेत्यत्रेति भावः । ( र. ना. )

४ 'एवम्' इत्यादौ पूरणीयम् ॥

५ 'अव्ययकृतः कर्मणि' इत्यङ्गीक्रियेतेति भावः ॥

६ 'एवम्' इत्यादौ पूरणीयम् ॥

७ 'एवम्' इत्यादौ पूरणीयम् ॥

८ 'अव्ययकृतः कर्मणि' इत्यङ्गीकारेणेति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( द्वितीयानुपपत्तिभाष्यम् )

नैवं शक्यम् । इह हि भोक्तुमोदनं पचति देवदत्त इति ओदने द्वितीया न स्यात् ।

किं च कारणं न स्यात् ? । तुमुनाभिहितं कर्मेति ॥

( द्वितीयोपपत्तिभाष्यम् )

ननु च पचिप्रत्ययेनानभिहितं कर्मेति कृत्वा अनभिहिताश्रयो विधिर्भवति द्वितीया ॥

( तृतीयापत्तिभाष्यम् )

यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वा अनभिहिताश्रयो विधिर्भविष्यति द्वितीया । देवदत्ते तृतीया प्राप्नोति । किं कारणम् ? । तुमुनानभिहितः कर्तेति ॥

( प्रश्नभाष्यम् )

अथ अनेनेहार्थः । पक्त्वौदनं ग्रामो गम्यते देवदत्तेनेति ।

° ( प्रदीपः ) पक्त्वौदनमिति । भिन्नधात्वर्थविषयकर्मभेदेपि वचनस्यास्य दर्शयितुं प्रयोजनमुपन्यासः ।

( उद्योतः ) भिन्नधात्वर्थेति । पाके ओदनो, गमने ग्राम, इत्यर्थः । अस्य वचनस्य प्रयोजनं दर्शयितुमित्यन्वयः ।

( अभ्युपगम भाष्यम् )

बाढमर्थः । देवदत्ते तृतीया यथा स्यात् ।

किं च कारणं न स्यात् ? ।

क्त्वयाभिहितः कर्तेति ॥

( तृतीयोपपत्तिभाष्यम् )

ननु च गमिप्रत्ययेनानभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया ।

( द्वितीयापत्तिवारणभाष्यम् )

यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया ॥ यदुक्तमोदने द्वितीया प्राप्नोतीति स इह दोषो न जायते ।

( उद्योतः ) भाष्ये स इह दोषो न जायत इति । ननु अनभिहिताश्रया तृतीया सिद्धा द्वितीयाप्राप्तिरूपो दोषश्च न तत्किमत्र प्रयोजनमिति प्रयोजनं दर्शयितुमुपन्यास इति कैयटासंगतिरिति चेद् ॥ अत्र वदन्ति—दर्शयितुमिति कैयटस्य विचारयितुमित्यर्थः ॥ स दोष इह न जायते तस्मान्नार्थ एतदुदाहरणविषये इति भाष्यार्थः । यदि प्रवर्तेत तदा एतत्प्रयोगाभावरूपमनिष्टं च स्यात् । तस्मात्समानशब्द एकपर्याय इति तात्पर्यम् ॥

१ भोक्तुमोदनं पचति देवदत्त इत्यत्रेति शेषः । ( र. ना. )

२ ओदनः पच्यते देवदत्तेनेत्यत्र यदि ओदने द्वितीया प्रवर्तेत तदैतत्प्रयोगाभावरूपमनिष्टं च स्यादिति योजना । ( र. ना. )

३ प्रकृतवार्तिकस्थ समानाधिकरणपदघटकसमानशब्द इत्यर्थः । ( र. ना. )

४ त्वदुक्तरीत्या गत्यर्थकर्मत्वाभावादिति भावः । ( र. ना. )



( प्रश्नभाष्यम् )

तर्हि वक्तव्यम् *आच तुमुनः समानाधिकरणे* इति ॥

( उत्तरभाष्यम् )

न वक्तव्यम् । अव्ययकृतो भावे भवन्तीति भावे भविष्यन्ति ॥

( प्रश्नभाष्यम् )

किं वक्तव्यमेतत् ।

( उत्तरभाष्यम् )

नहि । कथमनुच्यमानं गंस्यते । "तुमर्थे" इति वर्तते ॥

तुमर्थश्च कः ।

भावः ॥ स्वादुमि ॥ २६ ॥

( प्रदीपः ) अव्ययकृत इति । यद्येवं पक्त्वौदनं भुङ्क्ते देवदत्तः पक्त्वौदनो भुज्यते देवदत्तेनेति क्त्वाप्रत्ययेन कर्तृकर्मणोरनभिधानात्पाकापेक्षया तृतीयाद्वितीये कस्मान्न भवतः उच्यते आख्यातादिपदवाच्या क्रिया विशेष्यत्वात् प्रधानम् । विशेषणभूता त्वप्रधानम् । तत्क्रियासाधन्योरपि शक्त्योस्तद्द्वारको गुणप्रधानभावः । तत्र प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत्प्रकाशते । प्रधानानुरोधाद् गुणानां तन्मुखप्रेक्षित्वात् पृथक्त्वाद्विरुद्धस्वकार्यारम्भाभावात् ।

( उद्योतः ) आख्यातादिपदवाच्येति । अत्रेदं तत्त्वम्—उपात्तकारकाणां प्रधानान्वये संभवति न गुणे शाब्दान्वयः । अर्थत एव तदीयकारकाकाङ्क्षाशान्तौ तत्रान्वये मानाभावात् ॥ तद्द्वारक इति । क्रियाद्वारकः ॥ गुणक्रियानिरूपिता शक्तिरपि गुणभूतेति भावः ॥ नन्वार्थान्वयेपि तत्क्रियानिरूपिता शक्तिस्तत्रास्त्येव । अन्यथा ग्रामाय गन्तुमिच्छतीत्यादि न स्यात् । एवं च द्वितीयादिकं स्यादेवात आह—तत्र प्रधानेति । अत्र प्रधानशब्देन सर्वतः प्रधानमाख्यातवाच्यक्रियैव । तच्छक्तेरेव वस्तुस्वभावमाहात्म्येन स्वसमानाधिकरणेतरशक्त्यभिभावकत्वात् । अत एव क्षुधं प्रतिहन्तुं शक्यमित्यपि भवतीति पस्पशायां कैयटेनोक्तं संगच्छते । तत्र शक्यमित्यस्यापि नामत्वेनेतरक्रियां प्रति गुणत्वेन स्वसमानाधिकरणेतरशक्त्यभिभवे सामर्थ्याभावात् इति दिक् ॥ अन्ये तु समानाधिकरणे इत्यस्यानुप्रयोगेणेत्येव व्याख्यानात् । अयमपि प्रयोगश्चिन्त्य एव । तद्वचनवादिमतेऽसिद्धेः । न च तदाख्यातान्यानुप्रयोगविषयम्, क्षुदुपहन्तुं शक्यमिति भाष्यप्रयोगासिद्ध्यापत्तेः । तुमुना कर्मणोऽनभिधानाद् द्वितीयापत्तेरित्याहुः ॥ पृथक्त्वादिति । भिन्नत्वाद्विरुद्धं यत्स्वं कार्यं तदारम्भकत्वाभावादित्यर्थः ॥ एतेन यदा

५ 'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा, गुणे तदा तद्वदनुक्तापि प्रतीयते ॥' इति
कारिके अत्र स्मर्तव्ये ॥

६ स्वसमानाधिकरण्यमितरशक्तिविशेषणम् । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यत्र शाब्दोन्वयस्तदा तद्विभक्तेः साधुत्वे ओदनं पक्त्वा भुज्यते, पक्त्वौदनो भुज्यते इत्युभयमपि साध्विति परास्तम् ॥ प्रकृतसूत्रस्य भाष्यवार्तिकयोरनुक्तिसंभवग्रस्तत्वापत्तेरित्यलम् । यत्तु हरदत्तेन वयं तु ब्रूमः—सकृच्छ्रुतस्य युगपदुभाभ्यां संबन्धाभावादेकेनैव प्रधानेन शाब्दोन्वयः । इतरेण तु संनिधानादार्थ इति गुणनिरूपिता शक्तिस्तत्र नास्त्येवेति उक्तम् । तन्न, ग्रामाय गन्तुमिच्छतीति सन्सूत्रस्य भाष्यप्रयोगविरोधापत्तेः । ग्रामस्य गतिकर्मत्वाभावेन चतुर्थ्यप्राप्तेः । मम तु शाब्दान्वयाभावेपि तन्निरूपितकर्मत्वस्य सत्त्वेन परत्वाद् गत्यर्थकर्मणीत्यस्य प्रवृत्त्या न दोषः । एवं ग्रामाय गत्वा इच्छतीत्यपि साध्विति दिक् ॥ २६ ॥

( ५९९ णमुल्प्रत्ययविधिसूत्रम् ॥ ३।४।१ आ० ११ )

## ११९३ वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३ । ४ । ३२ ॥

( आक्षेपभाष्यम् )

**ऊलोपश्चास्यान्यतरस्यांग्रहणं शक्यमकर्तुम् ।**

( प्रत्याक्षेपभाष्यम् )

**कथं गोष्पदप्रं वृष्टो देव इति ॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**प्रातिः पूरणकर्मा । तस्मादेष कः ॥**

( अतिव्याप्तिभाष्यम् )

**यदि कः, विभक्तीनां श्रवणं प्राप्नोति ॥**

( इष्टापत्तिभाष्यम् )

**श्रूयन्त एवात्र विभक्तयः । तद्यथा—एकेन गोष्पदप्रेणेति ॥ वर्षप्रमा ॥ ३२ ॥**

( प्रदीपः ) वर्ष ॥ ३२ ॥ तस्मादेष क इति । गोष्पदं प्रातीत्यातोऽनुपसर्गे क इति कप्रत्ययः । क्रियाविशेषणत्वाच्च कर्मत्वनपुंसकत्वे । गोष्पदप्रं कल्पं गोष्पदप्रन्तरामित्यादिप्रयोगसिध्यर्थमूलोपो न विधेयः । एषां प्रयोगाणां भाष्यकारेणानभ्युपगमात् । अनभ्युपगमस्तु ऊलोपप्रत्याख्यानान्यथानुपपत्त्या विज्ञायते ॥ गोष्पदपूरमित्यादेरपि घञा सिद्धत्वाद् णमुल् कस्मान्न प्रत्याख्यायते । स्वरे दोषप्रसङ्गात् । तथा हि—यदि करणे घञं विधाय षष्ठीतत्पुरुषः क्रियते । तदा थाथादिसूत्रेणान्तोदात्तत्वं भवति । भावे तु घञि बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । णमुलि तु लित्स्वरेणौकार उदात्तः । गोष्पदपूरंतरामित्यादि च सिध्यति । गोष्पदप्रमित्यत्र तु नास्ति स्वरभेदः । कप्रत्यये थाथादिस्वरेणान्तोदात्तत्वाद् णमुलि ऊलोपे कृते पूर्वस्योदात्तभाजोऽभावात् कृत्स्वरेणान्तोदात्तत्वात् ॥ ३२ ॥

( उद्योतः ) वर्षप्रमाणे ॥ ३२ ॥ गोष्पदं प्रातीति पूरयतीत्यर्थः ॥ नन्वस्मात्कल्पपि वृत्तौ प्रमित्यनुस्वारश्रवणं न स्यात् णमुलन्तात्तु भवतीत्यत आह—गोष्पदप्रमिति ॥ करणे इति । तथा सति वृषधात्वर्थेन सामानाधिकरण्यं भवति ॥ बहुव्रीहाविति । गोष्पदस्य पूरणं यत्र क्रियायामित्यर्थः ॥ लित्स्वरेणौकार इति । तत उपपदसमासे कृदुत्तरपदप्रकृतिस्वरः ॥ कृत्स्वरेणेति प्रत्ययस्वरेण प्रत्ययस्योदात्तत्वे कृदुत्तरपदप्रकृतिस्वरेणेत्यर्थः ॥ ३२ ॥

( ६०० णमुल्प्रत्ययविधिसूत्रम् ॥ ३ । ४ । १ आ. १२ )

## ११९४ करणे हनः ॥ ३ । ४ । ३७ ॥

( ५०४४ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ हनः करणेऽनर्थकं वचनं हिंसार्थेभ्यो णमुल्विधानात् ॥ * ॥**

( भाष्यम् ) **हनः करणे वचनमनर्थकम् । किं कारणम् ? । हिंसार्थेभ्यो णमुल्विधानात् । हिंसार्थेभ्यो णमुल्विधीयते । तेनैव सिद्धम् ॥**

( प्रदीपः ) करणे ॥ ३७ ॥ बाहुल्येन हन्तिर्हिंसार्थो दृश्यत इति मत्वाह—हन इति ॥

( उद्योतः ) करणे ह ॥ ३७ ॥ बाहुल्येनेति । अन्ये तु हन्तिर्हिंसार्थ एव । पद्धत्यादौ हिंसारोप इत्याहुः ॥

( ५०४५ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

**॥*॥ अर्थवत्त्वहिंसार्थस्य विधानात् ॥*॥**

( भाष्यम् ) **अर्थवत्तु हन्तेर्णमुल्वचनम् । कोर्थः ? । अहिंसार्थस्य विधानात् । अहिंसार्थस्य हन्तेर्णमुल् यथा स्यात् ॥**

( आक्षेपभाष्यम् )

**अस्ति पुनरयं क्वचिद्धन्तिरहिंसार्थः यदर्थो विधिः स्यात् ॥**

( समाधानभाष्यम् )

**अस्तीत्याह । पाण्युपघातं वेदिं हन्ति ॥**

( ५०४६ प्रयोजनान्तरवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ नित्यसमासार्थं च ॥ * ॥**

( भाष्यम् ) **नित्यसमासार्थश्च हिंसार्थादपि हन्तेरनेन विधिरेषितव्यः ।**

( आक्षेपभाष्यम् )

**कथं पुनरिच्छतापि हिंसार्थाद्धन्तेरनेन विधिर्लभ्यः । अनेनास्तु तेन वेति तेन स्याद्विप्रतिषेधेन ॥**

---

१ उक्तिसंभवाभावेन ग्रस्तत्वापत्तेरित्यर्थः । ( र. ना. )

२ वर्षणेत्यादिः । ( र. ना. )

३ ननु हिंसागत्युभयार्थस्य हन्तेः सत्त्वादनेनर्थाद्वये प्रत्ययो विधीयते वक्ष्यमाणेन तु केवलहिंसायामेवेति हनः करण इति वार्तिकमसङ्गतमत आह बाहुल्येनेति प्राचुर्येणेत्यर्थः । ( र. ना. )

४ 'विधानम्' ॥

५ प्राणवियोगानुकूलव्यापारो हि हिंसा सा च वेद्यां नास्तीति भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( समाधानभाष्यम् )

हन्तेः पूर्वविप्रतिषेधो वार्तिकेनैव ज्ञापितः । यदयं नित्यसमासार्थं चेत्याह । तज्ज्ञापयत्याचार्यः- हिंसार्थादपि हन्तेरनेन विधिर्भवतीति ॥ करणे हनः ॥ ३७ ॥

( प्रदीपः ) हन्तेः पूर्वविप्रतिषेध इति । यद्येवं हिंसार्थानामित्यत्र दण्डोपघातं गाः कालयतीति उदाहरणं नोपपद्यते । नैष दोषः—यत्र एक एव धात्वर्थः सामान्यविशेषभावेन स्त्रियमानो विशेष्यभावमनुभवति सोऽस्य विषयः । कषादिषु यथाविध्यनुप्रयोग इति वचनादन्यत्र भिन्नधात्वर्थसंबन्धे तु हिंसार्थानामित्यनेनैव णमुल् भवति ॥३७॥

( उद्योतः ) भाष्ये पाण्युपघातमिति । पाणिना वेदिं हन्तीत्यर्थः । हिं सा च प्राणिविषयेति भावः ॥ सामान्येति । यत्रानुप्रयोगणमुलन्तयोः सामान्यविशेषभावेनान्वयस्तत्रेदमेव । यत्र भेदसंबन्धेनान्वयस्तत्र तेनैवेति भावः ॥ हिंसार्थानामिति । णमुलि तृतीयाप्रभृतीन्यन्यतरस्यामिति वैकल्पिकः समासः ॥ ३७ ॥

( ६०१ णमुल्प्रत्ययविधिसूत्रम् ॥ ३ । ४ । १ आ. १३ )

## १२०२ अधिकरणे बन्धः ॥ ३।४।४१ ॥

( आक्षेपभाष्यम् )

इह कस्मान्न भवति ग्रामे बन्ध इति ॥

( प्रदीपः ) अधिक ॥ ४१ ॥ ग्रामे बन्ध इति । णमुलि सति ग्रामबन्धं बद्ध इति प्राप्नोति ॥ ४१ ॥

( उद्योतः ) अधिकरणे ॥ ४१ ॥ ग्रामे बन्ध इति । यद्यपीदं वासरूपन्यायेन घञा सिद्धम् तथापि अनिष्टमपि प्राप्नोतीत्याह—ग्रामबन्धमित्यादिना । ग्रामे बद्ध इति त्वपपाठः । कर्मणि क्तस्य विषये भावविषयणमुलोऽप्राप्तेः । यद्यप्ययं साध्यो भावः स च सिद्धस्वभावः । तथापि संज्ञात्वाभावात्प्रश्नः ॥

( समाधानभाष्यम् )

एवं वक्ष्यामि "अधिकरणे बन्धः संज्ञायाम्" ततः "कर्त्रोर्जीवपुरुषयोर्नशिवहोः" इति ।

( आक्षेपभाष्यम् )

कथमट्टालिकाबन्धं बद्धः । चण्डालिकाबन्धं बद्धः ? ।

( समाधानभाष्यम् )

"उपमाने कर्मणि च" इत्येवं भविष्यति ॥ अधिकरणे ॥ ४१ ॥

( उद्योतः ) उपमाने इति । एवमनधिकरणविषये तेनैव साध्यमिति भावः ॥ ४१ ॥

( ६०२ क्त्वाणमुल्प्रत्ययविधिसूत्रम् ॥ ३।४।१ आ० १४ )

## १२२१ तिर्यच्यपवर्गे ॥ ३ । ४ । ६० ॥

( उद्योतः ) तिर्यच्य ॥ ६० ॥ तिर्यक्शब्दोऽनृजुवाची । अपवर्गः समाप्तिस्तद्वाची च ॥

( आक्षेपभाष्यम् )

अयुक्तोयं निर्देशः । तिरश्चीति भवितव्यम् ॥

( समाधानभाष्यम् )

सौत्रो निर्देशः ॥ तिर्यच्य ॥ ६० ॥

( प्रदीपः ) तिर्य ॥ ६० ॥ सौत्रो निर्देश इति । अनुक्रियमाणरूपविनाशप्रसङ्गस्तु न परिहारः । न हि प्रयोजनानुवर्ति प्रमाणम् ॥ ६० ॥

( उद्योतः ) न हीति । सौत्रत्वेन शास्त्रप्रवृत्तौ तु तदिनाशप्रसङ्गो बीजमित्यन्यदिति भावः ॥ ६० ॥

( ६०३ क्त्वाणमुल्प्रत्ययविधिसूत्रम् ॥ ३।४।१ आ. १५ )

## १२२३ नाधार्थप्रत्यये च्व्यर्थे ॥३।४।६२॥

( आक्षेपभाष्यम् )

अर्थग्रहणं किमर्थम् ? ॥

( समाधानभाष्यम् )

नाधाप्रत्यय इतीयत्युच्यमाने इहैव स्यात्—द्विधाकृत्य । इह च न स्यात्—द्वैधं कृत्य । अर्थग्रहणे पुनः क्रियमाणे न दोषो भवति । नाधाप्रत्यये च सिद्धं भवति । यश्चान्यस्तेन समानार्थः ॥

( प्रदीपः ) नाधा ॥ ६२ ॥ द्वैधं कृत्येति । यदा द्वित्र्योश्च धमुञित्यादौ प्रत्ययपक्षस्तदैतदर्थग्रहणस्य प्रयोजनम् । आदेशपक्षे तु स्थानिवद्भावात् धाग्रहणेन ग्रहणात्सिध्यति । तथा च धमुञन्तात् स्वार्थे डदर्शनमिति डप्रत्यय उदाहार्यो द्वैधकृत्येति ॥ नार्थमप्यर्थग्रहणं कर्तव्यमन्यथा निरनुबन्धकपरिभाषया नाञो ग्रहणं न स्यात् ॥ ६२ ॥

( उद्योतः) नाधार्थ ॥ ६२ ॥ तथा चेति । तदा चेत्यर्थः । द्वैधकृत्येतीति । डान्तेन समासे विभक्तिलोपः । एतद्भाष्यस्वरसात्प्रत्ययपक्ष एव तत्र न्याय्य इति तत्त्वम् ॥ नार्थमपीति । निरनुबन्धकमादाय रूपाणां सिद्धेरनिष्टाभावाच्च तदर्थत्वं चिन्त्यम् ॥

( आक्षेपभाष्यम् )

अथ प्रत्ययग्रहणं किमर्थम् ? ।

( समाधानभाष्यम् )

इह हि मा भूत्—हिरुक् कृत्वा पृथक् कृत्वा ॥ नाधार्थ ॥ ६२ ॥

( उद्योतः ) हिरुगिति । नार्थत्वात्प्राप्तिः ॥ ६२ ॥

---

१ पूर्वविप्रतिषेधेनास्यैव तथापि प्रवृत्तेरिति भावः ॥

२ तदिति । अनुक्रियमाणरूपेत्यर्थः । ( र. ना. )

३ सौत्रत्वस्य सहकारिकारणमित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( ६०४ क्त्वाणमुल्प्रत्ययविधिसूत्रम् ॥ ३।४।१ आ. १६ )

## १२२५ अन्वच्यानुलोम्ये ॥ ३।४।६४ ॥

( आक्षेपभाष्यम् )

अयुक्तोयं निर्देशः । अनूचीति भवितव्यम् ।

( समाधानभाष्यम् )

सौत्रोयं निर्देशः ॥ अन्वच्या ॥ ६४ ॥

( अव्ययकृतः समाप्तः )

( अथ कृतादीनां शक्तिबोधकप्रकरणम् )

( ६०५ कृत्प्रत्ययशक्तिबोधकसूत्रम् ॥ ३।४।१ आ. १७ )

## १२२८ कर्तरि कृत् ॥ ३ । ४ । ६७ ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ।

( प्रदीपः ) कर्त ॥ ६७ ॥ किमर्थमिति । वक्ष्यमाणोऽभिप्रायः ॥

( ५०४७ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ कर्तरि कृद्वचनमनादेशो स्वार्थविज्ञानात् ॥ * ॥

- ( भाष्यम् ) कर्तरि कृतो भवन्तीत्युच्यते । [ किं कारणम् ? । ] अनादेशे[1] स्वार्थविज्ञानात् । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति । तद्यथा—"गुप्तिज्किद्भ्यः सन्" "यावादिभ्यः कन्" इति । एवमिमे प्रत्ययाः कृतः स्वार्थे स्युः । स्वार्थे मा भूवन् । कर्तरि यथा स्युः ॥ एवमर्थमिदमुच्यते ॥

( प्रदीपः ) अनादेश इति । यत्र वचनेनार्थो नादिश्यते तत्र प्रत्यासत्त्या प्रकृत्यर्थ एव प्रत्ययो भवति ॥

( प्रयोजननिरासभाष्यम् )

नैतदस्ति प्रयोजनम् ॥ यमिच्छति स्वार्थे, आह तं भावे घञ् भवतीति ॥

( प्रदीपः ) यमिच्छतीति । असत्यस्मिन् सूत्रे घञित्येतावत् सूत्रं कर्तव्यम् । धातोर्घञ् भवतीति । तत्रानिर्दिष्टत्वाद्भावे घञ् भविष्यति । ततः पदरुजविशस्पृश इति द्वितीयं सूत्रं कर्तव्यम् । ततश्च भाव इति न कर्तव्यम् । क्रियमाणं तु नियमार्थं भविष्यति घञेव भावे नान्य इति । ततो धात्वर्थाक्षिप्ते कर्तरि कृद्भविष्यति नार्थः सूत्रेणेत्यर्थः ॥

( उद्द्योतः ) कर्तरि कृत् ॥ ६७ ॥ ननु भावे इति सूत्रं धातुमात्राद् घञ् विधये आवश्यकमत आह—घञित्येतावदिति । भावपदोपादानं विनापि अन्यप्रत्ययवत्स्वार्थे विधानेनैव भावे सिद्धमिति भावः ॥ ततः पदरुजेति । कर्त्रर्थमिदम् ॥

( प्रयोजनभाष्यम् )

कर्मणि तर्हि मा भूवन्निति ।

( प्रदीपः ) कर्मणीति । तस्यापि धात्वर्थेनाक्षेपादिति भावः ॥

( प्रयोजननिरासभाष्यम् )

कर्मण्यपि यमिच्छत्याह तं "धः कर्मणि ष्ट्रन्" इति ।

( प्रदीपः ) कर्मणि ष्ट्रन्निति । ष्ट्रन्नेव कर्मणि नान्य इति नियमो विज्ञास्यते । यद्येवं कर्मणो नियमात्प्रत्ययो न नियत इति कारकान्तरेपि ष्ट्रन् प्राप्नोति । नैष दोषः । एकमिदं वाक्यं धः कर्मणि ष्ट्रन्निति । तेन च कर्मणि विधीयमानः कथं कारकान्तरे स्यात् । अथवा द्वितीयो नियमः करिष्यते कर्मण्येव ष्ट्रन्निति ॥

( उद्द्योतः ) ष्ट्रन्प्राप्नोतीति ॥ धः ष्ट्रन्नित्येकं वाक्यं विध्यर्थम् । ततः कर्मणीति नियमार्थमिति भावः ॥ परिहरति—एकमिदं वाक्यमिति ॥ कथं कारकान्तरे इति । एकवाक्येपि विशेषणोपादानं नियमफलमित्यर्थः । ननु एवं विधित्वमेव स्यात् विशेषणोपादानात्कर्मण्येवेत्येव स्यान्न तु ष्ट्रन्नेवेतीत्यरुचेराह—अथ वेति । आवृत्त्येति भावः ॥ धात्वर्थाक्षिप्तकर्मण्यपि सिद्धे नियमार्थमिति तात्पर्यम् ॥ एवं करणाधिकरणयोरित्यत्रापि बोध्यम् ॥

( प्रयोजनभाष्यम् )

करणाधिकरणयोस्तर्हि मा भूवन्निति ।

( प्रयोजननिरासभाष्यम् )

करणाधिकरणयोरपि यमिच्छत्याह तं "ल्युट् करणाधिकरणयोर्भवति" इति ।

( प्रयोजनभाष्यम् )

संप्रदानापादानयोस्तर्हि मा भूवन्निति ।

( प्रयोजननिरासभाष्यम् )

संप्रदानापादानयोरपि यमिच्छत्याह तं "दाशगोघ्नौ संप्रदाने" "भीमादयोपादाने" इति । य इदानीमतोन्यः प्रत्ययः शेषः सोन्तरेण वचनं कर्तर्येव भविष्यति ॥

( प्रदीपः ) य इदानीमिति । ननु कर्तरि भुवः खिष्णुच् खुकञौ कर्तरि चर्षिदेवतयोरिति कर्तुरपि नियमः प्राप्नोति । नैष दोषः । उभयत्र करणनिवृत्त्या कर्तृश्रुतिर्विध्यर्थैव न नियमार्था ।

( प्रयोजनभाष्यम् )

तदेव तर्हि प्रयोजनम् । स्वार्थे मा भूवन्निति ।

---

१ अर्थानिर्देशे इत्यर्थः । ( र. ना. )

३ बोधकतासंबन्धेन ष्ट्रन्प्रत्ययविशेषणस्य कर्मणीत्यस्योपादानं नियमफलं नियमः कर्मातिरिक्तार्थव्यावृत्तिः फलं यस्येत्यर्थः । ( र. ना. )

२ कर्मणीत्यस्य नियमत्वाङ्गीकारेऽपीति शेषः । ( र. ना. )

४ अनेनैव प्रकारेण कर्मणीत्यस्य नियमार्थत्वोपपत्तौ नावृत्तिः कार्येति भावः । ( र. ना. )

५ उभयत्र कर्तृपदाभावे हि करणे इत्यनुवृत्त्या तत्रैव प्रत्ययाः स्युरतोऽप्राप्ताः कर्तरि प्रत्यया आभ्यां तत्र विधीयन्ते इति न नियमविधिः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रयोजननिरासस्मारणभाष्यम् )

**ननु चोक्तं स्वार्थे यमिच्छत्याह तं भावे घञ्भवतीति ।**

( प्रयोजननिरासासंभवभाष्यम् )

**अन्यः स भावो वाह्यः प्रकृत्यर्थात् । अनेनेदानीमाभ्यन्तरे भावे स्युः । तत्र मा भूवन्निति कर्तृग्रहणम् ॥**

( आक्षेपभाष्यम् )

**कः पुनरेतयोर्भावयोर्विशेषः ।**

( समाधानभाष्यम् )

**उक्तो भावभेदो भाष्ये ।**

( प्रदीपः ) उक्त इति । सार्वधातुके यगित्यत्र बाह्यान्तरयोर्भावयोर्विशेषो दर्शितः ।

( उद्द्योतः ) सार्वधातुके यगित्यत्रेति । नन्वाभ्यन्तरेपि भावे न भविष्यन्ति ॥ तुमर्थे से इति तुमर्थग्रहणेनाभ्यन्तरे भावे क्षेधादीनां नियमादिति चेन्न । सति ह्यस्मिंस्तत्र तुमर्थग्रहणेन भावग्रहणम्, असति त्वस्मिन् विधित्वसंपत्तये तुमर्थग्रहणेन कर्तुरेव ग्रहणं स्यात् तुमुनोऽप्युक्तन्यायेन कर्तर्येव प्रसक्तेरित्याशयः ॥ लः कर्मणि च भावे चेति भावग्रहणे तु न नियमः शक्यो विधातुम् । अकर्मकेभ्य इति विशेषणाय तदावश्यकत्वात् ।

( काकुप्रश्नभाष्यम् )

**अस्ति प्रयोजनमेतत् ।**

( समाधानभाष्यम् )

**किं तर्हीति ।**

( ५०४८ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ तत्र ल्युनादिप्रतिषेधो नानावाक्यत्वात् ॥ * ॥

**( भाष्यम् ) तत्र ल्युनादीनां प्रतिषेधो वक्तव्यः । ल्युनादयः कर्तरि मा भूवन्निति ॥**

( उद्द्योतः ) भाष्ये ल्युनादयः कर्तरीति । अयं भावः—स्वस्वविषयैकविहितानां प्रत्ययानां पश्चादनेनार्थादेशनमिति पक्षे यथा तृजादीनामर्थ आदिश्यते एवं ल्युनादीनामप्यति दिश्येताविशेषात् । ततश्च तेऽप्यनेन कर्तरि स्युः । तत्तद्वाक्ये उपादानात्करणादिषु चेति । करणादिरर्थो विशेषविहितत्वादिति । कार्यशब्दावादेऽर्थस्यापि शास्त्रमात्रगम्यत्वेन विधेयत्वमिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**ननु च करणे ल्युनादयो विधीयन्ते तेन कर्तरि न भविष्यन्ति ॥**

( आक्षेपसाधकभाष्यम् )

**तेन च करणे स्युरनेन च कर्तरि ।**

( आक्षेपबाधकभाष्यम् )

**ननु चापवादत्वात् ल्युनादयो बाधकाः स्युः ॥**

( प्रदीपः ) ननु चेति । ल्युनादिषु करणादिरर्थो विशेषविहितत्वात्कर्तृबाधको भविष्यतीति भावः ॥

( उद्द्योतः ) भाष्ये ननु चापवादत्वादिति । ल्युनादिशास्त्रोपात्ताः करणादय इत्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

**न स्युः ॥ किं कारणम्? । नानावाक्यत्वात् । नानावाक्यं तच्चेदं च । समाने वाक्ये चापवादैरुत्सर्गा बाध्यन्ते । नानावाक्यत्वाद्बाधनं न प्राप्नोति ।**

( प्रदीपः ) नाना वाक्यत्वादिति । इह ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यभिन्नकालत्वादेकं वाक्यं विशिष्टस्य दानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते । यदा तु कालभेदेन वाक्यद्वयमुच्चार्यते पूर्वाह्णे ब्राह्मणभोजनप्रकरणे दधि ब्राह्मणेभ्यो दीयतामिति, अपराह्णे तु तक्रं कौण्डिन्याय दीयतामिति । तदा तक्रेण दधि न बाध्यते । तथेहापि कालभेदेन वाक्यद्वयोच्चारणाद् बाध्यबाधकभावो नास्तीत्यर्थः । यस्त्विगादिवाक्ये यद्येकं वाक्यं तच्चेदं च ततस्तच्छेषः । अथ नानावाक्यं तदा तदपवाद इत्युक्तम् । तदसंभवाश्रयेण । यदाङ्गस्येति इगपेक्षावयवावयविसंबन्धे षष्ठी तदा स्थानषष्ठ्यभावादलोन्त्यस्येत्यस्यानुपस्थानं तदेव चापवादत्वम् । ल्युनादयस्तु कृत्त्वादनेन कर्तरि स्युः । करणादिश्रुत्या च करणादिषु । तत्रानेकस्यार्थस्य युगपदभिधानासंभवात् पर्यायः स्यात् । कदाचित्कर्तरि कदाचित्करणादिषु ॥

( उद्द्योतः ) इहापि कालभेदेनेति । पूर्वं करणे विधानं तदा तु न कर्त्रर्थोपस्थितिरिति बाधाभावः । विधानोत्तरं पश्चादुपस्थितस्य कथं बाधः, तत्प्राप्तिकाले तस्य नाप्राप्त्यभावात् । यथाऽपराह्णे तक्रदानेन पूर्वाह्णदधिदानस्य न बाध इति भावः ॥ नन्विको गुणवृद्धी इति सूत्रे नानावाक्यत्वमङ्गीकृत्य कथमपवादत्वोक्तिरत आह—यस्त्विति ॥ तदसंभवाश्रयेणेति । अलोन्त्यस्येत्यस्योपस्थित्यसंभवाभिप्रायेणेत्यर्थः । तदेवाह—यदेति । कृत्त्वादनेनेति । विध्युत्तरकालं अर्थसमर्पकेणेत्यर्थः ॥ तत्रानेकस्येति । कर्तृकरणयोः स्वातन्त्र्यास्वातन्त्र्याभ्यां भिन्नकक्षत्वादिति भावः ।

( ५०४९ समावेशवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ तद्वच्च कृत्येष्वेवकारकरणम् [ तच्च भव्याद्यर्थम् ] ॥ * ॥

**( भाष्यम् ) एवं च कृत्येष्वेवकारः क्रियते "तयोरेव कृत्यक्तखलर्थाः" इति "भावे चाकर्मकेभ्य" इति ।**

**किं प्रयोजनम्? ।**

**तच्च भव्याद्यर्थम् । भव्यादिषु समावेशः सिद्धो**

---

१ वार्तिककृता वार्तिके उक्त इति कस्यचिद्भ्रमो मा भूदित्येतदुपादानम् । मयेति शेषः । ( र. ना. )

२ परिशेषन्यायेनेत्यर्थः । ( र. ना. )

३ करणादीनामिति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

भवति । गेयो माणवकः साम्नाम् ॥ गेयानि माणवकेन सामानीति ॥

(प्रदीपः) तद्वच्चेति । योऽयमर्थ उक्तः तेन तुल्यमेवकारकरणमित्यर्थः ॥ तथाहि—कृत्त्वात्कर्तरि कृत्यादयः प्राप्ता एवकारेण कर्तुरपकृष्यन्ते भावकर्मणोरेव यथा स्युरित्येवमर्थमित्यर्थः ॥ भावे चाकर्मकेभ्य इत्यनेनाधिकार[1]सहितं वाक्यं दर्शयति ॥

किं प्रयोजनमिति । एवकारेणान्यत्र समावेशज्ञापनेन किं प्रयोजनमिति प्रश्नः ॥

तच्च भव्याद्यर्थमिति । भव्यगेयादिसूत्रे वाग्रहणं न कर्तव्यम् । तदन्तरेणापि भव्यादयः कर्तरि भवन्तीत्यनेन समावेशज्ञापनादेवकारकरणाद्भावकर्मणी न बाधिष्येते इत्यर्थः ॥

(उद्योतः) योऽयमिति । अबाधकारणनानावाक्यत्वरूप इत्यर्थः ॥ तेन तुल्यमिति । तस्यापि तद्बोधकत्वादिति भावः ॥ इत्येवमर्थमिति । यदि बाध्यबाधकभावः स्यात्तदा भावकर्मभ्यां कर्तुर्बाधसंभवात्तद्वैयर्थ्यं स्पष्टमेव । तस्मादेवकारेण ज्ञाप्यतेऽर्थस्यार्थान्तरं न बाधकमितीति भावः ॥ ननु भावे चेत्याद्यंशोच्चारणं किमर्थमत आह—भावे चेत्यादि ॥ ननु कृत्यादीनां कर्तर्यप्रवृत्तिरेवकारप्रयोजनमिति ज्ञातत्वात्प्रश्नानुपपत्तिरत आह—एवेति ॥ वाग्रहणेन तत्सिद्धमत आह—भव्येति । कर्तरि भवन्तीति । कर्तरि कृदिति शास्त्रादिति भावः ॥ इति हेतोर्न कर्तव्यमित्यन्वयः ॥ नन्वेवमपि कर्त्रा भावकर्मणोर्बाधः स्यादत आह—अनेनेति । अनेन कर्त्रा ॥ समावेशेति । करणव्युत्पत्त्या समावेशज्ञापकादेवकारकरणादित्यर्थः ॥

(५०५० असमावेशवार्तिकम् ॥ ४ ॥)

॥ * ॥ ऋषिदेवतयोस्तु कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्य ॥ * ॥

(भाष्यम्) यदयं "कर्तरि चर्षिदेवतयोः" इति सिद्धे सति समावेशार्थं चकारं शास्ति तज्ज्ञापयत्याचार्यः–'न भवति समावेशः' इति ॥

(प्रदीपः) इदानीं तत्र ख्युनादिप्रतिषेध इत्यस्य परिहारमाह—ऋषिदेवतयोरिति । कृद्भिरिति जातौ बहुवचनम् । अत्र च यथासंख्यं वार्तिककारस्यानभिमतम् । यथासंख्ये हि चशब्दस्य ज्ञापकत्वं न स्यात् समावेशाभावात् ॥

(उद्योतः) प्रत्ययस्यैकत्वादर्थयोरपि द्वित्वाद्बहुवचनमनुपपन्नमत आह—जाताविति । जातिविवक्षायामेकवचनस्य व्यक्तिविवक्षायां बहुवचनस्य साधनेन भाष्ये । जात्याख्यायामिति सूत्रप्रत्याख्यानादिदं चिन्त्यम् । प्रयोगभेदेनार्थबाहुल्याद्बहुवचनमिति वक्तुं युक्तम् ॥ भाष्ये कृद्भिरित्यस्य कृदर्थकर्तृकरणयोरित्यर्थः ॥ ननु तत्र ऋषौ करणे देवतायां कर्तरीत्यन्वयात्समावेश एव नास्तीत्यत आह—अत्र च यथासंख्यमिति । तत्सत्त्वे हि तथा संबन्धार्थमेव चस्य सार्थकत्वात्सति प्रयोजने ज्ञापकं न स्यादिति भावः ॥ भाष्ये समावेशवचनमिति । समावेशबोधकचकारवचनमित्यर्थः ॥

(आक्षेपभाष्यम्)

किमर्थं तर्हि कृत्येष्वेवकारः क्रियते ? ।

(५०५१ वार्तिकम् ॥ ५ ॥)

॥ * ॥ एवकारकरणं च चार्थे तच्च भव्याद्यर्थम् ॥ * ॥

(भाष्यम्) एवकारकरणं च चार्थे द्रष्टव्यम् । तयोर्भावकर्मणोः कृत्या भवन्ति भव्यादीनां कर्तरि च ॥

किं प्रयोजनम् ।

तच्च भव्याद्यर्थं, भव्यादिषु समावेशः सिद्धो भवति । गेयो माणवकः साम्नां गेयानि माणवकेन सामानीति ।

(प्रदीपः) भव्याद्यर्थमिति । भव्यगेयेति सूत्रं न कर्तव्यं भवतीत्यर्थः । अन्ये[2] तु कृत्यादयोऽनभिधानात्कर्तरि न भविष्यन्तीति भावः ॥

(उद्योतः) सूत्रं नेति । भव्यादीनां कर्तरि चेति भाष्यस्वरसेन सूत्राभावस्यैव लाभादिति भावः । ननु तत्सूत्राभावे पूर्वोक्तरीत्यान्येपि कृत्याः कर्तरि स्युरत आह—अन्ये त्विति ॥

(असमावेशवार्तिकनिरासभाष्यम्)

यत्तावदुच्यते—*ऋषिदेवतयोः कृद्भिः समावेशवचनं ज्ञापकमसमावेशस्य*इति ॥ नैतज्ज्ञापकसाध्यम्—'अपवादैरुत्सर्गा बाध्यन्ते' इति ॥ एष एव न्यायः—यदुतापवादैरुत्सर्गा बाध्येरन् ॥

(प्रदीपः) इदानीं भाष्यकारो वार्तिकदूषणमाह—यत्तावदिति ॥

(उद्योतः) यत्तावदितीति । कृदुत्पत्तिवाक्यानामेवायं[3] शेषः । तथा च समानकालतयाऽनिर्दिष्टार्थेषु चरितार्थस्यास्य विशेषार्थनिर्देशेन बाध इति भावः । यद्वा तेषामर्थांशे निराकाङ्क्षत्वात्तेष्वनुपस्थितिरेव । तृजादिविधौ तु तेषामर्थाकाङ्क्षासत्त्वात्कर्तरीत्यस्याप्यर्थवत्त्वाकाङ्क्षासत्त्वेनोभयाकाङ्क्षया तत्रैवान्वयः । न ख्युनादिषु साक्षादर्थनिर्देशेन तेषां निराकाङ्क्षत्वात् इति तत्त्वम् ॥

(दूषणस्मारकभाष्यम्)

ननु चोक्तम् नानावाक्यत्वाद् बाधनं न प्राप्नोति इति ॥ न विदेशस्थमिति कृत्वातो नानावाक्यं भवति ।

(समाधानभाष्यम्)

विदेशस्थमपि सदेकं वाक्यं भवति । तद्यथा द्वितीयेऽध्याये लुगुच्यते, तस्य चतुर्थषष्ठयोरलुगुच्यतेऽपवादः ॥

[1] कर्तरि कृदित्यधिकारसहितमित्यर्थः । (र. ना.)

[2] अन्यत्वं कृत्यादिविशेषणम् । (र. ना.)

[3] कर्तरि कृदिति योगः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



(प्रदीपः) न विदेशस्थमिति । न कालभेदान्नानावाक्यत्वं भवति । शास्त्रे विदेशस्थानामप्यवान्तरवाक्यानामाकाङ्क्षावशादेकवाक्यत्वदर्शनात् । देशग्रहणं चात्र कालस्योपलक्षणम् । शब्दक्रमस्य कालकृतत्वात् ॥ चतुर्थषष्ठयोरिति । चतुर्थे=गोत्रेऽलुगचीति । षष्ठे तु अलुगुत्तरपदे इति । तदुक्तं हरिणा—

अनेकाख्यातयोगेऽपि वाक्यं न्यायापवादयोः ।
एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥
नियमः प्रतिषेधश्च विशेषश्च तथा सति ।
द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुरिति ॥

(उद्द्योतः) अनेकाख्यातयोगः यण् भवति दीर्घो भवतीत्यादिरूपः ॥ न्याय उत्सर्गः ॥ विधिशेष इति पाठे नियमप्रतिषेधौ विधिशेषावेव न तु स्वतन्त्रावित्यर्थः । तदुदाहरणमाह—द्वितीये इति । विशेषश्च तथेति पाठे विशेषोपवादः । एतन्त्रितयं विध्येकवाक्यतापन्नमित्यर्थः ॥

(पूर्ववार्तिकदूषणभाष्यम्)

यदप्युच्यते एवकारकरणं च चार्थे इति ॥ कथं पुनरन्यो नामान्यस्यार्थे वर्तते । कथमेवकारश्चार्थे वर्तते । स एष एवकारः स्वार्थे वर्तते ।

(आक्षेपभाष्यम्)

किं प्रयोजनम् ।

(समाधानभाष्यम्)

ज्ञापकार्थम् ।

(अनुयोगभाष्यम्)

किं ज्ञाप्यते ? ।

(समाधानभाष्यम्)

एतज् ज्ञापयत्याचार्यः 'इत उत्तरं समावेशो भवति' इति ॥

(अनुयोगभाष्यम्)

किमेतस्य ज्ञापने प्रयोजनम् ।

(समाधानभाष्यम्)

तच्च भव्याद्यर्थम् ।

भव्यादिषु समावेशः सिद्धो भवति । गेयो माणवकः साम्नां गेयानि माणवकेन सामानीति ॥

(आक्षेपभाष्यम्)

यद्येतज्ज्ञाप्यते इहापि समावेशः प्राप्नोति—दाशगोघ्नौ संप्रदाने भीमादयोपादान इति ।

(समाधानभाष्यम्)

अत्रापि सिद्धं भवति । यदयम् "आदिकर्मणि क्तः कर्तरि च" इति सिद्धे समावेशे, समावेशार्थं चकारं शास्ति तज्ज्ञापयत्याचार्यः 'प्रागमुतः समावेशो भवति' इति ॥

(प्रदीपः) कथमिति । एवकारस्य लौकिके प्रयोगे न क्वचित् चार्थवृत्तित्वं दृश्यत इति भावः ॥ उत्तरमिति । कर्तरि कृदित्यस्मादुत्तरमित्यर्थः ॥ तच्चेति । भव्यगेयादिसूत्रे वेति न कर्तव्यं भवतीत्यर्थः ॥ यदयमिति । आदिकर्मणि क्तः कर्तरीत्येतावदस्तु नार्थश्चशब्देन । समावेशोऽप्येवकारज्ञापितो भविष्यति । कृतस्तु चशब्दो ज्ञापयति आदिकर्मणीत्यस्मात् सूत्रात् परेषु योगेषु समावेशो न भवतीति ।

(उद्द्योतः) न कर्तव्यं भवतीति । नन्वचार्थे वृत्तिमाश्रित्य[3] सूत्रमेव न कार्यम् । अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति प्रागुक्तं युक्तं, अनभिधानेन प्रत्याख्यानस्याप्युक्तत्वादित्याहुः । एवं च स्वार्थे कृतां व्यावृत्तये सूत्रं कार्यम्[4] । ख्युनादिषु करणरूपार्थेन्न बाधान्न दोषः ॥

(अनुयोगभाष्यम्)

किं पुनरयं प्रत्ययनियमः धातोः परः अकारः[6] अकशब्दो वा नियोगतः कर्तारं ब्रुवन् कृत्संज्ञश्च प्रत्ययसंज्ञश्चेति ॥

(प्रदीपः) किं पुनरिति । सिद्धे शब्दार्थसंबन्धे इति यदुक्तं तत् स्मारयितुं विचार्यते ॥ प्रत्ययनियम इति । धातोः परः कृत्प्रत्ययः कर्तरि वर्ततामिति कर्तृलक्षणेऽर्थे कृत्प्रत्ययो नियम्यते ॥ नियोगत इति । कर्तरि कृदित्यस्मादाचार्यनियोगादित्यर्थः ॥ कार्यशब्दाभ्युपगमे चास्य पक्षस्य संभवः ॥

(उद्द्योतः) तत्र किमिदमपूर्वतयार्थे बोधयत्प्रत्ययमितरतरार्थेभ्यो व्यावर्तयति, किंवा तत्रार्थे लोके प्रयुज्यमानस्यैव कृदादिसंज्ञेति प्रतिपादयतीति संदिह्य तत्र द्वितीयस्य सिद्धान्तत्वकरणेनापि ख्युनादीनां तत्र प्रतिषेध इति वार्तिकं प्रत्याख्यातुमुपक्रमते—भाष्ये—किं पुनरिति ॥ कृत्प्रत्ययो नियम्यत इति । एतावानेव सूत्रव्यापारः ॥ कर्तारं ब्रुवन्कृत्संज्ञ इत्यादि तु सकलशास्त्रैकवाक्यतालाभार्थं कथनमिति बोध्यम् ॥ ननु सिद्धशब्दान्वाख्याने कथमाचार्यनियोगादर्थविशेषे प्रवृत्तिरित्यत आह—कार्यशब्देति ॥ तत्राद्यपक्षे 'कृत्प्रत्ययः कर्तरि वर्ततामिति' उक्तेऽर्थादन्यत्रावृत्त्या प्रत्ययनियमः ॥

(भाष्यम्) आहोस्वित्संज्ञानियमो धातोः परः अकारः अकशब्दो वा स्वभावतः कर्तारं ब्रुवन् कृत्संज्ञश्च भवति प्रत्ययसंज्ञश्चेति ॥

(तटस्थस्य विशेषजिज्ञासाभाष्यम्)

कश्चात्र विशेषः ।

(प्रदीपः) आहोस्विदिति । नित्यशब्दार्थसंबन्धाभ्युपगमनिबन्धनोयं पक्षः । यः स्वभावतः कर्तरि वर्तते स एव कृत्संज्ञो नान्य इति कृत्संज्ञा नियम्यते ॥ यद्येवं ख्युनादीनां कृत्संज्ञा न प्राप्नोति ॥ नैष दोषः—एतत्सूत्रव्यापारो

---

१ विधिशेषस्तथा सतीति पाठ इत्यर्थः । (र. ना.)
२ नियमप्रतिषेधापवादत्रयम् ॥ (र. ना.)
३ एवकारस्य चार्थे वृत्तिमाश्रित्य भव्यगेयेति सूत्रमेव न कार्यमित्यर्थः । (र.ना.)
४ अन्येषामपि कृत्यानां भव्यगेयादिवत् कर्तरि-प्रसङ्गस्त्वित्यर्थः । (र. ना.)
५ कर्तरि कृदिति सूत्रमित्यर्थः । (र. ना.)
६ अकारमात्रोऽत्राह्मणघटकाद्याकारादिरपीत्यर्थः । (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नियम्यते । करणे ल्युजित्यादावप्ययमेव विचारः—किमयमर्थः करणे ल्युन्वर्ततामिति । उत—यत् स्वभावतो वर्तते तस्य साधुत्वमिति । कृत्संज्ञा तु प्रतिप्रत्ययमधिक्रियमाणा ल्युनादिषु प्रवर्तत एव ॥

(उद्योतः) द्वितीये तु अर्थस्य लोकत एव सिद्धत्वात्तद्विध्यसंभवेन कृत्संज्ञाया अप्यधिकारेण सिद्धत्वेन कर्तारं ब्रुवन्नेव कृत्प्रत्ययसंज्ञको नान्यादृश इति तत्तच्छास्त्रैकवाक्यतया संज्ञानियम इति भावः ॥ ल्युनादीनामिति । करणादिषु वर्तमानानामिति शेषः ॥ एतत्सूत्रव्यापार इति । एतत्सूत्रविषय इत्यर्थः ॥ कृत्संज्ञा त्विति । प्रत्ययसंज्ञाया अप्युपलक्षणम् । प्रतिसूत्रमुपस्थानवैयर्थ्येन सर्वत्र प्रवर्तत एवेत्यर्थः ॥

**(५०५२ संज्ञानियमवादिनः प्रत्ययनियमे दूषणवार्तिकम् ॥ ६ ॥)**

## ॥*॥ तत्र प्रत्ययनियमेऽनिष्टप्रसङ्गः ॥*॥

**(भाष्यम्) तत्र प्रत्ययनियमे सति अनिष्टं प्राप्नोति । काष्ठभिद्ब्राह्मणः । वलभिद्ब्राह्मणः । एषोपि नियोगतः कर्तारं ब्रुवन् कृत्संज्ञश्च स्यात् प्रत्ययसंज्ञश्चेति ।**

(प्रदीपः) काष्ठभिद्ब्राह्मण इति । अनित्यशब्दाभ्युपगमे काष्ठभेद इत्यत्राप्यण् प्रत्ययो वचनादेव कर्तारमाचष्टे । उत्पाद्यैशब्दपक्षे चाकाराणां विशेषाभावादब्राह्मणशब्दाकारस्यापि कर्तरि नियोगत्वं प्राप्नोति । आचार्यनियोगाच्च कर्तारं ब्रुवतः कृत्प्रत्ययसंज्ञाप्रसङ्गः । तत्र कृत्संज्ञायां सत्यां स्वाद्युत्पत्तिप्रसङ्गः, प्रत्ययसंज्ञायां च सत्यां तन्निबन्धनाङ्गसंज्ञाश्रय आर्धधातुकनिमित्तो गुणः प्राप्नोति ॥ ननु नायं धातोर्विहितः ततो दोषाभावः ॥ नैतदस्ति—लक्षणवशाच्छब्दार्थसंबन्धव्यवस्थानुविधाने कुतोयं नियमः—अयं धातोर्विहितो नायमिति । काष्ठशब्दो हि कर्मोपपदं भिदिर्धातुः तस्माच्च परोऽकार इति तस्य कर्तरि स्यादेव नियोगः । यदा हि स्ववाक्यैर्विहितानां प्रत्ययानामनेनार्थविशेषे नियोगः क्रियते, तदा विशेषाभावादस्यापि नियोगः प्राप्नोति ॥ क्विपो लुप्तत्वाद्धातुरेव कर्त्रर्थे नियुक्त इत्यकारस्य कर्तार्थो न भविष्यतीति चेत् । यावर्कादिष्विव सर्वाभिधानमस्तु । लौकिकार्थानपेक्षायां हि धातोः परस्य कृत्प्रत्ययसंज्ञाकर्तृनियोगप्रसङ्गः ॥

(उद्योतः) वचनादेवेति । कर्तरि कृदिति वचनादेवेत्यर्थः ॥ नन्वेवमप्येतत्प्रकरणविहितानामेव नियोगेन कर्त्रर्थकत्वमाख्यायेत, नत्वन्येषामपीत्यत आह—उत्पाद्येति । धातोः परेऽकाराः कर्तर्येव वर्तन्त इत्यर्थादिति भावः ॥ अर्थविधानं च प्रयोगे दृश्यमानानामेवेति नानुबन्धा भेदका इति तात्पर्यम् । अत एव भाष्ये अकारोऽकशब्दो वा नियोगत इत्युक्तम् । नियोगो नियमः । नियोगत्वमिति पाठे नियोगविषयत्वमित्यर्थः ॥ [धातोः[5] परस्य कृत्प्रत्ययेति । सर्वसंग्रहप्रदर्शकम् ॥ कृत्प्रत्ययसंज्ञेति । प्रकृतसूत्रे विद्यमानानुवर्तमानकृत्प्रत्ययपदाभ्यामित्यर्थः ॥] गुण इति । क्ङितीति निमित्तसप्तमीति क्विबाश्रयो निषेधो नेति भावः ॥ ननु नायं धातोरिति । धातोरित्येव विहितस्यैवार्धधातुकत्वादित्यर्थः ॥ ननु कार्यशब्देपि य एते कृत्संज्ञकास्तच्छास्त्रैर्निष्पन्नास्ते कर्तर्येव वर्तन्त इत्यर्थः । एवं च कथमस्याकारस्य नियोगेन कर्त्रर्थकत्वमित्यत आह—काष्ठशब्दो हीति । एवं च स्वरूपे विशेषाभावेन सादृश्यादसिन्नपि तत्त्वबुद्धिरस्त्येवेति धातोर्विहितत्वबुद्धिरप्यस्तीत्यार्धधातुकत्वमस्त्येवेति भावः । नन्वेकवाक्यतयैवार्थविधानान्न दोष इत्यत आह—यदा हीति ॥ प्रत्ययानामिति । प्रयोगे दृश्यमानरूपाणामित्यर्थः ॥ धातुरेवेति । क्विप्सहचरितो धातुरेवेत्यर्थः ॥ सर्वाभिधानमिति । सर्वैरभिधानमित्यर्थः ॥ एवं कृदादिसंज्ञा अपि विहितानामेव पश्चात्क्रियन्ते इति लौकिकार्थानपेक्षया शास्त्रेणैवार्थविधाने धातोः परत्वात्स्यादेव प्रत्ययत्वादीत्याह—लौकिकेति ॥

**(५०५३ वार्तिकम् ॥ ७ ॥)**

## ॥ * ॥ संज्ञानियमे सिद्धम् ॥ * ॥

**(भाष्यम्) संज्ञानियमे सति सिद्धं भवति ।**

(प्रदीपः) संज्ञानियमे सिद्धमिति । नह्यत्राकारो लौकिके प्रयोगे कर्तारं ब्रवीति प्रतिषेधवाचित्वादिति कृत्प्रत्ययसंज्ञयोरप्रवृत्तिरित्यर्थः ।

(उद्योतः) न ह्यत्रेति । एवं च ल्युनोपि लोके कर्तर्यवृत्तेस्तत्रैतस्यानुपस्थानमिति न कर्त्राद्यर्थकत्वप्रसङ्ग इति तत्प्रतिषेधो व्यर्थ इति भावः ॥

**(प्रत्ययनियमवादिभाष्यम्)**

**यदि संज्ञानियमः ।**

**(५०५४ दूषणवार्तिकम् ॥ ८ ॥)**

## ॥ * ॥ विभक्तादिषु दोषः ॥ * ॥

**(भाष्यम्) विभक्ता भ्रातरः पीता गाव इति न सिध्यति ॥ प्रत्ययनियमे पुनः सति परिगणिताभ्यः प्रकृतिभ्यः परः क्तो नियोगतः कर्तारमाह । न चेमास्तत्र परिगण्यन्ते प्रकृतयः ॥**

(प्रदीपः) प्रत्ययनियमवाद्याह—यदीति । अत्र हि क्तः स्वभावतः कर्तारमाह भ्रातृभिर्गोभिश्च सामानाधिकरण्यात् । ततश्च कर्तरि साधुत्वं प्राप्नोतीत्यसाधुत्वं मन्यते । क्रियाकारकसंबन्धेन विभक्तादीनां कर्तरि वृत्तिरनभिमतेति दोषोपन्यासः । प्रकारान्तरेण साधुत्वं दर्शयिष्यते । प्रत्ययनियमवादिनस्त्वयमदोषः । गत्यर्थाकर्मकेत्यत्र परिगणिताभ्यः प्रकृतिभ्यः परः

---

१ करणे इति शेषः । (र. ना.)

२ अब्राह्मणघटकाद्याकारस्य कृत्प्रत्ययार्धधातुकत्वे क्विप्प्रत्ययप्रकृतिभूतस्य स्वपूर्वस्य भिदेरङ्गत्वे गुणप्रसङ्गोऽब्राह्मणाद्याकारान्तपूर्वसमुदायस्य कृदन्तत्वेन प्रातिपदिकत्वे सुबन्तत्वापत्तिश्च दोषः । (र. ना.)

३ शब्दानित्यत्वपक्षे । (र. ना.)

४ यथा यावच्छब्दाद् यदर्थप्रतीतिस्तदर्थस्यैवकन्नन्तादपि एवमिहापि क्विबन्तबोध्यार्थस्याब्राह्मणघटकाकारान्ताद्भिदेत्यकारान्तादित्यर्थः । (र. ना.)

५ अयं कोष्ठकान्तर्गतः पाठो लौकिकेति इति प्रतीकोत्तरं भवेदिति बोध्यम् ।

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्तः कर्तरि नियुज्यते । नहि तत्र भजिपिबती परिगणितावित्यर्थः ।

( उद्द्योतः ) ननु साधुत्वमिष्टमेवेति साधुत्वं प्राप्नोतीत्यसङ्गतमत आह—असाधुत्वं मन्यते इति । एवं च इति न सिध्यतीत्यत्र इत्येतेषु क्तस्य कर्तरि असाधुत्वं न सिध्यतीत्यर्थं इति भावः ॥ असाधुत्वे बीजमाह—क्रियाकारकसंबन्धेनेति । धनकर्मकविभागकर्तार इत्यर्थे इति भावः ॥ प्रकारान्तरेण । मत्वर्थसंबन्धित्वेन बोधे इत्यर्थः ॥ क्तः कर्तरि नियुज्यत इति । शास्त्रेण बोध्यत इत्यर्थः ॥

( ५०५५ संज्ञानियमवादिवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ विभक्तादिषु चाप्राप्तिः प्रकृतेः प्रत्ययपरवचनात् ॥ * ॥

( भाष्यम् ) विभक्तादिषु च प्रत्ययनियमस्याप्राप्तिः । किं कारणम् ? । प्रकृतेः प्रत्ययपरवचनात् । परिगणिताभ्यः प्रकृतिभ्यः परः क्तः स्वभावतः कर्तारमाह । न चेमास्तत्र परिगण्यन्ते ॥

( प्रदीपः ) संज्ञानियमवाद्याह—विभक्तादिषु चेति । ममापि गत्यर्थाकर्मकेति सूत्रं न दण्डवारितम् । तत्र गत्यर्थादिभ्य एव क्तः स्वभावतः कर्तारं ब्रुवन् कृत्प्रत्ययसंज्ञो भवतीति भजिपिबतिभ्यां क्तस्य कर्तरि साधुत्वाप्रसङ्गः ॥ प्रकृतेरिति । गत्यादिकाया इत्यर्थः । प्रत्ययपरवचनादिति । क्तप्रत्ययस्य कर्तरि वर्तमानस्य साधुत्वेन प्रतिपादनादित्यर्थः ॥ तदेवं स्थितमेतद्—स्वभावतस्तेषु तेष्वर्थेषु वर्तमानानां प्रत्ययसंज्ञाविधानद्वारेण साधुत्वमन्वाख्यायते ॥

( उद्द्योतः ) भाष्ये—प्रकृतेः प्रत्ययेति । प्रकृतिविशेषाद् गत्यादेः परस्य क्तप्रत्ययस्य कर्तरि साधुत्ववचनादित्यर्थः । तदाह—क्तप्रत्ययस्येति ।

( आक्षेपभाष्यम् )

न तर्हीदानीमयं साधुर्भवति ? ।

( प्रदीपः ) इदानीं भाष्यकारः प्रश्नपूर्वकं प्रयोगसमर्थनं करोति—न तर्हीति ॥

( समाधानभाष्यम् )

भवति साधुर्न तु कर्तरि ।

( प्रदीपः ) न तु कर्तरीति । तयोरेवेति वचनात्कर्मण्येव साधुरित्यर्थः ॥

( प्रश्नभाष्यम् )

कथं तर्हि कर्तृत्वं गम्यते ।

( समाधानभाष्यम् )

अकारो मत्वर्थीयः । विभक्तमेषामस्तीति विभक्ताः पीतमेषामस्तीति पीता इति ॥

( समाधानान्तरभाष्यम् )

अथ वा उत्तरपदलोपोऽत्र द्रष्टव्यः—विभक्तधनाः विभक्ताः पीतोदकाः पीता इति ॥ कर्तरि कृत् ॥६७॥

( प्रदीपः ) विभक्तमिति । धनमिति भावः ॥ पीतमिति । उदकमित्यर्थः । आकृतिगणश्च अर्शआदिः ॥ अथ वेति । गम्यमानार्थस्य शब्दस्याप्रयोग एव लोपोऽभिमतः । विभक्ता भ्रातर इत्यत्र च धनस्य यद्विभक्तत्वं तद् भ्रातृषूपचर्यते । पीता गाव इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते ॥६७॥

( उद्द्योतः ) भवति साधुर्न तु कर्तरीति भाष्याद् यत्र कर्मणि स्वरसतो विधानं तत्रेति लभ्यत इत्याशयेनाह—धनमिति भाव इति । एतेनेदं भाष्यं सकर्मकेभ्योऽपि भावे क्ते साधकमुपन्यस्यन्तः परास्ताः ॥ उत्तरपदलोपविधायकवचनाभावादाह—गम्यमानेति ॥ ६७ ॥

---

( ६०६ लकारशक्तिबोधकसूत्रम् ॥ ३ । ४ । १ आ. १८ )

## १२३० लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ३ । ४ । ६९ ॥

( प्रदीपः ) लः कर्मणि ॥ ६९ ॥ केचिल्ल इति प्रथमां व्याचक्षते ॥ अपरे षष्ठीं लस्य य आदेश इति । तत्र लकारो द्विविधः तिङ्भाव्यतिङ्भावीति । तत्र तिङ्भाविनः कृत्संज्ञानिषेधात् कर्तरि कृदित्यस्यानुपस्थानात् स्वार्थे भावे विधानं प्राप्नोति । अतिङ्भाविनस्तु कर्तरि कृदिति वचनात्कर्तर्येव साधुत्वं प्राप्नोतीति वचनम् ॥

( उद्द्योतः ) लः कर्मणि ॥ ६९ ॥ केचिदिति । उच्चारणार्थाकारेण सूत्रे लस्येति षष्ठ्येकवचनवत्प्रथमैकवचनं जातौ । एतांश्च लो यदुत परस्मैपदमिति भाष्ये परस्मैपदादिशब्दानां तद्विषये लक्षणेति तद्भावः ॥ अपरे इति । लस्य प्रयोगाघमवायित्वात्तस्यार्थकथनं व्यर्थम् । भाष्ये लक्षणाप्रसङ्गश्चेति तद्भावः ॥ वर्तमाने लडित्यादौ प्रतिज्ञाप्रापितद्योतकत्वं यथा लकारस्य तथात्रापि भविष्यतीति । आद्यमतमेव युक्तम् ॥ अन्त्येपि वाक्यैकदेशन्यायेन प्रयोगस्य लक्षणया समत्वात् ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ।

( प्रदीपः ) किमर्थमिति । वक्ष्यमाणोभिप्रायः ॥

---

१ गम्यादेरिति पाठो भाति । गत्यादिकाया इत्यर्थइत्यत्र कैयटेऽपि गत्यादिकाया इति पाठः शोभनः । ( र. ना. )

२ वचनाभावादिति । 'अप्रत्यये तथैवेष्टः' इति वार्तिकार्थभूतस्य 'विनापि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्यः' इत्यस्य विस्मरणमूलकमिदमिति चिन्त्यमेवेति बोध्यम् ॥ प्रदीपकर्तुस्त्वाशय एवं वर्णनीयः नित्यशब्दवादे गम्यमानार्थकपदस्य कार्यशब्दवादे लोपकल्पनमिति ॥ इति दाधिमथाः ॥ वस्तुतस्तु अप्रत्यये इति वचनं सङ्केतितेषु रूढेषु पदद्वयात्मकेषु भीमसेनसत्यभामादिष्वेव प्रवर्तते न तु यौगिकेषु परस्पराह्निकस्थस्य सिद्धे शब्दार्थसम्बन्ध इति भाष्येऽन्यतः सिद्धः सिद्धः पूर्वपदलोपोऽत्र द्रष्टव्य इति प्रतीकस्थस्य प्रदीपग्रन्थस्य तात्पर्यदर्शनाच्चिन्तनमेव चिन्त्यम् । ( र. ना. )

३ 'ल एतेषु साधनेषु यथा स्यात्' इति वक्ष्यमाणभाष्यात् ॥

४ परस्मैपदं तत्पदार्थः । ( र. ना. )

५ लस्य य आदेश इत्यस्य स्थाने ल इतीत्यादिः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

( समाधानभाष्यम् )

ल एतेषु साधनेषु यथा स्यात् । कर्तरि कर्मणि च भावे चाकर्मकेभ्य इति ।

( प्रदीपः ) ल एतेष्विति । लकार इत्यर्थः । अथवा लस्य य आदेश इति भावः ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । "भावकर्मणोः" आत्मनेपदं विधीयते, "शेषात्कर्तरि परस्मैपदम्" । एतावांश्च लकारः—यदुत परस्मैपदम्, आत्मनेपदं च । स चायमेवं विहितः ॥

( प्रदीपः ) भावकर्मणोरिति । असत्यस्मिन् सूत्रे भावकर्मणोरात्मनेपदविधानात् शेषात्कर्तरीति च परस्मैपदविधानाल्लकारस्य भावकर्मकर्तारोऽर्था अनुमास्यन्ते । लकारस्य प्रयोगासमवायाद्वा लादेशानामेवैतेऽर्था भविष्यन्तीत्यर्थः ॥ एतावानिति । नन्वाम्विषयेऽपि लो विद्यते । नैष दोषः । तस्य लुकापहारात् । अनुप्रयोगलकारेण भावादीनां प्रतिपाद्यत्वात् ।

( उद्द्योतः ) ननु भावादिष्वात्मनेपदादिविधानेपि लां किमायातमत आह—असतीत्यादि ॥ भावकर्मणोरात्मनेपदेति । भावकर्मणोर्लस्यात्मनेपदमिति तदर्थः ॥ आदेशानामेवेति । लस्य स्थाने भावकर्मणोरात्मनेपदमित्यर्थं इति भावः ॥ तस्य लुकेति । एतद्विषयनिष्कर्षमग्रे वक्ष्यति ॥ अनुप्रयोगेति । एवं च सं निरर्थक एव संख्याप्रतिपत्तये तदनुसरणस्यावश्यकत्वादिति भावः ॥ स चायमेवं विहित इति । सोयं लकार एवं लः कर्मणि चेति सूत्रसत्त्वे यथा विहितस्तथा स्थित इत्यर्थः । अतोपि ल इत्यस्य षष्ठ्यन्तत्वपक्षोऽयुक्तः । तथा सति ते चेमे इति वदेत् भाष्ये ॥

( समाधानवार्तिकावतरणभाष्यम् )

अत उत्तरं पठति—

( ५०५६ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ लग्रहणं सकर्मकनिवृत्त्यर्थम् ॥ * ॥

(भाष्यम्) लग्रहणं क्रियते [किं प्रयोजनम्?] सकर्मकनिवृत्त्यर्थम् । सकर्मकाणां भावे लो मा भूदिति ॥

( प्रदीपः ) लग्रहणमिति । यदीदं नारभ्येत तदा यथा भावे विधीयमाना घञादयः सकर्मकेभ्यो भवन्ति ओदनस्य पाकः सूत्रस्य कृतिरिति, तथा भावकर्मणोरित्यनेन भावे आत्मनेपदं सकर्मकेभ्योपि स्यात् । ततश्च पच्यते यवागूं देवदत्तेनेत्यपि स्यात् ॥

( उद्द्योतः ) इत्यपि स्यादिति । लकारेण कर्तृकर्मणोरनभिधानादिति भावः ॥

( सूत्रप्रत्याख्यानभाष्यम् )

यदि पुनस्तत्रैवाकर्मकग्रहणं क्रियेत[३] ॥

( प्रदीपः ) यदि पुनरिति । भावकर्मणोरकर्मकादित्येवं करिष्यते सामर्थ्याच्चाकर्मकग्रहणं भावार्थं भविष्यति । अकर्मकाणां कर्मासंभवात् ॥

( सूत्रारम्भभाष्यम् )

तत्तत्राकर्मकग्रहणं कर्तव्यम् ॥

( प्रदीपः ) सूत्रारम्भवाद्याह—तत्रेति ॥

( सूत्रप्रत्याख्यानभाष्यम् )

ननु चेहापि क्रियते "भावे चाकर्मकेभ्य" इति ॥

( प्रदीपः ) सूत्रप्रत्याख्यानवाद्याह—ननु चेति । त्वयापीति शेषः ॥

( सूत्रारम्भभाष्यम् )

परार्थमेतद् भविष्यति "तयोरेव कृत्यक्तखलर्थाः" भावे चाकर्मकेभ्य इति ॥

( प्रदीपः ) आरम्भवाद्याह—परार्थमिति ॥

( सूत्रप्रत्याख्यानभाष्यम् )

एवमपि यावदिह लग्रहणं तावत् तत्राकर्मकग्रहणम् ॥ इह वा लग्रहणं क्रियते । तत्र वाऽकर्मकग्रहणम् । कोन्वत्र विशेषः ? ।

( प्रदीपः ) सूत्रप्रत्याख्यानवाद्याह—यावदिहेति । कर्मणि च भावे चाकर्मकेभ्य इत्येतदत्र प्रदेशे द्वाभ्यामपि वक्तव्यम् । त्वया[३] तु ल इत्येतत्पदमत्र कर्तव्यम् । मया[४] भावकर्मणोरित्यत्र अकर्मकग्रहणमिति पदेन पदस्य साम्यम् । मात्रालाघवं त्वत्र न विवक्षितम् ॥

( उद्द्योतः ) इत्येतदत्र प्रदेशे इति । तयोरेवेति सूत्रार्थमित्यर्थः ॥ पदेनेति । पदसमुदायात्मके सूत्रे भगवान्मात्रालाघवं नाद्रियत इति भावः । वस्तुतस्तु अत्र लग्रहणे कर्मभावाभ्यां कर्तृरूपार्थावाधाय चद्वयं कार्यम् । उत्तरसूत्रे च तयोरिति वाच्यम् । मम तु 'कर्मणि कृत्यक्तखलर्था भावेऽकर्मकेभ्य' इत्येवेति मात्रालाघवमप्यस्त्येवेति बोध्यम् । भाष्ये सूत्रानुसारेण च घटितो न्यासः । कैयटे च तथैव न्यासो दर्शितः ॥

( सूत्रारम्भभाष्यम् )

अयमस्ति विशेषः—इह लग्रहणे क्रियमाणे आनः कर्तरि सिद्धो भवति । तत्र पुनरकर्मकग्रहणे क्रियमाणे आनः कर्तरि न प्राप्नोति ॥

( प्रदीपः ) आरम्भवाद्याह—अयमस्तीति । आन इति । आत्मनेपदसंज्ञत्वाद्भावकर्मणोरिति वचनाद्भावकर्माभिधायित्वमेव स्यान्न तु कर्तृवाचित्वमिति शयान इत्यादौ कर्तर्यानो न स्यात् । सूत्रारम्भे तु कर्तर्यप्यानः सिध्यतीत्यर्थः ॥

( सूत्रप्रत्याख्यानभाष्यम् )

तत्राप्यकर्मकग्रहणे क्रियमाणे आनः कर्तरि सि-

---

१ आम् विषयो लकार इत्यर्थः । तदनुसरणस्य, अनुप्रयोगलकारानुसरणस्येत्यर्थः । ( र. ना. )

२ 'क्रियते' ॥

३ सूत्रारम्भवादिना ॥

४ मया प्रत्याख्यानवादिना ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङ्घो भवति । कथम् ? । "भावकर्मणोः" इत्यतो यद्न्यदात्मनेपदानुक्रमणम्, तत्सर्वं कर्त्रर्थम् ॥

( प्रदीपः ) प्रत्याख्यानवाद्याह—तत्रापीति । अनुदात्तङित इत्यादिभिः सूत्रैः कर्तर्यात्मनेपदविधानार्थैरानः कर्तरि शयान इत्यादौ भविष्यतीत्यर्थः ॥

( ५०५७ प्रत्याख्यानवादिवार्तिकम् ॥ २ ॥ )

॥ * ॥ विप्रतिषेधाद्धानः कर्तरि ॥ * ॥

( भाष्यम् ) विप्रतिषेधाद्धा आनः कर्तरि भविष्यति ॥ तत्र "भावकर्मणोः" इत्येतदस्तु, "कर्तरि कृद्" इति । "कर्तरि कृद्" इत्येतद्भविष्यति विप्रतिषेधेन ॥

( प्रदीपः ) विप्रतिषेधाद्धेति । भावकर्मणोरित्यस्य तङ्वकाशः यत्र कृत्संज्ञाया अभावात्कर्तरि कृदिति न प्रवर्तते आस्यते पच्यत इति । कर्तरि कृदित्यस्य तृजादयोवकाशाः । आनस्य तूभयप्रसङ्गे कर्तरि कृदिति परत्वात्कर्तार्थो भविष्यतीत्यर्थः ॥

( उद्द्योतः ) तृजादय इति । तेषामात्मनेपदादिसंज्ञाऽभावादिति भावः ॥ परत्वात्कर्तार्थ इति । इदं कार्यशब्दवादे । एवं हि भावकर्मणोर्न स्यादिति त्वग्रे भाष्ये एव स्पष्टम् ॥

( ५०५८ आरम्भवादिवार्तिकम् ॥ ३ ॥ )

॥ * ॥ सर्वप्रसङ्गस्तु ॥ * ॥

( भाष्यम् ) सर्वेभ्यस्तु धातुभ्य आनः कर्तरि प्राप्नोति । परस्मैपदिभ्योपि ॥

( प्रदीपः ) आरम्भवाद्याह—सर्वप्रसङ्ग इति । परस्मैपदिभ्यो धातुभ्य आनः कर्तरि प्राप्नोतीत्यर्थः ॥

( उद्द्योतः ) सर्वप्रसङ्ग इति । विप्रतिषेधवादे दूषणम् ॥

( प्रत्याख्यानभाष्यम् )

नैष दोषः । "अनुदात्तङित" इत्येष योगो नियमार्थो भविष्यति ॥

( प्रदीपः ) प्रत्याख्यानवाद्याह—नैष दोष इति । अनुदात्तङित आत्मनेपदं नान्यस्मादिति नियमादानः कर्तरि परस्मैपदिभ्यो न भविष्यतीत्यर्थः ।

( आरम्भवादिभाष्यम् )

यद्येष योगो नियमार्थः, विधिर्न प्रकल्पते—आस्ते शेते इति । अथ विध्यर्थः, आनस्य नियमो न प्राप्नोति—आसीनः शयान इति । तथा "नेर्विश" इत्येवमाद्यनुक्रमणं यदि नियमार्थम्,—विधिर्न प्रकल्पते । अथ विध्यर्थम्,—आनस्य नियमो न प्राप्नोति ।

( प्रदीपः ) आरम्भवाद्याह—यदीति । भावकर्मणोरात्मनेपदविधानात्तङोनुदात्तङितो न प्राप्नुवन्ति । अनुदात्तङित इत्यनेन आन एव धातुविशेषे नियम्यत इत्यर्थैकत्वादेकस्य वाक्यस्य विधिनियमावेकेन सूत्रेण न प्रकल्पेते इत्यर्थः ।

( उद्द्योतः ) तङोनुदात्तेति । कर्तरीति शेषः । एवं नेर्विश इत्यादीनां नियमत्वे कर्तरि तङ् न स्यात् । विधित्वे केवलादप्यानः स्यादिति बोध्यम् ॥

( प्रत्याख्यानभाष्यम् )

अस्तु तर्हि नियमार्थम् ।

( दूषणस्मारणभाष्यम् )

ननु चोक्तं 'विधिर्न प्रकल्पते' इति ।

( दूषणोद्धारभाष्यम् )

विधिश्च प्रक्लृप्तः । कथम् ? । "भावकर्मणोः" इत्यत्र "अनुदात्तङितः" इत्येतदनुवर्तिष्यते ॥

( प्रदीपः ) प्रत्याख्यानवाद्याह—अस्तु तर्हीति । भावकर्मणोरित्यत्रेति । अनुदात्तङितआत्मनेपदमित्यनेनैकेन वाक्येन आनस्य नियमः क्रियते । भावकर्मणोरित्यत्र त्वनुवृत्त्या द्वितीयेन वाक्येन तङां विधिः क्रियत इत्यर्थः ॥

( उद्द्योतः ) तङां विधिरिति । कर्तरीति शेषः ।

( आक्षेपभाष्यम् )

यद्यनुवर्तते । एवमपि "अनुदात्तङितः" एव भावकर्मणोरात्मनेपदं प्राप्नोति ॥

( प्रदीपः ) एवमपीति । भावकर्मणोरित्यस्यानुदात्तङित इत्यनेनैकवाक्यता सत्यामनुवृत्तौ स्यात् । ततश्चास्यते गुरुणा अतिशय्यते गुरुरित्यादौ आत्मनेपदं स्यात् । भूयते गम्यते शेते आस्ते इत्यादौ तु नैव स्यादित्यर्थः ॥

( उद्द्योतः ) भावकर्मणोरिति । तथा च आसादिभ्यः कर्तरि न स्यादन्येभ्यो भावकर्मणोर्न स्यादित्यर्थः ।

( आक्षेपपरिहारभाष्यम् )

एवं तर्हि योगविभागः करिष्यते—"अनुदात्तङित आत्मनेपदम्" भवति ॥ ततो "भावकर्मणोः" ॥ ततः "कर्तरि" कर्तरि चात्मनेपदं भवति । अनुदात्तङित इत्येव । आस्ते शेते । भावकर्मणोरिति निवृत्तम् ॥ ततः "कर्मव्यतिहारे" कर्तरीत्येवानुवर्तते । 'अनुदात्तङितः' इत्यपि निवृत्तम् ।

( उद्द्योतः ) भाष्ये भावकर्मणोस्ततः कर्तरीति । योगविभागसामर्थ्याद् भावकर्मणोरित्यत्रासंबद्धमेवानुदात्तङिद्ग्रहणं कर्तरीत्यत्र संबध्यत इति भावः ॥

( आक्षेपपरिहारभाष्यम् )

यदप्युच्यते—तथा "नेर्विश" इत्येवमाद्यनुक्रमणं यदि नियमार्थं, विधिर्न प्रकल्पते । अथ विध्यर्थमानस्य नियमो न प्राप्नोतीति ॥ अस्तु विध्यर्थम् ॥

१ अनुदात्तङिद्भ्यो धातुभ्यः तङः कर्तरि न प्राप्नुवन्तीति योजना । (र.ना.)

२ भावकर्मणोरेवात्मनेपदमनुदात्तङिद्भ्य एवेति च नियमे भूगम्योरनुदात्तत्वाद्यभावेन ततो भावकर्मणोस्तङ् न स्यादेवं शीङादिभ्यः कर्तरि च न स्यात् । ( र.ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( दूषणस्मारणभाष्यम् )

**ननु चोक्तमानस्य नियमो न प्राप्नोतीति ।**

( दूषणवारणभाष्यम् )

**नैष दोषः। यथैवात्राप्राप्तास्तङो भवन्त्येवमानोपि भविष्यति ।**

( प्रदीपः ) यथैवात्रेति । अनुदात्तङित इत्यनेनानस्य नियमादप्राप्तिः । तङोपि भावकर्मणोर्विधीयमानाः निविशत इत्यादौ कर्तरि न प्राप्नुवन्ति । तत्राविशेषान्नेर्विश इत्यादिभिः सूत्रैस्तङनाः कर्तरि विधास्यन्त इत्यर्थः ॥

( ५०५९ सूत्रारम्भवादिवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ सर्वत्राप्रसङ्गस्तु ॥ * ॥**

( भाष्यम् ) सर्वेषु च साधनेष्वानो न प्राप्नोति । "विप्रतिषेधाद्वानः कर्तरि"*इति भावकर्मणोर्न स्यात् । कर्तर्येव स्यात् ॥ इह पुनर्लग्रहणे क्रियमाणे "कर्तरि कृद्" इत्येतदस्तु, "लः कर्मणि च भावे चाकर्मकेभ्य" इति, "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्येतद्भविष्यति विप्रतिषेधेन ॥

( प्रदीपः ) सर्वत्राप्रसङ्गस्त्विति । असत्यस्मिन् सूत्रे भवदुक्तेन विप्रतिषेधेनानः कर्तरि कृदिति कर्तर्येव स्यात् न तु भावकर्मणोः । ततश्च भूयमानं गम्यमानमित्यादिप्रयोगो न स्यादित्यर्थः ॥ इह पुनरिति । यदि ल इति षष्ठी तदास्य तिङ्भावी लकारोवकाशः । आनभाविनस्तु लकारस्य परत्वादनेनैर्व्यवस्था ॥

( उद्योतः ) वदास्येति ॥ लः कर्मणि चेत्यस्येत्यर्थः । षष्ठ्यन्तत्वं न भाष्यसंमतमित्युक्तम् । वक्ष्यते च ॥

( ५०६० दूषणवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ सर्वप्रसङ्गस्तु ॥ * ॥**

( भाष्यम् ) लादेशः सर्वेषु साधनेषु प्राप्नोति । शतृकसू च भावकर्मणोरपि प्राप्नुतः ।

( दूषणवारणभाष्यम् )

**नैष दोषः । "शेषात्परस्मैपदं कर्तरि" इत्येवं तौ कर्तारं ह्रियेते ॥ लः कर्मणि च ॥ ६९ ॥**

( प्रदीपः ) शेषादिति । कर्तर्येव परस्मैपदमित्येवं नियमात् शतृकसू भावकर्मणोर्न भविष्यत इति भावः । ल इत्यादेश्यापेक्षषष्ठीनिर्देशपक्षे आम इति विधीयमानस्य लुकोप्ययमर्थनिर्देशः । अभावस्याप्यादेशत्वात् । तथा च अचः परस्मिन्नित्यत्र लोपस्याप्यजादेशस्य स्थानिवद्भावः प्रदर्शितः । लुकोऽभावरूपत्वात्कथमर्थाभिधानमिति चेत् । प्रतिज्ञाप्रापितं क्विबादीनामिव प्रयोगेऽश्रवणेपि लुकोर्थवत्त्वमनुप्रयोगात्तु तदर्थाभिधानव्यक्तिरित्यदोषः ॥ ६९ ॥

( उद्योतः ) शेषादेव परस्मैपदमिति नियमे तदवस्थो दोष इत्यत आह—कर्तर्येवेति । लक्ष्यानुसारादिति भावः ॥ लुकोऽप्ययमिति । नन्वनुप्रयोगस्थलादेशैरेव भावाद्यभिव्यक्तौ किमस्यार्थादेशेनेति चेत् । न, एवं ह्याम्विषयस्य कर्तरि कृदिति कर्त्रर्थकत्वमेव स्याद् एवं हि विरोधादन्यवान्विप्रत्ययपरोऽनुप्रयोगो न स्यादिति भावः ॥ लोपस्याप्यजेति ॥ पटयतीत्यादौ ॥ प्रतिज्ञेति । अनेन प्रथमान्तत्वमेव युक्तमिति सूचयति—*लग्रहणं सकर्मकनिवृत्त्यर्थमिति भाष्याच्च । षष्ठ्यन्तत्वे ल इति ग्रहणमिति स्यात् समासेऽपि विभक्तिलोपेऽकारश्रवणानापत्तिः । अलोपे विसर्गश्रवणापत्तिः । अन्यदपि प्रथमान्तत्वसाधकं प्रागुक्तम् ॥ ६९ ॥

( ६०७ अधिकारसूत्रम् ॥ ३ । ४ । १ आ. १९ )

## १२३८ लस्य ॥ ३ । ४ । ७७ ॥

( ५०६१ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥*॥ लादेशे सर्वप्रसङ्गोऽविशेषात् ॥*॥**

( भाष्यम् ) लादेशे सर्वस्य प्रसङ्गः । सर्वस्य लकारस्यादेशः प्राप्नोति । अस्यापि प्राप्नोति । लुनाति लभते । किं कारणम् ? । अविशेषात् । न हि कश्चिद्विशेष उपादीयते—एवंजातीयस्य लकारस्यादेशो भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ॥

( ५०६२ आक्षेपपरिहारवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अर्थवद्ग्रहणात्सिद्धम् ॥ * ॥**

( भाष्यम् ) अर्थवतो लकारस्य ग्रहणम् । न चैषोर्थवान् ॥

( प्रदीपः ) लस्य ॥ ७७ ॥ अर्थवद्ग्रहणादिति । लडादय एव भावाद्यर्थाभिधायिनः स्थानित्वेन गृह्यन्त इत्यर्थः ॥

( उद्योतः ) लस्य ॥ ७७ ॥ भावाद्यर्थाभिधायिन इति । शास्त्रप्रतिज्ञातार्थवत इति भावः ।

( ५०६३ आक्षेपपरिहारानुपपत्तिवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अर्थवद्ग्रहणात्सिद्धमिति चेन्न वर्णग्रहणेषु ॥ * ॥**

( भाष्यम् ) अर्थवद्ग्रहणात्सिद्धमिति चेत् ॥ तन्न । किं कारणम् ? । वर्णग्रहणमिदम् । न चैतद्वर्णग्रहणेषु भवति "अर्थवद्ग्रहणे नानर्थकस्य" इति ॥

(प्रदीपः) न वर्णग्रहणेष्विति । लस्येत्यत्र लकारेऽकार उच्चारणार्थः । ततश्च वर्णमात्रस्यायं निर्देशः । वर्णनिर्देशेषु विद्यमानाप्यर्थवत्ता शब्देन नाश्रिता वर्णरूपमात्रस्याश्रयणात् । तथा च यस्येति लोपोऽनर्थकस्यापि भवति दैवदत्तिरिति ॥

( उद्योतः ) अकार उच्चारणार्थ इति । अन्यथा लिडादीनां

---

१ कर्तरि कृदित्यनेनेत्यर्थः । ( र. ना. )

२ ल इत्यस्य षष्ठ्यन्तत्वपक्षे प्रतिज्ञाप्रापितमर्थवत्त्वं लुकोऽभावरूपस्यापि

स्वीकार्यं प्रथमान्तत्वपक्षे तु नेत्यस्यमेव युक्त इति भावः ।

३ विभक्तिलोपाभावे इत्यर्थः। ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तिङो न स्युः । ततश्च परस्मैपदानां णलित्वाचसंगतं स्यादिति भावः ।

( ५०६४ आक्षेपोपसंहारवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ तस्माद्विशिष्टग्रहणम् ॥ * ॥

( भाष्यम् ) तस्माद्विशिष्टस्य लकारस्य ग्रहणं कर्तव्यम् ॥

( प्रदीपः ) तस्मादिति । भावाद्यर्थाभिधायिनो लस्येति वक्तव्यमित्यर्थः ।

( आक्षेपपरिहारभाष्यम् )

न कर्तव्यम् । धातोरिति वर्तते ।

( प्रदीपः ) धातोरिति वर्तत इति । विहितविशेषणं च धातुग्रहणमाश्रीयत इत्यभिचिल्लभत इत्यत्रापि न भवति ॥

( आक्षेपभाष्यम् )

एवमपि शाला माला मल्ल इत्यत्रापि प्राप्नोति ।

( प्रदीपः ) शालेति । शामामलिभ्य औणादिको लप्रत्ययः ॥

( आक्षेपपरिहारभाष्यम् )

उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।

( आक्षेपभाष्यम् )

एवमपि नन्दन इत्यत्रापि प्राप्नोति ।

( परिहारभाष्यम् )

इत्संज्ञात्र बाधिका भविष्यति ।

( प्रदीपः ) इत्संज्ञात्रेति । तस्यां च सत्यां लोपे च कृते स्थान्यभावादल्विधित्वाच्च स्थानिवद्भावाभावादादेशो न भविष्यतीत्यर्थः ।

( उद्द्योतः ) विहितविशेषणमिति । न चैवं शालादिषु प्राप्नोतीति भाष्यासंगतिः । समुदायस्य ततो विधानेऽपि निर्दिष्टस्य लकारस्य वर्णस्य ततोऽविधानादिति वाच्यम् । समुदायविधानेऽवयवविधानस्यापि सत्त्वमित्यभिमानेन ॥ एवमपीत्यादिभाष्यस्यैकदेशयुक्तित्वेनाक्षतेः ॥ एतेन ल्युट् धातोर्विहतो न तु लकार इति परास्तम् ॥

( आक्षेपभाष्यम् )

इहापि तर्हि बाधेत—पचति पठतीति ।

( प्रदीपः ) इहापीति । ततश्चात्राप्यादेशा न स्युरित्यर्थः ॥

( समाधानभाष्यम् )

इत्कार्याभावादत्रेत्संज्ञा न भविष्यति ।

( समाधानबाधकभाष्यम् )

इदमस्तीत्कार्यम् । "लिति" प्रत्ययात्पूर्वमुदात्तं भवति इत्येष स्वरो यथा स्यात् ।

( समाधानसाधकभाष्यम् )

लितीत्युच्यते । न चात्र लितं पश्यामः ॥

अथापि कथंचिद्वचनादनुवर्तनाद्वा इत्संज्ञकानामादेशः स्यात् । एवमपि न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न लादेशेषु लित्कृतं भवतीति । यदयं णलं लितं करोति ॥

( प्रदीपः ) लितीत्युच्यत इति । ल इदस्येति बहुव्रीहिराश्रितः । अत्र च लस्य लोपे कृते न कश्चिल्लकार इत्संज्ञकः प्रत्ययोऽस्तीत्यर्थः । अथापीति । ल एवेल्लिदित्येवं तत्पुरुषो यद्याश्रीयेत तथापि लस्येति स्थानित्वेनाश्रयणात्तस्यामपि इत्संज्ञायां लोपो न क्रियते ॥ अनुवर्तनाद्वेति । भावादीनामनुवृत्त्या भावकर्मकर्तृवाचिनो लस्यादेशः । न च लोपे सति भावाद्यर्थाभिधायित्वं संभवतीत्यकृतलोपानामेव लकाराणामादेशाः करिष्यन्ते । ज्ञापकात्तु लित्स्वरो न भविष्यतीत्यर्थः ।

( उद्द्योतः ) अथापि कथंचिदिति । अस्य 'लित्स्वरार्थमित्त्वं स्या'दिति शेषः ॥ तदेवाह—ल एवेदिति । तत्रेत्संज्ञासामर्थ्याल्लोपात्पूर्वं लोपेऽपि स्थानिवत्त्वाद्वा स्वर इति भावः ॥ तत्पुरुषत्वे ण्वुलादौ कथं स्वर इति चिन्त्यम् ॥ इत्संज्ञकलस्य परत्वाभावाचदव्यवहितपूर्वस्य तदनिर्देश्ः । तस्माद्बहुव्रीहिरेव । अथापि कथंचिदिति भाष्यस्य व्यपदेशिवद्भावेनेत्याशय उचितः । वचनादित्यस्य—इत्त्वे यद्यप्यादेशा न स्युस्तथापि' इत्यादिः तदाह—तथापि लस्येति । एवं चेत्संज्ञायामप्यादेशसिद्धिर्भावादिविहितलस्य, ल्युटि तु दोषः ॥

( पूर्वोक्ताक्षेपपरिहारभाष्यम् )

अथाप्युणादयो व्युत्पाद्यन्ते । एवमपि न दोषः । क्रियते विशिष्टग्रहणं लस्येति ॥

( प्रदीपः ) क्रियत इति । अनुनासिको लकारः स्थानित्वेनोपात्त इत्यर्थः । अथ वा लृ अस्य लस्येत्येवं निर्देशः कृतः । अस्येति सर्वनाम्ना भावाद्यर्थाभिधायी परामृश्यते ॥

( उद्द्योतः ) भाष्ये एवमपीति । एवं चात्र प्रयोजनाभावादित्त्वाभावेन लादेशस्वराभावौ सिद्धौ ल्युटि तु इत्संज्ञया लोपेन च बाधान्न दोष इति भावः ॥ लृ अस्येति । अत्र पक्षे लृ इति लुप्तषष्ठीकम् ॥ अस्येति समानाधिकरणं तस्य विशेषणम् । वस्तुतो धातोरित्यनुवृत्त्या धातुविहितलकारस्य वर्णस्य तत्र ग्रहणम्, अकारस्योच्चारणार्थत्वात् । शालादौ तु न व्यञ्जनमात्रं धातोर्विहितम्, किंत्वकारविशिष्ट इति भाष्यार्थः ॥

( ५०६५ वार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ लादेशो वर्णविधेः पूर्वविप्रतिषिद्धम् ॥ * ॥

( भाष्यम् ) लादेशो वर्णविधेर्भवति पूर्वविप्रतिषेधेन । लादेशस्यावकाशः—पचतु पठतु । वर्णविधेरवकाशः—दध्यत्र मध्वत्र । इहोभयं प्राप्नोति—

१ इत्संज्ञकलकारसंबन्धिनं प्रत्ययावशिष्टभागम् । ( र. ना. )
२ लकारेत्संज्ञक इति समस्तपाठः साधुः । ( र. ना. )
३ न तु लोपार्थं, वचनादनुवर्तनाद्वा लोपाभावादिति भावः । ( र. ना. )
४ ल्युटो लकारस्य तिबाद्यादेशापत्तिरूप इति भावः । ( र. ना. )
५ लृ इति च लुप्तषष्ठीकमिति भावः । ( र. ना. )
६ लादेशादेयस्य एकरित्यस्येत्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

पचत्वत्र पठत्वत्रेति। लादेशो भवति पूर्वविप्रतिषेधेन ॥

(प्रदीपः) पचत्वत्रेति। वाक्यस्य विभज्यान्वाख्यानं क्रियत इत्येवमुपन्यासः ॥

(प्रश्नभाष्यम्)

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः।

(उत्तरभाष्यम्)

न वक्तव्यः। उक्तं वा*। किमुक्तम्?। *लादेशो वर्णविधेरन्तरङ्ग*इति ॥ लस्य ॥ ७७ ॥

(प्रदीपः) लादेशो वर्णविधेरिति। विप्रतिषेधसूत्रे बहिरङ्गपरिभाषाया इदं प्रयोजनमित्यर्थः ॥ ७७ ॥

(उद्योतः) भाष्ये लादेशो वर्णविधेरिति। लादेशादेश इत्यर्थः ॥ ननु वर्णविधिलादेशयोर्युगपत्प्राप्त्यभावेन विप्रतिषेधासंगतिरत आह—वाक्यस्येति ॥ ७७ ॥

(६०८ टेरेत्वादेशविधिसूत्रम् ॥ ३। ४। १ आ. २०)

## १२४० टित आत्मनेपदानां टेरे ॥ ३। ४। ७९ ॥

(५०६७ आक्षेपवार्तिकम् ॥ १ ॥)

### ॥ * ॥ टित एत्वे आत्मनेपदेष्वानप्रतिषेधः ॥ * ॥

(भाष्यम्) टित एत्वे आत्मनेपदेष्वानस्य प्रतिषेधो वक्तव्यः। पचमानः। यजमानः। टित इत्येत्वं प्राप्नोति ॥

(५०६८ वार्तिकम् ॥ २ ॥)

### ॥ * ॥ उक्तं वा ॥ * ॥

(भाष्यम्) किमुक्तम्?। *ज्ञापकं वा सानुबन्धकस्यादेशवचनमित्कार्याभावस्य*इति ॥

(उद्योतः) टित आत्म ॥ ७९ ॥ भाष्ये ज्ञापकं वेति। गाङ्कुटादीति सूत्रे इदमुक्तम् ॥

(समाधानबाधकभाष्यम्)

नैतदस्त्युक्तम्। एवं किल तदुक्तं स्यात्।

(उद्योतः) नैतदिति। एतदुक्तमत्र नास्तीत्यर्थः ॥ तदुक्तं एवं किलात्र स्यादित्यन्वयः ॥

(उक्तसमाधानासङ्गत्यर्थं सामानाधिकरण्यान्वयप्रदर्शकभाष्यम्)

यद्येवं विज्ञायते—टित् आत्मनेपदं टिदात्मनेपदं टिदात्मनेपदानामिति। तच्च न।

(वैयधिकरण्यान्वयाङ्गीकारभाष्यम्)

टितो लकारस्य यान्यात्मनेपदानीत्येवमेतद्विज्ञायते ॥

(सामानाधिकरण्यान्वये दूषणभाष्यम्)

अवश्यं चैतदेवं विज्ञेयम्। टित् आत्मनेपदं टिदात्मनेपदं टिदात्मनेपदानामिति हि विज्ञायमाने अकुर्वि इत्यत्रापि प्रसज्येत ॥

(प्रदीपः) टित आत्म ॥ ७९ ॥ यद्येवमिति। यदि टित इत्येकवचनं बहुवचनप्रसङ्गे व्यत्ययेन क्रियेतेत्यर्थः। अथ वा केचिट्टितामित्येव पठन्ति तदाश्रयेणैतदुक्तम्। अकुर्वीति। लङः स्थाने उत्तमैकवचनमिट् ॥

(उद्योतः) ननु भिन्नवचनानां कथं समानाधिकरण्येन संबन्धोत आह—यदि टित इति। टिदात्मनेपदानामिति भाष्यस्य तदर्थकं यदि विज्ञायत इत्यर्थः। भाष्यप्रामाण्यात्तादृश एवाष्टाध्यायीपाठ इत्यन्ये।

(प्रसक्त्यनुपपत्तिभाष्यम्)

नैष टित्। कस्तर्हि?। ठित्। स चावश्यं ठित् कर्तव्यः। आदिर्मा भूदिति।

(उद्योतः) भाष्ये आदिर्मा भूदिति। श्रमीवात्रापि परश्लेखस्याप्रवृत्तेरिति भावः ॥

(आक्षेपभाष्यम्)

कथम् 'इटोत्' इति ॥

(उत्तरभाष्यम्)

'इठोत्' इति वक्ष्यामीति ॥

(ठित्करणावश्यकत्वभाष्यम्)

तच्चावश्यं वक्तव्यम्। पर्यवपाद्यस्य मा भूत्—लविषीष्ट।

(प्रदीपः) पर्यवपाद्यस्येति। पर्यवपादो रूपान्तरापत्तिः। तत्र साधुरागमः पर्यवपाद्यः। तत्र साधुरिति यत्।

(उद्योतः) तत्र साधुरागम इति। योगरूढिरिति भावः ॥

(ठित्करणदूषणभाष्यम्)

इह तर्हि 'इषमूर्जमहमित' आदीति "आऽतो लोप इटि च" इत्याकारलोपो न प्राप्नोति। तस्माट्टिदेषः ॥

---

१ सानुबन्धकस्य लकारस्य य आदेशस्तत्रानुबन्धप्रयुक्तं कार्यं न भवति प्रकृते लटः शतृशानचावित्यत्र सानुबन्धस्य स्थानित्वेन शानचष्टित्त्वप्रयुक्तैत्वं नेत्यर्थः। (र. ना.)

२ वक्ष्यमाणरीत्याश्रयण इत्यर्थः। (र. ना.)

३ प्रकृते तङ नावित्यात्मनेपदं शानज् एव तत्र न टित्पूर्वोक्तज्ञापकादिति समाधानं सामानाधिकरण्यान्वये स्यात्तच्च सामानाधिकरण्यान्वयविज्ञानं प्रकृते नास्तीत्यर्थः। (र. ना.)

४ टित इत्यस्य षष्ठ्येकवचनान्तत्वमात्मनेपदस्य तद्बहुवचनान्तत्वमिति भावः। (र. ना.)

५ आगमस्येटं इत्यर्थः। व्युत्पत्तिस्तु कैयटे द्रष्टव्या। (र. ना.)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रदीपः ) आदीति । दाओ लङ उत्तमैकवचनम् । शपः श्लुः, द्विर्वचनप्रसङ्गे छन्दसि वेति वक्तव्यमिति द्विर्वचनाभावः । यदि ठिदिदं स्यात्तदा आतो लोप इटि चेत्याकारलोपो न स्यात् । अत्र च छन्दस्युभयथेत्यार्धधातुकत्वमिट एष्टव्यम् । आर्धधातुक इत्यालोपविधानात् ॥

( उद्द्योतः ) नन्वेवमिट आर्धधातुकत्वाभावादालोपो न स्यादत आह—अत्र चेति ॥

( आक्षेपभाष्यम् )

आदिस्तर्हि कस्मान्न भवति ।

( समाधानभाष्यम् )

सप्तदशादेशाः स्थानेयोगत्वं प्रयोजयन्ति तानेको नोत्सहते विहन्तुमिति कृत्वा आदिर्न भविष्यति ॥

( प्रदीपः ) सप्तदशेति । लस्येत्येका षष्ठी सा यद्यवयवावयविसंबन्धे स्यात् तदा इट एवानुग्रहः स्यात् न तिवादीनाम् । तस्माद् भूयसां स्थान्यादेशसंबन्धस्य प्रयोजकत्वाल्लस्येति स्थानेयोगा षष्ठीत्यादेश एवेड् भवति, न लागमः ॥

( उद्द्योतः ) स्थान्यादेशसंबन्धस्येति । स्थान्यादेशसंबन्धं प्रति भूयसां प्रयोजकत्वात्स्थानषष्ठीत्यन्वयः ॥ टकारस्तु इटो-दित्यत्र विशेषणार्थः ॥

( प्रश्नभाष्यम् )

पर्यवपाद्यस्य तर्हि कस्मान्न भवति–लविषीष्टेति ?।

( समाधानभाष्यम् )

असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षण इति ।

( प्रदीपः ) असिद्धमिति । वलाद्यार्धधातुकापेक्षणादङ्गापेक्षत्वाच्च बहिरङ्ग इडागमः । इटोदित्यद्भावस्तु लिङ्संबन्धीडपेक्षणादन्तरङ्गः । तत्र कर्तव्ये आगमस्यासिद्धत्वादद्भावाभावः ।

( उद्द्योतः ) वलाद्यार्धधातुकेति । अनेन प्रकृतिप्रत्ययोभयापेक्षत्वमागमस्य दर्शयति ॥

( समाधानभाष्यम् )

इदं तर्ह्युक्तम्—प्रकृतानामात्मनेपदानामेत्वं भवतीति । के च प्रकृताः ?। तादयः ॥

( प्रदीपः ) प्रकृतानामिति । तिबादय इहानुवर्तन्ते तैरात्मनेपदानि विशेष्यन्ते । अथ वा प्रकरणस्य विशेषस्मृतिहेतुत्वात्प्रकृतान्येवात्मनेपदानीहात्मनेपदशब्देनोच्यन्ते ।

( उद्द्योतः ) भाष्ये इदं तर्ह्युक्तमिति । इदमपि गाङ्कुटिसूत्रैवोक्तम् ॥ तैरात्मने इति । तिबादीनां मध्ये यान्यात्मनेपदानीत्यर्थः ॥ न च तन्मध्ये शानज्निविष्ट इति भावः । अनुवृत्तिं विनापीष्टसिद्धिमाह—अथ वेति ॥

( भाष्यम् )

आने मुग्ज्ञापकं त्वेत्वे, टित्तङामिसिशिसीरिचः ।
डारौरःसु, टिद्टितः, प्रकृते तद्, गुणे कथम् ॥
टित आत्मने ॥ ७९ ॥

( प्रदीपः ) ज्ञापकमाह—आनेमुगिति । यद्येत्वमानस्य स्याद् आनयिमुगिति वक्तव्यं स्यादित्यर्थः ॥ टित्तङामिति । टितः स्थाने ये तङः तेषामेत्वं न त्वानस्यापि । अथाप्येतेत्यादौ डारौरसामेत्वं कस्मान्न भवतीत्याह—इरिसीरिच इति । लिटस्तझयोरेशिरेच्, थासः से इत्येताभ्यां सूत्राभ्यां लाघवाय इश, सिइरिच् इत्येते आदेशा विधेयाः । एत्वस्यानेन सिद्धत्वात् । ज्ञापनाय तु सयादयो विहिता लादेशादेशानामित्वाभावस्य ॥ टिद्टित इति । अकुर्वीत्यत्र परिहारः । अटितो लङः स्थाने टिदिद् कृत इत्येत्वं न भवति ॥ प्रकृतेतदिति । तदेत्वं प्रकृते तङ्यात्मनेपदे भवति न लाने ॥ गुणे कथमिति । श्लोकपूरणायैतदुक्तम् । पत पे इत्यत्र पचावेदम् इत्याद्गुणेकृते कथमेत्वं न भवतीति चोद्यम् । परिहारस्तु वक्ष्यते—बहिरङ्ग आद्गुण इति ॥ ७९ ॥

(उद्द्योतः) भाष्ये एकदेशमाह—आने मुगिति । आनमीति । प्रयोगे दृश्यमानरूपस्यैवानुकरणं न्याय्यमिति भावः ॥ वस्तुतस्तु अलादेशे शानन्चानशादिसंबन्ध्यानेपि मुक्सिद्धये तथा निर्देश आवश्यकः पवमानो यजमानः इति भावकर्मणोरप्रवृत्तये न ते लादेशा इति ज्ञापकासंगत्यस्यचेवक्ष्यति—प्रकृते तदिति ॥ ज्ञापनाय तु सयादय इति ॥ ननु परत्वादेत्वे पुनः प्रसङ्गविज्ञानेन डादिषु लक्ष्ये लक्षणस्येति न्यायेनैत्वाप्रवृत्तौ किमर्थमिदं स्पष्टं च डाविधायकभाष्ये एतदिति चेन्न । एकदेशयुक्तित्वेनाक्षतेः ॥ ज्ञापकस्य फलाभावाच्चास्यास्तरत्वम् ॥ पचन्त इत्यादौ परत्वाद्वाऽऽर्णोदाङ्गमिति वा पूर्वमन्तादेशे पूर्वरूपे सर्वेसर्वपदादेशा इति न्यायेनान्तस्यादेशादेशत्वेन ज्ञापकेन नैत्वापत्तिरित्यन्ये ॥ श्लोकेति ॥ श्लोकपूरणायान्यसूत्रविषयपूर्वपक्षोत्र दर्शित इति भावः । तद्ध्वनयन्नाह—एत ऐ इत्यत्रेति । अनेनास्य श्लोकस्यैकदेशयुक्तित्वं स्फुटीकृतम् ॥ ७९ ॥

( ६०९ लिटः परस्मैपदानामादेशविधिसूत्रम् ॥ ३ । ४ । १ आ. २१ )

## १२४३ परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ३ । ४ । ८२ ॥

( ५०६९ आक्षेपवार्तिकम् ॥ १ ॥ )

॥*॥ णलः शित्करणं सर्वादेशार्थम् ॥*॥

( भाष्यम् ) णल् शित्कर्तव्यः । किं प्रयोजनम् । सर्वादेशार्थम् ?। 'शित्सर्वस्य' इति सर्वादेशो यथा स्यात् ॥ अक्रियमाणे हि शकारे "अलोन्त्यस्य" विधयो भवन्तीत्यन्त्यस्य प्रसज्येत ॥

१ अत एव 'उभे अभ्यस्तम्' इति नाभ्यस्तसंज्ञेति 'श्नाभ्यस्तयो रातः' इत्यस्य न प्राप्तिरिति भावः ॥

२ 'वेति सार्वे' इति काशीमुद्रितपाठः ॥

३ अकुर्वीत्यत्राष्टन्तौटकिताविति सहकारेणधातोरादावेवेट्स्याति भावः। (र.ना.)

४ तान् आदेशान् एक आगम इद विहन्तुं स्थाने योगत्वमयोजकत्वाद् व्यावर्तयितुमित्यर्थः । ( र. ना. )

५ पूर्वोक्तज्ञापकस्वीकारे एघन्ते इत्यत्रैत्वानुपपत्तिरिति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( प्रदीपः ) परस्मै ॥ ८२ ॥ णल इति । क्व पुनरस्य शकारः क्रियते । यद्यादौ णकारस्य अनादित्वादित्संज्ञा न प्राप्नोति । मध्ये शस्येत्संज्ञाया अभावः । अन्ते तु लस्येत्संज्ञाया अप्रसङ्गः । एवं तर्हि लश्विधातव्यः । लश्उत्तमोवेति करिष्यते । योगविभागश्चेति[1] मन्यते । अथ वा णल्शिदित्यतिदेशः कर्तव्यः ॥ अक्रियमाणेहीति । नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादित्यर्थः । एतच्च प्राग्लादेशाद्धात्वधिकार इति पक्षमाश्रित्योच्यते । धात्वधिकारे तु सत्यादेः परस्येत्यादेः प्राप्नोति ।

( उद्द्योतः ) परस्मैपदानाम् ॥ ८२ ॥ मध्ये शस्येति । अनादित्वादिति शेषः ॥ प्रथमपुरुषे[2] पपाचेत्यादौ वृद्धिसिद्धये आह— योगविभागश्चेति ॥ धात्वधिकारे त्विति । परविशेषणपक्षे इदम् ॥ विहितविशेषणे तु तदप्रवृत्त्यान्त्यस्यैव प्राप्नोतीति यथाश्रुतमेव भाष्यं रमणीयमिति दिक् ॥

( ५०७० समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) किमुक्तम् ? । *अनित्[3]त्वात् सिद्धम्* इति । णकारः क्रियते । तस्य अनित्त्वात्सिद्धमिति ॥

( उद्द्योतः ) भाष्ये अनित्त्वादिति । वाक्यार्थबोधे सति प्रत्ययत्वज्ञाने इत्संज्ञासमकालमेव सर्वादेशतेति तदानेकाल्त्वस्याक्षतिरित्यर्थः ॥ तस्यानित्त्वादिति ॥ वाक्यार्थबोधात्प्रागनित्त्वादस्यान्त्यादेशत्वाद्यनुरनित्त्वज्ञानादित्यर्थः । एवं चानुबन्धत्वज्ञानाभावात्तत्समये न नानुबन्धकृतमित्यस्य प्राप्तिरिति भावः । यदि तु भाव्यनुबन्धत्वं गृहीत्वा तत्प्रवृत्तिस्तदा डावत् ण अलिति प्रश्लेषेणानेकाल्त्वात्सर्वादेशत्वम् ॥ निरूपितं चेदं लुटः प्रथमस्येति सूत्रेऽस्माभिः ॥

( आक्षेपभाष्यम् )

क्व[4] एष परिहारोऽन्याय्यः ? । शकारमसि[5] चोदितः । णकारं करिष्यामि शकारं न करिष्यामीति । णकारो वात्र क्रियेत[6] शकारो वा । कोन्वत्र विशेषः ? ।

( समाधानभाष्यम् )

[अयमस्ति विशेषः] अवश्यमत्र णकारो वृद्ध्यर्थः कर्तव्यः णितीति वृद्धिर्यथा स्यात् ।

( उद्द्योतः ) क्व एष परिहारोऽन्याय्य इति । अन्याय्य एषः परिहारः क्व उच्यते इत्यर्थः ॥

( णकारवैयर्थ्यभाष्यम् )

नार्थो वृद्ध्यर्थेन णकारेण । णित्त्वे[7] योगविभागः करिष्यते—इदमस्ति "गोतो णित्" । ततः "अल्" अल् च णिद्भवति । ततः "उत्तमो वा" इति ।

( शित्करणप्रत्याख्यानभाष्यम् )

एवं तर्हि लकारः क्रियते । तस्य अनित्त्वात्सिद्धम् ।

( उद्द्योतः ) एवं तर्हि लकार इति । ल इति लणिति वादेशः कार्य इति भावः ॥

( शित्त्ववादिकर्तृकाक्षेपभाष्यम् )

एवमपि क्व एष परिहारोऽन्याय्यः । शकारमसि चोदितः लकारं करिष्यामि शकारं न करिष्यामीति । लकारो वा क्रियेत शकारो वा कोन्वत्र विशेषः ।

( लकारस्य न्याय्यताभाष्यम् )

अयमस्ति विशेषः । अवश्यमत्र स्वरार्थो लकार इत्कर्तव्यः । "लिति" प्रत्ययात् पूर्वमुदात्तं भवतीत्येष स्वरो यथा स्यात् ।

( लकारवैयर्थ्यभाष्यम् )

नैतदस्ति प्रयोजनम् । धातुस्वरे कृते द्विर्वचनं तत्रान्तर्यतोन्तोदात्तस्यान्तोदात्त आदेशो भविष्यति ॥

( प्रदीपः ) धातुस्वर इति । प्रत्ययस्य पित्त्वादनुदात्तत्वाद् धातुस्वरः प्रवर्तते ॥

( उद्द्योतः ) धातुस्वरः प्रवर्तत इति प्रवृत्तः सतिशिष्टस्वरेण न निवर्तत इत्यर्थः ॥ भाष्ये अन्तोदात्त आदेश इति ॥ स्थाने द्विर्वचनमिति भावः ॥

( आक्षेपभाष्यम् )

कथं पुनरयमन्तोदात्तः स्यात् । यदैकाच्[8] ।

( प्रदीपः ) यदैकाजिति । योनैकाच् जजागारेति तत्र धातुस्वरे कृते शिष्टस्यानुदात्तत्वे प्रथमैकाचो द्विर्वचनं सर्वानुदात्तं सिध्यतीत्येकाजेव धातुर्निरूप्यते ॥

( उद्द्योतः ) सर्वानुदात्तम् । अनुदात्ताभ्यासमपीत्यर्थः ॥ निरूप्यत इति । विचारविषयीक्रियत इत्यर्थः ॥ भाष्ये कथं पुनरयमिति । द्विर्वचनप्रकृतिरित्यर्थः ॥ यदैकाजिति । यदैकाजिणादिः प्रकृतिरित्यर्थः ॥ धातोरन्तोऽनुदात्त इत्यर्थ इति भावः ॥

( समाधानभाष्यम् )

व्यपदेशिवद्भावेन ।

( प्रदीपः ) व्यपदेशिवद्भावेनेति । आद्यन्तवदेकस्मिन्नित्यनेनेत्यर्थः ॥

---

१ कश्चित्येकं सूत्रम् । लश्णित्स्यादिति तदर्थः । उत्तमो लश् वा णित्स्यादिति द्वितीयसूत्रार्थ इति भावः । ( र. ना. )

२ उत्तमे पुरुषे वैकल्पिकणित्त्वेन सिद्धिः । ( र. ना. )

३ णलोविधानकाले प्रत्ययत्वाभावेन णस्येत्त्वाभावेऽनेकाल्त्वात् सर्वादेशो भविष्यतीति भावः । ( र. ना. )

४ 'कथमेष' ॥

५ त्वं णकारं प्रत्याख्याय मया शकारं चोदितोऽसि, एवं च णकारं करिष्यामि शकारं न करिष्यामि इत्यन्याय्य एष परिहारः क्व उच्यते, णकारो वाऽत्र क्रियेत शकारो वा कोन्वत्र विशेष इत्याक्षेपग्रन्थस्य योजना । ( र. ना. )

६ 'क्रियते' ॥

७ इयं निमित्तसप्तमी । णित्त्वार्थमिति फलितार्थः । ( र. ना. )

८ अनकाच्त्वे धातोरन्त्यस्याच उदात्तो भविष्यति यस्त्वेकाजिणादिधातुस्तत्रेकारस्यान्तत्वाभावेनोदात्तत्वं न स्यादिति भावः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्द्योतः ) व्यपदेशिवदिति । तेनातिदेशेनान्तत्वातिदेशास्वरसिद्धिरित्यर्थः ॥ अस्याद्यन्तवत्सूत्रपरतया कैयटोक्ते व्याख्याने बीजं चिन्त्यम् ॥

( आक्षेपभाष्यम् )

**यथैव तर्हि व्यपदेशिवद्भावेनान्तोदात्तः । एवमाद्युदात्तोऽपि । तत्रान्तर्यत आद्युदात्तस्य आद्युदात्त आदेशः प्रसज्येत ।**

( प्रदीपः ) यथैवेति । कार्यातिदेशं मन्यते ॥

( उद्द्योतः ) इतरोन्तोदात्तत्वव्यवहार एवानेन व्यपदेशिवद्भावेनोक्त इति मत्वाऽऽह—भाष्ये यथैवेति । अन्तोदात्तत्वादिधर्मातिदेश एव कैयटे कार्यातिदेशपदेनोक्तः ॥

( समाधानभाष्यम् )

**सत्यमेवमेतत् । न त्विदं लक्षणमस्ति—धातोरादिरुदात्तो भवतीति । इदं पुनरस्ति—धातोरन्त उदात्तो भवतीति । सोयं, लक्षणेनान्तोदात्तः,तत्रान्तर्यतोऽन्तोदात्तस्यान्तोदात्त आदेशो भविष्यति ।**

( प्रदीपः ) नत्विदमिति । शास्त्रातिदेश इति भावः ।

(उद्द्योतः) न त्विदमिति । एवं चानेनान्तत्वातिदेशे शास्त्रेणान्तत्वप्रयुक्तोदात्तत्वे तद्व्यवहारसिद्धिः । आद्युदात्तविधायकशास्त्राभावात्तु न तद्व्यवहार इति भावः ॥ शास्त्रातिदेश इत्यस्य शास्त्रप्रवृत्तौ निमित्तस्यान्तत्वस्यानेनातिदेश इत्यर्थः ॥ भाष्ये सोऽयमिति । प्रकृतिभूतो धातुरित्यर्थः ॥ अन्तोदात्तः=तथा व्यवहारविषयः ॥

( समाधानबाधकभाष्यम् )

**एतदप्यादेशे नास्ति-आदेशस्यान्त उदात्तो भवतीति । प्रकृतितोऽनेन स्वरो लभ्यः । प्रकृतिश्चास्य यथैवान्तोदात्ता, एवमाद्युदात्ताऽपि ॥**

( प्रदीपः ) एतदपीति । स्थानिवदिति कार्यातिदेशः प्राधान्यादिति भावः ॥ प्रकृतित इति । स्थानिन इत्यर्थः ॥

( उद्द्योतः ) तद्दूषयति—भाष्ये एतदपीति । अन्तोदात्त आदेश इति वचनं नास्तीत्यर्थः ॥ स्थानिवदिति न धर्मातिदेशकमित्याह—स्थानिवदिति कार्यातिदेश इति ॥ भाष्ये प्रकृतित इति । आदेशे प्रकृतिसादृश्यबोधकात्स्थानेन्तरतमसूत्रादित्यर्थः ॥ सादृश्यं च तद्वृत्तिधर्मवत्त्वम् । स च यथा व्यपदेशिवद्भावेनान्तोदात्तत्ववांस्तथाऽऽद्युदात्तत्ववानपीति भावः ॥

( द्विःप्रयोगपक्षेऽपि शित्करणदूषणापादकभाष्यम् )

**द्विःप्रयोगे खल्वपि द्विर्वचने उभयोरन्तोदात्तत्वं प्रसज्येत ।**

( प्रदीपः ) द्विःप्रयोग इति । षाष्ठिकं द्विर्वचनं द्विःप्रयोगः, न तु स्थाने द्विर्वचनमिति निर्णयः ॥

( उद्द्योतः ) स्थाने द्विर्वचनपक्ष एवासङ्गत इत्याह—द्विःप्रयोगे चापीति । तदाह—निर्णय इति ॥

( शित्ववादिमतेन दूषणोद्धारभाष्यम् )

**अनुदात्तं पदमेकवर्जमिति नास्ति यौगपद्येन संभवः ।**

( शित्ववादिमते दूषणस्थापनपूर्वकं लकारसार्थक्योपसंहारभाष्यम् )

**पर्यायैः प्रसज्येत । तस्मात्स्वरार्थो लकारः कर्तव्यः ॥ लकारः क्रियते, तस्यानित्त्वात्सिद्धम् ॥**

( प्रदीपः ) लकार इति । ततश्च लँ उत्तमो वेति कर्तव्यं योगविभागश्च कार्यः ॥

( उद्द्योतः ) योगविभागश्चेति । णकाराभाव इदम् ॥

( ५०७२ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अँकारस्य शित्करणं सर्वादेशार्थम् ॥ * ॥

( भाष्यम् ) **अकारः शित्कर्तव्यः । किं प्रयोजनम् ? । सर्वादेशार्थम् । "शित्सर्वस्येति" सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारे "अलोऽन्त्यस्य" विधयो भवन्तीत्यन्त्यस्य प्रसज्येत ॥**

( आक्षेपबाधकभाष्यम् )

**ननु च अकारस्य अकारवचने प्रयोजनं नास्तीति कृत्वा अन्तरेण शकारं सर्वादेशो भविष्यति ॥**

( प्रदीपः ) अकारस्येति । यस्य स्थाने विधीयते तस्येत्यर्थः । एतदपि प्राग्लादेशाद्धात्वधिकार इति पक्षाश्रयेणोच्यते । धात्वधिकारे ह्यादेः परस्येत्यादेरकारे सति रूपं सिद्धम् ॥

( उद्द्योतः ) धात्वधिकार इति ॥ परविशेषण इदम् । विहितविशेषणपक्षे त्वन्त्यादेश एव प्राप्नोति । अत एव नित्यं ङित इत्यादौ नं दोष इति बोध्यम् ॥

( आक्षेपसाधकभाष्यम् )

**अस्त्यन्यदकारस्य अकारवचने प्रयोजनम् । किम् ? ।**

( ५०७२ वार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अकारवचनं समसंख्यार्थम् ॥ * ॥

( भाष्यम् ) **संख्यातानुदेशो यथा स्यात् ।**

---

१ लक्षणस्य प्रत्यक्षत्वेन ततो निर्वाहाभाव एव ज्ञापकन्यायसिद्धाया आनुमानिक्याः परिभाषया लक्ष्यसिद्ध्यर्थमुपन्यास उचित इति कैयटाशय इति वयम् । ( र. ना. )

२ 'खल्वपि' इति भाष्ये पाठः ॥

३ अनेकेषामुदात्तानामिति शेषस्तथाचान्तोदात्तमादाय पूर्वस्य निघाते सिद्धोऽन्तोदात्त इति । ( र. ना. )

४ कुतोनुखल्वन्त्यमुदात्तमादायादेरनुदात्तत्वं नाद्युदात्तमादायान्तस्यानुदात्तत्वमेवं च विनिगमकाभावे पर्यायापत्ताविष्टो व्यवस्थितस्वर इयायेत्यादौ न स्यादिति भावः । ( र. ना. )

५ तिव् मिपोः स्थाने ल इत्ययमादेशो णित् स्यात् उत्तमस्तु वा णिदिति तदर्थः । ( र. ना. )

६ थप्रत्ययादेशस्य अकारस्येत्यर्थः । ( र. ना. )

७ धातोरित्यस्य परविशेषणत्वे तु अभवावेत्यादौ सलोपो न स्यात् । शपा व्यवधानात् इति भावः । ( र. ना. )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( ५०७३ वार्तिकम् ॥ ५ ॥ )

॥ * ॥ तस्माच्छित्करणम् ॥ * ॥

( भाष्यम् ) तस्माच्छकारः कर्तव्यः ॥ १

( आक्षेपभाष्यम् )

स्न तर्हि शकारः कर्तव्यः।

( सिद्धान्तिभाष्यम् )

न कर्तव्यः। क्रियते न्यास एव। प्रश्लिष्टनिर्देशोऽयम्। अ अ इति। सोऽसौ अनेकाल्। अनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति ॥ परस्मै० ॥८२॥

( प्रदीपः ) अ अ इति। अकारद्वयसमुदायस्य आदेशत्वमित्यर्थः ॥ ८२ ॥

( उद्योतः ) अकारद्वयेति। एवं 'ण अलिति' अत्रापि प्रश्लेषो बोध्यः ॥ ८२ ॥

( ६१० अतिदेशसूत्रम् ॥ ३ । ४ । १ आ. २२ )

## १२४६ लोटो लङ्वत् ॥ ३ । ४ । ८५ ॥

( प्रदीपः ) लोटो ल। लोट इत्युपमेये षष्ठीनिर्देशादुपमानं षष्ठ्यन्तं विज्ञायते, तेन लङो यत्कार्यं तल्लोटोऽतिदिश्यते, न तु लङि यत्कार्यं तत्-इत्लडाटौ लोटि न भवतः।

( उद्योतः ) लोटो ल ॥ ८५ ॥ असादतिदेशाल्लोटि अडाटावपि प्राप्नुत इत्यत आह—लोट इतीति ॥

( ५०७४ आक्षेपवार्तिकम् ॥ १ ॥ )

॥*॥ लङ्वदतिदेशे जुस्भावप्रतिषेधः ॥*॥

( भाष्यम् ) लङ्वदतिदेशे जुस्भावस्य प्रतिषेधो वक्तव्यः। यान्तु वान्तु। लङः शाकटायनस्येति जुस्भावः प्राप्नोति ॥

( ५०७५ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ उत्ववचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) उत्वमत्र बाधकं भविष्यति ॥

( प्रदीपः ) उत्ववचनादिति। नाप्राप्ते लङ्वद्भावे उत्वमारब्धं तस्य बाधकमित्यर्थः।

( समाधानबाधकभाष्यम् )

अनवकाशा हि विधयो बाधका भवन्ति। सावकाशं चोत्वम्। कोऽवकाशः? पचतु-पठतु ॥

( समाधानसाधकभाष्यम् )

अत्रापीकारलोपः प्राप्नोति। तद्यथैवोत्वमीकारलोपं बाधते। एवं जुस्भावमपि बाधेत।

( प्रदीपः ) अत्रापीति। लङ्वद्भावादितश्चेत्यनेनेत्यर्थः ॥ ८५ ॥

( समाधानबाधकभाष्यम् )

न बाधते। किं कारणम्? । येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते इकारलोपे उत्वमारभ्यते। जुस्भावे पुनः प्राप्ते चाप्राप्ते च ॥ अथ वा पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते इत्येवसिद्धमुत्वमिकारलोपं बाधते जुस्भावं न बाधते ॥

( उद्योतः ) ननु झिविषये परत्वाज्जुसा इतश्चेत्यस्य बाधात्तस्यापि एतद्विषये सर्वत्र प्राप्तिः। जुसा इकारापहारे तदभावादितश्चेत्यस्याऽप्राप्तिः। इकारलोपे झेरभावाज्जुसोऽप्राप्तिरिति यौगपद्यासंभवात्। स्थानिवत्त्वं तु आदेशप्रवृत्त्युत्तरं न तत्समकालम्। एवं सत्यन्यतरविषयत्वे मानाभावात्। विनिगमनाविरहेणोभयबाधकं स्यादत आह भाष्ये अथवा पुरस्तादपवादा इति ॥

( समाधानान्तरभाष्यम् )

एवं तर्हि वक्ष्यति तत्र लङ्ग्रहणस्य प्रयोजनम्। लङेव यो लङ् तत्र यथा स्यात्। लङ्वद्भावेन यो लङ् तत्र मा भूदिति ॥ लोटो लङ्वत् ॥ ८५ ॥

( उद्योतः ) तत्र लङ्ग्रहणस्येति। तत्र-लङः शाकटायनस्येति सूत्रे इत्यर्थः ॥ ८५ ॥

( ६११ आदेशविधिसूत्रम् ॥ ३ । ४ । १ आ० २३ )

## १२४८ सेर्ह्यपिच्च ॥ ३ । ४ । ८७ ॥

( ६१२ आदेशविधिसूत्रम् ॥ ३ । ४ । १ आ. २४ )

## १२५० मेर्निः ॥ ३ । ४ । ८९ ॥

( ५०७६ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ हिन्योरुत्वप्रतिषेधः ॥ * ॥

( भाष्यम् ) हिन्योरुत्वस्य प्रतिषेधो वक्तव्यः। लुनीहि। लुनानि। "एरुः" इत्युत्वं प्राप्नोति ॥

( ५०७७ आक्षेपपरिहारवार्तिकम् ॥ २ ॥ )

॥ * ॥ न वोच्चारणसामर्थ्यात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः। किं कारणम्? उच्चारणसामर्थ्यात्। उच्चारणसामर्थ्यादत्रोत्वं न भविष्यति। अलघीयश्चैव हि इकारोच्चारणमुकारोच्चारणात्। इकारं चोच्चारयति। उकारं च नोच्चारयति। तस्यैतत्प्रयोजनम्—उत्वं मा भूदिति ॥ सेर्ह्यपिच्च ॥ मेर्निः ॥ ८९ ॥

---

१ 'च्छित्' ॥

२ 'शित्' ॥

३ इत्संज्ञायोग्यत्वमेवानेकाल्त्वमिति सिद्धिसंशये इति भावः। इत्संज्ञकत्वमनुबन्धत्वमिति पक्षे तु अनेकाल्त्वादेव सिद्धिरिति भावः। ( र. ना. )

४ आन्ताद्धातोरेव लङो झेर्जुस्विधानादिति भावः। ( र. ना. )




CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


( प्रदीपः ) सेद्धं ॥ ८७ ॥ अलघीय इति । उकारे सति प्रक्रियायां लाघवं भवति । इकारे तु सति लक्षणान्तरेणोत्वे प्रक्रियागौरवं स्यात् । न चेकारोच्चारणे लाघवं भवति । तस्मादिकारोच्चारणमुत्वस्य बाधकमेवेत्यर्थः ॥ ८७ ॥ ८९ ॥

( उद्द्योतः ) सेद्धं ॥ ८७ ॥ भाष्ये अलघीयश्चैव हीति । मात्राकृतलाघवाभाव इत्यर्थः ॥ प्रक्रियालाघवं तूकारोच्चारणेऽस्त्येवेति भावः ॥ उत्वस्य बाधकमेवेति ॥ उत्वग्रहणमिकारलोपस्याप्युपलक्षणम् ॥ ८७ ॥ ८९ ॥

( ६१३ आदेशविधिसूत्रम् ॥ ३ । ४ । १ आ. २५ )

## १२५४ एत ऐ ॥ ३ । ४ । ९३ ॥

( ५०७८ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ एत ऐत्वे आड्गुणप्रतिषेधः ॥ * ॥

( भाष्यम् ) एत ऐत्वे आड्गुणस्य प्रतिषेधो वक्तव्यः । पचावेदम् । पचामेदम् । आड्गुणे कृते "एत ऐ" इत्यैत्वं प्राप्नोति ॥

( ५०७९ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः । किं कारणम् ? । बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षण आड्गुणः । अन्तरङ्गमैत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥ एत ऐ ॥ ९३ ॥

( ६१४ आगमविधिसूत्रम् ॥ ३ । ४ । १ आ. २६ )

## १२६३ लिङः सीयुट् ॥ ३ । ४ । १०२ ॥

( ५०८० आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ यासुडादेः सीयुट् प्रतिषेधः ॥ * ॥

( भाष्यम् ) यासुडादेः सीयुटः प्रतिषेधो वक्तव्यः । चिनुयुः । सुनुयुः । "लिङः सीयुट्" इति सीयुट् प्राप्नोति ॥

(प्रदीपः) लिङः ॥ १०२ ॥ यथैव कृषीष्ट कृषीष्ठा इत्येवमादौ सुटि कृते विरोधाभावाद्बाध्यबाधकभावाभावात्सीयुड् भवति । एवं यासुट्यपि कृते तस्य लिङ्भक्तत्वात्तदादेः सीयुट्प्रसङ्ग इति मत्वाऽऽह—यासुडादेरिति ।

( उद्द्योतः ) लिङः सी ॥ १०२ ॥ नन्वपवादतया यासुटा बाधात्कथं तद्विषये सीयुडत आह—यथैवेति ।

( ५०८१ आक्षेपपरिहारवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ न वा वाक्यापकर्षात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः । किं कारणम् ? । वाक्यापकर्षात् । वाक्यापकर्षाद् यासुट् सीयुटं बाधिष्यते ।

( प्रदीपः ) न वेति । लिङः सीयुडित्यस्य वाक्यस्य यासुड्विधिवाक्ये नापकर्षः बाधनमित्यर्थः । विनापि विरोधेन सामान्यविधिर्विशेषविधिना बाध्यते, तक्रेणेव दधीति भावः ।

( उद्द्योतः ) विनापीति । अत एव पूर्वमपि सीयुट् न । अपवादविषये उत्सर्गाप्रवृत्तेरिति भावः ॥

( ५०८२ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ सुट्तिथोस्त्वपकर्षविज्ञानम् ॥ * ॥

( भाष्यम् ) सुटोपीदानीं तिथोरपकर्षो विज्ञायेत । कृषीष्ट । कृषीष्ठाः । हृषीष्ट । हृषीष्ठाः ।

( उद्द्योतः ) भाष्ये सुटोऽपीति । कर्तरि षष्ठी । कर्मणोऽनुपादानात् उभयप्राप्त्यभावः ॥ सुट्कर्तृकः सीयुटो बाधः स्यादित्यर्थः ॥

( ५०८३ आक्षेपवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ अनादेश्च सुड्वचनम् ॥ * ॥

( भाष्यम् ) अनादेश्च सुड्वक्तव्यः । कृषीयास्तां कृषीयास्थाम् । तकारथकारादेर्लिङ इति सुण् न प्राप्नोति ।

( प्रदीपः ) अनादेश्चेति । तिथोरिति सप्तमीं मन्यते, ततस्तदादिविधिसद्भावात्तकारथकारादेरेव लिङादेशस्य सुट् स्यात्, कृषीष्ठा इत्यादाविति भावः ।

( ५०८४ आक्षेपपरिहारवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ न वा तिथोः प्रधानभावात्तद्विशेषणं लिङ्ग्रहणम् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यम् । किं कारणम् ? । तिथोः प्रधानभावात् । तिथावत्र प्रधाने तयोर्विशेषणं लिङ्ग्रहणम् । नैवं विज्ञायते । तकारथकारादेर्लिङ इति । कथं तर्हि ? तकारथकारयोः सुड् भवति । तौ चेल्लिङ इति ॥ लिङः सीयुट् ॥ १०२ ॥

( प्रदीपः ) न वेति । चोद्यद्वयमपि परिहृतम् । सुटस्तकारथकारावागमिनौ, सीयुटस्तु समुदाय इति कार्यिभेदाद् बाध्यबाधकभावाभावः ॥ तिथोरिति च षष्ठीनिर्देशात्तदादिविध्यभावादनयोरपि तिथोः सुड् भवति ॥ १०२ ॥

( उद्द्योतः ) कार्यिभेदादिति । प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनेन कार्यिभेदेऽपि बाधदर्शनाच्चिन्त्यमिदम् ॥ तस्मादपकर्षो विज्ञायेतेत्युत्तरं भाष्ये तस्माद्यासुटादेः सीयुटः प्रतिषेधो वक्तव्य इति शेषस्तदेव च वचनं ज्ञापकमत्र प्रकरणे बाध्यबाधकभावाभावस्येति सुटा सीयुटो न बाध इति भाव इत्युचितम् ॥ १०२ ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.



Digitized by Arya Samaj Foundation Chennai and eGangotri



( ६१५ आगमविधिसूत्रम् ॥ ३ । ४ । १ आ० २७ )

## १२६४ यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ ३ । ४ । १०३ ॥

( आक्षेपभाष्यम् )

किमर्थं यासुटो ङित्त्वमुच्यते ।

( ५०८५ आक्षेपपरिहारवार्तिकम् ॥ १ ॥ )

**॥ * ॥ यासुटो ङिद्वचनं पिदर्थम् ॥ * ॥**

( भाष्यम् ) [ यासुटो ङित्त्वं क्रियते । किं प्रयोजनम् ? । पिदर्थम् ] पिति[1] वचनानि प्रयोजयन्ति ॥

( आक्षेपभाष्यम् )

अथ किमर्थमुदात्तवचनं क्रियते ।

( ५०८६ परिहारवार्तिकम् ॥ २ ॥ )

**॥ * ॥ उदात्तवचनं च ॥ * ॥**

( भाष्यम् ) [ उदात्त इति उच्यते । किं प्रयोजनम् ] किम् । पिदर्थमेव ।

( ५०८७ परिहारान्तरवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ आगमानुदात्तार्थं वा ॥ * ॥**

( भाष्यम् ) अथ वा एतज्ज्ञापयत्याचार्यः—आगमा अनुदात्ता भवन्तीति ॥

( ज्ञापकत्वानुपपत्तिभाष्यम् )

असत्यन्यस्मिन्प्रयोजने ज्ञापकं भवति । उक्तं चैतद्—'यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चेति ॥

( ज्ञापकत्वोपपादकभाष्यम् )

शक्यमनेन वक्तुम् । यासुट् परस्मैपदेषु भवति, अपिच्च ङिद्भवतीति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः 'आगमा अनुदात्ता भवन्ति' इति ॥ यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ १०३ ॥

( उद्योतः ) यासुट् प ॥ १०३ ॥ आगमा अनुदात्ता इति भाष्ये अनुदात्तं पदमित्येकवाक्यतापन्नोदात्तादिविधिप्रवृत्तिकालेऽसंनिहितानामपि तेन निघातप्रवृत्तिर्ज्ञाप्यत इत्यर्थः ॥ विस्तरेण चैतदाद्युदात्तश्चेत्यत्र निरूपितम् ॥ प्रकृतसूत्रे शब्देन्दुशेखरे च १०३

—————

( ६१६ नियमसूत्रम् ॥ ३ । ४ । १ आ. २८ )

## १२७१ आतः ॥ ३ । ४ । ११० ॥

( आक्षेपभाष्यम् )

किमिदं जुस्याकारग्रहणं नियमार्थम्[2] । आहोस्वित्प्रापकम् ॥

( प्रत्याक्षेपभाष्यम् )

कथं च नियमार्थं स्यात् । कथं वा प्रापकम् ।

( प्रत्याक्षेपसमाधानभाष्यम् )

यदि सिज्ग्रहणमनुवर्तते । ततो नियमार्थम्[3] ॥

अथ निवृत्तम् । ततः प्रापकम्[4] ॥

( विशेषजिज्ञासाभाष्यम् )

कश्चात्र विशेषः ।

( ५०८८ नियमपक्षदूषणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ जुस्याकारग्रहणं नियमार्थमिति चेत् सिज्लुक्ग्रहणम् ॥ * ॥**

( भाष्यम् ) जुसि आकारग्रहणं नियमार्थमिति चेत् सिज्लुग्ग्रहणं कर्तव्यम् । आतः सिज्लुगन्तादिति वक्तव्यम् । इह मा भूत्[3]—अकार्षुः । अहार्षुः ॥

( प्रदीपः ) आतः ॥ ११० ॥ अकार्षुरिति । अत्र नाकारान्तात्सिज्विहितः । नापि परः, रेफेण व्यवधानादिति जुस् न स्यात् ॥ ननु यद्यकार्षुरित्यादावपि नियमः स्यात्, तदा पूर्वसूत्रेण सिजन्ताज्जुस्विधानमनवकाशं स्यात् ॥ नैष दोषः । अगुरस्थुरित्यादेरवकाशस्य[4] संभवात्, विषयविभागश्च[5] न लभ्यते । यतोऽकार्षुरिति जुस् भवति । अभूवन्नित्यत्र तु न भवति ॥ यद्येवं[6] पूर्वसूत्रे सिज्ग्रहणमकृत्वा आतः सिच इति वक्तव्यं स्यात् । नैतदस्ति । उत्तरत्रात इत्यस्यानुवृत्त्यर्थो योगविभागः स्यात् । अथ वा योगविभागोऽस्य नियमार्थत्वाय स्यात् । अस्य हि नियमार्थत्वे उत्तरत्र लङ्ग्रहणं न कर्तव्यं भवति ॥

( उद्योतः ) आतः ॥ ११० ॥ भाष्ये इह मा भूत् अकार्षुरिति । नियमेन व्यवच्छेदो[7] मा भूदित्यर्थः ॥ ननु सिचः परस्य झेर्जुस् चेदाकारपरसिचः परस्यैवेति न दोष इत्यत आह—अत्रेति । नियमः स्यादिति । नियमेन व्यवच्छेदः स्यादित्यर्थः ॥ अगुरिति । योगविभागानर्थक्यं त्वनुपदमेव परिहरिष्यति ॥ अत एव दूषणान्तरमाह—विषयविभागश्चेति । अभूवन्निति ॥ अत्र प्रत्ययलक्षणेन सिच्सत्ता बोध्या । योगविभागः स्यादिति । लङः शाकटायनस्यै-

—————

1 पिति तिबादौ लादेशे प्राप्तानि यानि वचनानि सार्वधातुकार्धधातुकयोरित्यादीनि तानि यासुटो ङिद्वचनं प्रयोजयन्ति इति योजना । ( र. ना. )

2 किमिदमाकारग्रहणं जुसि नियमार्थमिति योजना । ( र. ना. )

3 नियम इति शेषः । ( र. ना. )

4 नियमसूत्राणां निषेधमुखेन प्रवृत्तिरित्यभिप्रायेणेदम् । ( र. ना. )

5 विषयविभागश्चेत्यारभ्य न भवतीत्यन्तवाक्यस्य अतः सिज्लुग्ग्रहणं कर्तव्यमिति शेषः । ( र. ना. )

6 यद्येवं विषयविभागाभावस्तदा पूर्वसूत्रे इत्यादि योजना । ( र. ना. )

7 जुसोऽप्रावृत्तिरित्यर्थः । ( र. ना. )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

त्वत्र सिच् पदासंसृष्टत्वात इत्यस्यानुवृत्त्यर्थो योगविभाग इत्यर्थः ॥ नन्वातः सिच इत्युच्यमानेपि स्वरितलिङ्गासङ्गादात इत्येवानुवर्तिष्यते, न तु सिच इति, उत्तरत्र लङ्ग्रहणाच्चात आह—अथवेति ॥ नियमार्थत्वायेति । तत्फलं तु अभूवन्नित्यस्य व्यावृत्तिः ॥ नियमपक्षे योगविभागप्रयुक्तगौरवेऽपि लाघवान्तरं दर्शयति—अस्य हीति ॥

( विध्यर्थत्वपक्षाङ्गीकारभाष्यम् )

**अस्तु तर्हि प्रापकम् ।**

( ५०८९ विध्यर्थत्वपक्षदूषणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्रापकमिति चेत्प्रत्ययलक्षणप्रतिषेधः ॥ * ॥**

( भाष्यम् ) प्रापकमिति चेत्प्रत्ययलक्षणस्य प्रतिषेधो वक्तव्यः । अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति ॥[1]

( ५०९० दूषणान्तरवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ एवकारकरणं च ॥ * ॥**

( भाष्यम् ) एवकारकरणं च कर्तव्यम् । लङः शाकटायनस्यैवेति ॥ नियमार्थे पुनः सति नार्थ एवकारकरणेन ।

( आक्षेपभाष्यम् )

ननु च प्रापकेऽपि सति सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति ॥

( समाधानभाष्यम् )

इष्टतोऽवधारणार्थस्तर्ह्येवकारः कर्तव्यः—यथैवं विज्ञायेत 'लङः शाकटायनस्यैव' इति । मैवं विज्ञायि 'लङ एव शाकटायनस्य' इति ॥

( आक्षेपभाष्यम् )

किं च स्यात् ।

( समाधानभाष्यम् )

लुङः शाकटायनस्य न स्यात् । अदुः । अगुः । अधुः । अस्थुः ॥

( ५०९१ गौरववार्तिकम् ॥ ४ ॥ )

**॥ * ॥ लङ्ग्रहणं च ॥ * ॥**

( भाष्यम् ) लङ्ग्रहणं च कर्तव्यम्—'लङः शाकटायनस्यैव' इति । नियमार्थे पुनः सति नार्थो लङ्ग्रहणेन । 'आतो ङित' इति वर्तते । न चान्य आकारादनन्तरो ङिदस्ति अन्यदतो लङः ॥

(प्रदीपः) एवकारकरणं चेति । यदा सिज्ग्रहणमिह नानुवर्तते तदाऽनेनैव लङादेशस्य झेरात उत्तरस्यायुरित्यादौ जुसि सिद्धे लङः शाकटायनस्यैवेति नियमार्थ एवकारः कर्तव्यः । अन्येषां मतेन अयानित्यादि यथा स्यात् । यदा तु सिज्ग्रहणानुवृत्त्या नियमार्थमिदं तदा लङः शाकटायनस्यैव पक्षे विध्यर्थं कर्तव्यं नार्थ एवकारेणेत्यर्थः ॥ मैवं विज्ञायीति । लङ एव शाकटायनस्येति विज्ञायमाने लुङः शाकटायनस्य न स्यात् । ततश्च लुङि विकल्पः प्रसज्येत । लङि तु नित्यः स्यादित्यर्थः ॥

( उद्योतः ) ततश्च लुङीति । शाकटायनमते लङ एवान्यस्य तन्मते नेत्यर्थे लुङि शाकटायनमते निषेधः,अन्यस्य मते जुसित्यर्थाद्विकल्पः फलितः ॥ लङि तु शाकटायनमतेऽन्यमते च प्राप्त्या नित्यत्वं फलतीति भावः ॥ भाष्ये लङ्ग्रहणं चेति । असति लङ्ग्रहणे लुङ्यपि विकल्पः स्यात् ॥ न चात इति योगविभागाल्लुङि नित्य इति वाच्यम् । लुङि विकल्पो लङि नित्य इति वैपरीत्यस्यापि संभवादिति भावः ॥

( नियमार्थत्वपक्षाङ्गीकारभाष्यम् )

**अस्तु तर्हि नियमार्थम् ॥**

( दूषणस्मारणभाष्यम् )

ननु चोक्तं *जुस्याकारग्रहणं नियमार्थमिति चेत् सिज्लुक्ग्रहणम्* इति ।

( दूषणपरिहारभाष्यम् )

नैष दोषः । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः ? । यो द्वाभ्यामनन्तरः, आतश्च सिचश्च ।

( आक्षेपभाष्यम् )

अथ तदेवकारकरणं नैव कर्तव्यम् ।

( सिद्धान्तसमाधानभाष्यम् )

कर्तव्यं च । किं प्रयोजनम् ? । उत्तरार्थम् । "लिट् च" "लिङाशिषि" आर्धधातुकमेव यथा स्यात् । इतरथा हि वचनादार्धधातुकसंज्ञा स्यात् । तिङ्ग्रहणेन च ग्रहणात्सार्वधातुकसंज्ञा ॥

( आक्षेपभाष्यम् )

अथ तल्लङ्ग्रहणं नैव कर्तव्यम् ।

( समाधानभाष्यम् )

कर्तव्यं च । किं प्रयोजनम् ? । लङेव यो लङ् तत्र यथा स्यात् । लङ्भावेन यो लङ् तत्र मा भूदिति ॥ आतः ॥ ११० ॥

( प्रदीपः ) तुल्यजातीयस्येति । सिज्लुकं विना आतः सिचश्चानन्तरो झिर्न भवतीति सिज्लुगन्तस्याकारान्तस्येह ग्रहणमिति नियमेन सिज्लुगन्तमेव निवर्त्यते । उत्तरार्थमिति । अन्यत्रैकसंज्ञाधिकारादन्यत्र संज्ञासमावेशस्य दृष्टत्वाल्लिङ्लिङादेशानां सार्वधातुकसंज्ञाऽपि स्यात् । ततस्तन्निमित्तविकरणप्रसङ्गः । आर्धधातुकसंज्ञा चेडाद्यर्था स्यात् ॥ ११० ॥

---

१ सिज्लोपस्य प्रत्ययलक्षणेन अभूवन्नित्यत्र सिजभ्यस्तेति जुस्भावः प्राप्नोति, आत इत्यस्य विधित्वपक्षे तन्निषेधकाभावादिति भावः । ( र. ना. )

२ 'चेत' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



( उद्योतः ) एवं चात इति सूत्रं सिच इत्यनुवृत्त्या नियमार्थम्, उत्तरसूत्रं तु विध्यर्थम् ॥ शाकटायनस्यैवेत्येवकार उत्तरार्थः । लङ्ग्रहणं लङ्वद्भावेन लङोऽग्रहणार्थमिति बोध्यम् ॥ एवं च धातोरिति सूत्रस्थं भाष्यं प्रौढ्या, एतत्सूत्रस्थभाष्यविरोधात् इति बोध्यम् ॥ ११० ॥

( ६१७ आर्धधातुकसंज्ञासूत्रम् ॥ ३ । ४ । १ आ. २९ )

## १२७१ आर्धधातुकं शेषः ॥ ३।४।११४ ॥

( ५०९२ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आर्धधातुकसंज्ञायां धातुग्रहणम् ॥ * ॥

( भाष्यम् ) आर्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम् । धातोः परस्यार्धधातुकसंज्ञा यथा स्यात् इह मा भूत्—वृक्षत्वं वृक्षतेति ।

( ५०९३ आक्षेपवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ क्रियमाणे चापि धातुग्रहणे, स्वादिप्रतिषेधः ॥ * ॥

( भाष्यम् ) स्वादीनां प्रतिषेधो वक्तव्यः । इह मा भूत्—लूभ्यां लूभिरिति ।

( आक्षेपपरिहारभाष्यम् )

अनुक्रान्तापेक्षं शेषग्रहणम् ।

( प्रदीपः ) आर्धधा ॥ ११४ ॥ अनुक्रान्तापेक्षमिति । ये प्रत्ययास्तिङ्शिद्वर्जितास्ते आर्धधातुकसंज्ञा भवन्ति न त्वनुक्रंस्यमाना इत्यर्थः ॥

( परिहारानुपपत्तिभाष्यम् )

एवमपि अग्निकास्यति वायुकास्यतीति प्राप्नोति । तस्माद्धातुग्रहणं कर्तव्यम् ।

( आक्षेपभाष्यम् )

तत्तर्हि धातुग्रहणं कर्तव्यम् ? ।

( समाधानभाष्यम् )

न कर्तव्यम् । आतृतीयपरिसमाप्तेर्धात्वधिकारः प्रकृतोऽनुवर्तते । क्व प्रकृतः ? । "धातोरेकाचो हलादेः" इति ।

( उद्योतः ) आर्धधातु ॥ ११४ ॥ भाष्ये धातोरेकाच इति । धातोरिति पृथक् सूत्रं तु प्रत्याख्यातमेव ॥

( समाधानासंगतिभाष्यम् )

एवमपि श्रीकास्यति भूकास्यतीति प्राप्नोति ।

( समाधानसंगतिभाष्यम् )

तद्विधानात् सिद्धम् । विहितविशेषणं धातुग्रहणं 'धातोर्यो विहितः' इति । 'धातोरेष विहितः' संकीर्त्य धातोरित्येवं यो विहित इति ॥ आर्धधातुकम् ॥ ११४ ॥

( प्रदीपः ) धातोरिति । धातोरित्येवं धातुशब्दमुच्चार्य ये विहिता इत्यर्थः ॥ ११४ ॥

(उद्योतः) धातोरित्येवमिति ॥ व्याख्यानादिति भावः ११४

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादश्चाध्यायश्च समाप्तस्तृतीयः ॥

इति श्रीमन्महामहोपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे तृतीयाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादोऽध्यायश्च समाप्तः तृतीयः ॥

इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते व्याकरणमहाभाष्यप्रदीपोद्योते तृतीयस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ पादश्चाध्यायश्च समाप्तः ॥

१ सत्यार्धधातुकत्वेऽतो लोप प्रसङ्गः । ( र. ना. )

२ अत्र सत्वे गुणप्रसङ्गः । ( र. ना. )





CC-0.Panini Kanya Maha Vidyalaya Collection.

